


| | पृ० | पं० |
|---|---|---|
| देवस्य एकत्वेऽपि मूर्ति-भेदेन भेदः .... | ३६५ | १२ |
| वैष्णवमतानुसारिपूजाक्रमः | ३६६ | १ |
| अग्निपुराणोक्ता पूजा .. | ३६७ | १ |
| बौधायनोक्ता पूजा .. | ३६९ | ३ |
| विष्णुपूजाप्रशंसा .. | ३७१ | १८ |
| शिवपूजाप्रकारः .. | ३७२ | ५ |
| ,, बौधायनोक्ता | ३७२ | १६ |
| शिवपूजाप्रशंसा | ३७५ | १९ |
| देवार्चनाकरणे दोषः .. | ३७६ | ६ |
| **अथ गुरुपूजा ....** | **३७६** | **१२** |
| गुरुपूजाफलम् ...... | ३७७ | १० |
| **अथ वैश्वदेवः ....** | **३७८** | **१** |
| वैश्वदेवविधानम् .... | ३७८ | २० |
| पञ्चसूनाः ........ | ३८० | १ |
| होमप्रकारः ...... | ३८१ | १४ |
| अन्नसंस्कारः ...... | ३८१ | १० |
| द्रव्यानुकल्पः ...... | ३८१ | १४ |
| अनग्निकस्य विशेषः ... | ३८२ | १४ |
| भूतयज्ञः ........ | ३८२ | २० |
| गौणाः कर्तारः ...... | ३८३ | ११ |
| कर्त्रन्तराभावे प्रवसताऽपि स्वयं कार्यः ...... | ३८३ | १४ |
| बलिहरणप्रकारः .... | ३८३ | १८ |
| श्वादिभ्यो ऽन्नम् .... | ३८५ | १० |
| अन्नोत्सर्गमन्त्रः .... | ३८५ | १७ |
| पितृयज्ञः ........ | ३८७ | ६ |
| नित्यश्राद्धम् ...... | ३८७ | १४ |
| नित्यश्राद्धप्रकारः .... | ३८८ | ४ |
| तत्र अनुकल्पः .... | ३८८ | १८ |
| उद्धृतान्नदानम् .... | ३८९ | ६ |
| देवयज्ञादीनां वैश्वदेव-संज्ञा ........ | ३८९ | १० |
| वैश्वदेवस्य पुरुषार्थत्वमपि | ३९० | ५ |
| **अथ मनुष्ययज्ञः ..** | **३९१** | **१५** |
| भिक्षादिलक्षणम् .... | ३९२ | ११ |
| आतिथिनिरीक्षणम् .. | ३९२ | १५ |
| **अथ षट्कर्माणि ..** | **३९३** | **१०** |
| उक्तार्थे सम्मार्गन्यायः | ३९३ | १५ |
| अतिथिवर्णनम् .... | ३९५ | ५ |
| द्वेष्यस्य भोजनीयत्वं नि-न्दितम् ........ | ३९५ | १० |
| मूर्खस्य भोजनीयत्वं नि-षिद्धम् ....... | ३९५ | १६ |
| अतिथिलक्षणम् .... | ३९६ | १८ |
| अतिथिशब्दव्याख्या .. | ३९८ | ७ |
| अतिथ्यागमने कर्तव्यम् | ३९९ | १६ |
| ब्राह्मणस्य क्षत्रियादयो नातिथयः ...... | ४०० | ८ |
| आसनादिदाने विशेषः | ४०१ | ४ |
| अतिथिसत्काराकरणे दोषः | ४०१ | ९ |
| अतिथिसत्कारप्रशंसा .. | ४०२ | ९ |
| आतिथ्यकर्तृनियमाः .. | ४०४ | ९ |
| आतिथ्ये गोत्रादिप्रश्न-निषेधः | ४०४ | १० |
| देवबुद्ध्याऽतिथिं पूजयेत् | ४०५ | ६ |
| तत्र हेतुः ........ | ४०५ | १३ |
| गोत्रादिप्रश्ने बाधः .. | ४०५ | १७ |

| | पृ० | पं० | | | |
|---|---|---|---|---|---|
| भोजनार्थं स्वगोत्रादिकं न कथनीयम् | ४०६ | १ | प्राणाहुत्यनन्तरं यन्त्रिकाया पात्रमाराध्य भोक्तव्यम् | ४१७ | ४ |
| **यति-ब्रह्मचारिणोः पूज्यत्वम्** | ४०६ | ६ | अन्नवन्दनम् | ४१७ | ११ |
| भिक्षादानफलम् | ४०७ | १० | वन्दनानन्तरकृत्यम् | ४१७ | १४ |
| „ प्रकारः | ४०७ | १२ | जिह्वाग्रसने विशेषः | ४१८ | १३ |
| वैश्वदेवात्पूर्वं तयोरागमने कर्तव्यम् | ४०८ | १ | प्राणाहुतिष्वङ्गुलिनियमः | ४१८ | १७ |
| यत्यादिपूजाकरणे प्रत्यवायः | ४०८ | १३ | परिषेचनानन्तरो विशेषः | ४१९ | १ |
| यतिभिक्षादाने नियमः | ४०९ | १६ | उक्तविधेः सङ्ग्रहः | ४१९ | १० |
| **ऐश्वर्योपेतस्यापि सत्कारः** | ४१० | ६ | भोजनप्रकारः | ४२१ | १३ |
| विभूतिमानीश्वरांशः | ४११ | २ | कवलसङ्ख्या | ४२१ | १८ |
| **अथ भिक्षुकाः** | ४११ | ७ | उच्छिष्टशेषणम् | ४२२ | १४ |
| व्याधितादीनां भिक्षाविधानम् | ४११ | १९ | सायंप्रातश्च भोजनम् | ४२२ | २२ |
| **वैश्वदेवाकरणे दोषः** | ४१२ | १ | भोजने वर्ज्यान्तराणि | ४२३ | १० |
| आतिथ्याकरणे दोषः | ४१२ | ७ | भार्यासह भोजननिषेधः | ४२५ | ८ |
| अन्येपि भोजनीयाः | ४१२ | ११ | अन्येऽपि निषेधाः | ४२८ | १ |
| पञ्चमहायज्ञप्रशंसा | ४१३ | ६ | भोजने वाग्यमः | ४२७ | ७ |
| अकरणे प्रत्यवायः | ४१३ | १३ | अन्येऽपि निषेधाः | ४२६ | १ |
| **अथ भोजनविधिः** | ४१३ | १७ | पङ्क्तिभेदप्रकारः | ४२९ | ९ |
| तत्र वर्जनीयाः | ४१३ | १८ | भोजने नियमविशेषाः | ४२९ | १५ |
| भोजनविधिः | ४१४ | १ | भोजनविधेरुदीच्याङ्गानि | ४३० | १२ |
| भोजने इतिकर्तव्यता | ४१४ | १६ | आचमनप्रकारः | ४३१ | ३ |
| शुद्धपात्रे भोजनं कर्त्तव्यम् | ४१५ | १८ | आचमनानन्तरकर्तव्यम् | ४३२ | ९ |
| यतेः कांस्यपात्रनिषेधः | ४१६ | १२ | तत्र विशेषः | ४३३ | ५ |
| | | | ताम्बूलभक्षणम् | ४३४ | ९ |
| | | | ग्रहणकाले भोजननिषेधः | ४३५ | १ |
| | | | ग्रहणपूर्वकाले निषेधः | ४३५ | १६ |
| | | | बालादौ विशेषः | ४३६ | ८ |

| | पृ० | पं० |
|---|---|---|
| शक्तस्य भोजने प्रायश्चित्तम् | ४३६ | ११ |
| चन्द्रग्रहे यामत्रयस्य अपवादः | ४३६ | १४ |
| ग्रस्तास्ते विशेषः | ४३६ | १६ |
| ग्रहणदिनोपवासः | ४३८ | १ |
| पुत्रिण उपवासो न | ४३८ | १ |
| **अवशिष्टदिवसकर्त्तव्यम्** | **४३८** | **१७** |
| सायं वैश्वदेवादौ विशेषः | ४३९ | १७ |
| **अथ शयनप्रकारः** | **४४०** | **१२** |
| सुखशायिनः | ४४१ | १७ |
| शयने वर्जनीयाः | ४४१ | २० |
| उक्तस्याकरणे दोषः | ४४४ | ६ |
| क्षत्रियस्य साधारणधर्माः | ४४४ | १६ |
| द्विविधो राजधर्मः | ४४५ | ७ |
| व्रतरहितब्रह्मचारिभिक्षाप्रदो ग्रामो दण्ड्यः | ४४५ | १५ |
| विहिताननुष्ठायिनां सर्वेषां दण्डः | ४४६ | ३ |
| दण्ड्यदण्डनप्रशंसा | ४४७ | ४ |
| अदण्ड्यदण्डननिषेधः | ४४७ | ८ |
| द्विविधो दण्डः | ४४७ | १२ |
| राज्ञः दण्डयितृत्वम् | ४४७ | १७ |
| राज्ञः प्रशंसा | ४४९ | ६ |
| राजशब्दः क्षत्रियविषयः | ४४९ | १६ |
| उक्तार्थे अवेष्ट्यधिकरणम् | ४४९ | १८ |
| राजशब्दः क्षत्रियपरः | ४५१ | १७ |
| प्रजापालनमेव राज्ञः प्रधानं कर्म | ४५२ | २ |
| प्रजारञ्जनं कर्तव्यम् | ४५३ | ४ |
| राज्ञः षड्भागः | ४५३ | १४ |
| युद्धोपकरणानि | ४५४ | १० |
| दण्डप्रकारः | ४५४ | १७ |
| दण्डस्य चातुर्विध्यम् | ४५५ | ५ |
| दण्डस्थानानि | ४५५ | १६ |
| ब्राह्मणे न वधदण्डः | ४५६ | १ |
| परसैन्यनिर्जयः | ४५६ | १३ |
| तत्र कालादि | ४५६ | १७ |
| शत्रुम्प्रति यानम् | ४५७ | १५ |
| बलस्य षड्विधता | ४५८ | ६ |
| सैन्यरचना | ४५८ | ९ |
| व्यूहभेदः | ४५८ | १० |
| सैन्ये सङ्ग्राह्याः पुरुषाः | ४५९ | ३ |
| उपरोधः | ४५९ | ७ |
| सामादिना शत्रुः साध्यः | ४५९ | १३ |
| देशजयानन्तरकृत्यम् | ४६० | ६ |
| मालाकार इव पुष्पं विचिनुयात् | ४६० | १२ |
| राष्ट्रं मधुदोहं दुहेत् | ४६१ | ३ |
| क्रय-विक्रयादिव्यवस्था | ४६२ | १२ |
| अन्तरङ्गा राजधर्माः | ४६२ | ९ |
| बहिरङ्गा राजधर्माः | ४६३ | २ |
| दुर्गसम्पादनम् | ४६३ | १८ |
| दुर्गभेदाः | ४६४ | ४ |
| दुर्गसंविधानम् | ४६४ | ९ |
| यागादिधर्माः | ४६५ | ६ |

| | पृ० | पं० |
|---|---|---|
| पुरोहितः कर्तव्यः.... | ४६५ | १७ |
| श्रोत्रियात्करो नादेयः. | ४६६ | ७ |
| शाला-प्रपादि कर्तव्यम् | ४६६ | १५ |
| भूतपरित्राणं कर्तव्यम्. | ४६७ | ६ |
| स्वराष्ट्रं न कर्षयेत्.... | ४६८ | १ |
| **राज्ञो दिनचर्या** | **४६८** | **६** |
| दानानन्तरकृत्यम् | ४६९ | २ |
| अष्टविधं राज्ञः कर्म | ४७० | ६ |
| पञ्चवर्गः ...... | ४७१ | २ |
| मध्याह्नकृत्यम्.... | ४७१ | ५ |
| अपराह्णकृत्यम् .. | ४७१ | १४ |
| सायङ्कालकृत्यम् .. | ४७२ | १ |
| राज्ञः अन्योऽपि धर्मः | ४७२ | ८ |
| व्यसनानि वर्जयेत्. | ४७२ | १६ |
| व्यसनवर्णनम् ... | ४७३ | १ |
| व्यसनिनो नाशः.... | ४७३ | १४ |
| व्यसनानि त्यक्त्वा वर्तेत | ४७४ | १ |
| प्रजारक्षणे राज्ञः श्रेयोविशेषः. ...... | ४७४ | १७ |
| प्रजानामपालने दोषः | ४७५ | ९ |
| वैश्यधर्मप्रकरणम् .. | ४७६ | १ |
| कुसीदादीनां वैश्यधर्मत्वम् ...... | ४७६ | ९ |
| पशुपालनम् ...... | ४७६ | १३ |
| विक्रयद्रव्याणि .... | ४७६ | २० |
| पशुपालने विशेषः .. | ४७७ | १० |
| अर्घविज्ञानादयः .... | ४७८ | ६ |
| यथोक्तधर्मानुष्ठाने फलम् | ४७९ | १० |
| अननुष्ठाने दोषः .... | ४७९ | १४ |
| **अथ शूद्रधर्माः ..** | **४७९** | **१९** |
| द्विजसेवैव तस्य मुख्यो धर्मः ...... | ४८० | ३ |
| अन्येऽपि धर्माः . . | ४८१ | ५ |
| विप्रसेवा वृत्त्यर्थापि | ४८२ | ९ |
| द्विजातिना शूद्रस्य वृत्तिः कल्प्या.. | ४८२ | १७ |
| द्विजसेवामन्तरेण अन्यत् निष्फलम्.. | ४८३ | १ |
| विप्रसेवा उभयार्था इतरसेवा वृत्त्यर्था .. | ४८३ | १ |
| शूद्रेण विक्रयः कार्यः.. | ४८४ | ६ |
| शिल्पान्यपि कर्तव्यानि | ४८५ | १३ |
| मद्य-मांसादिविक्रयनिषेधः ........ | ४८६ | १ |
| **समाप्तिश्लोकः ..** | **४८७** | **१२** |


इति प्रथमाध्यायस्यानुक्रमणिका समाप्ता ॥ श्रीः ॥

ॐ नमः श्रीगणेशाय ।

# पराशरसंहिता

## माधवाचार्यकृतव्याख्यासहिता ।

# आचारकाण्डम् ।

## प्रथमोऽध्यायः ।

### ( टीकाकारोपक्रमणिका । )

*वागीशाद्याः सुमनसस्सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥ १ ॥

†सोऽहं प्राप्य विवेकतीर्थपदवीमाम्नायतीर्थे परम्
मज्जन् सज्जन[1]तीर्थसङ्गनिपुणः सद्वृत्ततीर्थं श्रयन् ।
ल[2]ब्धामाकलयन् प्रभावलहरीं श्रीभारतीतीर्थतो
विद्यातीर्थमुपाश्रयन् हृदि भजे श्रीकण्ठमव्याहतम् ॥ २ ॥

---

*प्रणम्य मातरं भागीरथीं भागीरथीमिव ।
पितरं गुरुमूर्तिं च हरिं नत्वा पुनः पुनः ॥
पराशरस्मृतेर्व्याख्यां माधवीयां सुविस्तृताम् ।
व्याख्यास्ये बालबोधार्थं सङ्क्षेपेण यथामति ॥

पराशरसंहितां व्याचिख्यासुस्तत्रभवान् माधवामात्यः निर्विघ्नपरिसमाप्ति-प्रचयगमनार्थं शिष्यशिक्षार्थं च गजाननमस्कारलक्षणं मङ्गलमाचरति । वागीशाद्या इति । सर्वार्थानां सर्वेषां कार्याणां उपक्रमे आरम्भे । कृतकृत्याः कृतकार्याः । कार्यारम्भे गजाननस्मरणं शास्त्रप्रतिपादितम् ।

†सोऽहमिति । सोऽहं माधवाचार्यनामा । विवेको वेदवाक्यार्थविचारः

---

I. gives सज्जनसङ्गतीर्थ° as a reading from the Kálamádhviya. २. D. reads बद्धा for लब्धा.

*सत्यैकव्रतपालको द्विगुणधीस्त्र्यर्थी चतुर्वेदिता
पञ्चस्कन्धकृती षडन्वयदृढः सप्ताङ्गसर्वंसहः ।
अष्टव्यक्ति[1]कलाधरो नवनिधिः पुण्यद्दशप्रत्ययः
स्मार्तोच्छ्रायधुरन्धरो वि[2]जयते श्रीबु[3]क्कणक्ष्मापतिः ॥ ३ ॥

---

तस्य तीर्थं शास्त्रं मीमांसाशास्त्रम्। मीमांसाया विचारशास्त्राभिधानं जैमिनीयन्यायमालाविस्तरे स्पष्टम् । तदेव पदवी मार्ग इत्यर्थः । तां प्राप्य । आम्नायरूपे तीर्थे निपाने परं अत्यर्थं मज्जन् । मीमांसाशास्त्रज्ञानमन्तरा वेदार्थाकलनस्यासम्भवात् । कीदृशोऽहम् । सज्जनानां विदुषां सङ्ग एव तीर्थः मन्त्रिस्तस्य सङ्गेन निपुणः विद्वत्सहवासेन निपुणबुद्धिरित्यर्थः । पुनश्च सतां साधूनां यत् वृत्तं वर्तनं तदेव तीर्थं क्षेत्रं श्रयन् भगवद्भजनार्थं पवित्रक्षेत्राश्रयणमपेक्षितमेव । पुनश्च श्रीमान् योयं भारतीतीर्थः भारती सरस्वती तस्याः तीर्थो ऽवतारः शङ्कराचार्यः तस्मात् लब्धां प्रभावलहरीं आकलयन् सम्यक् धारयन्नित्यर्थः । भारतीतीर्थ इति शङ्करभगवत एवाभिधानं पञ्चदशीटीकादिषु स्पष्टम् । पुनश्च विद्यातीर्थं विद्यागुरुं उपाश्रयन्सन् अव्याहतं निरन्तरं श्रीकण्ठं शिवं भजे सेवां करोमीति योजना । अत्र सर्वत्र तीर्थशब्दपर्यायेषु—

'तीर्थं शास्त्राध्वर-क्षेत्र-पात्रोपाध्याय-मन्त्रिषु ।
अवतारर्षिजुष्टाम्भःस्त्रीरजस्सु च विश्रुतम्' ॥

इति विश्वकोशप्रामाण्यमनुसन्धेयम् ।

* धर्मपालकं स्वाश्रयं राजानं स्तौति । सत्येति । सत्यमेव यदेकं मुख्यं व्रतं तस्य पालकः । द्वौ गुणौ वार्ता-दण्डनीतिविद्यारूपौ यस्यां तादृशी बुद्धिर्यस्य । यदाह कामन्दकः । 'वार्ता च दण्डनीतिश्च द्वे विद्ये लोकव्यवस्थितिः' इति । त्रीन् धर्मार्थकामानर्थयते ऽसौ त्र्यर्थी । यदुक्तम्—

'न्यायप्रवृत्तो नृपतिरात्मानमपि च प्रजाः ।
त्रिवर्गेणोपसन्धत्ते निहन्ति ध्रुवमन्यथा',

---

I. gives कृता for कला. २. D. and I. read विजयताम् for विजयते. ३. H. reads बुक्कणः and thus makes it a separate word out of the compound बुक्कणक्ष्मापतिः which is the reading of all other MSS.

*इन्द्रस्याङ्गिरसो नलस्य सुमतिः शैब्यस्य मेधातिथिर्
धौम्यो धर्मसुतस्य वैन्यनृपतेः स्वौजा निमेर्गौतमिः ।
प्रत्यग्दृष्टिररुन्धतीसहचरो रामस्य पुण्यात्मनो
यद्वत्तस्य विभोरभूत् कुलगुरुर्मन्त्री तथा माधवः ॥ ४ ॥

इति । तथा चतुर्णां राजवृत्तानां वेदिता ज्ञाता । यथोक्तम्—

'न्यायेनार्जनमर्थस्य रक्षणं वर्धनं तथा ।
सत्पात्रप्रतिपत्तिश्च राजवृत्तं चतुर्विधम्' ॥

इति । पञ्चसु सहायादिषु स्कन्धेषु अङ्गेषु कुशलः । तथाचोक्तं कामन्दकीये—

'सहायाः साधनोपाया विभागो देशकालयोः ।
विनिपातप्रतीकारः सिद्धिः पञ्चाङ्गमिष्यते' ॥

इति । षण्णां सन्ध्यादिगुणानामन्वयेन प्राप्त्या दृढः । यथाहामरसिंहः—

'सन्धिर्ना विग्रहो यानमासनं द्वैधमाश्रयः । षड्गुणाः'

इति । सप्तभिः स्वाम्यादिभिरङ्गैः सुसम्पन्नैः सर्वं शत्रुकृतोपद्रवादिकं सहते तेन न व्याकुलो भवतीत्यर्थः । सप्ताङ्गानि यथा—

'स्वाम्यमात्यं च राष्ट्रं च दुर्गं कोशो बलं सुहृत् ।
एतावदुच्यते राज्यं सत्त्वबुद्धिव्यपाश्रयम्' ॥

इति । अष्टौ व्यक्तयो रूपाणि यस्य शिवस्य तस्य लोकपालानां वा कलाधरः । जलाद्याः शिवस्याष्टौ मूर्तयः प्रसिद्धाः । नवनिधिः नवसंख्याका निधयो यस्य । महापद्मादयो नव निधयः प्रसिद्धाः । पुष्यत् वर्धमानं दशानां इन्द्रियाणां प्रत्ययः अधीनत्वं यस्य । 'प्रत्ययोऽधीन-शपथ-ज्ञान-विश्वास-हेतुषु' इत्यमरः । स्मार्तोच्छ्रायस्य धुरन्धरः श्रीबुक्कणक्ष्मापतिः विजयते सर्वोत्कर्षेण वर्तते ।

* स्वस्य महत्त्वं वर्णयति । इन्द्रस्येति । आङ्गिरसो बृहस्पतिः । वैन्यनृपतिः पृथुः तस्य । प्रतीची विप्रकृष्ट-व्यवहितादिप्रतिबन्धरहिता दृष्टि-

१. For गौतमिः D. and I. read गौतमः This latter appears to be a mistake, because according to the Rámáyana of Valmiki the family priest of निमि was Shatânand, the son of गौतम and not गौतम himself.

*प्रज्ञामूलमही विवेकसलिलैः सिक्ता बलोपघ्निका
मन्त्रैः पल्लविता विशालविटपा सन्ध्यादिभिः षड्गुणैः ।
शक्त्या कोरकिता यशस्सुरभिता सिद्ध्या समुद्यत्फला
सम्प्राप्ता भुवि भाति नीतिलतिका सर्वोत्तरं[1] माधवम् ॥ ५ ॥

†श्रीमती[2] जननी यस्य[3] सुकीर्तिर्मायणः पिता ।
सायणो भोगनाथश्च मनोबुद्धि[4]सहोदरौ ॥ ६ ॥

‡यस्य[5] बौधायनं सूत्रं शाखा यस्य च याजुषी ।
भारद्वाजं[6] कुलं यस्य सर्वज्ञः स हि माधवः ॥ ७ ॥

¶स माधवः सकलपुराणसंहिता-
प्रवर्त्तकः स्मृतिसुषमापराशरः ।

---

यस्य । अरुन्धत्याः सहचरो वसिष्ठः कुलगुरुः कुलपुरोहितः । अनेन पूज्यत्वं सूचितम् । आङ्गिरसादयः सप्त यथा इन्द्रादीनां कुलपुरोहिता मन्त्रिणश्चासन् तथा माधवोऽपि वीरबुक्कणभूपतेरासीदिति भावः ।

* अधुना स्वस्य नीतिशास्त्रप्रावीण्यं वर्णयति । प्रज्ञामूलेति । प्रज्ञैव मूलं तदाधारभूता मही च यस्याः । बलं सैन्यादिबलं तदेव उपघ्निका अन्तिकाश्रयः यस्याः । 'स्यादुपघ्नोऽन्तिकाश्रये' इत्यमरः । शक्त्या प्रभुशक्त्या कोरकिता मुकुलिता । सर्वोत्तरं सर्वातिशायिनम् ।

† सम्प्रति स्वकुलं वर्णयति । श्रीमतीति । श्रीमती श्रीमतीनाम्नी । मनोबुद्धिसदृशौ सहोदरौ । यथा मनोबुद्ध्योरेकमेवास्पदं तथेत्यर्थः ।

‡ स्वस्य गोत्रादिकमाह । यस्येति । याजुषी यजुर्वेदसम्बन्धिनी । कुलं गोत्रमित्यर्थः ।

¶ एवं श्लोकसप्तकेन स्वस्याधिकारं प्रयोजनं चाभिधाय अधुना

---

१. D. and I. have सर्वोत्तमम् for सर्वोत्तरम्. २. D. [illegible]nd I. read सुमती ३. A. has यस्य जननी for जननी यस्य. ४. I. reads म[illegible]ती for मनोबुद्धि and D. and G. read बुद्धिः सहोदरौ. ५. A. has thi[illegible]t and the verse ६ afterwards. ६. A. and D. read भारद्वाज[illegible]ate word o[illegible] of all other MSS [illegible] कुलं.

परावरस्मृतजगदीहितासये
पराशरस्मृतिविवृत्तौ प्रवर्त्तते ॥ ८ ॥

*पराशरस्मृतिः पूर्वैर्न व्याख्याता निबन्धृभिः ।
मया[२]ऽतो माधवार्येण तद्व्याख्यायां[३] प्रयत्यते ॥ ९ ॥

ननु—नेयं स्मृतिर्व्याख्यानमर्हति । †तत्प्रामाण्यस्य दुर्निरूप्यत्वात्[४] । यत्तु वेदप्रामाण्यकारणं जैमिनिना सूत्रितं—'तत् प्रमाणं बादरायणस्यान्यानपेक्षत्वात्' (पू० मी० १. १. ५) इति । न तत् पौरुषेयेषु‡ मूलप्रमाणसापेक्षेषु ग्रन्थेषु[५] यो-

व्याख्यानप्रवृत्तिं प्रतिजानीते । सेति । पुराणसंहिताः । मात्स्याद्याः तासां पठन-पाठन-व्याख्यानादिद्वारेण प्रवर्तकः । स्मृतीनां या सुषमा परमा शोभा 'सुषमा परमा शोभा' इत्यमरः । तस्याः व्याख्यानादिद्वारा पराशरः संशय-विपर्यासादिपराकरणपूर्वकं प्रसारकः । परावरं ऐहिकपारलौकिकं यत् स्मृतं स्मृत्युक्तं जगतः ईहितं तस्य तदर्थज्ञान-तदुक्तानुष्ठानादिद्वारा प्राप्तये । पराशरस्मृतिविवरणे प्रवर्तते प्रवृत्तो भवतीत्यर्थः ।

* अस्या एव स्मृतेर्व्याख्यानप्रवृत्तौ कारणमाह । पराशरेति । पूर्वैः मेधातिथ्यादिभिः ।

† अत्र तच्छब्देन व्याख्यास्यमाणायाः स्मृतेः परामर्शः ।

‡ पौरुषेयाः पुरुषैः मनु-पराशरादिभिः कृताः ग्रन्थाः मूलप्रमाणसापेक्षाः । अतः जैमिनिप्रोक्तं वेदप्रमाणकारणं तेषु योजयितुं न शक्यते । अयं भावः—ग्रन्थास्तावत् द्विविधाः स्वतःप्रमाणाः परतःप्रमाणाश्चेति । अपौरुषेयाणामत एव स्वतःप्रमाणानां वेदानां न प्रमाणान्तरसापेक्षत्वम् । कुतः, अन्यानपेक्षत्वात् । तदितराणां पौरुषेयाणामत एव परतःप्रमाणानां स्मृति-पुराणादीनां मूलप्रमाणसापेक्षत्वम् । कुतः, जैमिनिप्रोक्तस्य अन्यानपेक्षत्वरूपस्य प्रामाण्यहेतोः तत्र अभावात् ।

१. A. reads जगती for जगदी. २. D. and I. have अथातो for मयातो. ३. A. alone has व्याख्येयं प्रवर्त्स्यते. while B. C. and F. have व्याख्यायां प्रवर्त्स्यते. ४. All copies except B. C. and F. have पत्वात्. ५. I. omits ग्रन्थेषु.

जयितुं शक्यते । तर्ह्यस्तु* मूलप्रमाणमुपजीव्य प्रामाण्यम् । तन्न[१] । मूलस्य दुर्भणत्वात्[२] । न तावत् प्रत्यक्षं मूलम् । तस्यातीन्द्रियत्वात् । †नाप्यनुमानम् । तस्य[३] प्रत्यक्षसापेक्षत्वात् । नापि‡ पुरुषान्तरवाक्यम् । विप्रलम्भकस्य[४] पुंसो यथादृष्टार्थवादित्वाभावात्[५] ।

अविप्रलम्भकस्यापि संशय-विपर्ययसम्भवात् । नापि चोदना । तस्या अनुपलब्धेः । न[६] खलु स्मर्यमाणानां शौचाद्याचाराणां[७]

* एवं मूलप्रमाणसापेक्षत्वात् अप्रामाण्यं प्रसाध्य पक्षान्तरमुत्थापयति । तर्ह्यस्त्विति । अस्याः स्मृतेः धर्मप्रतिपादकत्वात् मूलप्रमाणं धर्मः । स च प्रत्यक्षादिभिः प्रमाणैः दुर्भणः । तद्यथा—मूलप्रमाणभूतो धर्मः न तावत्प्रत्यक्षः । 'इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानं अव्यपदेशि अव्यभिचारि व्यवसायात्मकं प्रत्यक्षं'( गौ० सू० १ । १ । ४ ) भवितुमर्हति । धर्मस्य अतीन्द्रियत्वात् । तत्र इन्द्रियस्यार्थेन सन्निकर्षाभावः ।

† अनुमानमपि निराकरोति । नापीति । अनुमानं हि प्रत्यक्षसापेक्षम् । 'अथ तत्पूर्वकं त्रिविधमनुमानं पूर्ववत् शेषवत् सामान्यतो दृष्टं च (गौ० सू० १ । १ । ५ ) इत्युक्तत्वात् प्रत्यक्षासिद्धौ अनुमानस्याप्यसिद्धिः । एवं 'प्रसिद्धसाधर्म्यात् साध्यसाधनं उपमानं' (गौ० सू० १ । १ । ६) अपि न । प्रसिद्धस्यान्यस्याभावात् । उपमानस्यानुमानेऽन्तर्भावाच्च ।

‡ शब्दप्रमाणं निवारयति । नापि पुरुषान्तरवाक्यमिति विप्रलम्भकः विशेषेण प्रलम्भनं विरुद्धं सम्यग्वेदनं करोति यः । एवमेव चोदनापि न । 'चोदनेति क्रियायाः प्रवर्तकं वचनमाहुः' (पू० मी० १ । १ । २) इति शबरस्वामी । तच्च वचनं स्वतःप्रमाणं वैदिकमेव । न मूलप्रमाणसापेक्षं पौरुषम् ।

१. न । तन्मू &c, is the reading of B. C. and D. read न । एतन्मूल &c. २. I. reads दुर्लभत्वात्. ३. All the copies except A. have धर्मस्य for तस्य. We have adopted A. for धर्मस्य does not agree with the context. ४. D. adds भ्रान्त before विप्रलंभ. ५. D. has यथार्थ for दृष्टार्थ. ६. D. E. G. H and I. read नो for न. ७. D. reads only शौचाचाराणां.

मूलभूतां काञ्चिच्चोदनां प्रत्यक्षत उपलभामहे । नाप्यनुमातुं[1] शक्यते । *शाक्यादिप्रणीतचैत्यवन्दनादिष्वतिप्रसङ्गात् ।

अथोच्येत[2]—मन्वादिस्मृतीनां[3] शाक्यादिस्मृतीनां चास्ति महद्वैषम्यम् । प्रत्यक्षवेदेनैव[4] साक्षान्मन्वादिप्रामाण्याङ्गीकारात् । '†यद्वै किंच[5] मनुरवदत्तद्भेषजम्' (तै. सं. २, २, ६, २) इति ह्याम्नायते । न त्वेवं ‡शाक्यादिस्मृत्यनुग्राहकं किञ्चिद्वै-

* अतिप्रसङ्गं दर्शयति । शाक्येति । शकोऽभिजनो अस्य स शाक्यः । यद्वा—

'शाकवृक्षप्रतिच्छन्नं वासं यस्माच्च चक्रिरे ।
तस्मादिक्ष्वाकुवंश्यास्ते शाक्या इति भुवि स्मृताः' ॥

इत्यागमात् । शाके भवाः शाक्याः इक्ष्वाकुवंशीया राजानः । तद्वंशीयत्वात् बुद्धमुनिरपि शाक्यः । चैत्यं बुद्धप्रतिमा । 'चैत्यमायतने बुद्धबिम्बेऽप्युद्देश्यपादपे' इति रुद्रः । यद्यपि आश्वलायनोक्तचैत्ययज्ञे (आ. गृ. सू. १।१२।१) चित्ते भवाश्चैत्या इति व्युत्पत्त्या शिव-विष्ण्वादिप्रतिमाः चैत्यशब्देनोक्ताः तथापि अत्र शाक्यादिप्रणीतचैत्यस्यैव ग्रहणम् ।

† यद्वै इति । मनुः स्वायम्भुवः । यद्वै किञ्च यत्किमपि उक्तवान् तत्सर्वमपि भेषजम् । भेषं रोगं जयतीति भेषजम् । जै क्षये, भ्वादिः । तथाचोदाहृतं मनुवाक्यं वाचस्पतिमिश्रैः—

'यः कश्चित् कस्यचित् धर्मो मनुना परिकीर्तितः ।
स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः' ॥

(यो. भा. टी. पा. १ सू. ६)

सर्वज्ञत्वात् मनोः वाक्यं भेषजवद्धितकारी तस्मात्सेव्यमित्यर्थः ।

‡ शाक्यादीति । आदिपदात् चार्वाकादीनां सर्वेषामपि नास्तिकानां ग्रहणम् । शाक्यादिवचनानि केवलं वैदिकवचनाननुगृहीतान्येवेति

१. D. has अनुष्ठातुं for अनुमातुं. २. A. and D. have अथोच्यते for अथोच्येत. ३. A. D. have ग्रन्थानाम् for स्मृतीनां. ४. G. alone has प्रत्युत for प्रत्यक्ष. D. omits the sentence ending with beginning with यद्वै किंचित &c. अतो नोक्तातिप्रसंग. ५. E. reads यत्किंचित् for यद्वै किंच.

दिकं वचोऽस्ति । अतो नोक्तातिप्रसङ्गः—इति । तन्न । 'यद्वै किंच' इत्यस्यार्थवादत्वेन स्वार्थे तात्पर्याभावात् ॥

'मानवी ऋचौ धाय्ये कुर्यात्' (तै. सं. २, २, ६, २)

इति विधाय तद्विधिस्तावकत्वेन 'यद्वै किंच' इत्यादेः पठितत्वात् । तस्य च विधेरयमर्थः—इष्टिविकृतिरूपे सौनारौद्रे चरावतिदेशतः प्राप्तासु सामिधेनीषु मध्ये प्रक्षेप्तव्यौ धाय्यासंज्ञकौ यौ द्वौ मन्त्रौ तौ मानवौ कर्तव्यौ—इति । तत्र मानवत्वमुक्तेनार्थवादेन शस्यते । अतो न स्मृतिप्रामाण्यं वेदेनोक्तं—इति शाक्यादिस्मृतिवदप्रमाणभूता एव मन्वादिस्मृतयः ।

तथा चोक्तम्—

'प्रायेणानृतवादित्वात् पुंसां भ्रान्त्यादिसम्भवात् ।
चोदनाऽनुपलब्धेश्च* श्रद्धामात्रात् प्रमाणता' ॥

इति । अस्तु वा कथञ्चिद् मनुस्मृतेः प्रामाण्यं तथापि प्रकृतायाः पराशरस्मृतेः किमायातम् ? । नहि मनोरिव परा-

---

न । अपि तु वेदविरुद्धान्येव तानि । यथोक्तं भट्टकुमारिलश्रीचरणैः—'शाक्यादिवचनानि तु कतिपयदम-दानादिवर्जं सर्वाण्येव समस्तचतुर्दशविद्यास्थानविरुद्धानि त्रयीमार्गव्युत्थितविरुद्धाचरणैश्च बुद्धादिभिः प्रणीतानि । त्रयीबाह्येभ्यः चतुर्थवर्णनिरवसितप्रायेभ्यो व्यामूढेभ्यः समर्पितानीति न वेदमूलत्वेन सम्भाव्यन्ते' (तं. वा. १ । ३ । ४)

* भट्टकुमारिलश्रीचरणैस्तु तन्त्रवार्तिके—

'भ्रान्तेरनुभवाद्वापि पुंवाक्याद्विप्रलम्भनात् ।
दृष्टानुगुण्यसाध्यत्वात् चोदनैव लघीयसी ॥'

इत्युक्तम् । चोदना प्रमाणभूतं वेदवाक्यम् । तस्याः कल्प... एतन्न ... धर्मेयीयसी ।

१. I. reads विधानात्. २. G. and H. omit च. ३. In the ... e conte... of चरौ G. has चरु निर्वर्तत इति. ४. I. reads मानवत्वमर्थ... नमुक्तार्थवादेन शस्यते. ५. D. reads वेदोक्तमिति for वेदेनोक्तमिति

शरस्य महिमानं कश्चिद्वेदः प्रख्यापयति । तस्मात् तदीय-स्मृतेः प्रा[1]माण्यं दुर्निरूपमिति ।

अत्रोच्यते । प्रामाण्यस्य स्वतस्त्वात् अप्रामाण्ये कारणा-भावाच्च स्मृतयः प्रमाणम् । यत्तु[2],—अप्रामाण्यसाधकमनृतवादि-त्वादिहेतुत्रयमुपन्यस्तम्, तदसिद्धम् । आजन्मसिद्धेषु मनु-पराशरादिषु अनृतवदन-भ्रान्त्योरत्यन्तानाशङ्कितत्वेन हेतोः स्वरूपासिद्धेः । नच आजन्मसिद्धावेवं[3] विवदितव्यम् । पराश-रादिसद्भावाव[4]बोधकानामेव मन्त्रार्थवादेतिहासपुराणानां तदीय-सिद्धिबोधकत्वात् । मन्त्राद्यप्रामाण्ये च पराशराद्य[5]सद्भावेनाश्र-यासिद्धिः केन वार्येत ? । मानान्तराविरुद्धानामननु[6]वादिनां मन्त्रादीनां स्वार्थे[7] प्रामाण्यमुत्तरमीमांसायां देवताधिकरणे*-

---

* देवताधिकरणं उत्तरमीमांसायां प्रथमेऽध्याये तृतीयपादे षड्विंशं सूत्रमारभ्य त्रयस्त्रिंशत्तमसूत्रपर्यन्तमष्टभिः सूत्रैः । 'तत्र मन्त्रा अपि श्रुत्या-दिविनियुक्ताः प्रयोगसमवायिनोऽभिधानार्था न कस्यचिदर्थस्य प्रमाणमि-त्याचक्षते' इति पूर्वः पक्षः । सिद्धान्तस्तु—'तद्यत्र सोऽवान्तरवाक्यार्थः प्रमाणान्तरगोचरो भवति तत्र तदनुवादेनार्थवादः प्रवर्तते । यत्र प्रमाणा-न्तरविरुद्धः तत्र गुणवादेन । यत्र तदुभयं नास्ति तत्र प्रतीतिशरणैः वि-द्यमानवाद आश्रयणीयो न गुणवादः । एतेन मन्त्रो व्याख्यातः । उक्तं च—

---

१. All copies except A. and I. We adopt the latter have दुर्निरूपं प्रामाण्यम्. २. A. reads च for तु. ३. All others except A. read सिद्धौ विवदितव्यम्. ४. We read अवबोधकानां with A. instead of बोधिनाम् which is the reading of all others. ५. A. reads द्यभावे for द्यसद्भावेन, that of all others. ६. For अननुवादिनां मन्त्रादीनां. A. alone has मन्वादि-स्मृतीनाम्; D. reads अनुवादादीनां for अननुवादिनाम् and omits मन्त्रादीनां. ७. A. D. G. and H. read स्वार्थप्रामाण्यम् for स्वार्थे प्रा० &c.

(उ० मी० १.३. अधि०९) व्यवस्थापितम्[1] । अर्थवादाधिकरणे तु (पु० मी० १. २. अधि० १) स्वार्थप्रामाण्यनिराकरणं विरुद्धानुवादयोः सावकाशम् । अतः—'यद्वै किंच'—इत्यर्थवादस्य विधिस्तावकस्य स्वार्थेऽपि[2] तात्पर्यमस्ति—इति न शाक्यादिप्रतिबन्दी युक्ता । एतदेवाभिप्रेत्य[3] चतुर्विंशतिमते शाक्यादिवाक्यानामनादरणीयत्वमुक्तम् ।

'अर्हच्चार्वाकवाक्यानि[4] बौद्धादिपठितानि तु ।
विप्रलम्भकवाक्यानि तानि सर्वाणि[6] वर्जयेत्[5]' ॥

इति । नच पराशरमहिम्नोऽश्रौतत्वम् ।
'स होवाच व्यासः पाराशर्यः' (तै. आ. १, १, ३, ३७)
इति श्रुतौ पराशरपुत्रत्वमुपजीव्य व्यासस्य स्तुतत्वात् । यदा सर्वसम्प्रतिपन्नमहिम्नो वेदव्यासस्यापि स्तुतये पराशरपुत्रत्वमुपजीव्यते तदा किमु वक्तव्यमचिन्त्यमहिमा पराशर इति । किंच वाजसनेयिशाखायां वंशब्राह्मणे वेदसम्प्रदायप्रवर्त्तकगुरुशिष्यपरम्परायां पराशरस्य पुत्रपौत्रौ श्रूयेते ।

'घृतकौशिकः पाराशर्यायणात्, पाराशर्यायणः पाराशर्यात्, पाराशर्यो जातूकर्ण्यात्' ।

---

'विरोधे गुणवादः स्यात् अनुवादोऽवधारिते ।
भूतार्थवादस्तद्धानात् अर्थवादस्त्रिधा मतः' ॥ इति ।

---

१. D. reads व्यवास्थितम् for व्यवस्थापितम्. २. In A. अपि follows विधिस्तावकस्य instead of अर्थे. ३. B. C. D. E. F. and G. read तदेव for एतदेव. ४. A. reads अत्र for अर्हत्; though अत्र is not incorrect does not give the sense of अर्हत् which is quite suitable here. ५. H. reads वर्तयेत् for वर्जयेत्. ६. C. omits सर्व.

इति। तस्मात् पराशरोऽपि मनुसमान एव।

एष एव न्यायो वसिष्ठात्रि-याज्ञवल्क्यादिषु योजनीयः। तत्तद्विषयश्रुतीनामुपलम्भात्। 'ऋषयो वा इन्द्रं प्रत्यक्षं नापश्यन्। तं वसिष्ठः प्रत्यक्षमपश्यत्' (तै० सं० ३, ५, २, ५)

'अत्रिरददादौर्वाय प्रजां पुत्रकामाय' (तै० सं० ७, १, ८, १)

'अथ ह[2] याज्ञवल्क्यस्य द्वे भार्ये बभूवतुः'।

इत्याद्याः श्रुतयः। न चैवं सति मन्वादिस्मृतौ कुतो ऽनादरः?—इति शङ्कनीयम्। मन्वादिस्मृतेर्मेधातिथ्यादिभिर्व्याख्यातत्वात्।

या च मूलभूतचोदनाऽनुपलब्धिरुपन्यस्ता*, साऽप्यसिद्धा।

'पञ्च वा एते महायज्ञाः सतति प्रतायन्ते सतति सन्तिष्ठन्ते—देवयज्ञः पितृयज्ञो भूतयज्ञो मनुष्ययज्ञो ब्रह्मयज्ञः' (तै० आ० २, १०, ७)

इत्यादीनां स्मार्त्तधर्ममूलभूतचोदनानामुपलम्भात्[3]। 'सतति'

---

* सर्वेषां स्मृतिप्रतिपादितानां धर्माणां मूलभूताः चोदनाः कुतो नोपलभ्यन्ते? इति चेत्। तदुक्तं तन्त्रवार्तिके—

'शाखानां विप्रकीर्णत्वात् पुरुषाणां प्रमादतः।
नानाप्रकरणस्थत्वात् स्मृतेर्मूलं न दृश्यते'॥

'पुरुषाणां' अर्वाचीनानां स्मृतिपाठकानां न तु मन्वादीनां स्मर्तॄणाम्। स्मृतेः मूलभूतं श्रुतिवाक्यं कस्यां शाखायां कुत्र कस्मिन् प्रकरणे वर्तते इति न दृश्यते तथापि तत् कुत्रापि वर्तत्येव। अतो न निर्मूलत्वं स्मृतेः।

† अस्तु वा अदृष्टार्थानां पञ्चमहायज्ञादिप्रतिपादिकानां स्मृतीनां कथंचित् वेदमूलत्वं तथापि—गुर्वनुगमादीनां दृष्टार्थप्रतिपादिकानां स्मृ-

---

१. B. C. D. E. and F. read -रदर्शदौ for रददादौ. २. ह is omitted by B. C. E. F. G. and H. ३. D. have नोदना for चोदना.

सततं नित्यमित्यर्थः[1] । यत्रापि शौचादौ* चोदना[2] नोपलभ्यते तत्रापि सा सम्भाव्यते । तथा चोक्तं भट्टाचार्यैः—

'वैदिकैः स्मर्यमाणत्वात् तत्परिग्रहदार्ढ्यतः ।
सम्भाव्यवेदमूलत्वात् स्मृतीनां मानतोचिता' ॥

इति । मनुनाऽप्येतदेवोक्तम्—

'श्रुतिं[3] पश्यन्ति मुनयः स्मरन्ति च तथा स्मृतिम् ।
तस्मात् प्रमाणमुभयं प्रमाणैः प्रमितं[4] भुवि ॥

---

तीनां कुतो वेदमूलत्वं? इति चेत् । न । गुर्वनुगमादिकं न केवलं दृष्टार्थम् । यथोक्तम्–'धर्मं प्रति यतोऽत्रेदं प्रामाण्यं प्रस्तुतं स्मृतेः । तस्मात्कृष्यादिवत्तेषामुपन्यासो न युज्यते' ॥ इति 'तस्माच्छ्रेयांसं पूर्वं यन्तं पापीयान् पश्चादन्वेति' इत्यस्यां स्मृतौ 'श्रेयांसं' इत्यभिधानात् अदृष्टार्थत्वमस्येव । अत्र भाष्यकृद्भिः श्रीशबरस्वामिचरणैः 'दृष्टार्थत्वादेव प्रामाण्यं' इति यदुक्तं तत्पूर्वपक्षवाद्यतिशयार्थम् । एतदुक्तं भवति—यास्तावददृष्टविषयाः स्मृतयः ताः कथञ्चित् कोऽपि अप्रमाणीकुर्यात् । कथं पुनरिमाः दृष्टविषयाः गुर्वनुगमनादिविषयाः अप्रमाणं भविष्यन्ति–इति ।

* शौचादावपि काचित् चोदना उपलभ्यते । यथा—'मलवद्वाससा सह न संवदेत् । तस्मान्न ब्राह्मणायावगुरेत्' इत्याद्याः ।

---

१. C. only omits नित्यम्. २. चोदना is omitted by all except A.

३. These two are according to the author quoted from Manu; but the MSS. and published editions of Manu which we have examined give the following in the place of the first :—

'श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः ।
ते सर्वार्थेष्वमीमांस्ये ताभ्यां धर्मो हि निर्बभौ' ॥

As, however, the spirit of both is one and the same, and as the one can replace the other without affecting the contest of the preceding and succeeding texts, we think that the verse quoted by Madhava is simply a reading of the verse we have given above from Manu.

४. For प्रमितं D. has प्रथितं; and I. प्रापितम्.

यो ऽवमन्येत ते तूभे *हेतुशास्त्राश्रयान्नरः[२] ।
स साधुभिर्बहिष्कार्यो नास्तिको वेदनिन्दकः' ॥

[अ. २ । ११]

इति । आनुशासनिके ऽपि—

'धर्मं जिज्ञासमानानां प्रमाणं प्रथमं[३] श्रुतिः ।
द्वितीयं धर्मशास्त्रं† तु तृतीयं लोकसंग्रहः'‡ ॥

इति । तस्मात् व्याख्यातुं योग्या पराशरस्मृतिरिति सिद्धम् ।

* हेतुशास्त्रं बौद्धादिप्रणीतचैत्यवन्दनादिशास्त्रं वैदिकप्रमाणरहितम् । तस्य आश्रयात् नास्तिकवादावलम्बनेनेत्यर्थः । यथोक्तं वार्तिके—

'शाक्यादयश्च सर्वत्र कुर्वाणा धर्मदेशनाम् ।
हेतुजालविनिर्मुक्तां न कदाचन कुर्वते ॥
न च तैर्वेदमूलत्वमुच्यते गौतमादिवत् ।
हेतवश्चाभिधीयन्ते, ये धर्माद्दूरतः स्थिताः ॥
एत एव च ते येषां 'वाङ्मात्रेणापि नार्चनम् ।
पाखण्डिनो विकर्मस्था हैतुकाश्चैत एव हि' ॥

† धर्मशास्त्रं मन्वादिस्मृतयः । तत्र धर्मोपदेश एव प्रधानः । इतिवृत्ताख्यानं त्वानुषङ्गिकम् । यद्यपि पुराणादिष्वपि धर्मोपदेशो वर्तते तथापि तत्र इतिवृत्ताख्यानमेव प्रधानम् । धर्मोपदेशस्त्वानुषङ्गिकः । अतः पुराणादिकं न धर्मशास्त्रम् ।

‡ लोकस्य सङ्ग्रहः लोकाचारः शिष्टाचार इति यावत् ।

१. In this verse it is found in the original with slight differences of readings, &c. मूले is found in the place of तूभे. But it is not quite clear which of the two is the reading of *Medhátithi*, *Sarvajñanárayena*: *Kúllookbhatta Rághawánanda*, and *Nandana*, which *Rámchandra* and *Govindrája*, distinctly adopt the reading तूभे for the original मूले.

२. द्विजः is the reading for नरः as found in the original and adopted by all the commentaries. ३. We read प्रथमं with A. but all others read परमं. We cannot find the whole verse in *Máhábhárata Ánushásanik Purva*, but the first half of the same is the latter half of the *Manusmriti* 2,13; and the commentaries of Manu read परमं.

पराशरस्मृतावस्यां ग्रन्थकृद्भिर्विविच्यते ।
द्वे काण्डे द्वादशाध्यायाः श्लोका अष्टोनषट्शतम् ॥
आचारस्यादिमः काण्डः प्रायश्चित्तस्य चान्तिमः ।
इष्टप्राप्तिरनिष्टस्य निवृत्तिश्चानयोः क्रमात् ॥
'एते सर्वे पुण्यलोका भवन्ती'ति श्रुतिर्जगौ—।
विहितादाश्रमाचारादिष्टाप्तिं[1] पारलौकिकीम्[2] ॥
प्रसक्तो नरको ऽनिष्टो निषिद्धाचरणेन यः ।
तन्निवृत्तिः स्फुटा[3] शास्त्रे प्रायश्चित्ताभिधायिनी ॥
परलोकप्रधानस्य* धर्मस्यैषा द्वयी गतिः—।
प्रायश्चित्तं तथाऽऽचारः श्रौते[4] धर्मे तथेक्षणात् ॥
श्रौतो[5] धर्मोऽग्निहोत्रादिराचारस्तदनुष्ठितिः ।
अयथा[6]विध्यनुष्ठाने प्रायश्चित्तं श्रुतौ श्रुतम् ॥
कल्पसूत्रकृतः† श्रौते[7] प्रायश्चित्तमनुष्ठितिम् ।

* भगवता महर्षिणा पराशरेण काण्डद्वयमेवोक्तं तत्र हेतुमाह । परलोकेति । धर्मो द्विधा । परलोकप्रधान एतल्लोकप्रधानश्च । तत्र तावत् श्रौतो धर्मः परलोकप्रधानः एतल्लोकोपसर्जनः । तस्यैव विवक्षितत्वात् आचारः प्रायश्चित्तं चेति काण्डद्वयमेवोक्तम् । न व्यवहारः ।

† कल्पसूत्राणि बौधायनीय–आश्वलायनीय–द्राह्यायणीयादिनामभिः प्रसिद्धाः कर्मप्रयोगप्रतिपादका ग्रन्थाः । तेषां कर्तारः तत्तन्नामका ऋषयः । कल्पसूत्रलक्षणमुक्तं भट्टपादैः—

---

१. A. reads इष्टाप्तिः; and २. पारलौकिकीं for पारलौकिकीम्. ३. A. has स्फुटं for स्फुटा. ४. All but A. G. and I. read श्रौतधर्मे for श्रौते धर्मे. ५. D. and I read श्रौतधर्मो for श्रौतो धर्मो. ६. B. C. have अन्यथा for अयथा. ७. A. alone reads सूत्रे for श्रौते.

असूत्रयन्नुभे[1] एव व्यवहारं[*] तु नाब्रुवन् ॥
तद्वदेवायमाचार्यः परलोकप्रधानकम्[2] ।
स्मार्त्तं धर्मं विवक्षुः सन् काण्डद्वयमवोचत ॥
ननु[3][†]—चोदनया गम्ये व्यवहारेऽपि धर्मता—
अस्तीति चेदस्तु[4], सा तु लोकेऽस्मिन्नुपयुज्यते[‡] ॥
कारीर्यादिश्रौतधर्मौ दृष्टैकफलकौ यथा ।
लाभ-पूजा-ख्यातिमात्रफला व्यवहृतिस्तथा ॥
जेतुर्लाभादिकं तद्वत् पराजेतुश्च दण्डनम्[5] ।
तावेव स्वर्ग-नरकौ विहित-प्रतिषिद्धजौ ॥

---

'सिद्धरूपः प्रयोगो यैः कर्मणामनुगम्यते ।
ते कल्पा लक्षणार्थानि सूत्राणीति प्रचक्षते ॥
कल्पनाद्धि प्रयोगाणां कल्पोऽनुष्ठानसाधनम् ।
सूत्रं तु सूचनात्तेषां स्वयं कल्प्यप्रयोगकम्' ॥ इति ।

* व्यवहारशब्दस्य निरुक्तिर्यथा—
'वि—नानार्थे, अव—सन्देहे, हरणं हार उच्यते ।
नानासन्देहहरणात् व्यवहार इति स्मृतः' ॥
सोऽयं व्यवहारः चतुष्पात् अग्रे तृतीयकाण्डे विस्तरेणाभिधास्यते ।

† अत्र शङ्कते । 'चोदनालक्षणोऽर्थो धर्मः' (पू. मी. १।१।२) इत्युक्तत्वात् चोदनया व्यवहारोऽपि गम्यते । तस्मात् तस्यापि धर्मत्वं वर्तते । अतो व्यवहारोऽपि वक्तुमुचित एव ।

‡ समाधत्ते । अस्तु नाम व्यवहारस्य धर्मता । सा अस्मिन्नेव लोके उपयुज्यते । दृष्टैकफलत्वात् । अयमभिसन्धिः-व्यवहाररूपो धर्मः एतल्लोकप्रधानः । परलोकस्तु उपसर्जनीभूतः । परलोकप्रधानस्यैव धर्मस्य विवक्षितत्वादाचार्येण व्यवहारोऽत्र नोक्तः ।

---

१. H. and I. have असूचयन् for असूत्रयन्. २. H. and I. read प्रसाधनम् for प्रधानकम्. ३. A. substitutes न तत्र for ननु. ४. For-दस्तु सा तु B. C. E. F. G. H. and I. read-दनुष्ठातुः; अनुष्ठातुः is correct; but it is not idiomatic. ५. H. has खण्डनम् for दण्डनम्.

ननु*—राज्ञश्च सभ्यानां साक्षिणां चान्यथाकृतौ ॥
प्रत्यवायात् व्यवहृतिः परलोकप्रयोजना ।
'अदण्ड्यान्† दण्डयन् राजा दण्ड्यांश्चैवाप्यदण्डयन् ।
अयशो महदाप्नोति नरकं चापि गच्छति ।
[अ. ८. श्लो. १२८]
सभा[1] वा न प्रवेष्टव्या वक्तव्यं वा समञ्जसम् ॥
अब्रुवन् विब्रुवन् वापि नरो[2] भवति किल्बिषी ।
[अ. ८. श्लो. १३]
साक्ष्ये ऽनृतं वदन् पाशैर्बध्यते वारुणैर्भृशम् ॥
विवशः शतमाजातीः[3] तस्मात् साक्षी वदेदृतम्'।
[अ. ८. श्लो. ८२]
राजादेः प्रत्यवायो ऽस्तु व्यवहारे किमागतम्? ॥
व्यवहारो‡ न राजादेरर्थि-प्रत्यर्थिनोस्तु सः ।
प्रत्यर्थिनोऽर्थिनो वाऽत्र प्रत्यवायो नहि स्मृतः ॥
पराजयनिमित्तेन[4] प्रायश्चित्तं च न स्मृतम् ॥

* व्यवहारस्यैतल्लोकप्रधानत्वमाशङ्कते । नन्विति । राजादीनामन्यायेन व्यवहारनिरीक्षणे प्रत्यवायोक्तेः । तदपाकरणे प्रायश्चित्तानुष्ठानमपेक्षितम् । तथा सति व्यवहारस्यापि परलोकप्रधानत्वं सिद्धम् ।

† राजादीनां प्रत्यवायविषये मनुवाक्यानि पठति । अदण्ड्यानिति ।

‡ समाधत्ते । अस्तु नाम राजादीनां प्रत्यवायः । व्यवहारो न राजादिकृतः । अर्थिप्रत्यर्थिनोरेव व्यवहारः । तयोस्तु जयापजयरूपे इष्टानिष्टे ऐहिके एव फले । न प्रायश्चित्तादिकम् ।

१. This verse is omitted by B. C. and F. Kúllookabhat and Rághwanand prefer सभां वा न प्रवेष्टव्यम्. २. MSS. read नरः, we adopt the original. ३. A. reads वर्षाणि for आजातीः ४. D. has निमित्ते तु for निमित्तेन.

ऋणाद्यैर्नरकोक्तिर्या* सा ऽप्याचारनिबन्धना ।
अस्तु† वा नरकः शास्त्रविरुद्धव्यवहारिणः ॥
परलोकप्रधानत्वमेवास्माभिर्निवार्यते ।
एतल्लोकप्रधानो यः परलोकोपसर्जनः ॥
स धर्मो व्यवहारः स्यादाचारस्तु विपर्यये ।
प्राधान्ये‡ ऽप्यस्य लोकस्य स्यादेवाम्नायमूलता ॥
गान्धर्वाद्युपवेदेषु तादृशेषु तदीक्षणात् ।
'जग्राह पाठ्यमृग्वेदात्सामभ्यो गीतिमेव§ च ॥

* यातु ऋणापाकरणादिना नरकप्राप्तिरुक्ता सापि आचारनिबन्धना लोकव्यवहारमूलभूता । नरकोक्त्या निन्द्यत्वमेवाभिहितमिति भावः ।

† ननु—'ऋणानां चानपक्रिया' (अ.११. श्लो. ६९) इत्यत्र मनुना ऋणानपाकरणस्योपपातकमध्ये परिगणितत्वात् प्रत्यवाय एव गम्यते । तत्कथमुच्यते आचारनिबन्धनेति ? । एवमेव व्यवहारनिर्णयस्य राजादीनामनुष्ठेयत्वात् अन्यथाकरणे तेषामपि प्रत्यवायः स्यादेव । उभयथापि व्यवहारस्य परलोकप्रयोजनकत्वं दुर्निवारमित्यत आह । अस्त्विति । व्यवहारस्य परलोकप्रधानत्वमेवास्माभिर्निवार्यते न उपसर्जनत्वम् । अतो न कश्चिद्विरोध इत्यर्थः ।

‡ एतल्लोकप्रधानत्वेऽपि व्यवहारस्याम्नायमूलत्वं स्यादेव । कुतः, तादृशेषु व्यवहारसदृशेष्वेव गान्धर्वादिषु वेदमूलत्वदर्शनात् ।

§ गान्धर्वोपवेदस्य आम्नायमूलत्वप्रदर्शनार्थं भरतोक्तिमवतारयति । जग्राहेति । प्रकारान्तरेणाप्यस्य क्रतुत्वं प्रतिपादितं भरतेन । यथा—

---

१. A. and D. read ऋणादौ for ऋणाद्यैः; and G. has for the same ऋणादेः. २. D. reads निबंधिनी for निबंधना. ३. A. substitutes पाद्यम् for पाठ्यम्; and I. reads वाक्यम्.

यजुर्वेदादभिनयान् रसानाथर्वणादपि' ।
किं बहूक्त्या ऽयमाचार्यः परलोकैकदृष्टिमान् ॥
व्यवहारं तु नावोचत् किन्तु सूचितवानमुम्[१] ।
राजधर्मप्रसङ्गेन 'क्षितिं धर्मेण पालयन्[२]' ॥
इति ब्रुवन् राजदृश्यं व्यवहारमसूचयत् ।
साक्षादिष्टाप्तिहेतुत्वादाचारः* पूर्वमीर्यते[३] ॥
आचारस्यान्यथात्वे तु प्रायश्चित्तगवेषणम् ।
इहाचारे त्रयो ऽध्यायाः प्रायश्चित्ते नवेरिताः[४] ॥
आचारतश्चतुर्वर्णधर्मौ[५] साधारणेतरौ† ।
शिष्टाचारान्वितस्तत्र[६] धर्मः साधारणः स्मृतः ॥

---

' प्रयोगं यश्च कुर्वीत प्रेक्षते वा विधानवान् ।
या गतिर्वेदविदुषां या गतिर्यज्ञयाजिनाम्
या गतिर्दानशीलानां तां गतिं प्राप्नुयान्नरः ' ॥

इत्यर्थवादेन क्रतुत्वं भवति ।

* आचारस्यैव प्रथममुक्तौ हेतुमाह । साक्षादिति । प्रत्यक्षत्वेन इष्टाप्तिहेतुत्वमाचारस्य परलोकप्रधानत्वेन ।

† साधारणः तदितरः असाधारणः । आचारकाण्डे वर्णचतुष्टयस्य साधारणो ऽसाधारणश्च द्विविधो ऽपि धर्म उक्त इति भावः ।

---

१. सूचितवानमुम् is replaced by सूचितवानृतम् in D. and G. २ A. reads पालयेत् for पालयन्. ३. A. alone has इष्यते for ईर्यते. ४. A. and I. read नवोदिताः for नवेरिताः. ५. For आचारतः H. substitutes अवतारः. ६. All except A. and I. have the following:—शिष्टाचाराह्निके तत्र धर्मौ साधारणौ मतौ for the text; this appears to be a mistake when we take into consideration what has been said in the previous line.

षट्कर्म-क्षितिरक्षाद्याः वर्णाऽसाधारणाः[*] स्मृताः ।
आचारे प्रथमाध्याये त एते ऽर्थाः प्रकीर्तिताः ॥
कृष्यादिजीवनोपाया द्वितीये ऽध्याय ईरिताः ।
चतुराश्रमधर्माश्च सूचिता आश्रमोक्तितः ॥
उक्तौ तृतीय आशौचविस्तार-श्राद्धसङ्ग्रहौ ।
अध्यायत्रयगा अर्थाः प्रोक्ता आचारकाण्डगाः ॥
तुर्ये[†] प्रकीर्णपापस्य प्रायश्चित्तं प्रपञ्चितम् ।
प्रसङ्गात् पुत्रभेदादि प्रोक्तं च परिवेदनम्[‡] ॥

---

* वर्णानां असाधारणाः विशिष्टा इत्यर्थः । तथा हि । षट्कर्माणि ब्राह्मणस्यैव, क्षितिरक्षा क्षत्रियस्यैव, एवं वैश्य-शूद्रयोरपि वाणिज्य-सेवादयः असाधारणा धर्माः प्रतिपादिताः ।

† ननु—आचारानन्तरं व्यवहारः कुतो नोक्त? इति चेत् । आचारस्य अन्यथात्वे प्रायश्चित्तगवेषणं कर्तव्यम् । अतः क्रमप्राप्तत्वेन प्रायश्चित्तस्यैव वक्तव्यत्वात् व्यवहारस्य नावकाशः । तुर्ये इति । 'यदनुक्तं तत्प्रकीर्णम्' इत्युक्तलक्षणस्य महापातकाद्यन्यतमत्वेन नोक्तस्य प्रकीर्णपापस्य प्रायश्चित्तं चतुर्थे ऽध्याये ऽभिहितमित्यर्थः ।

‡ पुत्रभेदादिकस्य परिवेदनस्य च विषयान्तरत्वे ऽपि प्रसङ्गात् तदुक्तमित्याह । प्रसङ्गादिति । प्रसङ्गस्तु 'द्वौ कृच्छ्रौ परिवित्तेस्तु' इत्यादिप्रायश्चित्तकथनरूपः । परिवेदनं तु ज्येष्ठे भ्रातर्यकृतदाराग्निहोत्रसंयोगे कनिष्ठस्य तत्करणम् । एतच्चाग्रे मूल एव स्पष्टम् ।

---

१. All but D. reads वर्णसा–for वर्णासा–; H. substitutes धर्माः for वर्णाः, which in the original is corrected in the margin to धर्माः.
२. All except A. and I. have for the text the following:—कृष्यादिजीवनोपायौ द्वितीयेऽध्याय ईरितः ।

प्रकीर्णशेषः संस्कारः आहिताग्नेश्च पञ्चमे ।
मलावहे* च सङ्कीर्णे तथा चैवोपपातके ॥
प्रायश्चित्तं षष्ठ उक्तं शुद्धिश्चान्ने रसेऽपि च ।
अवशिष्टद्रव्यशुद्धिः[1] सप्तमाध्याय ईरिता ॥
प्रायश्चित्तं गोवधे च[2] सामान्येनाष्टमे स्मृतम् ।
रोधनादिविशेषेण नवमे तदुदीरितम् ॥
अगम्यागमने प्रायश्चित्तं दशम ईरितम् ।
अभोज्यभोजनादौ तदेकादश उदीरितम् ॥
द्वादशः[3] परिशेषः† स्यात् काण्डयो[4]रुभयोस्तयोः[5] ।
अत्रा[6]न्येषामनुक्तानामुपलक्षणमीक्ष्यताम् ॥

---

* मलावहं मलो दोषः तं आवहति । मलावहलक्षणं यथा—
'कृमि-कीट-वयोहत्या मद्यानुगतभोजनम् ।
फलैधः-कुसुमस्तेयं अधैर्यं च मलावहम्' ॥
[मनुस्मृ० ११. ७०]
इत्युक्तलक्षणं पापं मलावहमित्यर्थः । सङ्कीर्णं सङ्करीकरणम् । तदपि
हेतुना
'खराश्वोष्ट्र-मृगेभानामजाविकवधस्तथा ।
सङ्करीकरणं ज्ञेयं मीनाहि-महिषस्य च' ॥
[मनुस्मृ० ११. ६८]
इत्युक्तलक्षणम् । उपपातकं तु अनेकविधं मन्वाद्यैरभिहितम् ।

† द्वादशेऽध्याये काण्डद्वयस्यापि परिशेष उक्तः। अनुक्तः परिशेषः। अनुक्तानामप्यन्येषां प्रायश्चित्तानामुपलक्षणं ईक्ष्यताम् ।

---

१. A. reads अवशिष्टा for अवशिष्ट.– २. A. and D. read गोवधस्य for गोवधे च. ३. D. and H. read द्वादशे for द्वादशः. ४. G. substitutes खण्डयोः for काण्डयोः. ५. A. and I. have-तयोः, while all others have-द्वयोः, which seems to be a mistake. ६. A. has स चा- for अत्रा-; for the same D. E. and G. have यस्या-; and H. and I. read स्याद-.

अनुपातकमुख्येषु[1]* प्रायश्चित्तं क्वचित् क्वचित्।
नोक्तं तथा रहस्यं च प्रायश्चित्तं च वर्णितम्॥
सौम्य-पर्णादिकृच्छ्राणि नोदितान्यत्र कानिचित्।
नोक्तः कर्मविपाकश्च† तत्सर्वमुपलक्षितम्॥
इत्थं नवभिरध्यायैः प्रायश्चित्तं प्रपञ्चितम्[2]।
कलिं‡ प्रति प्रवृत्तत्वात् प्रायश्चित्तप्रपञ्चनम्[3]॥
कलौ हि पापबाहुल्यं दृश्यते स्मर्यतेऽपि च।
नराः प्रायोऽल्पसामर्थ्यास्तेषामनुजिघृक्षया॥
समकोचयदाचारं प्रायश्चित्तं[4] व्रतानि च।
'तेषां निन्दा न कर्त्तव्या युगरूपा हि ते द्विजाः'॥
(प. स्मृ. १. ३३; ११. ६१)

* येषामुपलक्षणं वर्तते तान्याह। अनुपातकेति।

† कर्मविपाकः कृतस्य कर्मणः जन्मान्तरे व्याध्यादिरूपेण परिणामः। स च शातातपसंहितायां विस्तरेणोक्तः—
'प्रायश्चित्तविहीनानां महापातकिनां नृणाम्।
नरकान्ते भवेज्जन्म चिह्नाङ्कितशरीरिणाम्'॥
इत्यादिना। विस्तरस्तत्रैवानुसन्धेयः।

‡ नवभिरध्यायैः विस्तरेण प्रायश्चित्तकथने हेतुमाह। कलिमिति। भगवता पराशरेण कलिं प्रकृत्यैव धर्मा उक्ताः। कलौ च पापबाहुल्यमतः विस्तरेण प्रायश्चित्तकथनमपेक्षितमिति भावः।

१. All but A. and I. read अनुपातकयुक्तेषु for अनुपातकमुख्येषु. The former is not a good reading. २. D. and G. read प्रपञ्च्यते for प्रपञ्चितम्. ३. A. and I. read प्रायश्चित्तं प्रपञ्चितम् for प्रायश्चित्तप्रपञ्चनम्; while H. omits the whole of the first line, vital, कलिं प्रति प्रवृत्तत्वात्प्रायश्चित्तप्रपञ्चनम्. ४. C. reads समकोचयदाचारं प्रायुक्तैषा कृपालुता, thus omitting the whole:—प्रायश्चित्तं व्रतानि च। तेषां निन्दा न कर्त्तव्या युगरूपा हि ते द्विजाः। इत्युक्तिमादावन्ते च.

इत्युक्ति[1]मादावन्ते च प्रायुं[2]क्तैषा कृपालुता ।
वेदैकदेशाध्ययनं कृष्या विप्रादिजीवनम् ॥
इत्यादिवचसाऽऽचारे सङ्कोचो भासते स्फुटम् ।
प्राजापत्यं गोवधे स्यात् ब्रह्मघ्ने[3] सेतुदर्शनम् ॥
इति मुख्यव्रतत्वोक्तेः सङ्कोचोऽत्रापि गम्यते ।
स्मृत्यन्तरानुसारेण विषयस्य व्यवस्थितिः ॥
कल्पनीया—इति चेत् ब्रूहि* सर्वज्ञं[4]मन्य साधकम्[5] ।
यावत्यः[6] स्मृतयस्तासां सर्वासामनुसारतः ॥
साकल्यात्—चेदस्मदादेस्तत्र† शक्तिर्न विद्यते ।
स्वेन दृष्टास्तु यावत्य[7]स्तासां—इत्यप्ययुक्तिमत् ॥

---

* यदुक्तं 'सङ्कोचोऽत्रापि गम्यते' इति तन्न । गोवधे प्राजापत्यं ब्राह्मणवधे सेतुदर्शनं च न मुख्यव्रतम् । येन सङ्कोचः सिद्ध्येत् । अतः—

'यथावयो यथाकालं यथाप्राणं च ब्राह्मणे ।
प्रायश्चित्तं प्रवक्तव्यं ब्राह्मणैर्धर्मपाठकैः ॥
तस्मात् कृत्स्नमथाप्यर्धं पादं वापि विधानतः ।
ज्ञात्वा बलाबलं कालं प्रायश्चित्तं प्रकल्पयेत्' ॥

इत्यादिस्मृत्यन्तरदर्शनात् गोवधादौ त्रैमासिकादिव्रतविधायकस्मृत्यन्तरसद्भावाच्च शक्त्यादितारतम्येन स्मृत्यन्तरानुसारेण विषयस्य व्यवस्थितिः कार्या—इति चेत् हे सर्वज्ञंमन्य तस्य साधकं ब्रूहि । सर्वज्ञं विना सर्वासां स्मृतीनां ज्ञातुमशक्यत्वात् । स्मृत्यन्तरानुसारेण विषयस्य व्यवस्थितिः सर्वज्ञं विना न भवेदित्यर्थः ।

† तदेव विकल्प्य परिहरति । यावत्य इति । साकल्येन सर्वाः स्मृतयो

---

१. D. H. and I. have इत्युक्तमादा- for इत्युक्तिमादा-. २. I. reads प्रयुक्तैषा for प्रायुंक्तैषा. ३. D. E. G. and I. ब्रह्मघ्नः for ब्रह्मघ्ने. ४. I. reads सार्वज्ञ्यं- for सर्वज्ञं-. ५. We take our reading from A. while all other read मन्यसे कथम्; this reading does not give good sense to the sentence. ६. D. reads यावन्त्यः for यावत्यः. ७. Again D. has यावन्त्यः for यावत्यः.

क्वचित् कदाचिदन्यासां दर्शनादव्यवस्थितेः[1] ।
अल्पिका[2] मानुषी* बुद्धिः सा च न व्यवतिष्ठते ॥
अत एव निबन्धेषु दृश्यते नैकवाक्यता ।
हन्तैवं† खण्डने शास्त्रं भवेद्दत्तजलाञ्जलि- ॥
न खण्डये वारये[3] तु पण्डितंमन्यतां तव ।
शृणु‡ निर्णयमत्र त्वं स्वतःप्रामाण्यवादिनः ॥
प्रतीते ऽर्थे ऽखिलं[4] शास्त्रं प्रमाणं बाधया विना ।
न पराशरवाक्यस्य बाधः स्मृत्यन्तरे क्वचित् ॥

---

दृष्ट्वा तदनुसारतः विषयव्यवस्था कर्तव्या-इति चेत् अस्मदादेस्तत्र शक्तिर्न विद्यते । स्मृतीनामानन्त्यात् । स्वेन यावत्यो दृष्टाः तासामनुसारत एव व्यवस्था कर्तव्येति चेत् तदपि अयुक्तिमत् । क्वचित् देशे कदाचित् काले अन्यस्मृतिदर्शने तद्विरोधे च अव्यवस्थापत्तेः । अतो न स्मृत्यन्तरानुसारेण विषयस्य व्यवस्थितिर्भवति ।

* यतो मनुष्यस्य बुद्धिरल्पा अतः सा एकस्मिन्विषये न व्यवस्थिता भवति । अत एव च निबन्धेषु अपरार्कादिषु एकवाक्यता न दृश्यते । यदि निबन्धकर्तॄणां साकल्येन सर्व स्मृत्यवलोकने सामर्थ्यं भवेत् तर्हि तेषामेकवाक्यता स्यात् । तत्तु न भवति ।

† पूर्वपक्षी शङ्कते । हन्तेति । एवं रीत्या मत्कृतपूर्वपक्षस्य खण्डने कृते सति विषयव्यवस्थाभावेन परस्परविरोधात् शास्त्रं दत्तजलाञ्जलि भवेत् । परस्परविरोधपरिहाराभावात् अग्राह्यं स्यादित्यर्थः । सिद्धान्ती समाधत्ते । न खण्डये इति ।अहं त्वन्मतं न खण्डये अपि तु तव पण्डितंमन्यतां वारये ।

‡ निर्णयमाह । शृण्विति । स्वतःप्रामाण्यवादिनः प्रामाण्यस्य स्वतस्त्ववादिनः, बाधो न चेत् प्रतीते ऽर्थे अखिलमपि शास्त्रं प्रमाणं भवति । निराबाधत्वात् कारणान्तरापेक्षाविरहः ।

---

१. A. alone has-दव्यवस्थितिः for-दव्यवस्थितेः. २. D. reads कल्पिता for अल्पिका. ३. A. has चारयितुम् for वारये तु. ४. D. reads -खिले शास्त्रे for-खिलं शास्त्रं.

व्रतान्तरोपदेशश्च न बाधो* ऽस्यानिवारणात् ।
प्रियङ्गु-कोद्रव-व्रीहि-गोधूमादीन्यनेकशः ॥
साधनानि यथैकस्यास्तृप्तेर्दृष्टान्यबाधया ।
यथा च स्वर्ग एकस्मिन् विश्वजिच्चाग्निहोत्रकम् ॥
अग्निष्टोमश्च दर्शाद्या हेतवो बहवः श्रुताः[१] ।
यथा वा ब्रह्मलोकस्य ह्येकस्य प्राप्तिहेतवः ॥
उपास्तयो विकल्प्यन्ते[२] †शाण्डिल्य-दहरादयः ।
तथैवैकस्य‡ पापस्य निवृत्तौ बहवः स्मृताः ॥

---

*अस्य पराशरवाक्यस्य यतो निवारणं न भवति अतः व्रतान्तरोपदेशे न बाधः । स्मृत्यन्तरेषूपलब्धेन व्रतान्तरोपदेशेन पराशरोक्तस्य बाधो न भवतीत्यत्र लौकिकं दृष्टान्तमाह । प्रियङ्ग्विति ।

अधुना वैदिकं दृष्टान्तमाह । यथेति । यथा एकस्यैव स्वर्गस्य प्राप्तिः विश्वजिदादयो बहवो हेतवः वेदे उपदिष्टाः सन्ति तथापि ते न परस्परस्य बाधका भवन्ति तथेत्यर्थः ।

† शाण्डिल्योपास्तिः छान्दोग्योपनिषदि तृतीयाध्यायस्य चतुर्दशे खण्डे 'सर्वं खल्विदं ब्रह्म' इत्युपक्रम्य 'ऽवाक्यनादर' इत्यन्तेन मन्त्रजातेनोक्ता तत्रैवानुसन्धेया । दहरोपासनापि तत्रैव अष्टमे ऽध्याये प्रथमखण्डे 'अथ यदिदमस्मिन् ब्रह्मपुरे' इत्यत्रोक्ता । आदि शब्देन अन्या अपि वैश्वानराद्युपासना अनुसन्धेयाः । औपनिषदोऽयं दृष्टान्तः ।

‡ स्वसिद्धान्तनिष्कर्षमाह । तथेति । उक्तदृष्टान्तत्रये यथा एकस्य प्राप्तिहेतवो बहव उपाया न विरुद्ध्यन्ते तथैव एकस्य पापस्य निवृत्तौ पराशरोक्तं स्मृत्यन्तरोक्तं च प्रायश्चित्तं मुख्यत्वेनैव तन्निवर्तकं भविष्यति। अतस्तयोर्विकल्प एव। न बाधः ।

---

१. All others except A. read स्मृताः for श्रुताः, the latter is better.
२. C. D. F. G. and H. have विकल्पन्ते for विकल्प्यन्ते.

व्रतभेदा विकल्प्यन्तां श्रद्धाजाड्यं तु ते वृथा[1]।
ननु—क्क[2]* पञ्चगव्यादिः कुत्र वा मरणान्तिकम् ॥
तयोः समविकल्पत्वं वदतस्ते ऽतिसाहसम्।
क्क† विश्वजित् क्काग्निहोत्रं स्वर्गं साधयतोस्तयोः[3] ॥
विकल्पं वदतस्ते वा कुतो नैवातिसाहसम्।
कर्माधिक्यात्फलाधिक्यमिति‡ न्यायसमाश्रयात् ॥

* पूर्वपक्षी शङ्कते। नन्विति। समानयोः विकल्पः स्यात् न पुनरल्प-महतोः। यद्येकेन मुनिना कस्यचित् पापस्य निवृत्त्यर्थं पञ्चगव्यादि लघु-प्रायश्चित्तमुक्तं तस्यैव निवृत्तावन्येन ऋषिणा प्राणान्तिकं प्रायश्चित्तमुक्तं चेत् तयोरल्प-महतोः समविकल्पत्वं वदतस्ते अतिसाहसं भवेत्।

† समाधत्ते। एवं चेत् स्वर्गसाधकयोः विश्वजिदग्निहोत्रयोः अल्पत्वं महत्वं च वर्तते। विश्वजयपूर्वकमनुष्ठातव्यो यागः क्क। क्क चाल्पकमग्नि-होत्रम्। स्वर्गसाधने तयोः समविकल्पत्वं वदतः ते ऽपि अतिसाहसं कुतो न भवति?।

‡ पूर्वपक्षी विकल्पमेवोपपादयति। कर्माधिक्यादिति। अयमाशयः—अल्पायास-महायाससाध्यानां कर्मणां यत्र विकल्पः कर्तव्यः तत्र महायास-साध्यानां कर्मणां अननुष्ठानलक्षणमप्रामाण्यमापद्येत। कः खलु अनु-न्मत्तो ऽल्पायाससाध्यं फलमुत्पादयितुं महायाससाध्यं कर्मानुष्ठीत?। तस्मात् सत्यपि समफलत्वे महायासात् किञ्चित् फलाधिक्यं वाच्यम्। तावता उभयोः समानत्वेनानुष्ठानयोग्यत्वात् विकल्पोपपत्तेः। अन्यथा तु एकस्यै-वाल्पायाससाध्यस्य नियमेन अनुष्ठानप्रसङ्गात्। फलाधिक्यकल्पने तु नैवं भवेत्। यावान् क्लेशः तावत् फलं इति उभयत्र साम्यात्। अत एवोक्तम्—

'यत्र स्यात् क्लेशभूयस्त्वं श्रेयसो ऽपि मनीषिणः।
भूयस्त्वं ब्रुवते तत्र कृच्छ्रात् श्रेयो ह्यवाप्यते ॥'

१. A. reads तथा for वृथा. २. D. ननूक्त—for ननु क्क. ३. D. has स्वर्गसाधनयोः for स्वर्गं साधयतोः.

साहसं परिहर्त्तव्यमित्येतदुभयोः समम् । [1]
न्यायाश्रये* त्वस्मदुक्ता[2] व्यवस्था द्विष्यते कुतः ?॥–
इति चेदव्यवस्थोक्ता त्वयाऽतो द्वेष्मि ते वचः ।
देशभेदात्† कालभेदात् पुंभेदादन्यथाऽन्यथा ॥
विपर्यस्यति[3] शास्त्रार्थ इति पूर्वमवादिषम् ।
अतो[4] ऽपास्यार्थवादांशं[5] विधिवाक्येषु यद्यथा ॥

इति । तथा सति प्रधानफलस्य स्वर्गमात्रस्य विश्वजिदग्निहोत्रयोः समानत्वेऽपि उक्तरीत्या महायाससाध्यस्य विश्वजितः अल्पायाससाध्यस्य अग्निहोत्रस्य च अवान्तरफलं न्यूनमधिकं च स्यात् । एवं च उभयत्रापि प्रवृत्तिर्भवेत् । अतो विश्वजिदग्निहोत्रयोः विकल्पो नानुपपन्न इति पूर्वपक्षवादिनो ऽभिप्रायः ।

सिद्धान्ती वदति । एतदुभयोः समानमेव । विश्वजिदग्निहोत्रवदेव पञ्चगव्यस्य मरणान्तिकप्रायश्चित्तस्य च उक्तपापनिवृत्तिरूपप्रधानफलसाम्येन अवान्तरफलस्य न्यूनाधिकभावेन च समविकल्पत्वं भवेत् ।

* पूर्वपक्षी पृच्छति । ननु–यदि उक्तन्यायाश्रयणं तवाप्यभिमतं तर्हि 'स्मृत्यन्तरानुसारेण विषयस्य व्यवस्थितिः कार्या' इति अस्मदुक्ता व्यवस्था कुतो द्विष्यते? ।

आह सिद्धान्ती । त्वया अव्यवस्थोक्ता अतः ते वचः द्वेष्मि ।

† तदेवाह । देशभेदादिति । देशभेदादिना शास्त्रार्थविपर्यासो भवति । अतः अर्थवादांशमपास्य विधिवाक्येषु वाचनिकं बाधं विना यत्र यत्प्रतीतं तत् तत्रैव ग्राह्यम् ।

१. D. reads–हर्त्तव्यं मन्ये तदुभयोः for–हर्तव्यमित्येतदुभयोः. २. For त्वस्मदुक्ता– H. and I. read त्वस्मदुक्त–; A. has the following:– त्वस्मदुक्तयाऽव्यवस्था दृश्यते कुतः? । इति भेदव्यवस्थोक्ता त्वयातो द्वेषितं वचः । ३. A. and I. have पर्यवस्यति for विपर्यस्यति. ४. A. and G. read अथो for अतो. ५. I. reads नास्यार्थ°–for ऽपास्यार्थ°.

प्रतीतं तत्तथा ग्राह्यं बाधं वाचनिकं विना* ।
स्मृतिव्याख्यातृभिः सर्वै[1]र्वचनानां व्यवस्थितिम् ॥
ब्रुवाणैर्मन्दमतयो व्युत्पाद्यन्ते हि केवलम् ।
अ[2]न्यथा ऽल्पस्य पापस्य कृते द्वादशवार्षिके ॥
न [3]स्यान्निवृत्तिस्त्वत्प्रोक्ता व्यवस्था तादृशी यतः ।
अथा ऽल्पं† महता नश्येन्नाल्पेनान्यत्तदा[4] वद ॥
इदमल्पं महच्चेदमिति ते किं नियामकम् ?।
अ[5]ल्पायास-महायासौ‡ यद्यल्पत्व-महत्त्वयोः—॥

* ननु–यदि स्मृत्यन्तरानुसारेण विषयस्य व्यवस्थितिर्न भवति तर्हि प्राचीनैः निबन्धृभिः कुतः तथाविधा व्यवस्था कृतेत्याशङ्क्याह । स्मृतीति । स्मृतिषु आपाततो विरुद्धवचनदर्शनात् मन्दमतयो मा मुह्येरन् इति तत्प्रबोधाय तैस्तादृशी व्यवस्था कृता । येन केनचिदल्पेन महता वानुष्ठितेन कर्मणा फलनिष्पत्तिर्भूयादिति तेषामाशयः । अन्यथा द्वादशवार्षिकेण महता प्रायश्चित्तेन अल्पस्य पापस्य निवृत्तिः न स्यात् । महापापनिवृत्तिरेव तस्य हेतुत्वेन व्यवस्थितेति भावः।

† अल्पं पातकं महता प्रायश्चित्तेन न नश्येत् महत् च अल्पेन प्रायश्चित्तेन न नश्येच्चेत् अल्पत्व-महत्वनिश्चये तव किं नियामकमस्ति ? न किमपीत्यर्थः ।

‡ ननु — नियामकं कुतो नास्ति। अल्पायास-महायासविव तयोः नियामकौ–इति चेत् । हन्त तर्हि महायाससाध्यां कृषिमनुतिष्ठन्तो कृषिकाः महाव्रता भवेयुः । कथमेनमतिप्रसङ्गं भवान् वारयेत् ? ।

१. B. and F. have–भिश्चैवं for–भिःसर्वैः. २. C. omits the two lines:—अन्यथा ऽल्पस्य पापस्य कृते द्वादशवार्षिके । न स्यान्निवृत्तिस्त्वत्प्रोक्ता व्यवस्था तादृशी यतः।. ३. D. reads तस्यानिवृत्ति–for न स्यान्निवृत्ति–; and for the same G. has तस्याऽनिवृत्ति–. ४. A. reads तथा for तदा. ५. A. D. E. G. and I. substitute अनायास–for अल्पायास–.

हेनू[१], महाव्रतास्तर्हि भवेयुः कृषिकादयः ।
सिंह-व्याघ्रादिमूत्रादौ प्रयासबहुलत्वतः[२] ॥
पञ्चगव्यात्प्रशस्तत्वं[३] व्रताङ्गत्वं[४] च ते भवेत् ।
इतिकर्त्तव्यबाहुल्यं* महत्त्वं-चेत् तदाऽल्पता ॥
जलाग्न्यादिप्रवेशस्य[५] प्रसज्येत व्रतान्तरात् ।
तस्माच्छास्त्रेण† यस्योक्ता प्रशंसा तन्महाव्रतम् ॥
अस्तु‡[६] वा चैव दुःखस्य बहुलत्वान्महाव्रतम् ।
यथाऽल्पनाशो महता महन्नाशस्तथाऽल्पतः ॥

* ननु—इतिकर्तव्यस्य बाहुल्यं महत्वनियामकं भवतु-इति चेत् शास्त्रोक्तस्य जलप्रवेशस्य अग्निप्रवेशस्य च इतिकर्तव्याल्पत्वेन अल्पत्वं प्रसज्येत । एवं सिंह-व्याघ्रादिमूत्रस्यापि पञ्चगव्यात् प्रशस्तत्वं स्यात् । तत्तु तव नेष्टम् ।

† उपसंहरति । तस्मादिति । शास्त्रेण यस्य प्रशंसा उक्ता तदेव महाव्रतमिति निर्णयः । एवं सति पञ्चगव्यस्य अल्पायाससाध्यत्वेन अल्पत्वे भासमाने ऽपि गुरुपापनाशकतया विधानमुखेन प्रशंसायाः शास्त्रोक्तत्वात् तदपि महाव्रतमेवेति पर्यवसितो ऽर्थः ।

‡ ननु—वैधक्लेशाधिक्यमेव महाव्रतत्वे हेतुः । अतो न कृषकादिष्वतिप्रसङ्गः-इति चेत् अस्तु नाम । तथापि यथा अल्पस्य महता नाशः अभ्युपेयते तथा अल्पेनापि महन्नाशः कुतो न भवेत्? । दृष्टान्तमाह अल्पकेन विस्फुलिङ्गेन तृणराशिर्दह्यते इति प्रसिद्धमेव ।

१. G. and I. have हेतुर्म-for हेनू म-. २. For प्रयासबहुलत्वतः A. has प्रयासो बहुलः श्रुतः. ३. For पञ्चगव्यात्प्रशस्तत्वं. A. reads पञ्चगव्या ऽप्रशस्तत्वात्. ४. Here our reading coincides with that of A. while all other MSS. read व्रतांगत्वे च ते भवेत् for व्रतांगत्वं च ते भवेत्. ५. B. and H. have तर्ह्यग्न्यादिप्र- which is corrected to यथाग्न्यादिप्र- on the margin of B. for जलाग्न्यादिप्र-; E. and G. have for the same अथाग्न्यादिप्र- while D. and F. अस्त्वग्न्यादिप्र-. ६. A. reads वादेन and I. reads वा वैध- for वाचैव; and the whole line is omitted by D.

किं न स्यात्? विस्फुलिङ्गेन तृणराशिर्हि[1] दह्यते ।
विस्फुलिङ्गो* वर्द्धमानो दहत्येवं न तु व्रतम्— ॥
वर्धते, ऽतो महानाशो[2] निःशेषो[3] न भवेद्यदि ।
तर्ह्येकदेशनाशोऽस्तु, तच्छेषस्तूपभुज्यताम्[4] ॥
अमूर्त्तस्यापि† पापस्य सन्ति[5] भागा यथोचितम् ।
अन्यथैकेन पापेन दुःखं बहुविधं कुतः ॥
तथा‡ महाव्रतस्यापि भागेनाल्पे[6] विनाशिते ।
व्रतशेषविपाकेन स्मर्यते बहुलं सुखम् ॥

---

* यदुक्तं 'विस्फुलिङ्गेन तृणराशिर्हि दह्यत' इति तत्पूर्वपक्षी दूषयति । विस्फुलिंग इति । विस्फुलिङ्ग एव तृणराशिं न दहति । अपितु दाह्यसंयोगेन महानग्निर्भूत्वा दहति । व्रतं तु नैवं वर्द्धते अतो नैतत्साधकम् ।

सिद्धान्ती आह । अत इति । अस्मात् कारणात् अल्पेन व्रतेन महतः पापस्य निःशेषनाशो न भवेचेत् न भवतु नाम । एकदेशनाशस्तु स्यादेव । अवशिष्टपापं उपभुज्यताम् ।

† ननु—स्यादेवं, अमूर्त्तस्य पापस्य यदि विभागाः स्युः—इति चेत् आह । अमूर्त्तस्येति । पापस्य विभागाभावे एकेन पापेन बहुविधं दुःखं न भवेत् तत्तु भवति अतः सन्ति पापस्य विभागाः ।

‡ एवं यथा अल्पेन व्रतेन महतः पापस्यैकदेशो नश्यति अवशिष्टं पापं कर्त्रा भुज्यते तथा महाव्रतस्यैकेन भागेन अल्पस्य पापस्य समूलं नाशो भवेत् अवशिष्टभागानां विपाकेन बहुलं सुखं भवेत् ।

---

१. A. reads तृणराशिर्विदह्यते for तृणराशिर्हि दह्यते. २. B. C. F. and G. have महत्तापो, while E. alone has महत्पाप–; D. and I. read महन्नाशो for महानाशो. ३. A. omits the following:—निःशेषो न भवेद्यदि । तर्ह्येकदेशनाशोऽस्तु and thus reads for the two lines वर्धतेऽतो महन्नाशस्तच्छेषःकोपभुज्यताम्. ४. Our reading is that of the most of the MSS., while A. only has कोपभुज्यताम् for-स्तूपभुज्यताम् ; and D. reads भुज्यते for भुज्यताम्. ५. For-सन्ति भागा यथोचितम् D. reads संविभागा यथोदितम्. ६. A. D. E. G. and I. read भागेनाल्पविनाशने for भागेनाल्पे विनाशिते.

अतोऽल्पं* वा महद्वा[१]पि व्रतं पापनिवर्त्तकम् ।
स्मर्तॄणामखिलानां च वाक्यमेवं समञ्जसम् ॥
न† महाव्रतवैयर्थ्यं पापस्याशेषनाशने ।
अल्पे[२]नाशो[३]र्ध्वभाविन्यां सुखाप्तौ चोपयो[४]गतः ॥
एवं‡ चैकस्य पापस्य व्रतेषूक्तेष्वयं पुमान् ।
प्रवर्त[५]यति विस्रम्भात् यस्मिन्कस्मिंश्चिदिच्छया ॥

* फलितमाह । अत इति । व्रतं अल्पं महद्वा भवतु । सर्वमपि व्रतं सकलपापनिवर्तकं भवति । तस्मात् स्मर्तॄणां मन्वादीनां तद्वाक्यव्यवस्थापकानां निबन्धकर्तॄणां पण्डितानां च वाक्यं उक्तरीत्या समञ्जसं भवति ॥

अत्र—

'कृच्छ्र-चान्द्रायणादीनि शुद्ध्यभ्युदयकारणम्'।

इत्याद्यभिधाय—

'एते व्यस्ताः समस्ता वा प्रत्येकं चैकशोऽपि वा ।
पातकादिषु सर्वेषु पापकेषु प्रयत्नतः ॥
योज्याः पापनिवृत्त्यर्थं'—

इत्यादीनि विश्वामित्रादिवचनान्यनुसन्धेयानि ।

† अल्पपापनाशार्थं महाव्रतकरणे तस्य वैयर्थ्यं भवेदिति चेन्न । पापनाशानन्तरं अवशिष्टव्रतपुण्येन सुखाप्तौ तस्योपयोगात् ।

‡ फलमाह । एवमिति । एवं चैकस्य पापस्य नाशार्थं बहुषु व्रतेषूक्तेषु सत्सु अयं पुमान् यस्मिन्कस्मिन्नपि व्रते स्वेच्छया विश्वासं प्रवर्तयेत् । अन्यथा विषयस्य व्यवस्थितिं जानतो ऽजानतो वापि स्मृत्यन्तरे वचनान्तरं स्यान्न वेति शङ्कया कस्मिन्नपि व्रते तस्य विस्रम्भो न भवेत् अतो युक्तमेव व्रतबाहुल्यकथनमिति भावः ।

---

१. B. C. D. F. and G. read महच्चापि for महद्वापि. २. For अल्प- D. has अर्ध-; In the present case अल्प has its superiority over अर्ध. ३. B. C. and F. read नाशे तु for नाशोर्ध्व-. ४. D. reads चोपभोगतः for चोपयोगतः. ५. A. and I. read प्रवर्ततेऽतिविस्रंभं for प्रवर्तयति विस्रंभात्.

अन्यथा नास्य विस्रम्भो विषयस्य[1] व्यवस्थितिम् ।—
अजानतो जानतोऽपि वचनान्तरशङ्कया ॥
सम्भावितेषु* सर्वेषु व्रतेषु महति व्रते ।
प्रवर्त्तमानः पुरुषः श्रेयः प्राप्नोत्यसंशयम् ॥
कलौ† पराशरोक्तानां व्रतानामेव मुख्यता ।
तैरल्पैरपि[2] तत्पापं निःशेषं विनिवर्त्तते ॥
एतदेव‡ विवक्षित्वा प्रतिजज्ञे विशेषतः ।
पराशरेण यत्प्रोक्तं प्रायश्चित्तमितीदृशम् ॥
§मुन्यन्तरप्रणीतानां स्वल्पानां महतामपि ।
व्रतानामुपयोगः स्यात् कलौ पूर्वोक्तनीतितः[3] ॥

---

* ननु—अल्पेषु सत्सु महति व्रते प्रवर्तमानस्य को विशेष?-इति चेदाह। सम्भावितेष्विति । निर्धारणे सप्तमी । श्रेयः प्राप्तिरूपविशेषलाभो भवेदित्यर्थः ।

† पराशरस्मृतिविषये विशेषमाह । कलाविति । पराशरोक्तानामेव व्रतानां कलौ मुख्यत्वात् तदुक्तेनाल्पेनापि व्रतेन महतोऽपि पापस्य समग्रत्वेन नाशः । नैकदेशस्य ।

‡ ननु—पराशरोक्तानां कलौ मुख्यत्वं कुतो ऽवगतं?—इति चेदाह । एतदेवेति ।

§ ननु—एवं सति मुन्यन्तरप्रोक्तानां व्रतानां कोपयोगः?—इति चेदाह। मुन्यन्तरेति।पूर्वोक्तनीतितः पूर्वोक्तन्यायेन ।अल्पस्य पापस्य नाशार्थं महाव्रतानुष्ठाने तत्पापनिवृत्तिपूर्वकमवशिष्टभागेन सुखादिश्रेयःप्राप्तिरिति महतः पापस्य निवृत्तावल्पव्रतानुष्ठाने पापैकदेशस्य निवृत्तिः अवशिष्टस्य पापस्य भोग इति पूर्वोक्तो न्यायः ।

१. For विषयस्य व्यवस्थितिम्. B. C. E. F. G. and H. read विषयस्याव्यवस्थितेः while D. have विषयस्य व्यवस्थितेः for the same. २. All but A. and G. read तैरन्यैरपि for तैरल्पैरपि. ३. A. has पूर्वोक्तरीतितः for पूर्वोक्तनीतितः.

मुनिनैकेन यत् प्रोक्तं तदन्यो न निषेधति ।
प्रत्युतोदाहरेत्, तस्मात् सर्वोक्तिः[1] सर्वसम्मता ॥
हन्तैवं* सति मीमांसा निष्फला[2] ते प्रसज्यते ।
शास्त्रान्तरप्रणीतानां गुणानामप्यसंहृतेः[3] ॥
शृणु† मीमांसकंमन्य मुनिवाक्येषु किं बलात् ।
उत्पाद्यापि[4] विरोधं तु पाण्डित्यं व्यज्यते[5] त्वया ॥
व्रतान्तरोक्तिमात्रेण न विरोधः प्रसज्यते ।
समुच्चये विकल्पे वा का हानिस्तत्र ते भवेत् ? ॥
स्नानं दानं जपो[6] होम इति नैमित्तिका यथा ।
उपरागे समुच्चेयास्तथा व्रतसमुच्चयः ॥

---

कुत एतदिति चेदाह । मुनिनेति । एकेनोक्तमन्यो न खण्डयेत् प्रत्युत उदाहरेत् तस्मात् सर्वेषां मुनीनामुक्तिः सर्वेषां सम्मता भवतीति सिद्धम् ।

* पूर्वपक्षी शङ्कते । हन्तेति । हन्तेति विपर्यये । एवं सति येन केन चित् व्रतेन यस्य कस्यचित् पापस्य नाशे सति । मीमांसा निष्फला इत्यत्र उत्तरार्द्धं हेतुः । पूर्वोत्तरमीमांसयोः गुणोपसंहारस्य सिद्धान्तितत्वात् तव मते तदव्यवस्थापनात् मीमांसा व्यर्थेति भावः ।

† समाधत्ते । शृण्विति । मीमांसकंमन्येति परिहासगर्भं सम्बोधनम् । मुनिवाक्येषु विरोधे सति त्वदुक्तो गुणोपसंहारः क्रियेत । विरोधाभावात्तु न कर्तुं शक्यते । ननु—व्रतान्तरोक्तौ सत्यां विरोधो नेति कथमुच्यते—इति चेत् । न । तत्र समुच्चयस्य विकल्पस्य च सम्भवात् न कोऽपि विरोधः । दृष्टान्तमाह । स्नानमिति ।

---

१. For सर्वोक्तिः सर्वसम्मता A. reads सर्वोक्तं सर्वसंमतम्, for the same पूर्वोक्तं सर्वसमतं is also found in I. २. Except A. and D. all have निःफला for निष्फला. ३. We take our reading from A. though all others read संहृतिः for संहृतेः. ४. B. C. E. F. G. H. and I. read उत्पाद्याति-for उत्पाद्यापि. ५. D. and F. have व्यज्यतां तव for व्यज्यते त्वया, For the same B. C. E. F. and G. read वाक्यतां तव; this seems to be a graphical mistake. ६. In the place of जपो B. C. E. F. and G insert तपो.

एकेन* नाशिते पापे द्वितीयं चेन्निरर्थकम्।
न, तपोरूपतस्तस्य स्वर्गहेतुत्वसम्भवात्॥
चान्द्रायणादावस्त्वेवं† तपस्त्वेन तदीक्षणात्।
भिक्षा-ब्रह्मकपालादौ स्यात् कथं नष्टपाप्मनः?॥
एवं‡ तर्हीदृशे स्थाने विकल्पोऽस्तु निजेच्छया।
न्यूनाधिकत्वसन्देहे दत्तमेवोत्तरं पुरा॥

* समुच्चयपक्षमाक्षिपति पूर्वपक्षी। एकेनेति। व्रतेनेति शेषः। अतो न समुच्चयो भवतीति चेन्नेत्याह सिद्धान्ती। एकेन व्रतेन पापे नाशिते सति अन्यत् तपोरूपत्वेन स्वर्गप्रापकं भवेत् अतो न निरर्थकत्वं तस्य।

†आह पूर्वपक्षी। चान्द्रायणादीनां तपस्त्वेनाभिधानात् भवदुक्तः समुच्चयो न। अपि तु एकस्य पापनाशकत्वमन्यस्य स्वर्गप्रापकत्वमस्तु। भिक्षाटनं ब्रह्मकपालधारणं च यदुक्तं तस्य तपस्त्वानभिधानात् एकेन आचरितव्रतेन नष्टपाप्मनो भिक्षाटनादिकं निरर्थकमेव भविष्यति। एवं सति तत्र त्वदुक्तः समुच्चयः कथं स्यात्?।

‡ समाधत्ते। एवमिति। यत्र स्वर्गादिहेतुत्वं शास्त्रादवगम्यते तत्र नानामुनिभिरुक्तानां व्रतानां समुच्चयः। एकेनैव पापनाशेऽप्यन्येषां स्वर्गहेतुत्वसम्भवात्। यत्र तु स्वर्गसाधनत्वं शास्त्रान्नावगम्यते तत्र नानाव्रतानां कर्तुरिच्छया विकल्प एव भवतीति सिद्धान्तनिष्कर्षः। ननु —'तुल्यबलविरोधे विकल्पः' इति गौतमोक्तत्वात् न्यूनाधिकबलानां व्रतानां कथमिच्छया विकल्पः स्यात्? इत्याशंक्याह। न्यूनाधिकत्वेति। 'तस्माच्छास्त्रेण यस्योक्ता प्रशंसा तन्महाव्रतम्' इत्या-[illegible]न पूर्वमेवास्योत्तरं दत्तम्।

. B. C. and F. read तपस्त्वे च for तपस्त्वेन; for the same D. and G. e तपस्त्वेव; and E. and H. have तपस्त्वेवं. All these three readings equally bad in point of good sense. २. I. reads तदीरणात् for [illegible]क्षणात्.

सर्वथाऽपि* त्वया[1] प्रोक्तां निर्मूलां बुद्धिकल्पिताम् ।
कामाकामादिभेदेन नाङ्गीकुर्मो व्यवस्थितिम् ॥
वचनेष्वेव† कामादिव्यवस्था लभ्यते यदि ।
सुखेनाभ्युपगच्छामो[2] वाक्यैकशरणा वयम् ॥
‡'कपिलो यदि सर्वज्ञः कणादो नेति का प्रमा? ।'
इति न्यायः प्रसज्येत बुद्धिमात्रव्यवस्थितौ ॥
मीमांसकत्वमेतत्§ स्याद्वाक्यानुसरणेन यत्- ।
व्यवस्थापनमन्यत्तु पाण्डित्यख्यापनं परम् ॥
'इयं विशुद्धिरुदिता प्रमाप्याकामतो द्विजम् ।'
(म. स्मृ. ११. ८९)
इत्यकामकृते पापे नाशो निःशेष उच्यते ॥

---

* उपसंहरति । सर्वथा ऽपीति । कामाकामादिभेदेन नानामुन्युक्तानां वचनानां व्यवस्था । बुद्धिकल्पितामिति निर्मूलत्वे हेतुः । बुद्धिकल्पितव्यवस्थायां—एकेन कचित् एका विषयव्यवस्था कल्पिता, तदन्येन च तद्विपरीता चेत् तत्र कस्या व्यवस्थायाः प्रामाण्यं कस्या वा अप्रामाण्यम् ? उभयोः प्रामाण्ये सैव स्फुटा ऽनवस्था । तस्मान्न बुद्धिमात्रकल्पिता व्यवस्था युक्ता । पुरुषस्य सर्वज्ञत्वाभावात् बुद्धेरप्रतिष्ठानाच्चेति भावः

† ननु- यदि वचनेष्वेव कामाकामादिव्यवस्था उपलभ्येत अभ्युपगच्छाम इत्याह । वचनेति । वाक्यैकशरणत्वं मीमांसकत्वद्योतनार्थम्

‡ ननु-वचनोपलब्धायाः कामाकामादिव्यवस्थायाः स्वीकारे मदुक्ता एव किं न स्वीक्रियते?-इति चेत्तत्राह । कापिल इति । बुद्धिमात्रकल्पितव्यवस्थास्वीकारे उक्तन्यायः प्रसज्येत । तथा सति 'उभौ च यदि सर्वज्ञौ व्याख्याभेदः कथं कृतः?' इत्यापतेत् । तस्मान्न सा गृह्यते इत्यर्थः।

§ मीमांसाया वाक्यार्थविचारशास्त्रत्वात् वाक्यानुसरणेन यत् विषयस्य व्यवस्थापनं तदेव मीमांसकत्वम् । अन्यत्तु पाण्डित्यस्य ख्यापनम् ।

---

१. A. reads तथा for त्वया. २. Here our reading is that of A. and H.; while all others read सुखेनाप्युपगच्छामो for सुखेनाभ्युपगच्छामो, the latter of which is more idiomatic.

न तु कामकृते शुद्धेरकिञ्चित्करतोच्यते[1] ।
स्मृत्यन्तरेषु तच्छुद्धेः[2] सामान्येनाभिधानतः ॥
विशेषादर्शनं यावत् तावत् सामान्यदर्शनम् ।
मानमेवान्यथा ते स्यात् सर्वज्ञत्वे ऽधिकारिता ॥
गुणोपसंहृतिश्चैवं[3]* यथादर्शनमिष्यताम् ।
अदृष्टानुपसंहारेणा[4]किञ्चित्करतैव[5] ते ॥
यद्यावत्[6] दृश्यते वाक्यं शक्तिश्चात्रास्य[7] यावती ।

ननु— वाक्यानुसरणे कृते सति 'इयं विशुद्धिः' इत्यत्र 'अकामतः इत्युक्तत्वात् अकामकृतस्यैव पापस्य विशुद्धिः तत्राभिहिता। कामकृतस्य तु पापस्य शुद्धिर्न भवेत्तेन व्रतेन—इति चेन्मैवम् । अन्यस्मृतिषु कामकृतस्यापि पापस्य शुद्धेरभिधानात् अकिञ्चित्करत्वं नोच्यते । अयमर्थः— 'इयं विशुद्धि'रित्यादिना अकामकृतस्य पापस्य निःशेषनाशः। कामकृतस्य तु अंशतो नाशो ऽभिहितः । न तु सर्वथैवानाशः। स्मृत्यन्तरेषु सामान्येनाभिधानात् इति तन्न प्रमाणमित्याशंक्य विशेषदर्शनपर्यन्तं सामान्यदर्शनमेव प्रमाणमिति परिहरति। विशेषेति ।

* नन्वेवं सति गुणोपसंहारो न भवेत् इत्याशंक्याह । गुणेति । [illegible]ा यत् दृश्यते तथैव तस्य गुणानपसंह[illegible] अनुष्ठान[illegible]तष्टयम[illegible]म् । [illegible]ष्टाशक्यगुणानामनुपसंहारे[illegible] कोऽपि दोषः । गुणोपसंहारो नाम [illegible] ग्रन्थेषु प्रतिप[illegible]दितानां एकजातीयकानां कर्मणां नाम- रूप- [illegible]ब्दार्थेषु पुनरु[illegible] निन्दा- ऽशक्ति- समाप्तिवचन- प्रायश्चित्तान्यार्थ- [illegible]र्शने[illegible]ऽप अभेदः । स च पूर्वमीमांसायां । (अ. २ पा. ४ सू. ८–३२) [illegible]त्तरमीमांसायां च (अ. ३ पा. ३ सू. १–१३) विस्तरेणोक्तः ।

१. D. reads -रकिञ्चित्त्वमतोच्यते for -रकिञ्चित्करतोच्यते. २. G. [illegible]eads तत्सिद्धेः for तच्छुद्धेः. ३. D. and H. have -श्चैव for -श्चैवं. [illegible]. D. has स दृष्टानुपसंहारो न for अदृष्टानुपसंहारेणा- ; while B. in its [illegible]orrection has स दृष्टानुपसंहारेणा- for the same ५. For-णाकिञ्चित्करतैव [illegible]ते A. reads न किञ्चित्करता व्रते; All others except I. read नाकिञ्चित्करता व्रते ६. A. and I. read यथा च for यद्यावत्. ७. -श्चैवास्य is the reading of A. and I., and D. has -आस्यात्र for -आत्रास्य.

(नृसिंहपू. ता. १.३) इति श्रुतेः । अथशब्दस्य पौरुषेयग्रन्थानां *च सर्ववर्णविषयत्वात् स एव तेषु योग्यः ।

अतः शब्दो हेत्वर्थः । यस्मादेकशाखाध्यायिनो नाशेषधर्मज्ञानं यस्माच्च युगान्तरधर्मावगत्या न कलिधर्मावगतिः[1] तस्मात्, †इति हेतुर्द्रष्टव्यः ।

अशेषधर्ममूलभूतानां विप्रकीर्णानन्तवेदवाक्यानां योगिदृष्ट्यैव ग्राह्यत्वात्, तस्याश्च दृष्टेर्योगावस्थायां[2] सम्भवात् तदवस्थायोग्यं[3] देशविशेषं[4] पदद्वयेन निर्दिशति । हिमशैलाग्रे देवदारुवनालये[5] इति । तत्र हिमशैलाग्र इत्यनेन सर्वप्राणिदुर्गमत्वेन विविक्ततामाह । तथा च कैवल्योपनिषदि श्रूयते—

'विविक्तदेशे च सुखासनस्थः ।'

( कै. उ. ४)

*पौरुषेयाः पुरुषकृता ग्रन्थाः मन्वत्र्यादिप्रणीताः स्मृतयः, रामायणादीनि काव्यानि, भारतादय इतिहासाः, मात्स्यादीनि पुराणानि च पौरुषेयग्रन्थाः । नात्र कालिदासादिकृतानां संग्रहः । पौरुषेयशब्देन तेषामपि ग्रहणे कर्तव्ये ऽपि आर्षत्वाभावान्न तेषु विधिर्निषेधश्च । एतच्च—

'चतुर्णामपि वर्णानां यानि प्रोक्तानि श्रेयसे ।
धर्मशास्त्राणि राजेन्द्र शृणु तानि नृपोत्तम ॥'

इत्यादीनि बहूनि वचनान्युदाहृत्य कमलाकरभट्टैः शूद्रधर्मतत्त्वे विस्तरेण प्रपञ्चितमित्यत्र संक्षेपः ।

† नन्दपण्डितस्तु—'उपनीय शौचाचारान् शिक्षयेत् इत्यनेन उपनयनानन्तरं शौचाचाराणां यतो विज्ञेयत्वमुपादिश्यते अतो हेतोः' इति हेतुमाह । धरणीधरो ऽपि तथैव ।

१. For न कलिधर्मावगतिः A. reads सकलधर्मावगतिः. २. A. reads—युक्तावस्थायां for -योगावस्थायां. ३. D. has तस्मात् in the place of तत्. ४. A. reads -योग्यदेश- for -योग्यं देश-. ५. For देवदारुवनालये D. and G. read देवदारुद्रुमालये.

इति। क्षुरिकायामपि[1] श्रुतम्[2],—

'निःशब्दं देशमास्थाय तत्रासनमुपाश्रितः[3]।'

(क्षु. उ. २)

इति। 'देवदारुवनालये'[4] इत्यनेन मनोऽनुकूलतामाह*। अत एव श्वेताश्वतराणां मन्त्रोपनिषदि श्रुतम्,—

'समे शुचौ शर्करा-वह्नि-वालुका-
विवर्जिते शब्दजलाश्रयादिभिः[5]।
मनोऽनुकूले न च चक्षुःपीडने†
गुहानिवाताश्रयणे प्रयोजयेत्[6]'॥

(श्वे. उ. २. १०)

इति। चक्षुःपीडनो मशकोपेतो देशः।

ननु—'यत्रैकाग्रता तत्राविशेषात्' (शा. सू. ४.१.७)

* नन्दपण्डितस्तु —'देवदारुवनालयत्वेन विविक्ते मनोऽनुकूले च विक्षेपकारणाभावत्वेन तत्त्वप्रतिभासयोग्य इति यावत्' इति व्याख्यातवान्।

† शब्दः कलहादिध्वनिः। आश्रयः मण्डपादिः। मनोऽनुकूले प्रतिमाद्यभिमुखत्वेन मनोरमे। चक्षुःपीडनेत्यत्र 'छान्दसो विसर्गलोप' इति तद्भाष्यकारः। शारीरभाष्ये (अ. ४. पा. १ सू. ११) उदाहृतेयं श्रुतिः। तत्र तु 'चक्षुःपीडने' अयमेव पाठो वर्तते। तट्टीकायामपि तथैव। परमात्मनि चित्तं प्रयोजयेदित्यर्थः।

१. Here we read with D. while all others read चछुरिका-. २. H. reads श्रूयते for श्रुतम्. ३. A. and D. read तत्रासनमथास्थितः; and E. G. and H. तत्रासनमपाश्रितः for तत्रासनमुपाश्रितः. ४. All but A. and D. read देवदारुवन इत्य- for देवदारुवनालये इत्य-, while G. reads देवदारुद्रुमालय इत्य- for the same. ५. B. C. F. read शब्द जलाश्रयादिभिः and E. G. H. and I. वाथ जलाश्रयादिभिः; and in the margin of B. शिवजलाश्रयादिभिः. ६. A. D. and G. have श्रयणे प्रयोजयेत्; C. E. F. and H. श्रयणने योजयेत् both these are for श्रयणे नियोजयेत्.

इत्यस्मिन् अधिकरणे (शा. भा. ४. १. अ. ६ ) योगाभ्यासस्य दिग्देश-कालनियमो वारितः। बाढम्। अदृष्टहेतुवैधनियमाभावे ऽपि दृष्टस्य चित्तैकाग्र्यस्य हेतुर्नियमो न निवार्यते* ।

'एकाग्रम्' —इत्यनेन पञ्चविधासु चित्तभूमिषु अतीन्द्रियवस्तुदर्शनयोग्या चतुर्थी भूमिर्निर्दिश्यते। तथाहि—पतञ्जलिप्रोक्तानां योगसूत्राणां व्याख्याने वैय्यासिकभाष्ये भूमिपञ्चकं प्रदर्शितम्। 'क्षिप्तं मूढं विक्षिप्तमेकाग्रं निरुद्धमिति चित्तभूमयः' (यो. भा. १. १)—इति। तत्र प्रतिक्षणं कर्मवायुना नानाविधेषु भोग्यवस्तुषु व्यग्रतया प्रेर्यमाणं चित्तं क्षिप्तम्। निद्रा-तन्द्रायुक्तं मूढम्। कादाचित्कसमाधियुक्तं क्षिप्ताद्विशिष्टं विक्षिप्तम्। यम-नियमाद्यष्टाङ्गाभ्यासपाटवादेकस्मिन्

* आह भगवान् भाष्यकारः। 'अस्त्वेवंजातीयको नियमः। सति त्वेतस्मिंस्तद्गतेषु विशेषेषु अनियम इति सुहृद्भूत्वाचार्य आचष्टे। 'मनो ऽनुकूले' इति चैषा श्रुतिः यत्रैकाग्रता तत्रैवेत्येतदेव दर्शयति (शा. भा. ४. १. ११) इति। यत्र मनस एकाग्रता भवेत् तत्रैवोपासीत। अपेक्षितायाः एकाग्रतायाः सर्वत्राविशेषात् इति सूत्रार्थः।

† अष्टाङ्गानि पतञ्जलिनोक्तानि। 'यम-नियमासन-प्राणायाम-प्रत्याहार-धारणा-ध्यान-समाधयो ऽष्टावङ्गानि वृत्तेः' ( यो. सू. १.२९ )। चित्तस्य ध्येयाकारपरिणामस्य प्रवाहो ऽविच्छेदः। इयमेव एकाग्रावस्था चतुर्थी भूमिः।

१. A. omits -वैध-. २. For दृष्टस्य चित्तैकाग्र्यस्य हेतुर्नियमो. A. writes दृष्टचित्तैकाग्र्यहेतुर्नियमो. ३. B. C. F. read वैय्यासिकवाक्ये for वैय्यासिकभाष्ये. ४. B. C. E. F. H. and I. read काचित्कसमाधियुक्तम् for कादाचित्कसमाधियुक्तम्.

विषये वृत्तिप्रवाहरूपेण प्रतिष्ठितमेकाग्रम् । अवृत्तिकं[1]* संस्कारशेषं निरुद्धम् । तत्र क्षिप्त-मूढयोर्योगानुपयोगः प्रसिद्धः । विक्षिप्ते ऽपि चेतसि विक्षेपोपसर्जनीभूतः समाधिर्न योगपक्षे वर्त्तते ।'[2] विपक्षधर्मान्तर्गतत्वेन[3] दहनान्तर्गतबीजवदकिञ्चित्करत्वात् । 'यस्त्वेकाग्रे† चेतसि सद्भूतमर्थं प्रद्योतयति, क्षिणोति च क्लेशान्, कर्मबन्धनानि श्लथयति[4], निरोधमभिमुखं करोति, स सम्प्रज्ञातो योग इत्याख्यायते' (यो. भा. १. १) । तत्र संयमविशेषात् नानाविधयोगैश्वर्यमाविर्भवति । धारणा-

---

* चित्तस्य त्रिगुणात्मकत्वात् गुणानां च परिणामिस्वभावत्वात् चित्तस्य अवृत्तिकत्वासम्भवः । तथापि चित्तं निरुद्धं सत् अवृत्तिकमुच्यते । तत्र हि संस्कारशेषत्वे ऽपि निरोधरूपपरिणामातिरिक्तपरिणामाभावात् कथञ्चिदवृत्तिकत्वं सम्भवति । विस्तरस्तु पातञ्जले तृतीयपादे ऽनुसन्धेयः ।

† य इति समाधेः परामर्शः । भूतं सत्यम् । अनेनारोपितार्थव्यवच्छेदः । आरोपितस्य असत्यत्वात् । सत् शोभनम् । अनेन निद्रावृत्तेर्व्यवच्छेदः । निद्रावृत्तिर्हि स्वावलम्बने तमसि भवत्येकाग्रा । तथापि तदवलम्बनं तमः क्लेशहेतुत्वान्न शोभनम् । द्योतनं तत्त्वज्ञानम् । प्र-शब्देन तस्य साक्षात्कारतामाह । शास्त्रानुमानप्रभवस्य परोक्षतत्त्वज्ञानस्य अपरोक्षमिथ्याज्ञाननिवर्तकत्वम् । दिङ्मोहादौ तथा दर्शनात् । तत्त्वज्ञानेन मिथ्याज्ञानरूपाविद्याविनाशे सुतरां तन्मूलानामस्मितादीनामपि नाश इत्याह । 'क्षिणोति च क्लेशानिति' । 'अविद्या ऽस्मिता–राग-द्वेषादयः क्लेशाः' ( यो. सू. २-३ ) तान् नाशयति । कर्माण्येव बन्धनानि तानि श्लथयति । कर्मपदेन धर्माधर्मयोर्ग्रहणम् । कार्ये कारणोपचारात् । निरोधं असम्प्रज्ञातं निर्बीजसमाधिम् । यत्र न किञ्चित्सम्प्रज्ञायते ऽसौऽसम्प्रज्ञातः । विस्तरस्तु पातञ्जले द्रष्टव्यः ।

---

१. A. reads अतिवृत्तिकम् for अवृत्तिकम्. २. समाधिर्न योगः । विक्षेपान्तर्गतत्वेन is the reading of A. for समाधिर्न योगपक्षे वर्तते । विपक्षधर्मान्तर्गतत्वेन. ३. A. reads -वर्गान्त- for -धर्मान्त-. ४. B. D. E. G. and H. read व्ययति; and C. and F. व्यपनयति for श्लथयति.

ध्यान-समाधित्रयमेकविषयं* संयम इत्युच्यते । ‘ शब्दार्थ-प्रत्ययेष्वन्योन्यविभक्तेषु यः संयमः तेनाशेषशब्दादिसाक्षात्कारे सति पक्ष्यादिभाषा ज्ञायन्ते’–इति पतञ्जलिनोक्तम् । तेनैव न्यायेना[1]नेकविधवेदशाखाज्ञानमित्यभिप्रेत्य ‘ एकाग्रं ’ इत्युक्तम् ।

[2]ऐकाग्र्याङ्गतामासनस्य मत्वा ‘आसीनम्’ इत्याह । तथा च व्याससूत्रम् । ‘ आसीनः सम्भवात् ’ (शा. सू. ४. १. ७) इति । शयानस्याकस्मादेव निद्राभिभवात्, उत्थितस्य देहधारणे चित्तव्यापारात्, गच्छतो धावतो वा विक्षेपबाहुल्यात्, पारि-[3]शेष्योदासीनस्यैव चित्तैकाग्र्यसम्भवात् आसीनो योगम[4]भ्यसितुमुपासीन इत्यर्थः ।

[5]अन्वय-व्यतिरेकाभ्यां प्रश्नस्यावगत्युपायतामभिप्रेत्य ‘अपृच्छन्’ इत्युक्तम् ।

‘ तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया’ । (भ. गी. ४. ३४)

---

* अत्र ‘देशबन्धश्चित्तस्य धारणा’ (३. १)–यत्र देशे ध्येयं चिन्तनीयं तत्र देशविशेषे हृदयपुण्डरीकादौ चित्तस्य स्थापनं धारणा इति सूत्रार्थः । ‘तत्र प्रत्ययैकतानता ध्यानम्’ ( ३.२)–तस्मिन्देशे ध्येयगोचरप्रवाहो ध्यानम् । ‘तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः’ (३.३ )–ध्यानमेव ध्येयमात्रनिर्भासं समाधिः । ‘एवमेकत्र संयमः’ (३.४)–धारणा-ध्यान-समाधित्रयमेकविषयं चेत् संयम इत्युच्यते इत्यनुसन्धेयम् ।

---

१. B. alone reads न्यायेनैकविध- for न्यायेनानेकविध–. २. We take our reading from A. though all others more or less differ from it. B. C. and F. read ऐकाग्र्यमासीनस्य मन्वान: ; D. G. H. and I. read एकाग्रतामासीनस्य मन्वानः; and E. reads ऐकाग्र्यतामासीनस्य. ३. A. reads पारिशेष्येणासने and I. reads परिशेषेणासीनस्यैव- for पारिशेष्यादासीनस्यैव. ४. A. and G. read योगमभ्यस्यन्नुपासीन इत्यर्थः; and D. E. H. and I. read योगमभ्यस्यन्नुपासीतेत्यर्थः for योगमभ्यसितुमुपासीन इत्यर्थः. ५. A. adds गीतायाम् before अन्वय.–

इत्यन्वयः । 'नापृष्टः कस्यचिद्ब्रूयात्' (म. स्मृ. २.११०)–इति व्यतिरेकः ।

'ऋषिशब्दोऽतीन्द्रियार्थदर्शनमाचष्टे[*][1] । ज्ञास्यमानधर्मानुष्ठानोत्तरकालीनमृषित्वम्[2] । यथा भाविन्या संज्ञया 'कटं कुरु'[†]–इति व्यवहारः तद्वत् । अन्यथा अतीन्द्रियार्थं पश्यतां तेषामबुभुत्सुतया[3] प्रश्नो न सङ्गच्छेत् । अथवा स्वयमबुभुत्सूनामपि मन्दबुद्ध्यनुग्रहार्थः[‡] आचारशिक्षार्थो वा प्रश्नोऽस्तु ।

अपृच्छन् इत्यनेनैवातीतकालत्वे[§] सिद्धे पुरेति शब्दं प्रयुञ्जानः सर्वेष्वपि कल्पेष्वीदृशी धर्मशास्त्रप्रवृत्तिरासीदिति सूचयति । तच्च विश्वासातिशयोत्पादने[4] कारणम् । अन्यान्

---

* 'ऋषिः' गत्यर्थः । गत्यर्थानां च ज्ञानार्थत्वं प्रसिद्धमेव ।

† अत्र भाविनि भूतवदुपचार इत्यर्थः । तत्र 'कटं कुरु' इति दृष्टान्तः । संज्ञिनमन्तरेण संज्ञाया असम्भवात् । उत्तरकालमेव संज्ञाप्रवृत्तिर्भवति । तथापि व्यवहारस्तु संज्ञिन उत्पत्तेः प्रागपि संज्ञया यथा भवति तथेत्यर्थः ।

‡ मन्दबुद्ध्यनुग्रहस्तु — अस्मत्प्रश्नेन आचार्यो धर्मं प्रकाशयिष्यति । तं श्रुत्वा ऽन्ये ऽन्येभ्यो धर्ममुपदेक्ष्यन्ति । इतरे तदाचरणेन फलभाजो भविष्यन्ति इत्यादिरूपः ।

§ 'अपृच्छन्' इत्यत्र लङः अतीतकालत्व एव विधानादिति भावः ।

---

१. B. C. and F. read -दर्शितामाचष्टे ; while E.G. and H. -दर्शिनमाचष्टे for -दर्शनमाचष्टे. २. A. and I. reads कालिकमृषित्वम् for कालीनमृषित्वम्. ३. D. reads तत्राप्य- for तेषाम-४. A. has विश्वासोत्पादनकारणम् for विश्वासातिशयोत्पादने कारणम्.

मुनीनुपेक्ष्य व्यासमेव पृच्छतामृषीणां—वैदिकधर्मे वेदव्यासः* प्रवीण इत्याशयः ।

तदेवं चिकीर्षितस्य ग्रन्थस्य मुनिप्रश्नेन साक्षात् सम्बन्धः विपृच्छिषोत्पादनद्वारेणाध्ययनेन सम्बन्ध इति सम्बन्धद्वयमस्मिन् श्लोके प्रतिपादितम् । अधिकार्यादित्रयं तु द्वितीयश्लोके प्रतिपाद्यते ॥

ननु— 'ब्राह्मणो बृहस्पतिसवेन† यजेत । राजा राजसूयेन‡ यजेत । वैश्यो वैश्यस्तोमेन यजेत' इत्यधिकारिविशेषो§

* व्यासो विस्तारः । पुरा कृतयुगे एकमेव सन्तं वेदं चतुर्धा विभजत् भगवान् पाराशर्यः । भारतव्यपदेशेन आम्नायार्थं च दर्शितवानतस्तस्य प्रावीण्यम् ।

† बृहस्पतिसवो नाम एकाहो यज्ञः । स च 'आधिपत्यकामो ब्रह्मवर्चसकामो वा बृहस्पतिसवेन यजेत' (श्रौ. सू. ९ . ५ . ३ ) इत्याश्वलायनेनोक्तः । ब्रह्मणो वर्चः तेजः ब्रह्मवर्चसमित्युच्यते । अथवा ब्रह्मशब्देन ब्राह्मण्यं वेदो वा तयोर्यद्वर्चः तेजः तद्ब्रह्मवर्चसं तत्कामः ब्रह्मवर्चसकामः । एवमेव आधिपत्यमपि स्वजातिश्रेष्ठत्वम् । न राजादिवद्देशाद्याधिपत्यम् । अस्य च श्रुत्या ब्राह्मणमधिकृत्यैवोक्तत्वात् नान्येषां वर्णानामधिकारः ।

‡ 'स्वाराज्यकामो राजसूयेन यजेत' इत्युक्तः । 'राजा तत्र सूयते तस्माद्राजसूयः राज्ञो वा यज्ञो राजसूयः' इति शबरस्वामी । अस्य चेतिकर्तव्यतादिकं आश्वलायनेन 'अथ राजसूयाः' (श्रौ. सू. ९ . ३ . १ ) इत्यारभ्योक्तम् । राजानमधिकृत्यैवोक्तत्वात् क्षत्रियस्यैवात्राधिकारो नान्यस्य ।

§ यदुक्तं 'अधिकार्यादित्रयं द्वितीयश्लोके प्रतिपाद्यते' इति तत्र अधिकारिनिर्देशाभावात् कथं निर्णयः स्यादिति शङ्कते । नन्विति ।

यथा श्रूयते न तथा पराशरोक्तधर्माः ईदृशैरनुष्ठेया—इति किञ्चिद्वचनमस्ति। तत् कथं निर्णयः?—इत्यत आह। 'मानुषाणाम्' इति। अर्वाचीनानां पश्वादीनामसामर्थ्यात्। उत्तमानां देवादीनां धर्मानुष्ठाने प्रयोजनाभावाच्च मनुष्या एव परिशिष्यन्ते। वि[१]शेषानिर्णयात्* सर्वेषां मनुष्याणामधिकारोऽस्तु।

ननु—† नक्षत्रेष्ट्यादौ देवानामधिकारः श्रूयते। 'अग्निर्वा अकामयत। अन्नादो देवानाꣳ स्यामिति। स एतमग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालं निरपवत्' (तै. ब्रा. ३. १. ४) इति। मै[२]वम्। मनुष्यस्यैव कस्यचित् य[३]जमानस्य भाविनीं संज्ञामाश्रित्य प्रथमान्तेनाग्निशब्देन व्यवहारात्। अन्यथा[४] युगपदग्निद्वयसंसृ[५]ष्टिप्रसङ्गात्।

ननु—यत्र द्वैगुण्यदोषो नास्ति तत्रास्तु देवताऽधिकारः। तथाहि श्रूयते। 'बृहस्पतिरकामयत श्रन्मे देवादधीरन् गच्छेयं पुरोधामिति। स एतं चतुर्विंशतिरात्रमपश्यत्। तमाहरत् तेनायजत। ततो वै तस्मै देवाः श्रद्दधन् अगच्छत्

---

* 'विशेषानिर्णयात्' ब्राह्मण-क्षत्रियादिवर्णानां ब्रह्मचार्याद्याश्रमाणां च निर्णयाभावात् मनुष्यमात्रस्याधिकारः। इदं तु साधारणधर्म एव। विशिष्टधर्मे तु वर्णाश्रमादिप्रयुक्तो ऽधिकारिभेदो वर्तत एव।

विशेषानिर्णयात् सर्वेषां मनुष्याणामेव कस्मादधिकारः? । नक्षत्रेष्ट्यादाविव देवानामपि कुतो न भवति?—इत्याशङ्क्याह। नन्विति।

---

१. B. C. E. F. G. and H. read विशिष्टाऽनिर्णये तु for विशेषानिर्णयात्; while D. has विशेषपर्याये तु. २. D. E. and G. read नैवम् for मैवम्. ३. B. C. F. read विद्यमानस्य for यजमानस्य. ४. D. adds यागात् to अन्यथा. ५. We read with A. -यसंसृष्टिप्रसङ्गात्, though all others read -यसृष्टिप्रसंगात्.

पुरोधाम्' ( तै. सं. ७. १. १ ) इति । 'अत्' विश्वासम् । 'मे'[1] मयि । 'पुरोधाम्' । पौरोहित्यम् । 'चतुर्विंशतिरात्रम्'–एतन्नामकं सत्रयागमित्यर्थः[2] । मैवम् । अत्रापि भाविसंज्ञाया एवादरणीयत्वात् । अन्यथा बृहस्पतेः कञ्चित् कालं विश्वसनीयत्व-पौरोहित्ययोरभावप्रसङ्गात् । तच्च श्रुत्यन्तरविरुद्धम् । 'बृहस्पतिर्वै देवानां पुरोहित आसीत्' ( तै. सं. ६. ४. ११ ) इति श्रुत्या पौरोहित्यपुरःसर एव बृहस्पतिसद्भावः प्रकाश्यते ।

अथवा । स्वोपयोगाभावे ऽपि मनुष्यान् प्रवर्त्तयितुं देवाः कर्माण्यनुतिष्ठन्तु[3] ।

'यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः । '

(भ. गी. ३. २१)

इति न्यायात् । अस्तु वा स्वोपयोगो ऽपि । जगन्निर्वाहे ऽधिकृतानां देवानां[4] तद्धेतोः तपसश्चरणीयत्वात्[5][6] । 'वसन्ते ब्राह्मणो ऽग्निमादधीत । ग्रीष्मे राजन्य आदधीत । शरदि वैश्य आदधीत' । ( तै. ब्रा. १. १. २ ) –इति विहितस्याधानस्य देवेष्वप्यत्रैवर्णिकेष्विवासम्भवः[7] –इति चेत् । न । रथकारवदुपपत्तेः । अथ मन्यसे–अस्ति रथकारस्य समन्त्रकाधानविधायकं[8] वचनम् –'ऋभूणां

१. All but A. omit the word मे. २. After सत्रयागमित्यर्थः an extra sentence is found in A. which is as follows:–इत्यादौ फलश्रवणात् कर्मानुष्ठाने कथं प्रयोजनाभावः इति । whose propriety we do not see any in this place. ३. D. and H. read कर्माण्यन्वतिष्ठन् for कर्माण्यनुतिष्ठन्तु; while E. G. and I. have कर्माण्यनुष्ठितवन्तः for the same. ४. D. omits. देवानां. while I. reads देवादीनां. ५. E. G. and H. omit तपसः. ६. B. C. and F. read स्वयमाचरणीयत्वात् for चरणीयत्वात्. ७. We take our reading from A. All others read देवेष्वत्रैवर्णिकेष्वसंभवः. This reading gives the required sense only when च is added to it. ८. A. alone reads -विधायकवचनं for -विधायकं वचनं.

त्वा देवानां व्रतपते व्रतेनादधामीति रथकारस्य' (तै. ब्रा. ३१. ६. १५) इति श्रुतेः । न त्वेवं देवानां विधिरस्ति—इति । एवं तर्हि निषादस्थपतिन्यायोऽस्तु । यथा निषादस्य प्रभोराधानविध्यश्रवणेऽपि यागोऽभ्युपगतः तथा देवानामभ्युपेयताम् ।

'एतया निषादस्थपतिं याजयेत्—' इत्यस्ति निषादविषयं[१] वचनं—इति चेत् । किं त्वया विस्मृतानि देवविषयाणि[२] पूर्वोदाहृतवचनानि? । तेषामर्थवादत्वेऽपि मानान्तराविरोधात् अननुवादाच्च[३] स्वार्थेऽपि तात्पर्यं किं न स्यात् ? ।

अथोच्येत—स्मृतीनां धर्मशास्त्रत्वात् तासु धर्ममीमांसा अनुसर्तव्या । तस्यां च[४] न कस्याप्यर्थवादस्य वाच्यार्थे[५] प्रामाण्यमभ्युपगतं—इति । तदेतद्वचनं स्मृतिनिर्वाहकंमन्यस्य[६] मीमांसकंमन्यस्य चानर्थायैव स्यात् । 'मूषकभयात्[७] स्वगृहं दग्धम्' इति न्यायावतारात् । कस्यचिदर्थवादस्य स्वार्थे प्रामाण्यं भविष्यति—इति भयेन अर्थवादैकप्रसिद्धानां स्मर्तॄणां मन्वादीनां मीमांसासूत्रकृतो[८] जैमिनेश्च सद्भावस्यैव[९] परित्यक्तव्यत्वात् अशेषेतिहासलोपप्रसङ्गाच्च[१०] । तस्मात्[११] प्रमाणमेव भूतार्थवादः । तथा च सति 'तं पूषाऽऽधत्त० । तं त्वष्टाऽऽधत्त० । तं मनुराधत्त० । तं धाताऽऽधत्त०' (तै. सं. १. ५. १. २–३) इत्यर्थवादवशादाधा-

१. For -विषयं वचनं A. reads -विषयवचनं. २. B. C. E. F. and G. insert वेदे between विस्मृतानि and देव-; and read विस्मृतानि वेदे देवविषयाणि. ३. I. omits च. ४. All but I. omit च. ५. All others except A. read वाक्यार्थ- for वाच्यार्थे. ६. All but A. read -भक्तंमन्यस्य, and I. -भक्तस्य for -निर्वाहकंमन्यस्य. The latter has a decided superiority of sense. ७. A. and I. read -भिया for -भयात्; the latter is more colloquial. ८. All except A. have -सूत्रकृत्-; and I. has -मात्रकृतो for -सूत्रकृतो. ९. All but A. read एवं for एव. १०. A. D. E. G. H. and I. omit च. ११. H. omits the word तस्मात्.

नमपि देवानां किं न स्यात् ?। ब्राह्मण्याद्यभावे तु कामं वसन्तादिकालविशेषनियमो माभूत् । किमायातमाधानस्य ? । किञ्चान्तरेणापि आधानं लौकिकेऽग्नौ यागः क्वचिदुपलभ्यते । 'अवकीर्णिपशुश्च तद्वदाधानस्याप्राप्तकालत्वात्' (पू. मी. ६. ८. २२) इति जैमिनिसूत्रात् । 'यो ब्रह्मचारी स्त्रियमुपेयात् सोऽवकीर्णी । स गर्दभं पशुमालभेत' (बौ. स्मृ. २. १. १, ३०-३१) इत्यवकीर्णिपशुः*। यथा उपनयनहोमो लौकिकाग्नौ तथाऽसौ पशुः इति सूत्रार्थः । एतावता प्रयासेन देवानां कर्माधिकारे साधिते किं तव फलिष्यति ? । तथा मीमांसायां किं छिद्यते? । अभिनिवेशः केवलं शिष्यते । फलं तु जगन्निर्वाहः—इति पूर्वमेवोक्तम् । अशेषाश्च पुराणादयः एवं सति अनुगृहीता भवन्ति । मनुष्यवद्देवानां स्वर्गाय कर्माणि माभूवन् जगन्निर्वाहाय तु भविष्यन्ति । तपसैव तन्निर्वाहः—इति चेत् । न । स्नान-दान-याग-होम-मौन-ध्यानादिव्यतिरिक्तस्य तपसोऽनुपलम्भात् । अत एव सत्यसङ्कल्पोऽपि परमेश्वरः राम-कृष्णाद्यवतारेषु लौकिक-वैदिककर्मनटनेनैव जगन्निरव-

---

* अवकीर्णं विक्षिप्तं हिंसितं वा व्रतमनेन इत्यवकीर्णी ।'कॄ' विक्षेपे 'कॄञ्' हिंसायां वा । भावे क्तः । इष्टादिभ्यश्च (पा. ५. २. ८८) इतीनिः। खण्डितव्रत इत्यर्थः । तस्य पशुः गर्दभः तदर्थं नाग्न्याधानम् । अपि तु लौकिकाग्नावेव स कर्तव्यः ।

---

१. A. and D. read ब्राह्मणाद्यभावे for ब्राह्मण्याद्यभावे. २. H. replaces तु and thus reads किन्त्वन्तरेण- for किञ्चान्तरेण-. ३. B. alone has फलिष्यते for फलिष्यति. ४. A. reads भिद्यते for छिद्यते. ५. D. inserts च after एवं. ६. A. omits तु. ७. A. and I. omit स्नान-.

हृत्*। देवा अपि तथा नटन्तु—इति चेत्। एवमपि नटनीय-कर्माधिकारो भवता ऽभ्युपगम्यताम्। एवं तर्हि 'मानुषाणां' इति कथमुक्तं?—इति चेत्। पौरुषेयग्रन्थापेक्षया—इति वदामः। न खलु स्वयंप्रभातनिखिलवेदानां देवानां धर्मज्ञानाय पौरुषेयग्रन्थापेक्षा ऽस्ति। मनुष्याणां तु अतथाविधत्वात् अस्त्यपेक्षा।

ननु—पशूनामपि धर्मे ऽधिकारः श्रूयते। 'गावो वा एतत् सत्रमासताशृङ्गाः सतीः शृङ्गाणि नो जायन्ता इति कामेन तासां दश मासा निषण्णा आसन्नथ शृङ्गाण्यजायन्त। ता उदतिष्ठन्नराल्स्मेत्यथ यासां नाजायन्त ताः संवत्सरमाप्त्वोदतिष्ठन्नराल्स्मेति' (तै. सं. ७. ५. १. १) इति श्रुत्या तिरश्चां गवां सत्रानुष्ठातृत्वाभिधानात्। 'अराल्स्म' इति कामितार्थसिद्धिं प्राप्ता इत्यर्थः। नायं दोषः। अस्याः श्रुतेरर्थवादत्वात्। 'य एवं विद्वांसः संवत्सरमुपयन्ति' (तै. सं. ७. ५. १. २) इति ऋद्धिकामस्य संवत्सरसत्रं विधातुं प्रथमतः—'गोसत्रं वै संवत्सरः' (तै.

* एतदेवोक्तं भगवता—

'न मे पार्था ऽस्ति कर्तव्यं त्रिषु लोकेषु किञ्चन।
नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि॥
यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः।
मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः'॥

इत्यादिना। (भ. गी. ३. २२ – २३)

१. All others except A. and I. read -धर्माधिकारो for -कर्माधिकारो. २. A. reads -वचनापे- for -ग्रन्थापे- ३. A. reads अत्यन्तमपेक्षा for अस्त्यपेक्षा. ४. Here our reading coincides with that of A.; all others read सत्रेऽनु- for सत्रानु-. ५. B. C. and F. read आराल्म; D. अराल्म, and E. G. and H. आप्त्वा for अराल्स्म. ६. Between संवत्सरमुपयन्ति and इति B. C. F. and G. insert एव in addition. Between the same E. and H. have ऋध्नुवन्त्येवेति in addition. ७. A. and I. drop संवत्सर-.

सं. ७. ९. १. १-२) इति प्रशंसा कृता। तां सम्भावयितुं 'गावो वा'- इत्यादि पठितम्। न चैतस्यार्थवादस्य-'यद्वै किञ्च मनुरवदत्तद्भेषजम्'-इत्यादिवत् स्वार्थेऽपि तात्पर्यं वर्णयितुं शक्यम्। प्रत्यक्षेण श्रुत्यन्तरेण च विरुद्धत्वात्। तिरश्चां हि मन्त्रोच्चारणे कर्मानुष्ठाने च सामर्थ्याभावः प्रत्यक्षसिद्धः। श्रुत्यन्तरं[१] च-'अथेतरेषां पशूनां अशनायापिपासे वा अभिज्ञानं वदन्ति। नविज्ञातं पश्यन्ति। न विदुःश्वस्तनम्'-इति पशूनां विवेकाभावं दर्शयति। अस्तु वा अ[२]स्यार्थवादस्य स्वार्थे तात्पर्यम्। गोशब्देन गवाभिमानिदेवतानां विवक्षितत्वात्। अत एव 'अभिमानिव्यपदेशस्तु' (शा. सू. २. १. ५) इति सूत्रे भगवान् बादरायणः सर्वेषां मृदादिवस्तूनां श्रुतिमूलत्वेनाभिमानिदेवताः प्रतिपादयामास। तस्मा[३]त् सर्वथा मनुष्यमात्राधिकारकं स्मृतिशास्त्रम्।

'हितम्' इत्यनेन शब्दे[४]न प्रयोजनं निर्दिश्यते। अभिमतफलसाधनत्वं हि धर्म[५]स्य हितत्वम्। तच्च फलं द्वेधा। ऐहिकमामुष्मिकं च इति। अष्टकादिसाध्यं[६] पुष्ट्यादिकमैहिकम्। आमुष्मिकं द्वेधा। अभ्युदयो निःश्रेयसं च। तत्राभ्युदयस्य साक्षात् साधन[७]त्वम्। निःश्रेयसस्य तु तत्त्वज्ञानोत्पादनद्वारेण। तथा च स्मर्यते-

---

१. A. reads श्रुत्यन्तरे च for श्रुत्यन्तरं च. २. A. drops अस्य and reads अस्तु वा ऽर्थवादस्य. ३. All omit तस्मात्. ४. All but A. and I. omit शब्देन. ५. H. reads धर्मस्य तत्त्वं for धर्मस्य हितत्वं. ६. Here our reading coincides with that of A. and I.; while others read -साध्यपुष्ट्यादिक- for -साध्यं पुष्ट्यादिक-. ७. We take our reading from A.; though all others read साक्षात्साधनं धर्मः for साक्षात् साधनत्वम्. The former is a correct reading. The word धर्म carries no meaning in it.

'धर्मात् सुखं च ज्ञानं च ज्ञानान्मोक्षो ऽधिगम्यते'[१] ।

इति । अत्र केचिदाहुः—'नित्यकर्मणां फलमेव नास्ति । अकरणे प्रत्यवायाद्भीतैः[२] केवलमनुष्ठीयन्ते[३] । तत्र कुतो ऽभ्युदयहेतुत्वं निःश्रेयसहेतुत्वं च'—इति । अपरे पुनरन्यथाहुः[४]—'अभावाद्भावोत्पत्तेरदर्शनात् अकरणे प्रत्यवायो न युक्तिसहः ।* नापि तत्र प्रमाणमस्ति'[५]—इति । ननु—उपनयनाध्ययनादिविहितानामकरणे[६] प्रत्यवायः स्मर्यते—

'अत † ऊर्ध्वं त्रयो ऽप्येते यथाकालमसंस्कृताः ।
सावित्रीपतिता व्रात्या भवन्त्यार्यविगर्हिताः' ॥
(म. स्मृ. २. ३९; वि. स्मृ. २७. २७)

* ननु—भाट्टैः अनुपलम्भस्य अभावप्रमितिहेतुत्वमिष्यते । तार्किकैश्च प्रतिबन्धकाभावस्य तत्तत्प्रागभावस्य च तत्तत्कार्यव्यवस्थापकत्वमिष्यते । तत्रापि अकरणस्य प्रत्यवायलक्षणत्वमभिमतम् । तत्कथं भावस्यैव कारणत्वम् ? अभावस्यापि कुतो न स्यात् । उक्तं च—

'भावो यथा तथा ऽभावः कारणं कार्यवन्मतम्' ।

इति चेत् । न । अस्माभिस्तावदभावस्य स्वरूपेणैव कारणत्वं नेष्टम् । किन्तु तज्ज्ञानस्य प्रत्यवायगमकत्वमिष्टम् । तेन च रूपेण न प्रत्यवायजनकत्वमिष्यते । नित्याकरणज्ञाने प्रत्यवायाभावप्रसङ्गात् । भाट्टानामपि च केषांचित् ज्ञानस्य योग्यानुपलम्भस्य अभावप्रमितिहेतुध्वंसतया तु प्रमितिहेतुत्वे ऽभावप्रमायाः प्रत्यक्षत्वापातः । एवमेव तार्किकाणामपि प्रतिबन्धकाभावस्य कारणत्वे ऽन्योन्याश्रयत्वप्रसङ्गात् न प्रामाणिकत्वमिति नाभावस्य कारणत्वम् ।

† उपलभ्यते चैतद्वचनं मनुसंहितायां विष्णुस्मृतौ अन्यत्र च । यथाकालं यो यस्यानुकल्पिको ऽप्युपनयने काल उक्तः षोडशवर्षादिः । आर्यैः शिष्टैः विगर्हिताः व्रात्यसंज्ञा भवन्ति ।

१. D. reads ऽभिगम्यते for ऽधिगम्यते. २. B. C. E. F. G. and I. read भीतेः for भीतैः; and D. reads भीतेन for the same. ३. A. D. H. and I. have -मनुष्ठीयते for -मनुष्ठीयन्ते. ४. A. and I. omit अन्यथा. ५. D. reads प्रमाणमिति for प्रमाणमस्ति. ६. All except A. and I. read -विहिताकरणे for -विहितानामकरणे.

'यो ऽनधीत्य* द्विजो वेदमन्यत्र कुरुते श्रमम् ।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः' ॥
(म. स्मृ. २. १६८; व. स्मृ. ३. २)
'अकुर्वन्† विहितं कर्म निन्दितं च समाचरन् ।
अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति' ॥

---

*अन्यत्र अर्थशास्त्रादौ । स जीवन्नेव सान्वयः पुत्र-पौत्रादिसहितः शूद्रत्वं गच्छति । उशनसा तु—

'यो ऽन्यत्र कुरुते यत्नमनधीत्य श्रुतिं द्विजः ।
स वै मूढो न सम्भाष्यो वेदबाह्यो द्विजातिभिः' ॥
( उ. स्मृ. ३. ८१ )

इति असम्भाष्यत्वमुक्त्वा—

' यो ऽधीत्य विधिवद्वेदं वेदान्तं न विचारयेत् ।
स सान्वयः शूद्रकल्पः स पाद्यं न प्रपद्यते' ॥
( उ. स्मृ. ३. ८३ )

इति वेदानधीत्यापि वेदान्तविचाराकरणे शूद्रकल्पत्वमुक्तम् । वेदमनधीत्यापि वेदाङ्गस्मृत्याद्यध्ययने न दोषः । एतदेवाभिप्रेत्य शङ्ख-लिखितावाहतुः—'न वेदमनधीत्यान्यां विद्यामधीयीत, अन्यत्र वेदाङ्ग-स्मृतिभ्यः' इति ।

† अस्य पूर्वार्धं याज्ञवल्क्यस्मृतौ—

' विहितस्याननुष्ठानान्निन्दितस्य च सेवनात् ।
( अ. ३ श्लो. २१९ )

इति । उत्तरार्धं मनुस्मृतौ—

प्रसक्तश्चेन्द्रियार्थेषु प्रायश्चित्तीयते नरः' ।
( अ. ३ श्लो. ४४ )

इति च दृश्यते । तस्मात् पूर्वार्धं मानवं उत्तरार्धं याज्ञवल्कीयमिव प्रतिभाति तथापि आनन्दगिरिस्वामिभिः तैत्तिरीयोपनिषद्भाष्यस्य वार्तिकस्य च टीकायां समग्रत्वेनैव सङ्गृहीतं वर्तते । तत्र तु 'प्रसज्जंश्चेन्द्रियार्थेषु' इति पाठः ।

इति । मैवम् । एतानि हि[१] वचनानि नित्यकर्माननुष्ठायिनः आलस्यनिमित्तं पूर्वसञ्चितं दुरितं यत् तत्सद्भावं सूचयन्ति । एतच्च तैत्तिरीयोपनिषद्व्याख्याने भाष्यकार-वार्त्तिककाराभ्यां* प्रतिपादितम् । यदि अकरणं प्रत्यवायस्योत्पादकं[२] यदि वा सूचकं उभयथा ऽपि नित्यकर्मानुष्ठानेन प्रत्यवायस्य प्रागभावप्रतिपालनं[३] प्रध्वंसाभावोत्पादनं च सम्पद्यते । दुरितप्रध्वंसित्वं च त्रिसन्ध्यमनुष्ठीयमानेषु—'सूर्यश्च' (म. ना. उ. १४. ४.) 'आपः पुनन्तु' (म. ना. उ. १४. २.) 'अग्निश्च' (म. ना. उ. १४. ३.) इति मन्त्रेषु विस्पष्टमवभासते । एवं च सति उपभोग्य[४]फलरहितानां नित्यकर्मणां अभ्युदय[५]हेतुत्वं दुरापम्[६]—इति ।

* ननु—यथा निषिद्धेष्वर्थवादावगतप्रत्यवायपरिहारार्थतयैव पुरुषार्थत्वं तथा विहितेष्वप्यर्थवादावगताकरणजन्यप्रत्यवायपरिहारार्थता कस्मान्न स्यात्?—इति चेत् । मैवम् । नहि सर्वत्र अग्निहोत्रादिषु तादृग्विधा अर्थवादाः सन्ति । न च 'विहितस्याननुष्ठानान्नरः पतनमृच्छति' इतीयं स्मृतिरेव वाक्यशेषस्थानीयेति चतुरस्रम् । नहि वाक्यान्तरप्रमीते कार्ये वाक्यान्तरेणार्थवादः सम्भवति । भवतु वा कथञ्चित् एकवाक्यतया अर्थवादः । तथापि न अभावरूपविहिताकरणं कार्यान्तरं जनयितुं क्षमते ।

† भाष्यं करोतीति भाष्यकारः श्रीभारतीतीर्थः । भाष्यलक्षणं यथा—

'सूत्रस्थं पदमादाय वाक्यैः सूत्रानुकारिभिः ।
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः' ॥

इति । वार्तिकं करोतीति वार्तिककारः सुरेश्वराचार्यः । वार्तिकलक्षणं यथा—

'उक्ता-ऽनुक्त-दुरुक्तार्थव्यतिकारी तु वार्तिकम्' ।

इति । तैत्तिरीयोपनिषद्भाष्योपोद्घाते वार्तिके च नित्यानां न प्रत्यवाय इति विस्तरेण प्रपञ्चितम् । तत्तु तत्रैवानुसन्धेयम् ।

१. A. and I. omit हि. २. प्रत्यवायस्य is omitted by A. ३. A. and I. read -परिपालनं; and D. -प्रतिपादनं for -प्रतिपालनं. ४. A. reads उपभोज्य- for उपभोग्य-. ५. A. and I. insert -फल- between अभ्युदय- and -हेतुत्वं. ६. For दुरापम् A. B. C. D. F. and I. have दूरापेतम्.

अत्रोच्यते । [1]अस्तु [2]वा प्रत्यवायविरोधित्वम् । [3]नैतावता फलाभावः । मन्त्रलिङ्गेन श्रुति-स्मृतिवाक्याभ्यां च तत्[4]फलावगमात् । 'मयि वर्चो बलमोजो निधत्त'—इति मन्त्रलिङ्गम् । छान्दोग्यवाक्यं च आश्रमत्रयस्य लोकहेतुतां चतुर्थाश्रमस्य मोक्षहेतुतां दर्शयति । 'त्रयो *धर्मस्कन्धाः यज्ञो ऽध्ययनं दानमिति । प्रथमस्तप एव द्वितीयो ब्रह्मचार्याचार्यकुलवासी तृतीयो ऽत्यन्तमात्मानमाचार्यकुले ऽवसादयन् । सर्व एते पुण्यलोका भवन्ति ब्रह्मसँस्थो ऽमृतत्वमेति' (छां. उ. २. २३. १) इति । एतस्य [5]च वाक्यस्य आश्रमपरत्वे-'परामर्शं जैमिनिः' (शा. सू. ३. ४. १८) †इत्यादिभिर्व्याससू[6]त्रैः प्रतिपादितम् । स्मृतिवाक्यं चैतत् । 'त-

---

* ओङ्कारस्य उपासनविध्यर्थं 'त्रयो धर्मस्कन्धा' इत्यारब्धम् । धर्मस्कन्धाः धर्मप्रविभागा इत्यर्थः । यज्ञः अग्निहोत्रादिः, अध्ययनं नियमपूर्वकं वेदाभ्यासः, दानं भिक्षमाणेभ्यो यथाशक्ति द्रव्यसंविभागः, इत्येषः प्रथमो धर्मस्कन्धः। एतेन गृहस्थाश्रमो ऽभिधीयते । कृच्छ्र-चान्द्रायणादितपःकर्ता तापसः वानप्रस्थो वा द्वितीयो धर्मस्कन्धः । ब्रह्मचारी सन् आचार्यकुलवासी अत्यन्तं गुरुगृहे आत्मानं क्षपयन् नैष्ठिकः तृतीयो धर्मस्कन्धः । त्रयो ऽप्येते आश्रमिणः पुण्यो लोको येषां ते पुण्यलोकाः भवन्ति । अवशिष्टस्तु परिव्राट् ब्रह्मणि सम्यक् स्थितः अमृतत्वं मोक्षं प्राप्नोति इति श्रुत्यर्थः ।

† 'त्रयो धर्मस्कन्धाः' इत्यादयो ये शब्दा ऊर्ध्वरेतसाश्रमाणां सद्भावायोदाहृताः न ते तत्प्रतिपादनाय प्रभवन्ति । यतः एषु शब्देषु आश्रमान्तराणां परामर्शं जैमिनिराचार्यो मन्यते । न विधिम् । न ह्यत्र

---

१. D. omits the whole of the following:—अस्तु वा प्रत्यवायविरोधित्वम् । नैतावता फलाभावः । मन्त्रलिंगेन श्रुति-स्मृतिवाक्याभ्यां च तत्फलावगमात्. २. I. omits वा. ३. B. C. and F. read न तावता for नैतावता. ४. I. adopts तत्तत्. ५. A. omits च. ६. A. has सूत्रे for सूत्रैः.

यथा आम्रे फलार्थे निमित्ते छायागन्ध इत्यनूद्येते । एवं धर्मं चर्यमाणमर्था अनूद्यन्ते'—इति । इदं च वाक्यं नित्यकर्मविषयत्वेन वार्त्तिके विश्वरूपाचार्य उदाजहार—

'आम्रे फलार्थ' इत्यादि ह्यापस्तम्बस्मृतेर्वचः ।
फलवत्त्वं समाचष्टे नित्यानामपि कर्मणाम्' ॥
( बृ. उ. भा. वा. १. १. ९७ )

इति । तथा च मनुः—

*'वेदोदितं स्वकं कर्म नित्यं कुर्यादतन्द्रितः ।
तद्धि कुर्वन् यथाशक्ति प्राप्नोति परमां गतिम्' ॥
(म. स्मृ. ४. १४)

---

लिङादीनामन्यतमश्चोदनाशब्दो ऽस्ति । यतो धर्मस्कन्धत्वेन त्रीनाश्रमानुदाहृत्य 'सर्व एते' इत्यनेन परामर्शपूर्वकं आश्रमाणामनात्यन्तिकफलत्वं सङ्कीर्त्य आत्यन्तिकफलतया ब्रह्मसंस्थता स्तूयते इति सूत्रार्थः ।

* न केवलं वेदोदितमेव वेदोक्तं अपि तु स्मृतीनां वेदमूलत्वात् स्मार्तमपि वेदोक्तमेव । स्वकं स्वाश्रमोक्तम् । परमां गतिं मोक्षलक्षणां प्राप्नोति । नित्यकर्मानुष्ठानात् पापक्षये सति निष्पापान्तःकरणेन ब्रह्मसाक्षात्कारान्मोक्षावाप्तेः ।

'ज्ञानमुत्पद्यते पुंसां क्षयात् पापस्य कर्मणः' ।

इति भारते मोक्षधर्मोक्तेः ।

---

१. We read with A. नित्यकर्मविषयत्वेन for which all others have only नित्यकर्मत्वेन. २. For आम्रे फलार्थे B. C. F. and H. substitute आस्ते निमित्त; while G. E. and the text of Brihadáranyaka vártika read आम्रे निमित्त. ३. A. reads कर्मणामपि for अपि कर्मणाम्.

इति । कूर्मपुराणेऽपि—

'यथाशक्ति चरेत्कर्म निन्दितानि विवर्जयेत् ।
विधूय मोहकलिलं लब्ध्वा योगमनुत्तमम् ॥
गृहस्थो मुच्यते बन्धात् नात्र कार्या विचारणा' ।
( कू. पु. १. २. १९. २८–२९ )

इति । ननु—अस्त्वेवम् । अभ्युदयहेतुत्वं तु न सम्भवति । प्रमाणाभावात् ! प्रत्युत श्रुति-स्मृतिभ्यां तन्निषिद्ध्यते—

'न कर्मणा न प्रजया धनेन'—
(म. ना. उ. १०. ५; कै. उ. २)

इति श्रुतिः ।

'ज्ञानादेव तु कैवल्यम्' ।

इति स्मृतिः । मैवम् । परमात्मप्रकरणे निःश्रेयसहेतुवेदनेच्छासाधनत्वेन यज्ञादीनां विधानात् । 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति । यज्ञेन दानेन'—इति श्रुतेः । निषेधस्तु साक्षान्निःश्रेयससाधनत्वं गोचरयिष्यति । तस्मात् न मुक्तानां[1] अग्न्याधानादिकर्मापेक्षाऽस्ति । वेदनोत्पत्तौ सा विद्यते । एतच्च उभयं—*'अत एव चाग्नीन्धनाद्यनपेक्षा'(शा. सू. ३

* 'पुरुषार्थोऽतःशब्दात् ( शा. सू. ३ । ४ । १ ) इत्येतत्सूत्रं व्यवहितमपि अत्र परामृश्यते । 'अत एव च' विद्यायाः पुरुषार्थहेतुत्वात् । अग्नीन्धनादीनि आश्रमकर्माणि विद्यया स्वार्थसिद्धौ नोपक्षितव्यानि इति सूत्रार्थः ।

1. All but A. read मुक्तौ for मुक्तानाम्.

४. २५)* 'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्' (ब्रा. सू. ३. ४. २६) इत्याभ्यामधिकरणाभ्यां निर्णीतम्। तथा च कर्मणां परम्परया मोक्षहेतुत्वं वायवीयसंहितायाम्[1]अभिहितम्—

'कर्म[2]ातिशयमासाद्य पशोः पाश[3]परिक्षयः।
एवं प्रक्षीणपापस्य बहुभिर्जन्मभिः क्रमात्॥ (६९)
भ[4]वेद्विषयवैराग्यं वैराग्याद्भावशोधनम्।
भावशुद्ध्युपपन्नस्य शिवज्ञानसमन्वयः॥ (७०)
ज्ञा[5]न-ध्यानाभियुक्तस्य पुंसो योगः प्रवर्त्तते।
योगेन तु परा भक्तिः प्रसादस्तदनन्तरम्[6]॥ (७५)
प्रसादान्मुच्यते जन्तुर्मुक्तः शिवसमो भवेत्'। (७६)
(शि. पु. ५. १. २. ६९-७६)

* उक्तसूत्रेण आश्रमकर्मणामत्यन्तमेवानपेक्षायां प्राप्तायामुच्यते। सर्वापेक्षेति। विद्या सर्वाण्याश्रमकर्माणि अपेक्षते। न अत्यन्तमनपेक्षा। विद्या उत्पन्ना सति फलसिद्धिं प्रति न किञ्चिदन्यदपेक्षते तथापि स्वोत्पत्तिं प्रति तु आश्रमकर्मादिकमपेक्षत्येव। एतदेवाह श्रुतिः—

'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति।
यज्ञेन दानेन तपसाऽनाशकेन'॥
(बृ. उ. ४. ४. २२.)

इति।

१. A. reads वायुसंहितायाम् for वायवीयसंहितायाम्. २. In the text of Shivapuráṇa धर्मा-. ३. Here we take our reading from A. though all others read पाप- for पाश-. In Shivapuráṇa we find पाप. The former of these is not incorrect, in its own way, but this verse comes from the philosophy of the Páshupatas and the words पशु and पाश are technical ones in that philosophy. ४. In Shivapuráṇa we find different reading for this verse as:—साम्बे सर्वेश्वरे भक्तिर्ज्ञानपूर्वा प्रजायते। भावानुगुणमीशस्य प्रसादो व्यतिरिच्यते॥७०॥. ५. A. and I. read ज्ञानध्याननियुक्तस्य for ज्ञान-ध्यानाभियुक्तस्य. ६. H. alone reads -स्तदनन्तरः for -स्तदनन्तरम्.

इत्यादिना। नित्यकर्मणि तु बुद्धिशुद्धिः प्रधानम्। फलमुपसर्जनम्। अत एव भुज्यमानेनापि फलेन तदनित्यत्व-सातिशयत्वदोषदर्शनरूपो विवेको न प्रतिबध्यते। तदुक्तं वार्तिककारेण—

'नित्येषु* शुद्धेः प्राधान्यात् भोगोऽप्यप्रतिबन्धनः।
भोगं भङ्गुरमीक्षन्ते बुद्धिशुद्ध्यनुरोधतः'॥
(बृ. उ. भा. वा. १. १. ६०८)

इति। नित्यं च कर्म द्विविधम्। संस्कारकं विविदिषाजनकञ्च। विहितत्वमात्रबुद्ध्या क्रियमाणं संस्कारकम्। तथा च स्मर्यते। 'यस्यैते ऽष्टाचत्वारिंशत् संस्काराः स ब्रह्मणः सायुज्यं सलोकतां गच्छति' इति। ईश्वरार्पणबुद्ध्या क्रियमाणं विविदिषाजनकम्। तच्च भगवता दर्शितम्—

'यत् करोषि यदश्नासि यज्जुहोषि ददासि यत्।
यत् तपस्यसि कौन्तेय तत् कुरुष्व मदर्पणम्'॥
(भ. गी. ९. २७)

---

* नित्येषु कर्मसु चित्तशुद्धेः प्रधानफलत्वात् उपसर्जनत्वेन भविष्यतोऽपि भोगस्य तदनुष्ठातॄणां नापेक्षेति भावः। यतस्ते हि बुद्धिशुद्ध्यनुरोधेन भोगं भङ्गुरं क्षणविनाशिनं अवलोकयन्ति। कः खलु शाश्वतसुखप्राप्तिसाधनं फलं विहाय क्षणभङ्गुरमिच्छेत्? न कोऽपीत्यर्थः।

---

१. All but A. omit बुद्धि- २. G. omits एव. ३. D. omits the whole from शुद्धिस्तु- (p. 60, l. 8) to सातिशयत्व.– ४. For अष्टाचत्वारिंशत् A. and G. read चत्वारिंशत्. ५. A. adds अष्टावात्मगुणा after संस्काराः; and omits स. ६. All except A. and I. substitute जयति for गच्छति. ७. H. and I. read भगवतेरितम् for भगवता दर्शितम्.

इति गीतायामपि । तत्र संस्कारेण चित्तस्य वेदनयोग्यतामात्रं सम्पद्यते[1] । विविदिषा तु[2] प्रवृत्तिमुत्पाद्य अवश्यं वेदनं सम्पादयति । तस्मात् मुमुक्षोरीश्वरार्पणं प्रशस्तम् । तदेव हितशब्देन धर्मस्याभिमतसाध[3]नत्वाभिधानात्—अभीष्टसिद्धिः प्रयोजनं—इत्युक्तं भवति ।

धर्मशब्देन विषयो निर्दिश्यते । अभ्युदय-निःश्रेयसे साध[3]नत्वेन धारयति—इति धर्मः । स च लक्षण—प्रमाणाभ्यां* चोदनासूत्रै[4]†र्व्यवस्थापितः । ननु—चोदनाऽवगम्यस्य न स्मृतिविषयत्वम् । सर्वत्रानन्यलभ्यस्यैव विषयत्वावगमात् । अथ मन्यसे चोदनागम्यो[5]ऽपि अर्थवादपरिहारेण शाखान्तरगतविशेषोपसंहारेण च अनुष्ठानक्रमसौकर्याय सङ्गृह्यते इति । तन्न । कल्पसूत्रेषु तथा सङ्गृहीतत्वात् । अतो न धर्मस्य विषयत्वम् —इत्याशङ्क्याह । 'शौचाचारम्' इति । अयं भावः । द्विविधो धर्मः । श्रौतः स्मार्तश्च । तत्र अ[6]ग्न्याधाना-

---

*लक्ष्यते येन तल्लक्षणं यथा धूमोऽग्नेः । यो ऽर्थः पुरुषं निःश्रेयसेन संयुनक्ति स धर्मः निःश्रेयःसम्पादकत्वं धर्मस्य लक्षणम् । प्रमाणं तु चोदना । क्रियायाः प्रवर्तकं वचनं चोदनेत्युच्यते । आचार्यचोदितः करोति इति हि दृश्यते । विस्तरस्तु शबरभाष्ये द्रष्टव्यः ।

† 'चोदनालक्षणो ऽर्थो धर्मः' (पू. मी. १ । १ । २) इत्यादीनि चोदनासूत्राणि ।

---

१. A. omits the whole from विविदिषाजनकं (p. ६१. l. १८) to सम्पद्यते both inclusive. २. A. omits तु. ३. A. reads -साधक- for -साधन-. ४. A. and I. read -सूत्रे व्यवस्थापितः for -सूत्रैर्व्यवस्थापितः. ५. For चोदनागम्यो ऽपि B. C. D. E. and F. read चोदनागम्ये ऽपि. ६. A. and I. omit अग्नि-.

दिपूर्वको ऽधीतप्रत्यक्षश्रुतिवेदमूलो दर्श-पूर्णमासादिः श्रौतः । अनुमितपरोक्षशाखामूलः शौचाचमनादिः स्मार्तः । तत्र आधानादेः कल्पसूत्रेषु सङ्ग्रहे ऽपि शौचादेरसङ्ग्रहात् विषयत्वं —इति ।

ननु— स्मृत्यन्तरेष्वपि शौचादिरुक्तः— इत्यत आह । 'वर्त्तमाने कलौ युगे' इति । कलौ युगे वर्त्तमाने सति याजनाध्यापनादीनां जीवनाय असम्पूर्त्तेः मानुषाणां जीवनाय अभ्युदयाय निःश्रेयसाय च हितः सुकरो यो धर्मः ब्राह्मणकर्तृकः* कृष्यादिः सो ऽत्र प्राधान्येन प्रतिपाद्यते—इति अनन्यलभ्यत्वात् विषयत्वमित्यर्थः ।

'यथावत्' इतिपदेन कार्त्स्न्यमभिदधानः सङ्कोचं निवारयति । न त्वन्यथाकथनं निवार्यते । स्मर्तृणामभ्रान्त्यविप्रलम्भाभ्यां तदप्रसक्तेः । अत एव सत्यवतीसुत इति सम्बोधनम् । यदा योषिदपि सती सत्यवती माता सत्यवादिनी†

* इदमग्रे मूल एव विस्तरेण स्पष्टीभविष्यति ।

† यथोक्तं महाभारते—

'रूप-सत्त्वसमायुक्ता सर्वैः समुदिता गुणैः ।
सा तु सत्यवती नाम सत्यवादित्वसंश्रयात्' ॥

इति । अत्र चतुर्थचरणे 'मत्स्यघात्यभिसंश्रयात्' इत्यपि पाठांतरं मुंबईमुद्रितपुस्तके दृश्यते ।

१. D. reads -मूलशौचा- for -मूलः शौचा.- २. For कार्त्स्न्यमभिदधानः A. and I. read कार्त्स्न्याभिधायिना. ३. For स्मर्तृणामभ्रान्त्यविप्रलंभाभ्यां तदप्रसक्तेः A. and I. read स्मर्तृणां भ्रान्ति-विप्रलम्भाद्यप्रसक्तेः ४. A. omits सती ; while all others except I. omit सत्यवती and retain सती.

तदा किमु वक्तव्यं वेदाचार्यस्तत्पुत्रः सत्यवादी[1]—इति । चकारेण सुमहत्त्वं समुच्चिनोति ।

अत्र—प्रोक्तानामधिकारि-प्रयोजन-विषयाणां परस्परसम्बन्धो विस्पष्टः । तत्र प्रयोजनाधिकारिणोरर्थ्यमानार्थित्वम् । अधि[2]-कारी हि प्रयोजनमर्थयते । प्रयोजन-विषययोश्च जन्यजनक-भावः । ज्ञाते धर्मे तदनुष्ठानेनाभ्युदय-निःश्रेयससिद्धेः । अधि-कारि-विषययोश्चोपकार्योपकारकभावः । विषयः प्रयोजनमुत्पा-द्याधिकारिणं प्रत्युपकरोति । विषय-ग्रन्थयोश्च प्रतिपाद्य-प्रति-पादकभावः । तदेवमनुबन्धचतुष्टयस्य सुलभत्वात्समाहित-मनस्कैः श्रोतृभिरस्मिन् ग्रन्थे प्रवर्त्तनीयं इति श्लोकद्वयस्य तात्पर्यार्थः ॥ १–२ ॥

ननु—पराशरस्मृत्यवतारे व्यासं प्रति प्रश्नो व्यधिकरण—इत्याशङ्क्य श्लोकद्वयेन परिहरति—

**तच्छ्रुत्वा ऋषिवाक्यं[3] तु सशिष्यो ऽग्न्यर्कसन्निभः ।**
**प्रत्युवाच महातेजाः श्रुति-स्मृतिविशारदः ॥ ३ ॥**
**न चाहं सर्वतत्त्वज्ञः[4] कथं धर्मं वदाम्यहम् ।**
**अस्मत्पितैव प्रष्टव्य इति व्यासः सुतोऽब्रवीत् ॥ ४ ॥**

तदित्यादिना । सुमन्तु-वैशम्पायन-जैमिनि-पैलैः चतुर्वेदप्रव-र्त्तकैः पुराणप्रवर्त्तकसूतसहितैः शिष्यैः सह वर्तते इति स-

१. D. E. G. and I. read सत्यवादीति प्रकारेण सुमहत्त्वम्, and this brings the two sentences into one. २. A. and I. read अधिकारिभिः प्रयोजन-मर्थ्यते for अधिकारी हि प्रयोजनमर्थयते ; while D. omits हि. ३. A. alone reads मुनिवाक्यं for ऋषिवाक्यं. ४. B. C. and F. read धर्मतत्त्वज्ञः for सर्वतत्त्वज्ञः.

शिष्यः । यथा अग्निर्ज्वालाभिरुपेतः यथा च सूर्यो रश्मिभिः एवमसौ स्वसमानविद्यैः शिष्यैरुपेतः । अत एव महातेजस्त्वम् । तेजःशब्देनात्र ब्रह्मवर्चसं विवक्षितम् । इतरेण तेजसा प्रयोजनाभावात् । तामेव विवक्षां 'श्रुतिविशारदः' इत्यनेन स्पष्टयति । श्रुति-स्मृत्योः क्रमेणाग्न्यर्कदृष्टान्तौ योजनीयौ । अग्निः सन्निकृष्टमेव दहन्नपि अहनि रात्रौ चाविशेषेण दहति । एवमधीयमानप्रत्यक्षश्रुतिषु कतिपया एव धर्मा ज्ञायमाना[1] युक्तावस्थायामयुक्तावस्थायां[2] चाविशेषेण ज्ञायन्ते । अर्को दिवैव भासयन्नपि सन्निकृष्टं विप्रकृष्टं च अखिलं भासयति । एवं युक्तावस्थायामेव स्मर्यमाणा अपि विप्रकीर्णानेकशाखानिष्ठधर्माः सर्वे ऽपि स्मर्यन्ते । अथ वा तपसा अत्यन्तपरिशुद्धो ऽयं इत्यस्मिन्नर्थे अग्निदृष्टान्तः[3] । 'अग्निः शुचिव्रततमः' (ऋ. सं. ६. ३. ४०. १; तै. सं. ५. ३. ५. १४) इति श्रुतेः । बहुविषयाभिव्यक्तिक्षमत्वे ऽर्कदृष्टान्तः[4] ॥ ३ ॥

ननु—एवं सति—'न चाहं सर्वतत्त्वज्ञः'—इति वचनं व्याहतम् । न[5] । तस्य पितृप्रशंसारूपार्थवादत्वात् । 'अपशवो वा अन्ये गो-अश्वेभ्यः' (तै. सं. ५. २. ९. ४) इति वचनं यथा गवाश्वप्रशंसापरम् । न त्वजादीनां पशुत्वं निषेधति । प्रत्यक्षविरोधात्, आग्नीषोमीयादिपशुविधिविरोधाच्च[6] । एवमिदं व्यासवचनं न व्यासस्य सर्वज्ञत्वं निषेधति । किन्तु पितरं

१. After ज्ञायमाना A. and I. add भवन्ति ; but it seems to have no proper use in this place. B. C. and F. omit ज्ञायमाना. २. B. C. and F. omit अयुक्तावस्थायां. ३. B. C. E. and F. read अग्निर्दृष्टान्तः for अग्निदृष्टान्तः. ४. B. C. E. and F. read अर्को दृष्टान्तः for अर्कदृष्टान्तः ५. Except A. and I. all others omit न. ६. D. reads अग्निष्टोमीयादि- for आग्नीषोमीयादि-.

प्रशंसति। यद्वा। गुरुविषये विनयः कर्त्तव्य—इत्याद्याचार-शिक्षार्थमिदमुक्तम्। अथवा 'न चाहम्'—इति वदतो व्यासस्यायमाशयः—सम्प्रति कलिधर्माः पृच्छ्यन्ते। तत्र[1] न तावदहं स्वतः कलिधर्मतत्त्वं जानामि। अस्मत्पितुरेव तत्र प्रावीण्यात्। अत एव 'कलौ पाराशराः स्मृताः' (प. स्मृ. १. २४) इति वक्ष्यते। यदि पितृप्रसादात् मम तदभिज्ञानं तर्हि स एव पिता प्रष्टव्यः। न हि मूलवक्तरि लभ्यमाने प्रणालिका[2] युज्यते—इति*।

पालनात् 'पिता'। पालकत्वं च अत्र कलिधर्मोपदेशेन—इति प्रस्तावानुसारेण द्रष्टव्यम्। अनयैव विवक्षया जनक-तातादि-शब्दानुपेक्ष्य पितृशब्दं प्रयुङ्क्ते। एवकारेण अन्ये स्मर्त्तारो व्यावर्त्यन्ते। यद्यपि मन्वादयः कलिधर्माभिज्ञाः तथापि पराशरस्यास्मिन्विषये तपोविशेषबलादसाधारणः कश्चिदतिशयो द्रष्टव्यः। यथा काण्व-माध्यन्दिन-काठक-कौथुम-तैत्तिरीयादिशाखासु कण्वादीनामसाधारणत्वं तद्वदत्रा[3]वगन्तव्यम्।

'व्यासः[4] सुतः' इत्युक्तेरयमाशयः—कलिधर्मसम्प्रदायोपेतस्यापि पराशरसुतस्य यदा तद्धर्मरहस्याभिधाने सङ्कोचः

* नन्दपण्डितस्तु—'पराशरस्यैव प्रतिकल्पं कलिधर्मप्रवचनाधिकारिपुरुषत्वं श्रुति-स्मृतिभ्यामवगत्य स्वस्यानुचितं कलिधर्मानुशासनं मन्वानो व्यासः सुतो ऽहं धर्मं कथं वदामि अस्मत्पितैव प्रष्टव्य इत्यवदत्' इत्याह। धरणीधरो ऽपि—'पराशरस्यैव प्रतिकल्पं कलिधर्मप्रवचनाधिकारित्वमिति गूढोऽभिप्राय' इत्युक्तवान्।

१. A. and I. omit तत्र. २. We read प्रणालिका though the MSS. read प्रणाडिका, there being no difference between ड and ल in Sanskrit. ३. A? omits अत्र. ४. All but H. read सुतो व्यासः for व्यासः सुतः.

तदा किमु वक्तव्यमन्येषाम्—इति । तदेवं व्यासमुखेन पराशरे गौरवातिशयबुद्धिमुत्पादयितुं पराशरस्मृत्यवतारे ऽपि व्यासं प्रति प्रश्नो न व्यधिकरणः इत्यवगन्तव्यम् ॥ ४ ॥

यथाविधि गुरूपसत्त्या विद्याप्राप्तिः इत्यभिप्रेत्य [1]उपसत्तिं दर्शयति—

[2]ततस्त ऋषयः सर्वे धर्मतत्त्वार्थकाङ्क्षिणः ।
ऋषिं व्यासं पुरस्कृत्य [3]गता [4]बदरिकाश्रमम् ॥५॥

इति । सर्वत्र वस्तुनि सामान्येन ज्ञाते विशेषेणाज्ञाते ज्ञानाकाङ्क्षा भवति । धर्मशब्दो ऽत्र सामान्यमभिधत्ते । तत्त्वार्थशब्दो विशेषम् । तत्र सामान्यं [5]अधीतवेदेन [6]श्रुतव्याकरणेन लक्षण-[7]प्रमाणकुशलेन पुरुषेण ज्ञायते । वेदो [8]हि धर्मसामान्यं निरूपयति । 'धर्मो विश्वस्य जगतः प्रतिष्ठा' ( म. ना. उ. १. २२ )—इति । शाखान्तराध्यायिनस्तु व्याकरणबलात् तदभिज्ञानम् । अभ्युदय-निःश्रेयसे धारयति—इति व्युत्पत्तेर्दर्शयितत्वात् । औणादिकप्र[9]क्रियायां कुशलश्चेत् लक्षणेन [10]जानातु । अर्थत्वे [11]तु—चोदनागम्यो धर्मः—इति लक्षणम् । तत्र अर्थशब्देन [12]श्येनाद्यभिचाराणां अनर्थानां निवृत्तिः । 'श्येने-

---

१. D. E. G. and H. read उपपत्तिं for उपसत्तिं. २. K. and L. read ततस्तु for ततस्त. ३. A. and I. read गत्वा for गता. ४. D. E. and G. read बदरिकाश्रमान् for बदरिकाश्रमम्. ५. B. C. and F. read अधीते वेदे for अधीतवेदेन. ६. E. and G. read अश्रुतव्याकरणेन for श्रुतव्याकरणेन. ७. B. has -प्रमाणाकुशलेन for -प्रमाणकुशलेन. ८. A. omits हि. ९. A. D. E. and I. read -प्रक्रियायामकुशल- for -प्रक्रियायां कुशल-. १०. A. and I. read जानाति for जानातु. ११. A. replaces सति by तु. १२. A. alone reads श्येनाभिचरणादीनां for श्येनाद्यभिचाराणां.

नाभिचरन् यजेत[*]' इति श्रु[1]त्युक्तस्य श्येननामकयागफलस्य शत्रुवधस्य 'न हिंस्यात् सर्वभूतानि'–इति निषेधविषयत्वेन अनर्थत्वात् तद्धेतोः श्येनस्याप्यनर्थत्वम् । श्येनस्य स्वरूपतो निषेधाविषयत्वात् विधेयत्वमप्यविरुद्धम् । न च–निषेधविषयत्वेन आग्नीषोमीयवधस्यापि अर्थशब्देन व्यावर्त्यत्वादव्या[2]प्तिः–इति शङ्कनीयम् । तत्र विशेषविधिना सामान्यनिषेधस्य अपोहितत्वात् । चोदनाशब्देन प्रत्यक्षादेर्व्यावृत्तिः । 'घटं कुरु' इति लौकिकविधावे[3]तिव्याप्तिः–इति चेत् । न । चोदनाशब्दस्य वेदविषये प्रसिद्धत्वात् । पङ्कजादाविव अवयवार्थस्य प्र[4]वृत्तिनिमित्तमात्रत्वात् । उक्तलक्षणाभिधानेनैव 'धर्मे चोदनाप्रमाणम्'–इत्यर्थादभिहितं भवति । एवं लक्षणादिभिः सा[5]मान्येन ज्ञाते ऽपि ऋषीणां तद्विशेषज्ञाने भवत्येवाकाङ्क्षा[†]।

तत्र विशेषप्रश्नकुशलत्वात् व्यासस्य पुरस्कारः । कलि-

---

* अयं च श्येनयागः आश्वलायनश्रौतसूत्रे (अ. ९. ७) उक्तः । तस्य च इतिकर्तव्यतादिकं तत्रैव द्रष्टव्यम् । आभिचारिकमिदं कर्म अस्वर्ग्यत्वेनैव वेदे उक्तम् ।

† नन्दपण्डित-धरणीधरौ तु–'धर्मतत्त्वार्थकाङ्क्षिणः इति– कलिकालानुष्ठेयस्य धर्मस्य तत्त्वं अबाधितं रूपं स एवार्थः तं काङ्क्षन्ति' इति व्याख्यातवन्तौ ।

---

१. A. reads श्रुतेः उक्तस्य for श्रुत्युक्तस्य ; while all others except I. omit श्रुति altogether. २. B. C. and F. read अप्राप्तिः for अव्याप्तिः. ३. We read with A. while all others read विधिष्वतिव्याप्तिः for -विधावतिव्याप्तिः. ४. A. and I. read प्रवृत्त्यानिमित्तत्वात् for प्रवृत्तिनिमित्तमात्रत्वात्. ५. Here we read with A. and I.; while all others read सामान्ये ज्ञाते ऽपि for सामान्येन ज्ञाते ऽपि.

कल्मषविमो[१]चनहेतुत्वात् अक्षय्य[२]फलहेतुत्वाच्च बदरिकाश्रम-
निवासः । तदुक्तं कूर्मपुराणे—

'बदर्याश्रममासाद्य मुच्यन्ते[३] कलि[४]कल्मषात् ।
तत्र नारायणो देवो नरेणास्ते सनातनः ॥
अक्षय्यं[५] तत्र दत्तं[६] स्याज्जप्यं[७] वा ऽपि तथाविधम् ।
महादेवप्रियं तीर्थं पावनं तद्विशेषतः ।
तारयेच्च पितॄन् सर्वान् दत्त्वा श्राद्धं विशेषतः' ॥
(कू. पु. १. २. ३६. ४८–४९)

इति ॥ ५ ॥

पराशरस्य तपोमहिमानं प्रख्यापयितुमाश्रमं विशिनष्टि—

नानापुष्पलताऽऽकीर्णं फ[८]लैर्वृक्षैरलङ्कृतम् ।
नदीप्रस्रवणोपेतं पुण्यतीर्थोपशोभितम् ॥ ६ ॥
मृग-पक्षिनि[९]नादाढ्यं देवताऽऽयतनावृतम् ।
यक्ष-गन्धर्व-सिद्धैश्च *[१०]नृत्य-गीतैरलङ्कृतम् ॥ ७ ॥

* अत्र कुत्रचि'न्नृत्य'शब्दः कुत्रापि 'नृत्त'शब्दश्च वर्तते । यद्यपि नृत्य-नृत्तशब्दयोः व्याख्याकृद्भिर्न विशेषः प्रतीतः तथापि तत्रास्ति कश्चिद्विशेषः । यथोक्तं चन्द्रिकायां—'नृत्यं पदार्थाभिनयो नृत्तं ताललयाश्रितम्' इति ।

१. All but A. read -विमोक- for -विमोचन-. २. All but A. D. and G. read अक्षय- for अक्षय्य-. ३. A. and I. read मुच्येत for मुच्यन्ते; all others read मुमुचे for the same. ४. In Kúrma Purana we find सर्वकिल्बिषात्. ५. Except A. D. and I. All others and the text of Kúrma Purana read अक्षयं. for अक्षय्यं ६. D. has कर्म for दत्तं; and Kúrma Purana दानं. ७. B. C. and F. read -जप्तं for -जप्यं. ८. Except J. K. I. and L. all others read फल-पुष्पैः for फलवृक्षैः. The commentators prefer the word फलवृक्षैः ९. For -निनादाढ्यं G. reads -निनादाच्च, while L. reads -निनादाढ्य-; and D. reads -भिराढ्यं च for -निनादाढ्यं. १०. A. and I. read नृत्त-for नृत्य-.

इति । अत्युत्कटेन* तपसा फलमिहैवाविर्भवति । तथा सति यादृशं फलमुत्कृष्टमुपलभ्यते तादृशस्य तपस उत्कर्षो निश्चेतव्यः । इह च[1] तेषु तेषु ऋतुषु[2] सम्भाव्यमानानां नानाविधानां पुष्पाणां निरन्तरं सङ्कीर्णत्वमुपलभ्यते । ततो देवार्चनलक्षणं तपः पक्कं इति गम्यते । एवं फलवृक्षोत्कर्षात्[3] आहारनियतेः परिपाको निश्चीयते । घर्मकालेऽपि अविच्छिन्नेन नदीप्रवाहेण स्नाननियतिपाकावगमः[4]† । पुण्यतीर्थं[5] विष्णुगङ्गादि । पुण्यतीर्थशोभया च[6] आश्रमस्यैतस्य तपोऽतिशयजनकत्वे[7] हेतुरुपन्यस्तः ॥ ६ ॥

मृगादीनामन्योन्यवैरत्यागेन निर्भयाणां विस्रब्धो यो निनादः तेन अहिंसाऽनुष्ठानसिद्धिर्दर्शिता । तथा च योगशास्त्रे पतञ्जलिः यम-नियमादीनां क्रमेण सिद्धिलिङ्गानि सूत्रयन्

---

* 'अत्युत्कटैः पुण्य-पापैरिहैव फलमश्नुते' इति वसिष्ठोक्तिरपि अत्रानुसन्धेया ।

† 'नियति' शब्दो ऽत्र नियमवाची । भगवता पतञ्जलिना 'वितर्काहिंसादयः' ( पा० २. ३४ ) -इत्यादिना प्रतिपक्षभावनामुक्त्वा–प्रतिपक्षभावनाद्धेतोर्हेया वितर्का यदाऽस्य स्युरप्रसवधर्माणः तदा तत्कृतमैश्वर्यं योगिनः सिद्धिसूचकत्वेन भवतीति दर्शयितुं वैरत्याग-क्रियाफलाश्रयत्वाद्याः सिद्धयो ऽभिहिताः । तास्तु योगसूत्रभाष्ये द्रष्टव्याः ।

---

१. A. omits च. २. All but A. and I. omit ऋतुषु, which is necessarily wanted here. ३. H. and I. read फलवृन्दोत्कर्षात् for फलवृक्षोत्कर्षात्. ४. For -नियति- B. C. and F. read -नियम-; while D. E. and H. -नियत-. ५. For पुण्यतीर्थं विष्णुगंगादि । पुण्यतीर्थशोभया. D. reads उष्णतीर्थं विष्णुगंगादिपुण्यतीर्थशोभया ; while H. reads पुण्यतीर्थविष्णुगंगादिपुण्य-. ६. Except A. all others omit च. ७. G. reads तपोऽतिशयजनत्वेहेतु-; and D. तपोऽतिशयजनकत्वस्नेहहेतु- for तपोऽतिशयजनकत्वे हेतु-.

अहिंसासिद्धिं सूत्रयामास । 'तत्सन्निधौ वैरत्यागः' (पा. यो. सू. २. ३५.) इति ।

पूर्वे महर्षयोऽत्र तपश्चरन्तः एकैकं देवालयं स्वस्वकाले निर्मिमिरे । तैः सर्वैरावृतत्वमस्याश्रमस्य तापोऽतिशयहेतुतायां सर्वसम्प्रतिपत्तेर्लिङ्गम् । अथवा चन्द्र-सूर्यादयो देवाः पूर्वस्मिन् जन्मनि मनुष्याः सन्तोऽत्रैव नानाविधेष्वायतनेषु तपस्तप्त्वा देवत्वं लेभिरे—इति विवक्षया देवनामाङ्कितैरायतनैरावृतत्वमुक्तम् । यक्षादयः* पूर्वजन्मानुष्ठिततपःफलदेवयोनित्वमनुभवन्तो† ऽप्यत्रागत्य एतदीयतपोऽतिशयं दृष्ट्वा हृष्यन्तो नृत्यन्ति गायन्ति च । अनेन देवैरपि अर्थनीयत्वमाश्रमस्य प्रदर्शितम् । युक्तं चैतत् । देवजन्मनोऽप्युत्तमस्य फलस्यात्र सम्पादयितुं शक्यत्वात् । अथवा यक्षादयो मुमुक्षवः सन्तोऽत्रागत्य मोक्षसाधनत्वेन[1] नृत्त-गीताभ्यां ईश्वरं भजन्ते । अत एव याज्ञवल्क्येनेदमुक्तम्—

---

* 'यक्ष् पूजायाम्' । यक्ष्यते पूज्यते इति यक्षः । 'अकर्तरि' (३. ३. १९) चेति कर्मणि घञ् । यक्षादीनां देवतांशत्वात् देवयोनित्वम् । यथाहामरसिंहः—

'विद्याधरोऽप्सरो-यक्ष-रक्षो-गन्धर्व-किन्नराः ।
पिशाचो गुह्यकः सिद्धो भूतोऽमी देवयोनयः' ॥

इति । सांप्रतं 'ह्मसोबा' इत्यादिनामभिः महाराष्ट्रेषु प्रसिद्धाः यक्षशब्दवाच्या एवेति प्रतिभाति ।

† देवा योनिरेषां ते देवयोनयः देवांशका इत्यर्थः । न तु, देवानामिव योनिरुत्पत्तिकारणं अविभाज्यमेषां ते—इति व्यधिकरणबहुव्रीहिः ।

---

१. मोक्ष. is omitted by A.

'वीणावादनतत्त्वज्ञः श्रुति-जातिविशारदः ।
तालज्ञश्चाऽप्रयासेन मोक्षमार्गं[१] निगच्छति*' ॥
(या. स्मृ. ३. ११५.)

इति ॥ ७ ॥

गुरूपसत्तावनुष्ठेयं प्रकारविशेषं दर्शयति—

तस्मिन्नृषिसभामध्ये शक्तिपुत्रं पराशरम् ।
सुखासीनं महातेजा[२] मुनिमुख्यगणावृतम् ॥ ८ ॥
कृताञ्जलिपुटो भूत्वा व्यासस्तु ऋषिभिः सह ।
प्रदक्षिणाभिवादैश्च स्तुतिभिः[३] समपूजयत् ॥ ९ ॥

इति । 'तस्मिन्' इति आश्रमोक्तिः । वक्ष्यमाणधर्माणामशेषमुनिसम्मतत्वं दर्शयितुं 'ऋषिसभा' इत्युक्तम् । ऋषिष्वपि विशेषेण स्मृतिकाराणां[४] गोत्रप्रवर्त्तकानां च अत्रि-याज्ञवल्क्यादीनां सम्पत्तिं विवक्षित्वा आह । 'मुनिमुख्य' इति । न केवलं तपोबलेन पराशरस्य महिमा किन्तु वि-

* 'अपरान्तकमुल्लोप्यं' इत्यादीनि सप्त गीतानि महागीतानि चोक्त्वा 'मेतत्तदभ्यासकरणान्मोक्षसंज्ञितं' इति गीताभ्यासस्य ऐकाग्र्यताकत्वेन आत्मैकतापत्तिकारणत्वं प्रदर्श्य, तत्साधकानां वीणावादनादीनामपि मुक्तिपथप्रापकत्वमाह । वीणेति । श्रुतिः द्वाविंशतिप्रकारा जातयस्तु षड्जाद्याः सप्त तासु विशारदः । तालः गीतकालपरिमाणम् तत्स्वरूपज्ञो ऽपि, तत्र मानसस्यैकाग्र्यात् सुलभत्वेनैव मोक्षमार्गं गच्छति । एतदपि भगवत्प्रीत्यर्थमेवानुष्ठितं चेत् मोक्षसाधकं, अन्यथा तु बन्धहेतुरेव ।

१. H. reads -मार्गे for -मार्गं. २. M. reads महात्मानं for महातेजा. ३. K. and L. read तमृषिं for स्तुतिभिः. ४. A. reads स्मृतिकारिणां for स्मृतिकाराणां.

शिष्टजन्मनापि इत्याह। 'शक्तिपुत्रम्' इति। अयं च महिमा पराशरशब्दनिर्वचनपर्यालोचनया विस्पष्टमवगम्यते। तच्च निर्वचनं महद्भिरुदाहृतम्—

'पराकृताः शरा यस्मात् राक्षसानां वधार्थिनाम्।
अतः पराशरो नाम ऋषिरुक्तो मनीषिभिः॥
परस्य कामदेवस्य शराः सम्मोहनादयः।
न विद्यन्ते यतस्तेन ऋषिरुक्तः पराशरः॥
परेषु पापचित्तेषु नादत्ते कोपलक्षणम्।
शरं यस्मात् ततः प्रोक्तः ऋषिरेव पराशरः॥
परं मातुर्निजाया यदुदरं तदयं गतः।
ऋचमुच्चार्य निर्भिद्य निरगात् स पराशरः'* ॥

इति[1]। 'सुख' शब्देनैकाग्र्यं च विवक्षितम्। चित्तस्याशेषविक्षेपपरिहारेणैकाग्र्यं यथा भवति तथोपविष्टमित्यर्थः। 'ऐकाग्र्य-आसीन-महातेजः' पदानि पूर्वं व्याख्यातानि॥८॥

'अञ्जलि' पदेन भक्त्यतिशयो द्योत्यते। परया[2] भक्त्या गुरूपदिष्टार्थतत्त्वमाविर्भवति[3]। तथाच श्वेताश्वतरशाखायां श्रूयते—

'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः'॥
(श्वे. उ. ६. २३.)

* अत्र 'पराशर' नाम्नश्चतुर्धा निरुक्तिः। सा च परस्परं भिन्ना। उत्तानार्था च। वाक्यानीमानि कुत्रत्यानीति न ज्ञायते।

१. B. D. E. and H. omit इति. २. All except A. and I. read पराशरभक्त्या for परया भक्त्या. This is a real mistake though to be found in all the MSS. ३. B. and F. read गुरुसन्दिष्टार्थतत्त्वं for गुरूपदिष्टार्थतत्त्वं.

इति । अन्तरेण गुरुभक्तिमुपदिष्टो ऽप्यर्थो निष्फलो भवति । एतदपि[1] क्वचित् श्रूयते,—

'अध्यापिता ये गुरून्[2] नाद्रियन्ते
विप्रा* वाचा मनसा कर्मणा वा ।
यथैव ते न गुरुभिर्[3]भोजनीयाः
तथैव तान् न भुनक्ति श्रुतं तत् ॥

(व. स्मृ. २. ११)

इति । यथा गुरुमनाद्रियमाणाः शिष्याः न गुरुणा पालनीयाः तथा तत् श्रुतमपि[4][5] तान् शिष्यान् स्वफलदानेन न पालयति इत्यर्थः । देववद्गुरोः पूजनीयत्वात् तस्मिन् प्रदक्षिणादयो युज्यन्ते । तर्हि आवाहनासन-स्वागतादयो ऽप्युपचाराः प्राप्यन्ते—इति चेत् । प्राप्यन्तां नाम । प्रदक्षिणादीनामुपलक्षणत्वात् । अथवा दूरादागत्य गुरुदर्शनं कुर्वतामुचिताः प्रदक्षिणादय एव इति तावन्तो ऽत्र निर्दिश्यन्ते ॥ ९ ॥

उक्तोपसत्तेर्यथाविधित्वं द्योतयितुं गुरोः परितोषपूर्वकं कृपाविशेषमादर्शयति[6]—

**ततः[7] सन्तुष्टहृदयः पराशरमहामुनिः ।**
**आह सुस्वागतं ब्रूहीत्यासीनो मुनिपुङ्गवः ॥ १० ॥**

---

* अत्र 'विप्र' शब्दो न केवलं ब्राह्मणवाची । अपि तु गुरूपसत्तिपूर्वकमध्ययनाधिकारिशिष्यवाचकः अन्यथा क्षत्रियादीनां गुर्वनादरणे दोषाभावप्रसङ्गः स्यात् ।

१. A. and L. read तदपि for एतदपि. २. All but A. and H. read गुरुं for गुरून्. ३. गुरोः for गुरुभिः; while H. omits गुरुं altogether and then reads गुरोः. ४. D. reads कृतमपि for श्रुतमपि. ५. For अपि तान् A. reads अधीतान्. ६. A. reads -षं दर्शयति -for षमादर्शयति. ७. Except A. J. K. and L. all others read अथ for ततः.

इति । गुरुसन्तोषस्य श्रेयोहेतुत्वमन्वय-व्यतिरेकाभ्यां पु-राणसारे[1] ऽभिहितम्—

‘ गुरावतुष्टे ऽतुष्टाः स्युः सर्वे देवा द्विजोत्तमाः ।
तुष्टे तुष्टा यतस्तस्मात् सर्वदेवमयो गुरुः ॥
श्रेयोऽर्थी यदि गुर्वाज्ञां मनसाऽपि न लङ्घयेत्[2] ।
गुर्वाज्ञापालको यस्मात् ज्ञानसम्पत्तिमश्नुते ’ ॥

इति । आदरपूर्वकेण स्वागतप्रश्नेन कृपाविशेषो दर्शितः । आदरार्था सुशब्दस्य द्विरुक्तिः । अथवा सुशब्देनैकेन आगमने[3] लौकिकं[4] सौख्यमुक्तम् । द्वितीयेन यथाविध्युपसत्तिलक्षणं शास्त्रीयं सौष्ठवमुच्यते । ऋषिष्वागतेषु पराशरेणाभ्युत्थातव्यम्[5]—इति शङ्कां वारयति । ‘आसीनः’ इति । तत्र हेतुत्वेन पराशरो महामुनि-मुनिपुङ्गवशब्दद्वयेन[6] विशेष्यते । महामुनि[7]-मुनिपुङ्गवशब्दौ क्रमेण वयसा विद्यया च ज्येष्ठत्वमाहतुः । उभयविधज्यैष्ठ्यात् न अनेनाभ्युत्थातव्यम् ॥१०॥

आसीनेन यथा स्वागतं पृष्टम् एवमागतेनाप्यवस्थितस्य

---

* महामुनिः ‘मन् ज्ञाने’ इत्यस्मात् ‘मनेरुत् च’ (उ. ४.१२३) इत्यनेन इन् । मननशीलो मुनिः । अमरसिंहस्तु ‘वाचंयमो मुनिः’ इत्याह ।

१. D. has पुराणसारेण for पुराणसारे. २. D. reads मनसा न विलंघयेत् for मनसापि न लंघयेत्. ३. A. omits आगमने. ४. B. reads लौकिकसौख्यं for लौकिकं सौख्यं. ५. A. reads पराशरेणाप्युत्थातव्यम् for पराशरेणाभ्युत्थातव्यम्. ६. All but A. read simply पराशरः शब्दद्वयेन विशेष्यते for पराशरो महामुनि-मुनिपुंगवशब्दद्वयेन विशेष्यते. ७. Except A. and I. all others put in an additional शब्द after महामुनि and thus read महामुनिशब्द-मुनिपुंगवशब्दौ.

कुशलं प्रष्टव्यम्। अतः प्रथमं तत् पृष्ट्वा[1] गुरुणा स्वकीयकुश[2]-ले ऽभिहिते सति पश्चात् बुभुत्सितार्थं पृच्छति–इत्याह–

**कुशलं[3] सम्यगित्युक्त्वा व्यासः पृच्छत्यनन्तरम्[4]।**

इति उक्त्वा। 'गुरुमुखात् कुशलं श्रुत्वा च' इत्यध्याहृत्य[5] योजनीयम्॥

बुभुत्सितार्थे प्रश्नप्रकारं दर्शयति–

**यदि जानासि भक्तिं मे स्नेहाद्वा भक्तवत्सल ॥ ११ ॥**

**धर्मं कथय मे तात अनुग्राह्यो[6] ह्यहं[7] तव ।**

इति। प्रियः शिष्यः पुत्रो वा रहस्योपदेशमर्हति। नेतरः। सोऽयमर्थः छन्दोगैर्मधुविद्यायामाम्नायते। 'इदं वाव तज्ज्येष्ठाय पुत्राय पिता ब्रह्म प्रब्रूयात् प्रणाय्याय वा ऽन्तेवासिने॥५॥ नान्यस्मै कस्मै चन*' (छां. उ. ३. ११. ५–६) इति। अतो ऽत्र व्यासस्य पुत्रत्वं शिष्यत्वं चास्ति इत्यभिप्रेत्य पक्षद्वयो-

---

* 'इदं' ज्ञानं। 'तत्' यथोक्तम्। ज्येष्ठायैव वक्तव्यमिति पूर्वेषामयं नियमः। नेदानीन्तनानाम्। ज्येष्ठाय पुत्राय सर्वप्रियार्हाय कनिष्ठायापि वा। अथवा 'प्रणाय्याय' योग्याय 'अन्तेवासिने' शिष्याय ब्रह्म प्रब्रूयात् इति तात्पर्यम्।

---

१. A. reads तत्त्वविदा for तत् पृष्ट्वा. २. A. and I. read स्वकीये कुशले for स्वकीयकुशले. ३. M. reads कुशलं कुशलेत्युक्त्वा for कुशलं सम्यगित्युक्त्वा. Before this line G. has an additional line not to be found in any other MS., namely :—वत्स सुस्वागतं तेषां ऋषीणामासमन्ततः; M. also has an additional line in the place of above, and it reads thus :—व्यास सुस्वागतं ये च ऋषयश्च समन्ततः. ४. A. J. and M. read -त्यतः परम् for -त्यनन्तरम्. ५. E. G. and H. read इत्यस्याऽऽवृत्त्या for इत्यध्याहृत्य. ६. Before अनुग्राह्यो A. adds हि. ७. A. reads ऽप्यहं for ह्यहं.

न्यासः । यदि लिङ्गैर्मदीयो[1] मानसो भक्तिविशेषो ऽनुमीयेत तदा तव भक्तवत्सलत्वात् शिष्यबुद्ध्या मामनुगृहाण । अननुमाने ऽपि पुत्रस्नेहात् अनुग्राह्यो ऽहम् । सर्वथा ऽप्युपदेष्टव्य एव धर्मः ॥ ११ ॥

ननु—सन्ति[2] बहवो धर्माः[3] मन्वादिभिः प्रोक्ताः। तत्र को धर्मो भवता बुभुत्सितः? इत्याशंक्य बुभुत्सितं परिशेषयितुं बुद्धान् धर्मानुपन्यस्यति ।

श्रुता मे मानवा धर्मा वासिष्ठाः काश्यपास्तथा ॥ १२ ॥
गार्गेया[4] गौतमीयाश्च तथा चौशनसा[5] स्मृताः[6] ।
अत्रे[7]र्विष्णोश्च संवर्त्तात् दक्षादङ्गिरसस्तथा ॥ १३ ॥
शातातपाच्च हारीतात् याज्ञवल्क्यात्तथैव च ।
आ[8]पस्तम्बकृता[9] धर्माः शङ्खस्य लिखितस्य च ॥१४॥
[10]कात्यायनकृताश्चैव तथा[11] प्राचेत[12]सान्मुनेः[13] ।

१. A. H. and I. read मदीये मानसे भक्तिविशेषोऽनुमीयते for मदीयो मानसो भक्तिविशेषोऽनुमीयेत. २. A. omits सन्ति. ३. All but A. take धर्माः after प्रोक्ताः. ४. D. E. G. J. K. and L. read गार्गीया for गार्गेयाः, while A. reads गार्गीय-गौतमीयाश्च. for गार्गेया गौतमीयाश्च. ५. B. and E. read चौशनसा स्मृताः; D. G. H. J. K. L. and M. have चौशनसाः स्मृताः. ६. A. and I. read श्रुताः for स्मृताः keeping चौशनसाः. ७. In this Shloka for all the ablatives M. substitutes respective nominatives and reads as follows:—अत्रेर्विष्णोश्च सांवर्ता दाक्षा आंगिरसास्तथा । शातातपाश्च हारीता याज्ञवल्क्यकृताश्च ये ॥. ८. M. takes the second line, namely :-कात्यायन- &c., before the first half आपस्तम्ब- &c. ९. A. reads -कृतान् धर्मान् for -कृता धर्माः. १०. Before this line G. adds an extra line धर्मराजकृताश्चैव बृहस्पतिकृताश्च ये ।. ११. M. reads प्राचेतसकृताश्च ये for तथा प्राचेतसान्मुनेः. १२. D. and H. read प्राचेतसो मुनेः for प्राचेतसान्मुनेः. १३. After all the above lines G. has an additional line श्रुतिरन्योद्भवास्तात श्रुत्यर्था मानवास्तथा ।.

इति । मे श्रुताः मया श्रुता इत्यर्थः । संबन्धसामान्यवाचिन्यः षष्ठ्याः कर्तृकृतिलक्षणे[1] विशेषे पर्यवसानात् । अत्रेः इत्यादीनां पञ्चम्यन्तानां श्रुताः—इत्यनेनानुषक्तेन सम्बन्धः । आपस्तम्बेन कृताः प्रोक्ताः इति यावत्[2] । शङ्खस्य[3] लिखितस्य च[4] सम्बन्धिनो धर्माः । ताभ्यां प्रोक्तत्वं तत्सम्बन्धित्वम् । प्रचेता एव प्राचेतसः। वायस-राक्षसादाविव† स्वार्थे तद्धितः । अस्तु वा प्रचेतसः पुत्रः कश्चित् धर्मशास्त्रकारः ॥ १२, १३, १४ ॥

ननु—मानवादयः स्मार्त्ता[5] धर्माः श्रुताश्चेत् तर्हि मा नाम[6] ते बुभुत्स्यन्तां श्रौतास्त्वग्निहोत्रादयो बुभुत्सिष्यन्ते[7] इत्याशंक्याह—

**श्रुता ह्येते भवत्प्रोक्ताः श्रुत्यर्था[8] मे[9] न विस्मृताः ॥ १५ ॥**

**अस्मिन् मन्वन्तरे धर्माः कृत-त्रेतादिके[10] युगे ।**

इति । ये प्रत्यक्षश्रुतीनामर्थाः अग्निहोत्रादयो धर्माः एते मया श्रुताः । तदेतत् तवापि प्रसिद्धं इति द्योतनार्थो हि-

---

† वयः एव वायसः । रक्ष एव राक्षसः इत्यत्र यथा स्वार्थे तद्धितः तथा प्राचेतस इत्यत्रापि तद्धित इति भावः । प्राचेतस इति वाल्मीकेरपि नामास्तीति रामायणादिभ्यो ऽवगम्यते ।

---

१. B. C. D. and F. read कर्तृलम्भने for कर्तृकृतिलक्षणे; while E. G. and H. omit it altogether. २. Except A. all others omit यावत्. ३. For शंखस्य E. G. and H. read याज्ञवल्क्यस्य. ४. H. omits च. ५. A. and I. read स्मार्तधर्माः for स्मार्ता धर्माः. ६. All but A. omit नाम. ७. A. reads बुभुत्स्यन्ते for बुभुत्सिष्यन्ते. ८. B. C. E. F. G. H. M. read श्रौतार्थाः for श्रुत्यर्थाः; but the Tikakar prefers श्रुत्यर्थाः. ९. For मे M. substitutes ते. १०. K. reads कृते त्रेतादिके for कृत त्रेतादिके.

शब्दः । तत्र हेतुः भवत्प्रोक्ताः–इति । व्यासः पराशरादधीतवान्–इति पौराणिकाः । श्रुतानामपि विस्मृतिश्चेत् पुनरपि स्मारणमपेक्षेत–इत्याशंक्य न विस्मृताः–इत्युक्तम् । प्रायेणाग्निहोत्रादीनां कलौ दुर्लभत्वमभिप्रेत्य 'कृतत्रेतादिके'–इत्युक्तम् । आदिशब्देन द्वापरं गृह्यते । 'अस्मिन् *मन्वन्तरे' इति निर्देशः प्रदर्शनार्थः । ननु मन्वन्तराण्यतीतान्यनागतानि वा व्यवच्छिनत्ति । तद्व्यवच्छेदे प्रयोजनाभावात् । न हि नानाविधेषु मन्वन्तरेषु धर्मं भिद्यमानं क्वचिदुपलभामहे । अस्मिन्मन्वन्तरे कृतादिषु त्रिषु युगेषु प्रायेण सम्भावितानुष्ठानाः प्रत्यक्षश्रुत्यर्थाः ये धर्माः तेऽपि मानवादिस्मार्त्तधर्मवत् श्रुतत्वान्न बुभुत्सिताः ॥ १८ ॥

इदानीं परिशिष्टं बुभुत्सितं पृच्छति–

**सर्वे धर्माः कृते जाताः सर्वे नष्टाः कलौ युगे ॥ १६ ॥**
**चातुर्वर्ण्यसमाचारं किञ्चित् साधारणं वद ।**

इति । सर्वशब्दो देश-कालावस्थादिभेदेन धर्माणां बहुविधत्वमाचष्टे । एतच्च महाभारते आनुशासनिके पर्वणि उमामहेश्वरसंवादे प्रपञ्चितम्–

* अस्मिन्नित्यनेन प्रकृतं वैवस्वतमन्वन्तरमेव गृह्यते । किञ्चिदधिका दिव्यानां युगानामेकसप्ततिः मन्वन्तरमिति तु प्रसिद्धमेव ।

१. A. H. and I. read स्मरण- for स्मारण-. २. For धर्मं भिद्यमानं B. C. and F. read धर्माभिधानं ; and धर्माभिमानं is that of E. and G. ३. I. reads कृतादिकेषु for कृतादिषु. ४. H. and I. omit त्रिषु. ५. All but I. read स्मृतत्वात् for श्रुतत्वात्, but the latter appears to be more correct. ६. D. reads -विधतां for -विधत्वं. ७. A. reads अनुशासनिकपर्वणि for आनुशासनिके पर्वणि.

'धर्मा बहुविधा लोके श्रुतिभेदमुखोद्भवाः*।
†देशधर्माश्च दृश्यन्ते कुलधर्मास्तथैव च ॥
जातिधर्मा वयोधर्मा गुणधर्माश्च शोभने।
शरीर-कालधर्माश्च आपद्धर्मास्तथैव च ॥
एतद्धर्मस्य नानात्वं क्रियते लोकवासिभिः'।

इति। ते च सर्वे धर्माः प्राणिभिः कृतयुगे यथावदनुष्ठिता भवन्ति। युगसामर्थ्येन धर्मस्य चतुष्पदो ऽपि अपरिक्षयात्। त्रेतादिषु क्रमेण क्षीयमाणा धर्माः कलियुगावसाने सर्वात्मना विनष्टा भवन्ति। तदेतत् सर्वं पुराणसारे विस्तरेण प्रदाशतम्-

* श्रुतीनां यो भेदः अनेकत्वं तन्मुखेन उद्भवो येषाम्। धर्मस्य चोदनालक्षणत्वात् तासां चानेकत्वात् धर्माणामनेकत्वमिति भावः।

† धर्मस्य अनेकविधत्वे अन्यान्यपि कारणानि दर्शयति। देशेति। देश-कुलादीन्यपि धर्मस्य भेदे कारणानि। अत्र धर्मस्य बहुत्वद्योतनायैव देशधर्म-कुलधर्मादीनां ग्रहणम्। अन्यथा तेषामवैदिकत्वात् अननुष्ठाने प्रत्यवायाभावाच्च विवाहादिष्वेव ग्रहणं न सम्भवेत्।

---

१. D. E. and G. read चतुर्विधा for बहुविधाः. The former seems to be not correct as there are more four Dharmas mentioned in the following lines. २. For this line J. (नन्दपण्डित) देशभेदाश्च दृश्यन्ते कुलभेदास्तथैव च।. ३. All but A. read -साम्येन for-सामर्थ्येन. ४. B. C. and F. read चतुष्पदेष्वपरिक्षयात्; while D. E. G. and H. read चतुष्पदेऽप्यपरिक्षयात् for चतुष्पदोऽपि अपरिक्षयात्. ५. For पुराणसारे विस्तरेण प्रदर्शितम् B. C. and F. read पुराणसारेण दर्शितम्; while D. E. G. and H. read पुराणकारेण विस्तरेण वर्णितम्.

'कृते चतुष्पात्* सकलो व्याजोपाधिविवर्जितः[1]।
वृषः प्रतिष्ठितो धर्मो मनुष्येष्वभवत्[2] पुरा ॥
धर्मः पादविहीनस्तु त्रिभिरंशैः प्रतिष्ठितः ।
त्रेतायां, द्वापरेऽर्धेन व्यामिश्रो धर्म इष्यते[3] ॥
त्रिपादहीनस्तिष्ये तु सत्तामात्रेण तिष्ठते' ॥

इति । तिष्यः कलिः । तथाच[4] बृहस्पतिरपि—

'कृतेऽभूत् सकलो धर्मस्त्रेतायां त्रिपदः स्थितः ।
पादः प्रविष्टो[5] ऽधर्मस्य मत्सरद्वेषसंभवः ॥
धर्माधर्मौ समौ भूत्वा द्विपादौ द्वापरे स्थितौ ।
तिष्ये ऽधर्मस्त्रिभिः[6] पादैर्धर्मः पादेन संस्थितः' ॥

इति । तथा लैङ्गपुराणे कलौ धर्मनाशं प्रस्तुत्य तद्धेतुत्वेन पुरुषदोष उपन्यस्तः—

* वृषरूपस्य धर्मस्य—'तपः शौचं दया दानमिति पादाः प्रकीर्तिताः'। एवमधर्मस्यापि—'स्मय-सङ्ग-मदा अनृतं' चेति चत्वारः पादाः । त्रेतादिष्वनुक्रमेण अधर्मपादैः धर्मपादानां नाशो भवतीति भावः ।

१. All but A. J. (नंदपण्डित) read निर्व्याजोपाधिवर्जितः for व्याजोपाधिविवर्जितः. २. Except A. and I. all others read अवसत् for अभवत्. ३. For द्वापरेऽर्धेन व्यामिश्रो धर्म इष्यते B. C. E. and F. read द्वापरेर्धेस्वमाश्रितो धर्मरक्षणे; while D. and G. द्वापरेऽर्धे तु गमिते मामिथो धर्मरक्षणे; and H. reads द्वापरेऽर्धन्तु नष्टो वै वृषो धर्मोऽवतिष्ठति. These two readings for the whole line. ४. A. reads तथा बृहस्पतिनापि for तथाच बृहस्पतिरपि I. omits च. ५. पादप्रतिष्ठो ऽधर्मः स्यात् is the reading of D. for पादः प्रविष्टो ऽधर्मस्य. ६. A. reads ऽधर्मस्थितिः पादैः &c., for ऽधर्मस्त्रिभिः पादैः.

'*आद्ये कृते तु यो धर्मः[1] स त्रेतायां प्रवर्त्तते ।
द्वापरे व्याकुलीभूतः[2] प्रणश्यति कलौ युगे ॥
(लिं. पु. १. ३९. ७०. कू. पु. १. १. २८. ५७)
तिष्ये मायामसूयाञ्च वधञ्चैव तपस्विनाम् ।
साधयन्ति नरास्तत्र तमसा व्याकुलेन्द्रियाः' ॥
(लिं. पु. १. ४०.१; कू. पु. १. १. २९. १.)

इति । विष्णुपुराणे ऽपि[3]–

'†वर्णाश्रमाचारवती प्रवृत्तिर्न कलौ नृणाम् ।
न साम-यजु-ऋग्वर्ग[4]विनिष्पादनहेतुकी[5]' ॥
(वि. पु. ६. १. १०)

इति । आदित्यपुराणे ऽपि–

---

* आद्ये चतुर्षु युगेषु आदिभूते । नतु सृष्टिप्रवृत्तिकालीने ।

† वर्णा ब्राह्मणादयः आश्रमा ब्रह्मचर्यादयः तेषां ये आचाराः 'शमो दमः' इत्यादिना वक्ष्यमाणाः तद्विशिष्टा लोकानां प्रवृत्तिः यतो न भवति कलौ अतः ऋक्-सामादिवेदाध्ययन-तदुक्तकर्मानुष्ठानादिकमपि न भवतीति तात्पर्यम् ।

---

१. In Ling Purána and Kúrma Purána we find धर्मोऽस्ति for यो धर्मः. २. A. reads ऽप्याकुलीभूतः. In Ling Purána व्याकुलीभूत्वा and in Kúrma Purána व्याकुलीभूय. for व्याकुलीभूतः. ३. H. omits अपि. ४. For न साम-यजु-ऋग्वर्ग- B. C. and F. read नच सामर्ग्यजुर्वर्ग-; and H. reads न साम-ऋग्यजुर्वर्ग-. Weshnu Purána -ऋग्यजुर्वेद-. ५. A. and I. read -हेतुका : while B. and F. read -हैतुकी for

'*यस्तु कार्त्तयुगो[1] धर्मो न कर्त्तव्यः[2] कलौ युगे ।
पापप्रसक्तास्तु यतः कलौ नार्यो नरास्तथा' ॥

इति । अतः कलौ प्राणिनां प्रयाससाध्ये धर्मे प्रवृत्त्यसम्भवात् सुकरो धर्मोऽत्र बुभुत्सितः । स च द्विविधः । चतुर्णां वर्णानां साधारणोऽसाधारणश्च । तत्र साधारणो बृहस्पतिना निरूपितः—

'दया क्षमाऽनसूया च शौचानायासमङ्गलम् ।
अकार्पण्यास्पृहत्वे[3] च सर्वसाधारणा[4] इमे' ॥

इति । तथा विष्णुनाऽपि—

'क्षमा सत्यं दमः शौचं दानमिन्द्रियसंयमः ।
अहिंसा गुरुशुश्रूषा तीर्थानुसरणं[5] दया ॥
आत्मवत्त्वमलोभत्वं[6] देवतानां च पूजनम् ।
अनभ्यसूया च तथा धर्मः सामान्य उच्यते' ॥
(वि. स्मृ. २. १६–१७)

* युगान्तरधर्मः कलियुगे नानुष्ठातव्य इति दर्शयति यस्त्वित्यादिना । कार्तयुगः कृतयुगे भवः । तत्र हेतुमाह । पापप्रसक्ता इति ।

१. A. E. G. H. and I. read कार्तयुगे. for कार्तयुगो. २. D. E. and G. read नाहर्तव्यः for न कर्तव्यः. ३. All but A. read अकार्पण्यास्पृहत्वञ्च for अकार्पण्यास्पृहत्वे च. ४. B. C. and F. read सर्वसाधारणानि च for सर्वसाधारणा इमे; For the same D. सर्वसाधारणानि तु, and E. G. and H. सर्वसाधारणो विधिः. ५. D. reads तीर्थानुशरणं for तीर्थानुसरणं. ६. E. G. and H. read आत्मव्रतमलोभत्वम् for आत्मवत्त्वमलोभत्वम्. In the text of Vishnu Smriti we find the whole line as follows:—आर्जवं लोभशून्यत्वं देव-ब्राह्मणपूजनम् ।

*असाधारणो[1] ऽपि बृहस्पतिना स्मर्यते–

‘स्वाध्यायो ऽध्यापनं चापि[2] यजनं याजनं तथा[3] ।
दानं प्रतिग्रहश्चापि षट्कर्माण्यग्रजन्मनः ॥
इज्या ऽध्ययन-दाने[4] च प्रजानां परिपालनम् ।
शस्त्रास्त्रधारणं सेवा कर्माणि[5] क्षत्रियस्य तु ॥
स्वाध्यायो यजनं दानं[6] पशूनां पालनं तथा ।
कुसीद-कृषि-वाणिज्यं वैश्यकर्माणि सप्त वै[7] ॥
शौचं ब्राह्मणशुश्रूषा[8] सत्यमक्रोध[9] एव च ।
शूद्रकर्म तथा मन्त्रो नमस्कारो †ऽस्य[10] नोदितः’ ॥

इति । गीतास्वपि भगवानाह–

---

* नारदेन तु साधारणधर्मः– ‘त्रिंशल्लक्षणवान् राजन् सर्वात्मा येन तुष्यति’ इति त्रिंशल्लक्षणवानुक्तः । स तु श्रीमद्भागवते सप्तमस्कन्धे युधिष्ठिरनारदसंवादे द्रष्टव्यः ।

† शूद्रस्य वैदिकमन्त्रानधिकारित्वात् तेन ‘नमः’ इत्याकारकमन्त्रेणैव सर्वाणि कर्माणि कर्तव्यानीति तात्पर्यम् ।

---

१. A. and D. read असाधारणाः for असाधारणो substituting स्मर्यन्ते for स्मर्यते. २. D. and G. substitute वा- for चा-. ३. B. C. E. F. and H. read च तत्; and D. and G. च यत्, for तथा. ४. All but A. read -दानं च for -दाने च. ५. D. reads धर्माणि for कर्माणि; the form धर्माणि is common in the Vedic language but not in the ordinary one. ६. D. has सत्यं for दानं. ७. H. has च; and I. reads नु for वै. ८. H. reads गो-ब्राह्मणानां शुश्रूषा for शौचं ब्राह्मणशुश्रूषा. ९. D. reads सत्य-मन्त्रापरं वचः for सत्यमक्रोध एव च. १०. A. reads ऽप्यचोदितः; and I. ऽस्य चोदितः for ऽस्य नोदितः.

'ब्राह्मण-क्षत्रिय-विशां शूद्राणां च परन्तप ।
कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः ॥
शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च ।
ज्ञानं विज्ञानमास्तिक्यं ब्राह्मं[१] कर्म स्वभावजम् ॥
कृषि-गोरक्ष-वाणिज्यं वैश्यकर्म स्वभावजम् ।
शौर्यं तेजो धृतिर्दाक्ष्यं[२] युद्धे चाप्यपलायनम् ।
दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम् ।
परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम्' ॥

(भ. गी. १८. ४१–४४)

इति । एवं द्वैविध्ये सति साधारणो ऽस्मिन् श्लोके[३] पृच्छ्यते । 'किञ्चित्'–इति क्रियाविशेषणम् । तथा सति किमः[४] सङ्कोचवाचित्वात् संक्षेपेणेत्यर्थः सम्पद्यते[५] । युक्तञ्चैतत् । असाधारणधर्मप्रश्ने विस्तरात्[६] ॥ १६ ॥

अथ[७] असाधारणं धर्मं[८] पृच्छति–

---

१. D. and Bhagavad-gîtâ read ब्रह्मकर्म for ब्राह्मं कर्म. But the former is the more general expression. २. E. and G. read धृतिं रक्षां and H. धृतीरक्षा for धृतिर्दाक्ष्यं. ३. A. reads कलौ for श्लोके, and D. E. G. and H. read लोके for the same. ४. B. reads कथनसंकोचेन वदति संक्षेपेण C. and F. read कथनसंकोचनेन वादिवत् संक्षेपेण; and D. E. G. and H. कथनसंकोचवादित्वात् संक्षेपेण, for किमः संकोचवाचित्वात् संक्षेपेण. ५. B. C. D. and F. read सम्पद्येत for सम्पद्यते. ६. After विस्तरात् A. reads -इति वक्ष्यमाणत्वादिति; B. C. and F. विस्तरादिनियमापातात्, E. G. and H. विस्तरादिति नियमापातात् and D. विस्तरादिति च नियमापातात्. ७. D. omits अथ. ८. All but A. read असाधारणधर्मं for असाधारणं धर्मं.

चतुर्णामपि वर्णानां कर्त्तव्यं [१]धर्मकोविदैः ॥१७॥
ब्रूहि [२]धर्मस्वरूपज्ञ सूक्ष्मं स्थूलं [३]च विस्तरात् ॥

इति । धर्मस्वरूपे वादिविप्रतिपत्तेः तदीयविवेकस्य दुःशकत्वात् च तत्र प्रावीण्यं विवक्षित्वा धर्मस्वरूपज्ञ इति सम्बोध्यते । तार्किकास्तावत् आत्मगुणौ धर्माधर्मौ—इत्याहुः—

'विहितक्रियया* साध्यो [४]धर्मः पुंसो गुणो मतः ।
प्रतिषिद्धक्रियासाध्यः [५]पुंगुणो ऽधर्म उच्यते ' ॥

इति । मीमांसकास्तु ' चोदनालक्षणो ऽर्थो धर्मः' (पू. मी. १. १. २.) इत्यसूत्रयन् । तत्र [६]भाट्टा मन्यन्ते—

'द्रव्य-क्रिया-गुणादीनां [७]धर्मत्वं स्थापयिष्यते ।
तेषामैन्द्रियकत्वे† ऽपि न [८]ताद्रूप्येण धर्मता ॥
श्रेयःसाधनता ह्येषां नित्यं वेदात् प्रतीयते ।
ताद्रूप्येण च धर्मत्वं तस्मान्नेन्द्रियगोचरः ' ॥
(तं. वा. १. १. २. १३–१४.)

---

* विहिता वेदेन विहिता या क्रिया तया साध्यः अर्थात् वेदोक्तकर्मणा प्राप्यः ।

† द्रव्यादीनां लक्षणानि न्याय-वैशेषिकभाष्यादौ द्रष्टव्यानि । चोदनया प्रवृत्तानां कर्मणां श्रेयःसाधनत्वं 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुखं भवति ' इत्यादिवेदवाक्येभ्यः प्रतीयते ।

---

१. D. reads कर्मकोविदैः for धर्मकोविदैः. २. D. reads धर्मस्वरूपञ्च सूक्ष्ममूलञ्च for धर्मस्वरूपज्ञ सूक्ष्मं स्थूलञ्च. ३. D. omits च. ४. In A. धर्मः and पुंसः interchange their places. ५. B. C. and F. read सगुणो for षड्गुणो. ६. B. reads भट्टा for भाट्टा. ७. D. A. and MSS. of Tantra Vartica read धर्मः स्थापक इष्यते for धर्मत्वं स्थापयिष्यते. ८. B. C. D. and F. read तद्रूपेण for ताद्रूप्येण.

इति । प्राभाकरास्तु कार्यनियोगापूर्वशब्दैरुच्यमानं धात्वर्थसाध्यं स्वर्गादिफलसाधनमात्मगुणं धर्ममाहुः । दुर्विवेच्यत्वं च महाभारते धृष्टद्युम्नेनोक्तम्–

'अधर्मो धर्म इति च व्यवसायो न शक्यते ।
कर्त्तुमस्माद्विधैर्ब्रह्मन् अतो न व्यवसाम्यहम् ' ॥
(म. भा. आ. १९६. ११. १२)

इति । ईदृशस्यापि धर्मस्य स्वरूपमव्याकुलो जानातीत्यास्ति तत्र प्रावीण्यम् । धर्मस्वरूपं च विश्वामित्र आह–

*'यमार्याः क्रियमाणं तु शंसन्त्यागमवेदिनः ।
स धर्मो यं विगर्हन्ते तमधर्मं प्रचक्षते ॥
ईदृशस्य हि धर्मस्य स्वरूपं व्याकुलो न तु ।
जानातीत्यस्ति तत्रापि प्रावीण्यं धर्मशालिनाम्' ॥

इति । मनुरपि–

---

* आर्याः पूज्या विद्वांसः यं धर्ममिति शंसन्ति स धर्मः । यं निन्दन्ते स अधर्मः एतेन वेदप्रोक्तोऽपि आर्याऽनादृतो धर्मो न भवतीति स्पष्टं भवति ।

---

१. B. C. and F. read -शब्देन for -शब्दैः. २. All but A. and I. read दुर्विवेचकत्वं for दुर्विवेच्यत्वम्. ३. A. B. C. D. E. F. and I. substitute ततो for अतो. In the Mahâbhârat text in the first line we find वा for च; and in the second line ततोऽयं न व्यवस्यते. ४. For विगर्हन्ते D. reads गर्हंते.

'विद्वद्भिः सेवितः सद्भिर्नित्यमद्वेषरागिभिः ।
हृदयेनाभ्यनुज्ञातो यो धर्मस्तं* निबोधत' ॥
(म. स्मृ. २. १.)

इति । नन्वेवं[1] धर्मस्वरूपमनिरूपितमेव[2] स्यात् । तथाहि[3] विश्वामित्र-मनुवाक्याभ्यां तावत् सामान्याकारः प्रतीयते । न तु द्रव्य-गुणादि[4]रूपो विशेषाकारः । वादिनस्त्वत्र विप्रतिपन्नाः— इति भवतैवोक्तम् । एतदेवा[5]भिप्रेत्य महाभारते राजधर्मे[6] स्मर्यते—

'न कल्माषो न कपिलो न कृष्णो न च[7] लोहितः ।
अणीयान् क्षुरधारायाः को धर्मं वक्तुमर्हति' ॥

इति । नैष दोषः[8] । उक्तवाक्ययोरधर्मव्यावृत्तस्याकारविशेषस्य स्फुटं प्रतीयमानत्वात् । वादिविप्रतिपत्तेश्च समाधातुं शक्यत्वात्[9] । स्वर्गादिसाधनस्य शास्त्रैकसमधिगम्यस्याति[10]शयस्य धर्मत्वेन सर्वसम्प्रतिपत्तेः । स चातिशयो द्विविधः । द्रव्यादिनिष्ठः आत्मनिष्ठश्च । तत्रात्मनिष्ठस्यातिशयस्य साक्षात्

* राग-द्वेषरहितैः विद्वद्भिः वेदविद्भिः । सद्भिः धार्मिकैः । हृदयेन आभिमुख्येन श्रेयःसाधनत्वेन अभ्यनुज्ञातः एवंविधो यो धर्मः तं निबोधत इति योजना । एतेन— 'वेदप्रमाणकः श्रेयःसाधनं धर्मः' इति धर्मलक्षणं मनुराहेत्यवगन्तव्यम् । हारीतोऽप्येवमेवाह—'श्रुतिप्रमाणको धर्मः' इति । एवं सति मीमांसकाभिमतस्य मन्वादिस्मृतिकाराभिमतस्य च धर्मलक्षणस्य न कश्चिद्भेद इति स्पष्टम् ।

१. D. reads तदेवं धर्मस्वरूपं निरूपितमेव for नन्वेवं धर्मस्वरूपमनिरूपितमेव. २. A. reads धर्मस्त्वनिरूपित- for धर्मस्वरूपमनिरूपित-. ३. A. omits हि. ४. D. omits गुणादि-. ५ D. reads तदेव- for एतदेव-. ६. The same राजधर्मेषु for राजधर्मे. ७. A. has तु for च. ८. B. C. and F. read नैवोक्तदोषः for नैष दोषः. ९. All MSS. concur in reading शक्यते for शक्यत्वात्. १०. D. reads -समधिगम्यस्यापि विषयस्य धर्मत्वेन for -समधिगम्यस्यातिशयस्य धर्मत्वेन.

फलसाधनत्वात् फलनिष्पत्तिपर्यन्तं चिरकालमुपस्थानाच्च[1] तद्विवक्षया आत्मगुणोऽपूर्वशब्दवाच्यो धर्मः—इति तार्किक-प्राभाकरावाहतुः[2]। उक्तस्यापूर्वस्य[3] फलोत्पत्तिदशात्वमभिप्रेत्य[4] तत्साधनभूतो द्रव्याद्यतिशयो[5] धर्मः—इत्याहुर्भाट्टाः। ब्रह्मवादिनामप्येतदविरुद्धम्। 'व्यवहारे भट्टनयः'* इत्यभ्युपगमात्। एवं धर्मस्वरूपे निरूपिते सति[6] अव्याकुलत्वेन तदभिज्ञत्वं सम्भवति[7]।

चतुर्णां वर्णानां मध्ये धर्मकोविदैरसाधारणधर्माभिज्ञैः[8] कर्त्तव्यं विस्तरात् ब्रूहि। स च कर्त्तव्यो धर्मो द्विविधः। स्थूलः सूक्ष्मश्च। मन्दमतिभिरपि सुखेन बुध्यमानः शौचाचमन-सन्ध्यावन्दनादिः स्थूलो[9] धर्मः। शास्त्रपारङ्गतैः[10] पण्डितैरेव बोद्धुं योग्यः इतरेषामधर्मत्वभ्रान्तिविषयो द्रौपदीविवाहादिः सूक्ष्मो धर्मः। तथा च महाभारते[11]—द्रुपदः एकस्याः

---

* वेदान्तिनस्तु 'सर्वं खल्विदं ब्रह्म' इत्यादिवाक्येभ्यः आत्मज्ञानमेव परमं धर्मं वदन्ति। तथापि व्यवहारदशायां तस्यानुपयोगात् आत्मज्ञानसमकालमेव व्यवहारस्य लोपाभावाच्च 'व्यवहारे भट्टनयः' इति मीमांसकोक्तन्याय एव आदर्तव्य इत्याहुः।

---

१. B. C. and F. read -मवस्थानात् for -मुपस्थानात्. २. D. reads प्रभाकरा- for प्राभाकरा-. ३. B. C. and F. prefix भाट्टास्तु to उक्तस्य; and omit the भाट्टा at the end of the sentence. ४. D. reads -दृश्यत्व- for -दशात्व.- ५. Except A. and I. all others read द्रव्यातिशयो for द्रव्याद्यतिशयो. ६. All but A. read तस्य instead of सति. ७. A. reads भवति for संभवति. ८. B. reads साधारणधर्मातिरिक्तं; while all others except A. and I. -रसाधारणधर्मातिरिक्तं for -रसाधारणधर्माभिज्ञैः. ९. Except B. C. and F. all others read स्थूलधर्मः for स्थूलो धर्मः. १०. G. reads शास्त्रधर्मपारङ्गतैः for शास्त्रपारङ्गतैः. ११. All but H. omit महा-.

कन्यायाः[1] बहुपतित्वं लोक-वेदविरुद्धं मन्वानः अधिचिक्षेप[2]। तत्र लोकविरोधः स्फुट एव[3]। तिर्यक्ष्वपि एकस्यां[4] गावि वृषभ-द्वययुद्धदर्शनात्। वेदे ऽप्येवं[5] श्रूयते। 'एकस्य बह्वो जाया भवन्ति नैकस्यै[6] बहवः सह[7] पतयः' (तै. सं. ६. ६. ४) इति। 'यदेकास्मिन् यूपे द्वे रशने परिव्ययति तस्मादेको द्वे जाये विन्दते। यन्नैकां रशनां द्वयोर्यूपयोः परिव्ययति[8] तस्मान्नैका द्वौ पती विन्दते'– इति च[9]।

तत्र—

* 'लोक-वेदविरुद्धो ऽयं धर्मो धर्मभृतां[10] वर' ।
(म. भा. आ. १९९. २८.)

---

* लोकविरुद्धः लोकाचारविरुद्धः। वेदविरुद्धः 'एकस्य बह्वो' इत्यादिवेदवाक्यविरुद्धः। 'नैकस्यै बहवः सह पतयः' इत्यस्यां श्रुतौ 'सह' इत्यनेन युगपद्बहुपतित्वनिषेधो विहितः न तु समयभेदेन। अतो नैकस्मिन् समये पञ्च पतयो भवितुमर्हन्ति इति भावः। अत्र 'कर्तुमर्हसि कौन्तेय कस्मात्ते बुद्धिरीदृशी' इत्युत्तरार्द्धमनुसन्धेयम्।

---

१. A. and I. योषितः for कन्यायाः. २. A. reads आचचक्षे; and all the remaining MSS. except H. and I. read आचिक्षेप for अधिचिक्षेप. ३. All but A. add इति to एव. ४. All except A. read यथैकस्यां for तिर्यक्ष्वपि एकस्यां. ५. H. reads वेदे चैवं for वेदेऽप्येवं. ६. A. B. C. F. and I. read नैकस्या for नैकस्यै. ७. B. C. D. F. H. and I. omit सह; while A. and I. read स्युः for it. ८. H. reads उपव्ययति for परिव्ययति. ९. A. omits च. १०. A. reads धर्मवतां for धर्मभृतां; in all MSS. and printed copies both these lines are said to be the saying of युधिष्ठिर, but in the original Mahábhárut we find that the first line is addressed to युधिष्ठिर by द्रुपद; and reads as follows:—लोक-वेदविरुद्धं त्वं नाधर्मं धर्मविच्छुचिः। कर्तुमर्हसि कौन्तेय, &c. The second line is addressed to द्रुपद by युधिष्ठिर and reads as विद्मो वयं गतिम्. This change of lines is evidently a mistake.

इति वदतः द्रुपदस्य भ्रान्तिनिवृत्तये युधिष्ठिर आह—

'सूक्ष्मो* धर्मो महाराज नास्य वि[1]द्मो गतिं वयम्' ॥

(म. भा. आ. १९६. २९.)

इति । धर्मत्वं च बहुपालितस्य तत्रैव बहुधा प्रपंचितम् । एवं धर्मव्याधोपाख्याने—विद्याऽभ्यासात् गरीयसी मातापितृशुश्रूषा । विनाऽप्यभ्यासं तच्छुश्रूषयैव तस्य ज्ञानोत्पत्तेः—इति प्रतिपाद्य सूक्ष्मत्वं धर्मस्य निगमितम्—

'बहुधा दृश्यते धर्मः सूक्ष्म एव द्विजोत्तम' ॥

(म. भा. व. २०६. ४२ )

इति । इत्थं स्थूल-सूक्ष्मयोः सद्भावात् युक्तस्तदुभयविषयः प्रश्नः ॥ १७ ॥

उक्त[2]प्रश्नस्य वक्ष्यमाणोत्तरस्य च[3] असाङ्कर्यायोत्तरमवतारयति—

**व्यासवाक्यावसाने तु मुनिमुख्यः पराशरः ॥ १८ ॥**
**धर्मस्य निर्णयं प्राह सूक्ष्मं स्थूलं च विस्तरात् ।**

इति । मुनिमुख्य इ[4]ति विशेषणेन सूक्ष्मनिर्णयकौशलं दर्शितम् । ननु—कस्यायं श्लोकः ? । न तावत् व्यासस्य ।

---

* अत्र 'पूर्वेषामानुपूर्व्येण यातं वर्त्मानुयामहे' इत्युत्तरार्धमनुसन्धेयम् । पूर्वेषां प्रचेतःप्रभृतीनाम् । तथा च प्रचेतसो नाम दश भ्रातरः एकस्मिन्नेव समये वार्क्षीं नामैकां कन्यामुपयेमिरे इति श्रीमद्भागवते चतुर्थस्कन्धे दृश्यते ।

---

१. H. J. (नंदपण्डित) reads विद्मो for विद्म. २. D. reads प्रश्न उक्तः । प्रश्नस्य वक्ष्यमाणो-; and H. also has the same but only omits प्रश्नस्य. ३. D. substitutes वा for च. ४. A. omits इति.

प्रश्नरूपत्वाभावात्[1] । नापि पराशरस्य । उत्तररूपतायाः[2] अभावात् । ननु—अत्यल्पमिदमुच्यते । आद्यश्लोके ऽपि च[3] समानमिदं चोद्यम् । एवं तर्हि ईदृशेषु सर्वेषु परिहारो ऽन्वेष्टव्यः । उच्यते । पराशर एव भाविशिष्यबुद्धिसमाधानाय[4] स्वकीयवृत्तान्तज्ञापकान् ईदृशश्लोकान् निर्ममे—इति द्रष्टव्यम् । भारतादौ व्यासवृत्तान्तश्लोकानां व्यासेनैव निर्मितत्वे[5] सर्वसम्प्रतिपत्तेः ॥ १८ ॥

वक्ष्यमाणधर्मरहस्यग्रहणाय अप्रमत्तत्वं विधत्ते—

शृणु पुत्र प्रवक्ष्यामि शृण्वन्तु मुनयस्तथा ॥ १९ ॥

इति । तत्र मुनिसम्बोधनेनैव पुत्रस्य सम्बोधने सिद्धे ऽपि सम्प्रदायप्रवर्त्तकत्वेन विशेषतस्तत्सम्बोधनम् ॥ १९ ॥

धर्मे श्रद्धातिशयाय धर्मस्य प्रवाहरूपेण अनादितां वक्तुं स्मृतिशास्त्रस्य[6] स्मर्तॄणां[7] च सृष्टि-संहारौ संक्षिप्याह—

कल्पे कल्पे क्षयोत्पत्त्या[8] ब्रह्म-विष्णु-महेश्वराः ।
श्रुति-स्मृति-सदाचार[9]निर्णेतारश्च सर्वदा ॥ २० ॥

इति । कल्प्यते जगदस्मिन् काले इति सृष्ट्यादिमारभ्य प्रलयोपक्रमपर्यन्तो जगदवच्छिन्नः कालः कल्पः । स च

१. B. C. and F. read प्रश्नरूपत्वस्याभावात्; and D. E. and G. प्रश्नरूपस्या ऽभावात् for प्रश्नरूपत्वाभावात्. २. All but A. read उत्तररूपत्वा ऽभावात् for उत्तररूपतायाः अभावात्. ३. A. D. and I. omit च. ४. D. reads -शिष्यबुद्धि समाधाय for -शिष्यबुद्धिसमाधानाय. ५. A. reads निर्मितत्वेन for निर्मितत्वे. ६. C. and F. read शास्त्रस्मर्तॄणां for शास्त्रस्य स्मर्तॄणां ७. A. and I. reads कर्तॄणां for स्मर्तॄणां. ८. Except A. J. and K. all others read क्षयोत्पत्तौ for -क्षयोत्पत्त्या; but B. has in its margin -त्त्यां for -त्तौ. ९. A. reads -समाचार for -सदाचार-.

द्विविधः । महाकल्पो ऽवान्तरकल्पश्च । मूल[1]प्रकृतेर्यः सर्गः तमारभ्य चतुर्मुखा[2]युःपरिमितो महाकल्पः । चतुर्मुखस्य दिन-मात्रमवान्तरकल्पः । तदुक्तं कूर्मपुराणे—

'ब्राह्ममेकमहः कल्पस्तावती रात्रिरुच्यते ।
चतुर्युगसहस्रं तत् कल्पमाहुर्मनीषिणः' ॥

इति । सो ऽ[3]यमवान्त[4]रः कल्पः । महाकल्पस्तु ब्राह्मेण मानेन शतसंवत्सरपरिमितः इति पुराणादिषु प्रसि[5]द्धम् । 'कल्पे कल्पे' -इति वीप्स[6]या द्विविधानामपि कल्पानामसंख्यत्वं विवक्षितम् । तथा च लिङ्गपुराणे[7]—

'एवं कल्पास्त्वसंख्या[8]ता ब्रह्मणो ऽव्यक्तजन्मनः ।
कोटिकोटिसहस्राणि कल्पानां मुनिसत्तमाः' ॥
(लिं. पु. १. ४. ४९.)

इति । तत्र द्वयोर्द्वयोः कल्प[9]योर्मध्ये क्षयो भवति । स च क्षयश्चतुर्विधः । नित्यो नैमित्तिकः प्राकृतिक आत्यन्तिकश्चेति । तदुक्तं कूर्मपुराणे—

'नित्यो नैमित्तिकश्चैव प्राकृतात्यन्तिकौ तथा ।
चतुर्धा ऽयं पुरा[10]णेषु प्रोच्यते प्रतिसञ्चरः* ॥

* प्रतिसञ्चरः प्रलयः । ब्रह्मणो दिवसानुरूपं निमित्तमनुरुध्य प्रवृत्तः नैमित्तिकः । महदादीनां प्रकृत्युद्भूतत्वात् तेषां यत्र लयो भवति स प्राकृतो लय इत्यभिधीयते । आत्मतत्त्वज्ञानेन जगन्मिथ्यात्वनिश्चये सर्व-

१. H. adds अत्र before मूल- and D. reads आमूल instead of मूल-. २. D. reads चतुर्मुखयुगपरिमितो for चतुर्मुखायुःपरिमितो. ३. A. omits अयं. ४. D. reads -मवतारकल्पः for. -मवान्तरः कल्पः. ५. H. reads प्रसिद्धः for प्रसिद्धम्. ६. D. reads वीप्सायां for वीप्सया. ७. Except H. all others read लिंगपुराणम् for लिंगपुराणे. ८. In Ling Purana we find कल्पास्तु संख्याता. ९. B. C. F. and H. omit कल्पयोः; while C. and F. omit also the second द्वयोः. १०. In Kúrma Purana we find पुराणेऽस्मिन्.

योऽयं सन्दृश्यते नित्यं लोके भूतक्षयस्त्विह ।
नित्यः संकीर्त्यते नाम्ना मुनिभिः प्रतिसञ्चरः ॥
ब्राह्मो नैमित्तिको नाम कल्पान्ते यो भविष्यति ।
महदादिविशेषान्तं यदा संयाति संक्षयम् ॥
प्राकृतः प्रतिसर्गोऽयं प्रोच्यते कालचिन्तकैः ।
ज्ञानादात्यन्तिकः प्रोक्तो योगिनः परमात्मनि ' ॥
(कू. पु. १. २. ४३. ८-९)

इति । तत्र प्राकृतः प्रलयः स्कन्दपुराणे सूतसंहितायामेवं निरूपितः—

'त्रिशतैः षष्टिभिः कल्पैर्ब्रह्मणो वर्षमीरितम् ।
वर्षाणां यत् शतं तस्य तत्परार्धमिहोच्यते ॥
ब्रह्मणोऽन्ते मुनिश्रेष्ठाः मायायां लीयते जगत् ।
तथा विष्णुश्च रुद्रश्च प्रकृतौ विलयं गतौ ॥
ब्रह्मणश्च तथा विष्णोस्तथा रुद्रस्य सुव्रताः ।
मूर्त्तयो विविधास्तेषु कारणेषु लयं ययुः ॥
माया च प्रलये काले परस्मिन् परमेश्वरे ।
सत्य-बोध-सुखाऽनन्त-ब्रह्म-रुद्रादिसंज्ञिते' ॥
(सू. सं. १. ८. १४.-१८.)

---

स्यापि जगतः शुक्तिस्वरूपज्ञानसमकालमेव यथा तत्रारोपितस्य रजतस्य नाशः तद्वत् नाशो भवति स एव आत्यन्तिकः प्रलयः। अधिष्ठानज्ञानोत्तरं भ्रमस्यात्यान्तिकनाशात् अस्यात्यान्तिकप्रलयसंज्ञा ।

---

१. In the text of K. P. we find त्रैलोक्यस्यास्य कथितः प्रतिसर्गो मनीषिभिः after this line. २. In Kúrma Purana we find महदाद्यं. ३. A. reads तत्पराख्यमिहोच्यते ; and H. reads तन्महायुरिहोच्यते- for तत्परार्धमिहोच्यते; and in the text of Súta Sanhita we find द्वि- for the same. ४. J. (नन्दपण्डित) reads मुनिश्रेष्ठ for मुनिश्रेष्ठाः. ५. A. and I. read सुखानन्ते ब्रह्म- for सुखानन्त -ब्रह्म-. ६. E. G. and H. read -संहिते for -संज्ञिते.

इति । तथा च[१] कौर्मे ब्रह्म-विष्ण्वादिलयानन्तरं पञ्चभूतादिलयः पठ्यते–

'*संस्थितेष्वथ[२] देवेषु ब्रह्म-विष्णु-पिनाकिषु ।
गुणैरशेषैः पृथिवी विलयं याति वारिषु[३] ॥
तद्वारितत्त्वं[४] सगुणं ग्रसते हव्यवाहनः ।
तेजस्तु[५] गुणसंयुक्तं वायौ संयाति संक्षयम् ॥
आकाशे सगुणो वायुः प्रलयं याति विश्वभृत् ।
भूतादौ च तथाऽऽकाशो[६] लीयते गुणसंयुतः ॥
इन्द्रियाणि तु सर्वाणि तैजसे यान्ति संक्षयम् ।
वैकारिके देवगणाः प्रलयं यान्ति सत्तमाः ।
वैकारिकस्तैजसश्च भूतादिश्चेति सत्तमाः ॥
त्रिविधोऽयमहङ्कारो महति प्रलयं व्रजेत् ।
महान्तमेभिः सहितं प्रकृतिर्ग्रसते[७] द्विजाः ॥'

(कू. पु. १. २. ४४. १४–१९)

इति । एवं विष्णुपुराणादिषु प्राकृतप्रलयो[८] द्रष्टव्यः । एवमेव प्रलयमभिप्रेत्य भगवान् बादरायणः सूत्रयामास–' वि-

---

* संस्थितेषु स्वस्वकारणे लीनेषु । ब्रह्म-विष्णु-शिवाः रजः-सत्त्व-तमोपाधयः । ते स्वस्वगुण एव लीयन्ते । यदा भगवान् सिसृक्षुर्भवति तदा रजोगुणमाविश्य ब्रह्मरूपेण जगत्सृजति । एवं स्थित्यर्थं प्रलयार्थं च सत्त्वतमसी आविश्य विष्णु-शिवरूपेण जगत् पालयति नाशयति च । एवमेव प्रलये निर्गुणस्वरूपेणावतिष्ठन् गुणान् विसृजति तदा तदुपाधयः ब्रह्मादयः विलीयन्ते इति पौराणिकानामाशयः ।

---

१. A. C. E. F. G. and H. omit च; D. reads कूर्मपुराणे for कौर्मे. and omits च. २. B. C. E. F. G. and H. read -ष्वेव for -ष्वथ; while D. -ष्वपि for the same. ३. D. reads वारिणि for वारिषु. ४. All except A. and I. read स वाततत्त्वं, for तद्वारितत्त्वं; and in Kúrma Purana we find स वारितत्त्वं. ५. In Kúrma Purana we find स्वगुणसंयुक्तं. ६. In Kúrma Purana this word is treated as neuter gender. ७. All except A. and I. read -र्ग्रसते for -र्ग्रसते. ८. Except H. and I. all others read -लयो for -प्रलयो.

पर्ययेण तु क्रमोऽत उपपद्यते च' (शा. सू. २. ३. १४) इति। अतोऽस्मात् सृष्टिक्रमात् विपर्ययेण प्रलयक्रमोऽभ्युपगन्तव्यः। सृष्टिक्रमस्य तत्रत्येषु पूर्वसूत्रेषु विचारितत्वात् 'अतः' शब्देन परामर्शः। उपपद्यते ह्ययं विपरीतक्रमः। उपादानकारणभूतायां मृद्यवस्थितायां कार्यस्य घटस्य विलीयमानत्वात्। यदि सृष्टिक्रम एव प्रलयेऽभ्याद्रियेत तर्ह्यवस्थिते घटे मृद्विनाशः प्राप्नुयात्। न[1] त्वेवं क्वचित् दृष्टम्। तस्मादुपपन्नो विपरीतक्रमः। तथा सति-सृष्टौ परमात्माद्येतद्देहान्तस्य[2] क्रमस्य वक्ष्यमाणत्वात् प्रलये तद्विपर्ययेण[3] अस्मद्देहादिपरमात्मान्तः[4] क्रमो युक्तः। प्राकृतप्रलये प्रकृत्यन्तः क्रमो वक्तव्यः—इति चेत्। बाढम्। उच्यत एवासौ। परमात्मनः प्रकृतित्वात्। तथा च बह्वृचोपनिषदि परमात्मनो जगत्प्रकृतित्वं श्रूयते—'आत्मा* वा इदमेक एवाग्र आसीन्नान्यत् किञ्चन मिषत्। स ईक्षत लोकान्नु सृजा इति। स इमान् लोकानसृजत' (ऐ. उ. १. १.) इति।

* आप्नोतेः अत्तेः अततेः वा आत्मा परः सर्वज्ञः सर्वशक्तिः सर्वसंसारधर्मवर्जितः नित्य-शुद्ध-बुद्ध-मुक्तस्वभावः अजः अजरः अमरः अमृतः अभयः अद्वयो 'वा'। 'इदं' नाम-रूप-कर्मभेदाभिन्नं जगत्। 'अग्रे' सृष्टेः प्राक्। 'एक एव आसीत्'। 'नान्यत्किञ्चन' किञ्चिदपि 'मिषत्' निमिषत् व्यापारवत् इतरद्वा। मायायाः सत्त्वेऽपि तदानीं तस्या व्यापाराभावात् व्यापारवतोऽन्यस्य निषेधः। 'स ईक्षत' इत्यादि सुगममन्यत्।

१. Except A. and I. all others read न चैवं for न त्वेवं. २. B. C. F. and G. read परमात्मादेरेतद्देहान्तस्य, and E. H. and I. परमात्मादेरस्मद्देहान्तस्य. ३. H. adds तु after प्रलये; while omitting तत्-. ४. B. C. and F. read अस्माद्देहादिपरमात्मा- for अस्मद्देहादिपरमात्मा-.

ननु—श्वेताश्वतरोपनिषदि मायायाः प्रकृतित्वं परमात्मनस्तन्नियन्तृत्वं श्रूयते—

'मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरम्' ।

(श्वे. उ. ४. १०.)

इति । नायं दोषः । मायायाः परमात्मशक्तित्वेन शक्तिमतो ऽप्यात्मनः प्रकृतित्वावश्यम्भावात् । दहनशक्तियुक्ते ऽग्नौ दाहकत्व[1]व्यवहारदर्शनात् । आत्मशक्तित्वं च मायायास्तस्यामेवोपनिषदि श्रुतम्—

'ते ध्यानयोगानुगता अपश्यन्
देवात्मशक्तिं स्वगुणैर्निगूढाम्' ।

(श्वे. उ. १. ३.)

इति । बादरायणश्च प्रथमाध्यायोपान्त्याधिकरणे मायाविशिष्टस्य ब्रह्मणः प्रकृतित्वं निमित्तत्वं च—इत्युभयविधकारणत्वमुपपादयामास*। कुलालवत् चेतनत्वात्[2] निमित्तत्वम्। घटे मृद इव स्वकार्ये[3] तस्यानुगमात् प्रकृतित्वम्। अनुगम्यते हि जगति मायाविशिष्टं ब्रह्म । तत्र सच्चिदानन्दत्वं ब्रह्मणो लक्षणम् । विकारित्वन्तु मायायाः । तदुभयमपि हि[4] जगत्यवेक्षामहे। 'घटोऽस्ति'—इति सद्रूपत्वम्। 'घटो भाति'[5]—इति चिद्रू-

---

* द्रष्टव्यमिदं 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्' (१. ४. २३.) इत्यादिषु सूत्रेषु शारीरभाष्ये ।

---

१. D. reads दाहकत्वेन for दाहकत्व-; while B. C. and F. दाहकत्वे for the same. २. Except A. E. G. and I. all others read चेतनत्वं for चेतनत्वात्. ३. A. and I. read कार्ये for स्वकार्ये. ४. All but A. and I. omit हि. ५. H. reads नास्ति for भाति.

पत्वम्। 'घटः प्रियः'—इत्यानन्दरूपत्वम्[१]। 'घट उत्पद्यते विनश्यति च'—इति विकारित्वम्। अयमेवार्थः उत्तरतापनीये श्रूयते—'सच्चिदानन्दरूपमिदं सर्वं सद्धीदं[२] सर्वं सत् सदिति। चिद्धीदं सर्वं काशते काशते[३] च इत्यादि'। (नृसिं. उ. ता. ७.) तदेवमौपनिषदे मते ब्रह्मणो मूलप्रकृतित्वात् स्मृति-पुराणयोश्च श्रुत्यनुसारित्वात्[४] ब्रह्मावशेषो जगद्विलयो[५]ऽत्र विवक्षित इति अवगन्तव्यम्। वैशेषिकादिमतसिद्धस्तु[६] लयो[७]ऽस्माभिर्नात्र[८] प्रपञ्च्यते। तस्य पुरुषबुद्धिरूपतर्कमूलत्वेन बुद्धिमद्भिः स्वयमेवोहितुं शक्यत्वात्।

सम्प्रति[९] श्रुत्यनुसारिणोत्पत्तिरभिधीयते*। सन्ति हि सृष्टिप्रतिपादिकाः बह्व्यः श्रुतयः। तत्र 'आत्मा वा इदमेक एवाग्र आसीत्'† (ऐ. उ. १.१) इत्यादि बह्वृचोपनिषद्वाक्यं पूर्वमुदाहृतम्। 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै. उ. २. १. ३) इत्युपक्रम्य 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः'‡

* 'जगत' इति शेषो ऽत्रानुसन्धेयः।

† व्याख्यातेयं श्रुतिः पूर्वम्।

‡ 'तस्मात्' इत्यनेन मूलवाक्यसूत्रितं ब्रह्म परामृश्यते। 'एतस्मात्' इत्यनेन अनन्तरं 'सत्यं ज्ञानम्' इति यथा लक्षितं ब्रह्म ग्राह्यम्। तस्मादेतस्मात् ब्रह्मणः आत्मशब्दवाच्यात् आकाशः सम्भूतः समुत्पन्नः। आकाशो नाम शब्दगुणो ऽवकाशकरो मूर्तद्रव्याणाम्।

---

१. A. reads इत्याद्यानन्दरूपत्वम् for इत्यानन्दरूपत्वम्. २. A. and I. omit सद्धीदं सर्वं and read सत् सदिति चितीत्थं सर्वं for सत् सदिति चिद्धीदं सर्वं. ३. B. C. D. F. and G. have only one काशते; and A. and I. प्रकाशते only. ४. A. स्मृत्यनुसारित्वात् for श्रुत्यनुसारित्वात्. ५. A. reads ब्रह्माद्यशेषजगाद्विलयो for ब्रह्मावशेषो जगद्विलयो. ६. All but A. and G. read -प्रसिद्धस्तु. ७. A. प्रलयो for लयो. ८. All except A. and D. read नो ऽस्माभिः प्रपञ्च्यते omitting अत्र in the middle. ९. C. and F. omit संप्रति; while A. and I. substitute अथ for it.

(तै. उ. २. १. ७) इत्यादिकं तैत्तिरीय[1]वाक्यम् । 'सदेव सोम्येदमग्र आसीत्' (छां. उ. ६. २. १) इत्युपक्रम्य 'तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत' (छां. उ. ६. २. ३) इति छन्दोगवाक्यम् ।

'यथा सुदीप्तात्पावकाद्विस्फुलिङ्गाः
सहस्रशः प्रभवन्ते सरूपाः ।
तथाऽक्षराद्विविधाः[2] सोम्य भावाः
प्रजायन्ते तत्र चैवापि यन्ति' ॥

(मुं. उ. २. १. १)

इत्यथर्ववाक्यम् । 'तद्धेदं तर्ह्यव्याकृतमासीत् । तन्नामरूपाभ्यामेव *व्याक्रियत' (बृ. उ. १. ४. ७) इति वाजसनेयवाक्यम् ।

ननु—नैतेषु वाक्येषु सृष्टिर्व्यवस्थापयितुं शक्यते । विप्रतिपत्तेर्बहुलत्वात् । आत्म-ब्रह्म-सद्-क्षरा-ऽव्याकृतशब्दैर्वा[3]च्यानि वस्तूनि कारणतया श्रूयन्ते । न च एकस्य जगतो विलक्षणानि बहून्युपादानानि युक्ता[4]नि । नैष दोषः । आत्मादिशब्दैरेकस्यैव

* व्याकृतस्य जगतः व्याकरणात् प्राक् या बीजावस्था तां निर्दिदिक्षुः श्रुति-स्मृति-पुराणेषु वृक्षरूपत्वेन प्रतिपादितो ऽयं संसारवृक्षः इत्याह । तद्धेतदिति । 'तत्' बीजावस्थं जगत् प्रागुत्पत्तेः । भूतकाल सम्बन्धित्वादव्याकृतभावितो जगतः सुखग्रहणार्थं ऐतिह्यप्रयोगो 'ह' शब्दः । तदेव इदं इदमेव च तत् अव्याकृतं आसीत् ।

१. A. and I. read तैत्तिरीयक- for तैत्तिरीय-. २. For विविधाः सोम्य भावाः A. reads प्रवर्तन्ते हि भावाः. ३. D. omits the passage from वाच्यानि up to आत्मादिशब्दै-. ४. A. omits युक्तानि.

वस्तुनो ऽभिधीयमानत्वात् । आत्म-ब्रह्मशब्दयोस्तावदेकार्थत्वं[1] स्पष्टम् । ब्रह्मवाक्यशेषे 'तस्माद्वा[2] एतस्मादात्मन आकाशः सम्भूतः' इत्युक्तत्वात् । सदात्मशब्दयोश्चैकार्थत्वं युक्तम् । आत्मशब्दस्य स्व-परवाचित्वात् । सत्तायाश्चौपनिषदैः* सर्व-स्वरूपत्वाभ्युपगमात् । अनुभूयते च सत्तायाः सर्वस्वरूप-त्वम् । नरविषाणादीनामपि ज्ञानजनकत्व[3]स्वीकारेण सत्स्वरूप-त्वात् । अक्षरशब्दश्च 'अश्रुतः'-इति वा 'न क्षरति'-इति वा परमात्मानमाचष्टे । अव्याकृतशब्दो ऽपि तस्मिन् योजयितुं शक्यते । वि-स्पष्टं आ-समन्तात् कृतम्- इति व्युत्पत्त्या जगतः प्रतीतियोग्यस्थूलत्वदशा व्याकृतम् । 'न व्याकृतम्'[4]- इति अव्याकृतशब्दः सूक्ष्मत्वदशामाह । एकस्यैव[5] वस्तुनः[6] स्थूल-सूक्ष्मदशे जगद्ब्रह्मशब्दाभ्यामुच्येते । विवर्त्तवादिभिः[7]† अखण्डैकरसस्य ब्रह्मणो जगद्रूपेण प्रतिभासाभ्युपगमात् । तस्मात् अव्याकृत[8]ब्रह्मादीनां पञ्चानां शब्दानां एक एवार्थः ।

* उपनिषत्प्रमाणका औपनिषदाः वेदान्तिन इत्यर्थः ।

† विवर्तो नाम अन्यस्यान्यरूपेण प्रतिभासनम् । अस्मिन् विवर्तवादे अधिष्ठानस्य विवर्तरूपेण प्रतिभासनं नतु तद्रूपत्वप्राप्तिः । यथा शुक्तेः रजतरूपेण प्रतिभासनं न तु रजतरूपता। एवं ब्रह्म जगदाकारेण प्रतिभासते नतु तदन्यथाभावः। परिणामवादे तु जगद्रूपेण ब्रह्मणः परिणमनम् । तत्तु नेष्टम् । आरम्भवादस्तु वैशेषिकाद्यनुमतः मूलप्रमाणाभावादुपेक्षितः

१. A. and I. read -दैकार्थ्यं for -देकार्थत्वं. २. Except A. and I. all others take only तस्माद्वा एतस्मादात्मनः. ३. A. D. E. G. H. and I. read -जनकत्वाकारेण for -जनकत्वस्वीकारेण. ४. A. omits न व्याकृतम्. ५. D. omits एव. ६. E. G. and H. omit वस्तुनः, but read a च in its place. ७. B. C. D. F. and H. read विवर्तनादिभिः for विवर्तवादिभिः. ८. B. C. D. and E. read अव्याकृतान्तानामात्मादीनां पञ्चानां for अव्याकृतब्रह्मादीनां पञ्चानां.

ननु—क्वचित्[1] असतो[2] जगत्कारणत्वं श्रूयते। 'असद्वा इदमग्र आसीत् ततो वै सदजायत' (तै. उ. २. ७. १. २) इति। नैवम्। तत्र सत्-असत् शब्दाभ्यां व्याकृताव्याकृतयोरभिधानात्। श्रुत्यन्तरे—'कथमसतः सज्जायेत'[3] (छां. उ. ६. २. २) इति शून्यस्य[4] कारणताप्रतिषेधात्।

ननु[5]—प्रतीयमानजगदाकाररहितं शून्यादपि[6] विलक्षणं चेत् ब्रह्म तर्हि तत् कीदृशं बुद्धावारोपयितव्यम्[7]?—इति चेत्। त्वयेदानीं[8] प्रष्टुं यादृशमनूदितं[9] तादृशमेव तदिति बुद्धिं समाधत्स्व। दृष्टान्तं चेत् पृच्छसि[10] न वयं वक्तुं शक्नुमः। तत्समस्य वस्त्वन्तरस्याभावात्। तथा च श्रुतिः—

'न तस्य कार्यं करणं च विद्यते
न तत्समश्चाभ्यधिकश्च दृश्यते'।
(श्वे. उ. ६. ८)

इति। यदि शिष्यव्युत्पादनाय दृष्टान्ताभासो[11]ऽपेक्षितः तर्हि अद्वैताकारे सुषुप्तिर्निदर्शनम्[12]। पुरुषार्थस्वरूपत्वे च[13] विषयानन्दो निदर्शनीयः। 'आनन्दो ब्रह्मेति व्यजानात्'[14] (तै. उ. ३. ६. १)। 'विज्ञानमानन्दं ब्रह्म' (बृ. उ. ३. ९. २८)

१. Except A. H. and I. all omit क्वचित्. २. For असतो, A. H. and I. read शून्यस्य; D. अविकृतस्य; while E. and G. विकृत्यन्यस्य. ३. D. H. and I. read -ज्जायत for -ज्जायेत. ४. We read with H. and I.; while all others read शून्यकारणता for शून्यस्य कारणता. ५. A. and D. omit ननु. ६. A. omits अपि. ७. A. reads बुध्यादावारोपयितव्यम् for बुद्धावारोपयितव्यम्. ८. A. and I. omit त्वया. ९. D. read यादृशमुदितं for यादृशमनूदितं. १०. D. and G. have पृच्छति instead of पृच्छसि. ११. A. has दृष्टान्ताभ्यासो for दृष्टान्ताभासो. १२. D. H. and I. सुषुप्तिनिदर्शनम् for सुषुप्तिर्निदर्शनम्. १३. D. reads -त्वेऽत्र for -त्वे च; while A. omits it altogether. १४. After व्यजानात् A. and I. put in an इति before विज्ञान-.

इत्यादिश्रुतेः। अशेषशङ्कानिवृत्त्यपेक्षा चेत् ब्रह्ममीमांसां पठ इत्यलमतिविस्तरेण।

यावन्तं कालमभिव्यक्तजगदाकारोपेतं ब्रह्म पूर्वमासीत् तावन्तमेव कालमनभिव्यक्तिदशायामवस्थाय पश्चादभिव्यक्तौ[१] प्रयतते। ननु—महाप्रलये कालो वा तदियत्ता[२] वा कथं घटते?। उच्यते। कं प्रत्येतच्चोद्यम्?। न तावत् ब्रह्मवादिनं प्रति। तन्मते वियदाद्यनन्तभेदभिन्न[३]जगत्प्रतीतिं कल्पयन्त्या मायायाः कश्चिन्महाप्रलयः एतावत्[४]कालपरिमित आसीत्—इत्येवंविधप्रतीतिमात्रकल्पने को भारः?। परमाणुवादे ऽप्यस्त्येव नित्यः कालः। प्रधानवादे पञ्चविंशतितत्त्वेभ्यो बहिर्भूतस्य कालतत्त्वस्याभावात् प्रधानमेव कालशब्देन व्यवह्रियताम्। अतः प्रलयकालावसाने परमेश्वरः सृष्टिं कामयते। तथा च श्रुतयः—'कामस्तदग्रे समवर्त्तताधि' (नृ. पू. १. १) 'सो ऽकामयत। बहु स्यां प्रजायेय' (तै. उ. २. ६. १) इति। 'तदैक्षत बहुस्यां प्रजायेय इति'। (छां. उ. ६.२.३) 'स ईक्षां चक्रे' (प्र. उ. ६. ३) इत्याद्याः[५]।

ननु—कामो नाम मनोवृत्तिविशेषः, । 'कामः सङ्कल्पो विचिकित्सा श्रद्धा ऽश्रद्धा धृतिरधृतिः ह्रीर्धीर्भीरित्येतत् सर्वं मन एव' (श्वे. उ. १. ५. ३; मै. उ. ६. ३०) इति श्रुतेः। मनश्च भौतिकम्। 'अन्नमयं हि सौम्य मनः' (छां. उ. ६.-५. ४) इति श्रुतेः। तथा सति[६] भूतोत्पत्तेः पूर्वमविद्यमाने

१. A. reads अभिव्यक्त्यै for अभिव्यक्तौ. २. H. reads तदायत्ता for तदियत्ता. ३. A. and I. drop -भिन्न-. ४. E. G. and H. read तावत्- instead of एतावत्-. ५. A. and I. read इत्यादि for इत्याद्याः. ६. All but A. and I. read च for सति.

मनसि कुतः कामः? । उच्यते । न तावत् स[1]र्गसमये चोद्यमिदमुदेति । तन्मनसो भौतिकत्वाभावात् । नित्यायाः ईश्वरेच्छायाः मनोऽनपेक्षत्वाच्च । सिसृक्षात्वं तु सर्गोपहितत्वाकारेण नित्येच्छायामुपपद्यते । औपनिषदे मते तु[2] जीवेच्छायाः भौतिकमनःकार्यत्वे ऽपि[3] ईश्वरेच्छायाः मायापरिणामरूपत्वात्[4] न मनसो[5] ऽपेक्षा ऽस्ति । अन्तरेणापि देहेन्द्रियाणि अशेषव्यवहारशक्तिरचिन्त्या परमेश्वरस्य श्रुतिष्ववगम्यते—

'*न तस्य कार्यं करणं च विद्यते
न तत्समश्चाभ्यधिकश्च दृश्यते ।
परा[6]ऽस्य शक्तिर्विविधैव श्रूयते
स्वाभाविकी ज्ञान-बलक्रिया च' ॥

(श्वे. उ. ६. ८)

इति ।

'अपाणिपादो जवनो ग्रहीता
पश्यत्यचक्षुः स शृणोत्यकर्णः' ।

(श्वे. उ. ३. १९)

* तस्येश्वरस्य कार्यं शरीरम् । करणम् चक्षुरादिसाधनम् । तस्य स्वभावसिद्धा ज्ञानक्रिया बलक्रिया च शक्तिः श्रूयते । सर्वविषयज्ञानप्रवृत्तिः ज्ञानक्रिया । स्वसन्निधिमात्रेण सर्वं वशीकृत्य नियमनं बलक्रिया ।

१. Except A. and I. all others substitute तर्क for सर्ग. २. All except A. and I. omit तु. ३. E. G. and H. omit अपि, and D. reads -कार्यत्वेन for -कार्यत्वेऽपि; while H. reads -कार्यत्वं for the same. ४. B. and F. -रूपत्वेन, and C. -रूपत्वे for -रूपत्वात्. ५. A. D. and I. read मनोऽपेक्षा for मनसोऽपेक्षा. ६. C. D. E. F. G. and H. read परस्य शक्तिः for परास्य शक्तिः.

इति च । एवं च सति—असद्रूपस्य कथमुत्पादकत्वम्? उत्पत्स्यमानानि वा वियदादीनि योग्यसामग्रीमन्तरेण कथमुत्पद्येरन्[1] ?—इत्यादीनि चोद्यान्यनवकाशानि[2] । अचिंत्यशक्त्यैव[3] अशेषचोद्यानां दत्तोत्तरत्वात् । तस्मात् यथाश्रुति निःशङ्कैः सृष्टिरभ्युपेतव्या । श्रुतिश्चैवमाह— 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः । आकाशाद्वायुः । वायोरग्निः । अग्नेरापः । अद्भ्यः पृथिवी । पृथिव्या ओषधयः । ओषधीभ्योऽन्नम् । अन्नात् पुरुषः' (तै. उ. २.१.७–१४) इति । तत्र पुरुषशब्देन शिरःपाण्याद्याकृति[4]युक्तो देहोऽभिधीयते । स च देहो ब्रह्मादिः स्तम्बान्तो बहुप्रकारः । तत्र ब्रह्मदेहस्य निरतिशयपुण्यपुञ्जफलरूपत्वात् इतरसकलदेहकारणत्वेन[5] अनादित्वम् । तथा च[6]—

'हिरण्यगर्भः समवर्त्तताग्रे
भूतस्य जातः पतिरेक आसीत्' ।
(ऋ.सं. ८.७.३.१; तै.सं.४.१.८)

इति श्रुतिः[7] ।

'ब्रह्मा देवानां प्रथमः सम्बभूव ।
विश्वस्य कर्त्ता भुवनस्य गोप्ता' ।
(मुं. उ. १. १)

१. D. and H. read -मुत्पद्यन्ते, G. -मुत्पाद्यन्ते for -मुत्पद्येरन्; B. C. and F. -मुत्पाद्येरन् for the same. After कथमुत्पद्यन्ते (the reading of H.) the same puts in a new sentence तन्न । and then proceeds with इत्यादीनि. २. D. omits अनवकाशानि. ३. A. substitutes अनन्त- for अचिन्त्य-. ४. –द्याकार- is the reading of A. instead of –द्याकृति- of all others. ५. A. and D. read -करणत्वेन. for –कारणत्वेन. ६. After तथा च A. adds श्रुतिः; and B. C. D. F. H. and I. add श्रुति-स्मृती. ७. A. omits श्रुतिः.

इति च ।

'*स वै शरीरी प्रथमः स वै पुरुष उच्यते ।
आदिकर्त्ता स भूतानां ब्रह्मा ऽग्रे समवर्त्तत' ॥
(कू. पु. १. ९. ३८; वा. पु. १. ४. ६८–६९.)

इति स्मृतिः ।

एतेन विष्णु-महेश्वरदेहयोरप्यादित्वं व्याख्यातम् । एकेनैव चेतनेन गुणत्रयव्यवस्थायै देहत्रयस्य स्वीकृतत्वात् । तथा च मैत्रशाखायां श्रूयते—

'तस्य प्रोक्ता अग्र्यास्तनवो ब्रह्मा रुद्रो विष्णुरिति ।
अथ यो ह खलु वा वाऽस्य राजसो ऽंशो ऽसौ स
यो ऽयं ब्रह्मा । अथ ह खलु वा वाऽस्य तामसो ऽंशो
ऽसौ स यो ऽयं रुद्रः । अथ यो ह खलु वा वाऽस्य
सात्त्विकोंऽशो ऽसौ स यो ऽयं विष्णुः । स वा एष
एकस्त्रिधा भूतः ।' (मै. उ. ५. २)

* नायं श्लोकः उपलब्धस्मृतिपुस्तकेषु कुत्राप्युपलभ्यते । केषु चित् निबन्धेषु मनुनाम्ना ऽयं सङ्गृहीतः परं सम्प्रत्युपलब्धपुस्तकेषु नोपलभ्यते अद्वैतब्रह्मसिद्धौ चतुर्थे मुद्गरप्रहारे ऽप्ययं श्लोक उदाहृतः । न तत्र मनोर्नाम । प्रथमः शरीरी निर्गुणपरमेश्वरस्य प्रथमं सगुणं रूपमित्यर्थः ।

१. A. reads only विष्णु-महेश्वरयो- omitting -देहयो-; C. and F. substitute -देवयोः for -देहयोः. २. B. C. and F. read चैतन्येन for चेतनेन. ३. A. and H. in its correction on the margin read मैत्रेय- for मैत्र-. ४. In A. the words विष्णु and रुद्र interchange their places. ५. A. and I. read ह before यो and insert an additional वै after यो. ६.—७. A. and I. replace the each अथ in the beginning of both the lines by यथा. ८. Except A. D. H. and I. all others read भुवः for भूतः.

इति। तथोत्तरतापिनीये[1] मायां प्रकृत्य श्रूयते—

'सैषा चित्रा सुदृढा बह्वङ्कुरा स्वयं
गुणभिन्नांकुरेष्वपि गुणभिन्ना सर्वत्र
ब्रह्म-विष्णु-शिवरूपिणी चैतन्यदीप्ता[2]।
तस्मादात्मन एव त्रैविध्यं सर्वत्र'

(नृ. उ. ९)

इति। स्कन्दपुराणेऽपि—

'एक एव शिवः* साक्षात् सृष्टि-स्थित्यन्तसिद्धये।
ब्रह्म-विष्णु-शिवाख्याभिः कलनाभिर्विजृम्भितः[3]'॥

इति। तदेवं ब्रह्म-विष्णु-महेश्वराः तस्मिन्[4] महाकल्पावसाने[5] क्षीयन्ते। पुनस्तत्तन्महाकल्पादावुत्पद्यन्ते[6] इति सिद्धम्।

अक्षरार्थस्तु—क्षयसहिता उत्पत्तिः क्षयोत्पत्तिः[7] तयोपलक्षिता भवन्ति—इति। एवं तत्तदवान्तरकल्पानामवसाने प्रारम्भे च श्रुत्यादीनां निर्णेतारः क्षयोत्पत्तिभ्यामुपलक्ष्यन्ते। तत्र श्रुतिनिर्णेतारः—वेदविभागकारी[8] व्यासः, तत्तद्वेदशाखा[9]-सम्प्रदायप्रवर्त्तकाः कठ[10]-कौथुमादयः, कल्पसूत्रकाराः बौधाय[11]-

---

* शिवः परमात्मा। 'शिवं शान्त'मिति श्रुतेः। स एक एव सन् सृष्ट्यादिसिद्धये मायागुणानाश्रित्य ब्रह्मादिरूपैः प्रकाशते।

१. B. C. D. and F. यथोत्तर- for तथोत्तर-. २. D. and G. read चैतन्यदीप्ता. ३. A. reads -विजृम्भते for -विजृम्भितः. ४. A. reads स्वस्मिन् for तस्मिन्. ५. D. and I. eliminate –कल्प. ६. For -तत्तन्महाकल्पादौ A. and I. read only -तत्कल्पादौ; and B. C. D. F. and H. read तत्र महाकल्पादौ. ७. A. omits क्षयोत्पत्तिः. ८. A. reads वेदविभागकारो for वेदविभागकारी. ९. A. and I. omit one तत्. १०. D. and F. read काठ- for कठ—. ११. Except D. and G. all others read बोधायना for बौधायना.

नाश्वलायनापस्तम्बादयः, मीमांसासूत्रकृतो जैमिन्यादयश्च । स्मृतिनिर्णेतारो मन्वादयः प्रसिद्धाः । तत्र पैठीनसिः—

'तेषां मन्वङ्गिरोव्यास-गौतमात्र्युशनो-यमाः ।
वसिष्ठ-दक्ष-संवर्त्त-शातातप-पराशराः ॥
विष्ण्वापस्तम्ब-हारीताः शङ्खः कात्यायनो भृगुः ।
प्रचेता नारदो योगी बौधायन[1]-पितामहौ ॥
सुमन्तुः कश्यपो बभ्रुः पैठीनो[2] व्यास[3] एव च ।
सत्यव्रतो भरद्वाजो गार्ग्यः कार्ष्णाजिनि[4]स्तथा ॥
जाबालिर्जमदग्निश्च लौगाक्षि[5]र्ब्रह्मसम्भवः ।
इति धर्मप्रणेतारः* षट्त्रिंशदृषयस्तथा' ॥

ननु—किमियं परिसंख्या ? । नैवम् । तथा सति वत्स-मरीचि-देवल—पारस्कर-पुलस्त्य-पुलह-क्रतु[6]-ऋष्यशृङ्ग-लिखित-छागलेया-ऽऽत्रेयादीनां धर्मशास्त्रप्रणेतृत्वं न स्यात् । आश्वमेधिके पर्वण्यपि[7] तत्तन्मुनिप्रोक्तधर्मानुक्रमणात् धर्मशास्त्रकर्त्तारोऽव[8]गम्यन्ते । 'श्रुता मे मानवा धर्माः'-इत्युप[9]क्रम्य एवं पठ्यते—

---

* 'धर्मप्रणेतारः' धर्मशास्त्रकर्तार इति यावत् । धर्मप्रणेतृसंख्या विभिन्नासु स्मृतिषु पुराणादिषु च विभिन्नैव दृश्यते । क्वचिदष्टादश क्वचित् विंशतिरेवं क्वचिदधिका क्वचिन्न्यूना च दृश्यते सा च पूर्वमुपोद्घाते विस्तरेण प्रदर्शितेत्यत्र संक्षेपः ।

---

१. A. B. C. F. G. and I. read बोधायन- for बौधायन-. २. C. substitutes पैङ्गिनो for पैठीनो. ३. For व्यास A. and I. read व्याघ्र. ४. D. reads -कार्ष्णायनि- instead of कार्ष्णाजिनि-. ५. A. and I. have लोकाक्षि-. in the place of लौगाक्षि-; the former is not heard of. ६. A. omits -क्रतु-. ७. After आश्वमेधिके पर्वण्यपि D. adds -एते. ८. A. and I. drop ऽव. ९. A. reads इत्यनुक्रम्य for इत्युपक्रम्य.

‘औमा[1]महेश्वराश्चैव नन्दिधर्माश्च पावनाः ।
ब्रह्मणा कथिताश्चैव कौमाराश्च श्रुता मया[2] ॥ (१७)
धूम्राय[3]नकृता धर्माः का[4]ण्वा वै[5]श्वानरा अपि ।
भार्गवा याज्ञवल्क्याश्च मा[6]र्कण्डेयाश्च कौशिकाः ॥(१८)
भरद्वाजकृता ये च बृहस्पतिकृताश्च ये ।
कुणेश्च कुणि[7]बाहोश्च विश्वामित्रकृताश्च ये ॥ ( १९ )
सुमन्तु-जैमिनिकृताः शाकुनेयास्तथैव च ।
पुलस्त्य-पुलहोद्गीताः पाव[8]कीयास्तथैव च ॥ ( २० )
अगस्त्यगीताः सौ[9]धन्याः शाण्डिल्याः सौल[10]भायनाः ।
वालखिल्यकृता ये च ये च सप्तर्षिभिः कृताः[11] ॥ (२१)

---

१. The author quotes this from Âsvamedhika Parva, but though we searched three different editions of that Parva, we have not found it. This and the subsequent quotations which the author says to have been quoted from the said Parva belong to Vriddha Gautama Smṛiti. The above mentioned Smṛiti contains a conversation between Yudhishṭhira and Kṛishṇa. Therefore we call the said Smṛiti the text of these quotations. Before this verse the text inserts the following three lines:-

श्रुता मे मानवा धर्मा वासिष्ठाः काश्यपास्तथा ॥ (१५)
गार्गेया गौतमीयाश्च तथा चोपालितस्य च ।
पराशरकृताः पूर्वमात्रेयस्य च धर्मतः ॥ (१६).

All except A: and I. substitute उमा- for औमा-. २. D. reads मम for मया. ३. B. C. E. F. and G. read धूम्रायवकृताः for धूम्रायनकृताः. ४. A. reads कण्वा, B. C. and F. काथा and E. G. काठा; while H. reads काव्या all for काण्वाः. ५. D. and G. substitute वैखानसा for वैश्वानरा. ६. The text reads माण्डव्याः कौशिकास्तथा. ७. B. C. E. F. G. and H. read कुणिताहेश्च for कुणिबाहोश्च; while D. has कुणिनाहेश्च. ८. The text reads पाराशर्याः, A. reads पावनीयाः for पावकीयाः, but we do not think that it ever was the name of any ऋषि or देवता. ९. A. I. and the text substitute मौद्गल्याः for सौधन्याः. १०. B. C. and F. read शौत्यभाज्जनाः, D. शौत्वभाज्जनाः, E. reads शौलभाञ्जनाः, G. शैलभञ्जनाः and H. शौलभञ्जनाः all for सौलभायनाः. ११. The text inserts the following lines:—

आपस्तम्बकृता धर्माः शङ्खस्य लिखितस्य च ।
प्राजापत्यास्तथा याम्या माहेन्द्राश्च श्रुता मया ॥ (२२).

वैयाघ्रा व्यासगीताश्च विभाण्डककृताश्च[1] ये ।
तथा विदुरवाक्यानि भृगोरङ्गिरसस्तथा[2] ।
वैशम्पायनगीताश्च ये चान्ये एवमादयः[3]'।(२६)
इति । 'सदाचारः'[5] होलिकोद्वृषभयज्ञाह्निनैवुकादिः[6] ।

---

१. A. and I. read विभण्डक- for विभाण्डक-; while all others read वितण्डक- for the same. २. After this line there appears the following line in the text—

नारदीयकृता धर्माः कापोताश्च श्रुता मया ॥ (२३)

३. After this line the text inserts—

क्रौञ्च-मातङ्ग-गीताश्च वत्स-हारीतकास्तथा ॥ (२४)
पिङ्ग-वर्मकृताः काश्याः ये च वा वसुपालिताः ।
उद्दालककृता धर्मास्तथा औशनसाः पुनः ॥ (२५)

४. The following Ślokas we find in Vishṇu Dharmottara, Vol. I., Chap. 146, Ślokas 36–42 both inclusive. Here also we find a conversation between Yudhishṭhira and Kṛishṇa. The Ślokas are as follows:—

श्रुता मे मानवा धर्मा वासिष्ठा वा महाफलाः ।
पराशरकृताश्चैव तथाऽऽत्रेयस्य धीमतः ॥
ऋष्यशृङ्गस्य गार्ग्यस्य लिखितस्य यमस्य च ।
जाबालेश्च महाबाहो मुनेर्द्वैपायनस्य च ॥
औमामहेश्वराश्चैव जातिधर्माश्च पावनाः ।
कुणेश्च कुणिबाहोश्च काश्यपेयास्तथैव च ॥
बह्वायनकृताश्चैव शाकुनेयास्तथैव च ॥
अगस्त्यगीता मौद्गल्याः शाण्डिल्याः सौरभास्तथा ॥
भृगोरङ्गिरसश्चैव कश्यपोद्दालकोदिताः ।
सौमन्ता जैमिनीयाश्च पुलस्त्यस्य महात्मनः ॥
वैशम्पायनगीताश्च पिप्पलादकृताश्च ये ।
ऐन्द्राश्च वारुणाश्चैव कौबेरा वात्स्य-शौनकाः ॥
आपस्तम्बकृता धर्मास्तथा गोपालकस्य च ।
भृग्वङ्गिरःकृताश्चैव सौरा हारीतकास्तथा ॥.

५. A. reads समाचारः for सदाचारः. ६. A. reads the following :— लोके वृषभयज्ञादिनैर्ऋतादिः तस्य in the place of होलिकोद्वृषभयज्ञाह्निनैवुकादिः; while the sentence is altogether omitted by B. C. and F., but in the margin of B. सदाचारादय precedes तस्य. At the beginning of the following sentence, E. H. and I. read हो[illegible]- for होलिको- and G. झलाको- for the same.

तस्य निर्णेतारस्[1]तत्तत्कुलवृद्धाः । चकारः उक्तानुक्तसमुच्चयार्थः । उक्ताः मन्वादयो ब्रह्मादयश्च स्मृतिशास्त्रकर्त्तारः । अनुक्तस्तु धर्मः । तस्यापि पूर्वकल्पान्ते क्षीणस्योत्तरकल्पादौ सृष्टिर्भवति । तथा च वाजसनेयि[2]-ब्राह्मणे सृष्टिप्रकरणे प्रजा[3]पति-मन्वोर्मनुष्यादि-पिपीलिकान्तप्राणिनां चतुर्वर्णाभिमानिदेवतानाञ्च सृष्टिमाम्नाय अत्युग्रम[4]पि क्षत्रियादिकं नियन्तुं [5]समर्थस्य धर्मस्य सृष्टिराम्नायते—

'स नैव व्यभवत् ।
तत् श्रेयोरूपमत्यसृजत धर्मम् ।
तदेतत् क्षत्रस्य क्षत्रं यद्धर्मः ।
तस्मात् धर्मा[6]त् परं नास्ति' ।

(बृ. उ. १. ४. १४.)

इति । अस्यायमर्थः । स प्रजापति-मन्वादिरूपधारी जग[7]त्स्रष्टा परमेश्वरः प्रजाः सृष्ट्वा ऽपि तन्नियामकाभावात् कृतकृत्यतारूपं विभवं नैव प्राप्त[8]वान् । ततो विचार्य नियामकत्वेन श्रेष्ठं धर्म[9]मतिशयेनासृजत् इति । अहो महदिदं धर्मस्य सामर्थ्यम् । यत् क्षत्रियादिरुग्रो मारणे समर्थो ऽपि धर्माद्भीतः करप्रदानाद्यनुपयोगिनं याचकं विप्रादिकं न मारय[10]ति । प्रत्युत तस्मै धनं ददाति । भटाश्चातिशूराः धनुः-खड्गादिधारिणो

---

१ D. substitutes तत्र for तत्तत्-. २. A. H. and I. read वाजसनेय- for वाजसनेयि-. ३. A. and I. read प्रजापतिर्मनुष्या-. ४. H. drops -अपि. ५. All except A. and I. read समस्तस्य for समर्थस्य. ६. A. and I. omit धर्मात्. ७. E. G. and H. omit जगत्-. ८. D. reads प्राप्नुयात् for प्राप्तवान्. ९. A. and I. read -मतिरु[illegible] for -मतिशयेना-. १०. A. substitutes ताडयति for मारयति.

लक्षशः[1] एकेन[2] निरायुधेन उग्रेण[3] स्वामिना अधिक्षिप्यमाणा-[4]स्ताडयमानाः सन्तो ऽपि स्वामिद्रोहाद्बिभ्यति । ततो धर्मा-द्प्युत्कृष्टं न किञ्चिन्नियामकमस्तीति । प्रलयकाले धर्मस्यापि[5] संहारे भाविसृष्टेर्धर्मकार्याया असम्भवः—इति चेत् । न । पूर्वकल्पानुष्ठानसञ्चितस्य फलबीजस्यापूर्वस्य संहारानङ्गीकारात् । द्रव्य-गुण-क्रियारूप एव हि धर्मः संह्रियते पुनरुत्पद्यते[6] च । 'सर्वदा' इत्यनेन सृष्टि-संहारप्रवाहस्या[7]नादितामनन्तताञ्च दर्शयति ॥ २० ॥

यदर्थं सृष्टि-संहारौ संक्षिप्योक्तौ तत् प्रवाहनित्यत्वमिदानीमाह—

न कश्चिद्वेदकर्त्ता च वेदं स्मृत्वा[8] चतुर्मुखः ।
तथैव धर्मान्[9] स्मरति मनुः कल्पान्तरेऽन्तरे ॥२१॥

इति । स्मृतिनिर्णेतॄणां मन्वादीनां स्मृतिकर्तृत्वदर्शनात् तथैव श्रुतिनिर्णेतॄणामपि वेदकर्तृत्वमाशङ्क्य निराचष्टे । न कश्चित् इति । न तावत् व्यासो वेदकर्त्ता । तस्य विभागमात्रकारित्वात् । नापि चतुर्मुखः। ईश्वरेण चतुर्मुखाय वेदप्रदानात्।

---

१. A. and I. read लक्षसंख्याकाः for लक्षशः. २. All except A. read स्वकीयेन for एकेन. ३. B. C. E. and F. read रुग्णेन for उग्रेण ; while A. omits it altogether. ४. A. reads विक्षिप्यमाणा-; and D. क्षिप्यमाणा- for अधिक्षिप्यमाणा-. ५. Except D. G. and I. all others read धर्माधर्म- instead of only धर्म-. ६. A. reads पुनरुत्पाद्यते for पुनरुत्पद्यते. ७. C. reads सृष्टिसंहारस्या- omitting -प्रवाह-. ८. A. substitutes श्रुत्वा for स्मृत्वा ; while M. reads वेदस्मर्ता for वेदं स्मृत्वा. ९. M. takes धर्म for धर्मान्.

नापि[1] जगदीश्वरः। तस्य सिद्ध[2]वेदाभिव्यञ्जकत्वात्। तदुक्तं मत्स्यपुराणे—

'अस्य वेदस्य[3] सर्वज्ञः कल्पादौ परमेश्वरः।
व्यञ्जकः केवलं विप्राः नैव कर्त्ता न संशयः॥
ब्रह्माणं मुनयः पूर्वं सृष्ट्वा तस्मै महेश्वरः।
दत्तवानखिलान् वेदान् विप्रा आत्मनि संस्थितान्[4]॥
ब्रह्मणा चोदितो[5] विष्णुर्व्यासरूपी द्विजोत्तमाः[6]।
हिताय सर्वभूतानां वेदभेदान् करोति सः'॥

इति। इतरेषां[7] तु तत्कर्तृत्वं दूरापेतम्[8]। उपपत्तयस्तु वेदापौरुषेयत्वाधिकरणे (पू. मी. १. १. २७) द्रष्टव्याः। ननु—शास्त्रयोनित्वाधिकरणे (शा. सू. १. १. ३) ब्रह्मणः सर्वज्ञत्व-सर्वशक्तित्वदार्ढ्याय वेदकर्तृत्वं व्यासेन सूत्रितम्। ननु—तेनैव देवताधिकरणे वेदनित्यत्वमपि। 'अत एव च नित्यत्वम्' (शा. सू. १. ३. २९) इति सूत्रेण प्रदर्शितम्। एवं तर्हि विरोधः परिहर्त्तव्यः। उच्यते। वर्णानां पदार्थ-तत्सम्बन्धानां वाक्यानां चा[9]नित्यत्वं वैशेषिकादयो[10] वर्णयन्ति तान् प्रति मीमांसकाः प्रथमपादे कालाकाशादीनामिव वर्णादीनां[11] नित्यत्वं वर्णयामासुः। 'व्यवहारे भट्टनयः'—इत्यभ्युपगमं[12] सूचयितुं देवता-

१. D. reads अनादि-for नापि. २. A. omits सिद्ध-; D. सिद्धये वेदवेदाभिव्यञ्जकत्वात्. thus prefixing an additional वेद- and makes सिद्धये independent. ३. A. substitutes धर्मस्य for वेदस्य. ४. D. has सुस्थितान् instead of संस्थितान्. ५. D. नोदितो for चोदितो. ६. D. G. and H. read द्विजोत्तमः for द्विजोत्तमाः. ७. Except A. all others substitute कणादीनां for इतरेषां. ८. A. and I. have दूरापास्तम् for दूरापेतम्. ९. D. substitutes वा for -च. १०. A. and I. read वैशेषिक-काणादादयो instead of वैशेषिकादयो. ११. A. and I. drop आदि and read simply वर्णानां for वर्णादीनां. १२. A. reads इत्यभ्युपगतिं for इत्यभ्युपगमं.

धिकरणे तदेव व्यावहारिकं नित्यत्वं सूत्रितम् । अतः कालिदासादिग्रन्थेष्विव वेदेष्वर्थावबोधपूर्विकायाः पदविशेषावापोद्वापाभ्यां प्रवृत्तायाः वाक्यरचनायाः अभावादपौरुषेयत्वं युक्तम्। ब्रह्मविवर्त्तत्वं वियदादेरिव वेदस्याप्यस्ति—इति मत्त्वा शास्त्रयोनित्वाधिकरणे वेदकर्तृत्वं ब्रह्मणो दर्शितम् । अत एव भट्टपादाः सत्यपि पुरुषसम्बन्धे स्वातन्त्र्यं निवारयामासुः—

'यत्नतः प्रतिषेध्या नः पुरुषाणां स्वतन्त्रता' ।

इति । तस्मात् 'स्वतन्त्रः कर्त्ता' (पा. सू. १. ४. ५४) इत्यनेन लक्षणेन लक्षितः कर्त्ता न को ऽपि वेदस्यास्ति ।

चकारः तु-शब्दार्थे[१] वर्त्तमानो वैलक्षण्यमाह । सन्ति हि बहवश्चतुर्मुख-मनुप्रभृतयः स्मृतिकर्त्तारः । वेदकर्त्ता तु न कोऽपीति वैलक्षण्यम् । 'वेदं स्मृत्वा' इत्यत्र वाक्ये[२] अनुषङ्गन्यायेन द्वितीयार्धगतं पदत्रयमन्वेतव्यम् । अनुषङ्गन्यायश्च[३] द्वितीयाध्याये[४] प्रथमपादे वर्णितः[५] । तथा हि । ज्योतिष्टोमप्रक्रियायां[६] उपसद्धोमेषु[७] त्रयो मन्त्राः श्रूयन्ते । '*[८]याते ऽग्ने ऽयाशया, रजा-

* उपलभ्यते चायं मन्त्रः वाजसनेयिसंहितायाम्। तत्र तु—

याते अग्ने ऽयाशया तनूर्वर्षिष्ठा गह्वरेष्ठा

उग्रं वचो अपावधीत् त्वेषं वचो अपावधीत्स्वाहा ।

---

१. All except H. omit तु. २. B. C. and F. read वाक्यानुषङ्गन्यायेन instead of वाक्ये अनुषङ्गन्यायेन. After वाक्य- A. adds -पुराणानां before अनुषङ्गन्यायेन. ३. A. omits -च. ४. For द्वितीयाध्याये प्रथमपादे A. only reads द्वितीयाध्यायप्रथमपादे. ५. A. substitutes ईरितः for वर्णितः. ६. A. drops the letter -प्र- and reads -क्रियायां. ७. A. and I. read उपसदामुपहोमेषु for उपसद्धोमेषु; while D. reads simply उपहोमेषु for the same. ८. The author has quoted this mantra omitting the common words, and Sabar Swami quotes (१. २. ४८) as follows:—याते अग्ने ऽयाशया तनूर्वर्षिष्ठा गह्वरेष्ठा उग्रं वचो अपावधीत्त्वेषं वचो अपावधीत्स्वाहा, याते अग्ने रजाशया, याते अग्ने हराशया.' Kánwás reads हरीशया. After reading the Bháshya of Mahídhara on अयाशया, रजाशया and हराशया we think these readings are incorrect.

शया, हराशया तनूर्वर्षिष्ठा गह्वरेष्ठा उग्रं वचो अपावधीत् त्वेषं वचो अपावधीं स्वाहा' (वा. सं. ५. ८. ८)—इति । तत्र 'अयाशया, रजाशया, हराशया' —इति पदभेदान्मन्त्रभेदः । तत्र प्रथममन्त्रस्य तनूरित्यादि वाक्यशेषापेक्षा ऽस्ति । चरममन्त्रः 'याते ऽग्ने'—इत्यमुं वाक्यादिमपेक्षते । *मध्यमन्त्रश्चाद्यन्तावपेक्षते । तत्रैवं संशयः—किमपेक्षितार्थपरिपूरणाय लौकिकः कियानपि पदसन्दर्भो ऽध्याहरणीयः? किं वा श्रूयमाणं पदजातमनुषञ्जनीयम्?' इति । वाक्यादेः प्रथममन्त्रेणैव सम्बन्धात् वाक्यशेषस्य च चरममन्त्रेणैव सम्बन्धात् लौकिकाध्याहारः—इति पूर्वः पक्षः । वैदिकाकाङ्क्षायाः सति सम्भवे वैदिकशब्दैरेव पूरणीयत्वात् अन्यमन्त्रसम्बद्धानामपि पदानां बुद्धिस्थत्वेनाध्याहार्येभ्यः पदेभ्यः प्रत्यासन्नत्वाच्च अनुषङ्ग* एव कर्त्तव्यो नाध्याहारः—इति सिद्धान्तः । एवं च सति प्रकृते ऽपि 'कल्पान्तरे धर्मान् स्मरति'—इति पदत्रयं

---

याते अग्ने रजःशया तनूर्वर्षिष्ठा० ।
याते अग्ने हरिशया तनूर्वर्षिष्ठा० ।
(वा. सं. ५. ८. ८.)

एवं वर्तते । अत्र तु स एव संक्षेपेण गृहीतः । क्वचित् 'ऽयःशयाः० । रजःशयाः० । हरिशयाः० ।' इति पाठो ऽपि दृश्यते । स तु प्रामादिकत्वात् चिन्त्यः ।

* अयमनुषङ्गन्यायः शबरभाष्ये अनुषङ्गाधिकरणे (पू. मी. २. १. ४८) द्रष्टव्यः ।

---

१. H. reads इत्यनुवाक्यादिगतम- for इत्यमुं वाक्यादिम-; but all others except A. keep इत्यमुं and read वाक्यादिगतम- for वाक्यादिम-. २. A. and I. drop the second -म- and read मध्यमन्त्रस्त्वा- E. also with A. and I. substitute तु for च. ३. A. H. and I. omit च ४. D. omits एव. ५. All but B. and I. read -सम्बन्धानां for -सम्बद्धानां. ६ A. reads बुद्धिसत्त्वेना- for बुद्धिस्थत्वेना-. ७. B. C. and F. omit च. ८. D. reads पूर्वे for प्रकृते. ९. B. C. E. and F. repeat अन्तरे.

पूर्वार्धे[१] ऽनुषञ्जनीयम्। चतुर्मुखस्तस्मिन्[२] महाकल्पे परमेश्वरेण दत्तं वेदं स्मृत्वा तत्र विप्रकीर्णान्[३] वर्णाश्रमादिधर्मान् सङ्क[४]ल्प्य स्मृतिग्रन्थरूपेण उपनिबध्नाति। तथा च पितामहवचनानि तत्र तत्र निबन्धकारै[५]रुदाह्रियन्ते। चतुर्मुखस्य स्मृतिशास्त्रकर्तृत्वं मनुना ऽप्युक्तम्—

'इदं शास्त्रं तु कृत्वा ऽसौ मामेव स्वयमादितः[६]।
विधिवद्ग्राहयामास मरीच्यादींनहं मुनीन्' ॥

(म. स्मृ. १. ५८)

इति। यथा चतुर्मुखः तथैव[७] स्वायम्भुवो मनुः तस्मिन्[८]नवान्तरकल्पे वेदोक्तधर्मान् ग्रथ्नाति। मनुग्रहणेन[९] अत्रि-विष्णु-याज्ञवल्क्यादयः उपलक्ष्यन्ते। तदेवं प्रतिमहाकल्पं तेन तेन चतुर्मुखेन प्रत्यवान्तरकल्पं च तैस्तैर्मन्वादिभिः स्मृतिप्रणयनात् धर्मादेः प्रवाहनित्यत्वं सिद्धम्। एतदेवाभिप्रेत्य आश्वमेधिके पर्वणि पठ्यते—

'युगेष्वावर्त्तमानेषु धर्मो ऽप्यावर्त्तते[१०] पुनः।
धर्मेष्वा[११]वर्त्तमानेषु लोको ऽप्यावर्त्तते पुनः' ॥

इति। युगभेदेन धर्मवैलक्षण्य[१२]मभिप्रेत्य 'धर्मान्'—इति बहुवचननिर्देशः ॥ २१ ॥

---

१. B. C. and F. read only पूर्वानुषञ्जनीयम् for पूर्वार्धे ऽनुषञ्जनीयम्. २. All repeat तस्मिन्, but we do not see the necessity of it. ३. A. reads विप्रकीर्णे for विप्रकीर्णान्. ४. D. and G. read संकल्प्य for संकलय्य. ५. A. D. E. G. H. and I. निबन्धनकारैः instead of निबन्धकारैः. ६. B. C. E. F. and G. मामेवाश्वयमादितः for मामेव स्वयमादितः. ७. A. and I. after तथैव add च. ८. Except E. G. and H. repeat तस्मिन्. ९. A. reads मनुग्रहणेनात्र, omits अत्रि; and changes the places of -विष्णु- and -याज्ञवल्क्य-. १०. H. reads धर्मो व्यावर्तते for धर्मो ऽप्यावर्त्तते. ११. धर्मे व्यावर्तमाने तु for धर्मेष्वावर्त्तमानेषु. १२. We take our reading from D. while all others have -मभ्युपेत्य for -मभिप्रेत्य.

तदेवं[1] वैलक्षण्यं प्रतिजानीते—

*अन्ये कृतयुगे धर्मास्त्रेतायां द्वापरे युगे[2]।
अन्ये कलियुगे[3] नृणां युगरूपानुसारतः॥ २२॥

इति। अत्र अन्यशब्दो न धर्मस्य स्वरूपान्यत्वमाचष्टे। किन्तु प्रकारान्यत्वम्। अन्यथा धर्मप्रमाणचोदनानामपि[4] युगभेदेन भेदापत्तेः। नहि[5] इयं चोदना कृते ऽध्येतव्या इयं तु त्रेतायाम्—इत्यादिव्यवस्थापकं किञ्चिदस्ति। प्रकारा[6]न्यथात्वे त्वस्ति दृष्टान्तः। एकस्याप्यग्निहोत्रस्य सायं प्रातः कालभेदेन अनुष्ठानप्रकारभेदश्रवणात्।

'ऋतं त्वा सत्येन परिषिञ्चामि इति सायं
परिषिञ्चति। सत्यं त्वर्त्तेन परिषिञ्चामीति प्रातः'।
(तै. ब्रा. २. ११)

* दृश्यते चायं श्लोको मनुस्मृतौ (अ. १. श्लो. ८५) महाभारते (शां. मो. २३१. २७; २६० अध्याये च ८) च। तत्र तु 'युगे' इत्यत्र 'ऽपरे' इति 'युगरूपानुसारतः' इत्यत्र 'युगह्रासानुसारतः' इति च पाठभेदो दृश्यते। अत्र मेधातिथिः। 'युक्तो ऽस्य कालभेदेन पदार्थस्वभावभेदस्योपसंहारः। धर्मशब्दो न यागादिवचन एव। किं तर्हि पदार्थगुणमात्रे वर्तते। अन्ये पदार्थानां धर्माः प्रतियुगं भवन्ति। यथा प्राक्दर्शितम्। यथा वसन्ते अन्यः पदार्थानां स्वभावः अन्यो ग्रीष्मे अन्य एव वर्षासु। एवं युगेष्वपि। अन्यत्वं चात्र न कारणानां दृष्टकार्यत्यागेन कार्यान्तरजनकत्वमपि। अपरिपूर्णस्य कार्यस्योत्पत्तेः शक्तेरपचयात्। तदाहुः। युगह्रासानुरूपतः इति। ह्रासो न्यूनता।

१. D. reads तदेवं for तदेव. २. M. and J. read परे for युगे. ३. A. reads कलौ युगे instead of कलियुगे. ४. D. reads नोदना- for चोदना-. ५. E. in its correction has तर्हि इयं for नहि इयं; D. has नहि इत्थं for the same. ६. A. B. C. F. and I. read प्रकारान्यत्वे for प्रकारान्यथात्वे.

इति। ननु–तत्रार्थवादेन मन्त्रप्रकारभेद[1] उपपादितः–

'अग्निर्वा ऋतम्। असावादित्यः सत्यम्। अग्निमेव तदादित्येन सायं परिषिञ्चति। अग्निनादित्यं प्रातः सं[2]-' (तै. ब्रा. २. ११)

इति। एवं तर्हि[3] अत्रापि 'युगरूपानुसारतः'-इत्यनेन प्रकारभेदः उपपद्यते[4]। युगानां स्वरूपमनुष्ठातृपुरुषशक्तितारतम्योपेतम्। तदनुसारिणानुष्ठानवैषम्यं सम्भवति। 'यथा शक्नुयात् तथा कुर्यात्'–इति नित्यकर्मसु निर्णीतत्वात्। तथाहि षष्ठाध्याये तृतीयपादादौ[5] (पू. मी. ६. ३. १) विचारितम्। 'यावज्जीवमग्निहोत्रं जुहुयात्'–इति श्रूयते। तत्र संशयः। किं सर्वाङ्गोपसंहारेणाधिकारः? उत यदा यावन्ति शक्नोत्युपसंहर्त्तुं तदा तावद्भिरङ्गैरुपेतं प्रधानं कुर्वन्नधिक्रियेत[6]? इति। सर्वाङ्गोपेतस्य प्रधानस्य फलसाधनत्वात् अङ्गवैकल्ये फलानुदयात् सर्वोपसंहारः–इति पूर्वः पक्षः[7]। अत्र हि जीवनमग्निहोत्रस्यैव निमित्ततया श्रूयते। न त्वङ्गानाम्। सति च निमित्ते नैमित्तिकमवश्यम्भावि[8]। अन्यथा निमित्तत्वासम्भवात्। ततो ऽशक्याङ्गपरित्यागेन प्रधानं कर्त्तव्यम्। तावतैव शास्त्रवशात् फलसिद्धिः–इति। बौधायनश्च[9] स्मरति—

१. A. and I. read मन्त्रः प्रकारभेदेन उपपादितः instead of मन्त्रप्रकारभेद उपपादितः. २. A. has सह in the place of स-. ३. G. reads एवं च तर्हि instead of एवं तर्हि. ४. All except A. and D. read उपपाद्यते for उपपद्यते. ५. A. and I. read तृतीयपादे instead of तृतीयपादादौ. ६. A. D. and I. read -न्नधिक्रियते for -न्नाधिक्रियेत. ७. B. C. D. and F. read पूर्वपक्षः for पूर्वः पक्षः. ८. A. reads -मवश्यभावि; while H. reads -मवश्यम्भाव्यम् for -मवश्यम्भावि. ९. H. reads बौधायनः omitting च with all others except A.; while D. reads for the whole बौधायनस्मृतिरपि.

'यथाकथञ्चिन्नित्यानि शक्त्यवस्थाऽनुरूपतः[1] ।
येन केनापि कार्याणि नैव नित्यानि[2] लोपयेत् '॥

इति । पुरुषशक्तितारतम्यकृतमत्रा[3]नुष्ठानवैषम्यमिति विवक्षया[4] 'नृणाम्'-इत्युक्तम् ॥ २२ ॥

अथ प्रतिज्ञातं वैलक्षण्यं षड्भिः श्लोकैरुपन्यस्यति । तत्र चतुर्षु[5] युगेषु प्राधान्येनानुष्ठातुं सुशकान्[6] परमपुरुषार्थहेतून्[7] धर्मान् विभजते—

*तपः परं कृतयुगे त्रेतायां ज्ञानमुच्यते ।
द्वापरे यज्ञमेवाहुः[8] दानमेव[9] कलौ युगे ॥२३॥

---

* अयमपि श्लोकः मनुस्मृतौ (१. ८६) महाभारते (शां. मो. २३१ २८; २६० अध्याये ९.) च दृश्यते । तत्र पूर्वार्द्धे 'ज्ञानमुत्तमं' इति पाठः भारते । उत्तरार्द्धे 'दानमेकं' इति उभयोरपि पाठः । अत्र मेधातिथिः । 'अयमन्यो युगस्वभावभेदः कथ्यते । तपःप्रभृतीनां वेदे युगभेदेन विधानाभावात् सर्वदा सर्वाण्यनुष्ठेयानि । अयं त्वनुवादो यथाकथञ्चित् व्याख्येयः । इतिहासेषु हि एवं वर्ण्यते । तपः प्रधानम् । तच्च महाफलं दीर्घायुषो रोगवर्जितास्तपसि समर्था भवन्ति अनेनाभिप्रायेणोच्यते । ज्ञानं अध्यात्मविषयम् । शरीरक्लेशादन्तर्नियमो नातिदुष्करः । यागे तु न महान् क्लेश इति द्वापरे यज्ञः प्रधानम् । दाने तु न शरीरक्लेशो नान्तःसंयमो न चातीव विद्वत्तोपयुज्यत इति सुसम्पादना । नीलकण्ठस्तु—'तपः परं परविद्या । ज्ञानं अपरविद्या । ते च 'अथ परा यया तदक्षरमधिगम्यते ।

---

१. Except A. and I. all others read शक्यवस्त्वनुरूपतः for शक्त्यवस्थानुरूपतः. २. D. substitutes तेनापि for नित्यानि. ३. A. and I. omit अत्र. ४. D. and G. विषयाय for विवक्षया ; E. reads विषयात् for the same. ५. H. has चतुर्युगेषु instead of चतुर्षु युगेषु. ६. A. and I. read सुकरान्; D. सुशक्यान् for सुशकान्. ७. B. C. D. and F. read -हेतुधर्मान् for -हेतून् धर्मान् ; while E. reads -हेतूंश्च धर्मान् for the same. ८ M. reads यज्ञमेवोचुः for यज्ञमेवाहुः. ९. M. reads दानमेकं for दानमेव.

इति । तपः कृच्छ्र-चान्द्रायणादिरूपेण आहा[१]रवर्जनम् ।

'तपोनानशनात् परम्' (म. ना. उ. २१. २)

—इति श्रुतेः । यद्यपि दानस्यापि तपस्त्वं श्रूयते । 'एतत् खलु वाव तप इत्याहुः यत्स्वं[२] ददाति' (तै. सं. ६. १. ६. ३) इति । तथापि नात्र तद्विवक्षितम् । दानस्य पृथगुक्तत्वात् । ननु—व्यासेन तपो ऽन्यथा स्मर्यते—

'तपः स्वधर्मवर्त्तित्वं शौचं सङ्गनिबर्हणम्[३]' ।

इति । नायं दोषः । कृच्छ्रादेरपि स्वधर्मविशेषत्वात् । 'तप् सन्तापे' इत्यस्माद्धातोरुत्पन्नस्य तपःशब्दस्य देह-शोषणे वृत्तिर्मुख्या । अत एव स्कान्दे ऽभिहितम्—

'वेदोक्तेन प्रकारेण कृ[४]च्छ्र-चान्द्रायणादिभिः ।
शरीरशोषणं यत्तत् तप इत्युच्यते बुधैः' ॥

इति । यत्तु तत्रैवोक्तम्—

'को[५] ऽहं मोक्षः कथं केन[६] संसारं प्रतिपन्नवान् ।
इत्यालोचनमर्थज्ञास्तपः शंसन्ति पण्डिताः' ॥

इति । सो ऽन्य एव तपःशब्दः । 'तप् आलोचने'—इत्य-स्माद्धातोस्तदुत्पत्तेः । तत्[७] तपो ऽत्र ज्ञानशब्देन सङ्गृहीतम् ।

---

यत्तदद्रेश्यमग्राह्यं ( मुं उ. १. १. ५–६ )—इत्यादिना 'तत्रापरा ऋग्वेदो यजुर्वेदः' ( मुं. उ. १. १. ५ )—इत्यादिना चाथर्वणे प्रसिद्धे' इति व्याचख्यौ

१. A. and I. read अशन- for आहार-. २. A. B. C. E. F. H. and I. read यः स्वं ददाति; D. यत्स्वयं ददाति for यत्स्वं ददाति. ३. A. D. and I. read शौचं सङ्करवर्जनम् for शौचं सङ्गनिबर्हणम्. ४. We take our reading from A. and I.; though all others read तथा for कृच्छ्र-; D. omits it altogether. ५. A. and I. read कोऽसौ for कोऽहं. ६. E. G. and H. substitute तेन for केन. ७. A. has तत्र instead of तत्.

'पर' शब्दः प्राधान्येनानुष्ठेयतामाह। तर्हि—त्रेतादिषु तपो नाद्रियेत। कृते च[1] ज्ञान-यज्ञ-दानानि नाद्रियेरन्—इति चेत्। न। इतरव्यावृत्तिरूपायाः परिसंख्यायाः अत्र अविवक्षितत्वात्। न खलु इदानीं कश्चिदनुष्ठानविधिः वक्तुमुपक्रान्तः[2] येन विधिविशेषैः[3] परिसंख्या शङ्क्येत*। भविष्यति नु[4] 'षट्कर्माभिरत' (प. स्मृ. १. ३८) इत्यादिना तदुपक्रमः[5]। युगसामर्थ्यं केवलमत्र निरूप्यते। यथा वसन्ते पुष्पप्राचुर्यं ग्रीष्मे सन्तापबाहुल्यं इत्यादि ऋतुसामर्थ्यं तथा कृतादिसामर्थ्येन तपआदिप्राचुर्यं विवक्षितम्[6]। अत एव 'युगे युगे तु सामर्थ्यम्' (प. स्मृ. १. ६४) इति वक्ष्यति। सामर्थ्यज्ञानप्रयोजनं चाभिधास्यते—

'तेषां निन्दा न कर्त्तव्या युगरूपा हि ते द्विजाः' ॥
(प. स्मृ. १. ३३)

इति। एतत्[7]सामर्थ्यं बृहस्पतिरपि दर्शयति—

'तपो धर्मः कृतयुगे ज्ञानं त्रेतायुगे स्थितम्[8]।
द्वापरे चा[9]ध्वरः प्रोक्तस्तिष्ये दानं दया दमः' ॥

इति ॥ २३ ॥

---

* यत्र विधित्वस्यैवाभावः तत्र तद्विशेषरूपायाः परिसंख्यायाः शङ्कैव नास्तीति भावः। अज्ञातज्ञापकं प्रवृत्त्यङ्गप्रमितिजनकं अभिधानामकपदार्थान्तरबोधकपदघटितं वा वाक्यं विधिः। त्रिविधो ऽपि सो ऽत्र न सम्भवतीति तात्पर्यम्।

---

१. Except A. D. and I. all others omit च. २. G. reads -मुपाक्रान्तः for -मुपक्रान्तः. ३. D. and I. read विधिविशेषः शङ्क्येत for विधिविशेषः परिसंख्या शङ्क्येत. ४. A. omits नु. ५. H. reads तदुपक्रमे युगसामर्थ्यं instead of तदुपक्रमः। युगसामर्थ्यं. ६. E. omits विवक्षितम्. ७. From विवक्षितम् up to एतत्सामर्थ्यं the whole passage has been omitted by E. ८. A. reads स्थितम् for स्मृतम्. ९. G. substitutes वा for च.

धर्मान् विभज्य[1] तत्प्रमाणानि[2] विभजते[3]—

**कृते तु मानवा धर्मास्त्रेतायां गौतमाः स्मृताः ।**
**द्वापरे शाङ्ख-लिखिताः[4] कलौ पाराशराः स्मृताः॥२४॥**

इति । मानवादिग्रन्थोक्तधर्माणां प्रचुरप्रवृत्त्या ग्रन्थ-प्रामाण्यप्राचुर्यमर्थसिद्धम् ॥ २४ ॥

धर्मवदधर्मस्यापि वक्तुमिष्टत्वात्* अधर्मप्रापकं स्थानविशेषं हेयतया विभजते[5]—

**त्यजेद्देशं कृतयुगे त्रेतायां ग्राममुत्सृजेत् ।**
**द्वापरे कुलमेकं तु कर्त्तारं तु कलौ युगे ॥ २५ ॥**

इति । पतितः पुमान्[6] प्राधान्येन[7] यस्मिन् एकेन[8] राज्ञा परिपालिते[9] ग्रामसमूहात्मनि[10] देशे निवसेत् स देशः सर्वो ऽपि कृते सामर्थ्यात् अधर्मापादकः । एवं ग्रामे ऽपि योज्यम् । कुलत्यागो नाम पतितस्य कुले विवाह-भोजनाद्यप्रवृत्तिः कर्त्तृत्यागः सम्भाषणादिवर्जनम् ॥ २५ ॥

---

* केचन अधर्मो न वक्तव्य इत्याचक्षते । तेषां मते धर्मस्वरूपे उक्ते तदतिरिक्तोऽधर्म इति पारिशेष्येणैव तदभिधानं भवतीति ।

---

१. Our reading coincides with A. and I., while B. C. E. F. G. read विवक्ष्य, D. विवक्षन्; and H. विविच्य for विभज्य. २. Here we take our reading from D., but A. and I. read तद्वत् प्रमाणानि; and all others तद्वत्तत्प्रमाणानि for the simple तत्प्रमाणानि. ३. B. reads विवक्ष्यन्ते, C. and F. विवक्ष्यते, E. and G. विवक्ष्यति, A. and I. विभज्यन्ते; all for विभजते. ४. A. D. I. J. K. and L. read शङ्ख-for शाङ्ख-; M. takes singulars of the plurals. ५. A. and I. read विभज्यते for विभजते. ६. Except A. D. and I. all others omit पुमान्. ७. A. and D. omit प्राधान्येन. ८. A. substitutes येन केन for एकेन. ९. E. H. and I. read परिपाल्यमाने instead of परिपालिते; D. परिपालितग्राम-. १०. D. reads -समाहारात्मनि instead of -समूहात्मनि.

त्याज्यदेशवन् निमित्तान्यपि त्याज्यानि विभजते[1]–

कृते सम्भाषणादेव[2] त्रेतायां स्पर्शनेन च।
द्वापरे त्वन्नमादाय कलौ पतति[3] कर्मणा ॥ २६ ॥

इति। कृतादिष्विव कलौ पतितसम्भाषणादिना न स्वयं पतति। किन्तु वधादिना कर्मणा पतितो भवति ॥ २६ ॥

महापुरुषतिरस्कारादौ तदीयशापपरिपाकहेतुं कालं[4] विभजते–

कृते तात्कालिकः[5] शापः त्रेतायां दशभिर्दिनैः।
द्वापरे चैकमासेन कलौ संवत्सरेण तु[6] ॥ २७ ॥

इति ॥ २७ ॥

धर्मस्य तारतम्यापादकानि निमित्तानि विभजते–

अभिगम्य कृते दानं त्रेतास्वाहूय दीयते।
द्वापरे याचमानाय सेवया दीयते कलौ ॥ २८ ॥

इति। यत्र प्रतिग्रहीता वर्त्तते तत्र दाता स्वयं गत्वा गुरुमिव तमभिगम्य कृते दानं करोति। त्रेतायां तु प्रतिग्रहीतारमाहूय तस्मै दीयते। त्रेतासु इति बहुवचनं कृत-द्वापरा-

---

१. B. C. and F. read विभज्यन्ते for विभजते. २. M. reads the verse as follows:—कृते सम्भाषणात् पापं त्रेतायां चैव दर्शनात्। द्वापरे चान्नमादाय कलौ पतति कर्मणा ॥. But it seems that none of the three commentators regard the reading. ३. C. D. and F. read पतितकर्मणा instead of पतति कर्मणा. ४. All except A. read -परिपाकहेतुकालं for -परिपाकहेतुं कालं. ५. We prefer this reading because it is reading of many, and secondly it seems though there is no commentation on the verse still नन्दपण्डित seems to prefer this reading. A. I. J. K. and L. read तत्क्षणिकः for it, this also is the reading of धरणीधर; and D. reads तत्कालतः for the same; while M. has तु तत्क्षणात् for तात्कालिकः. ६. A. and I. omit तु.

जातावेकवचनमिति प्रदर्शनार्थम् । द्वापरे स्वयमागत्य याचमानाय प्रतिग्रहीत्रे दीयते । कलौ न याञ्चामात्रेण दीयते[1] । किन्तु सेवया । बृहस्पतिरपि अमुं विभागमाह–

'कृते प्रदीयते गत्वा त्रेतास्वानीयते गृहे ।
द्वापरे च प्रार्थयतः कलावनुगमान्विते' ॥

इति ॥ २८ ॥

निमित्तकृतं तारतम्यं दर्शयति–

**अभिगम्योत्तमं दानमाहूयैव[2] तु मध्यमम् ।**
**अधमं याचमानाय[3] सेवादानं तु[4] निष्फलम्॥ २९ ॥**

इति । उत्तमत्वाद्यवान्तरविशेषः पुराणसारे फलद्वारेणोपपादितः ।

'गत्वा यत् दीयते दानं तदनन्तफलं स्मृतम् ।
सहस्रगुणमाहूय याचितं तु तदर्द्धकम् ॥
अभिगम्य तु यद्दानं यद्वा दानमयाचितम् ।
विद्यते सागरस्यान्तः तस्यान्तो नैव विद्यते' ॥

इति ॥ २९ ॥

कलिधर्माणामस्मिन् ग्रन्थे प्राधान्येन वक्ष्यमाणत्वात् कलिसामर्थ्यं विशेषतः प्रपञ्चयति–

**जितो धर्मो[5] ह्यधर्मेण सत्यं[6] चैवानृतेन च ।**
**जिताश्चौरैश्च[7] राजानः स्त्रीभिश्च[8] पुरुषाः कलौ[9] ॥३०॥**

१. A. and I. omit दीयते. २. M. reads आहूतश्चैव मध्यमम् for आहूयैव तु मध्यमम्. ३. G. याच्यमानं स्यात् instead of याचमानाय. ४. H. च for तु. ५. M. reads धर्मो जितो ह्यधर्मेण instead of जितो धर्मो ह्यधर्मेण, C. and F. जिता धर्मस्त्वधर्मेण for the same. ६. D. जितः सत्यो ऽनृतेन च for सत्यञ्चैवा ऽनृतन च. ७. M. substitutes भृत्यैः for चौरैः. ८. A. substitutes तु for च ९. M. replaces कलौ by जिताः.

सीदन्ति चाग्निहोत्राणि गुरुपूजा प्रणश्यति ।
कुमार्यश्च प्रसूयन्ते अस्मिन्[1] कलियुगे सदा ॥ ३१ ॥

इति । अधर्मस्य जयो नाम पादत्रयोपेतत्वम् । एकेन पादेन वर्त्तमानत्वं धर्मस्य पराजयः । तदाह बृहस्पतिः–

'तिष्ये ऽधर्मस्त्रिभिः पादैर्धर्मः पादेन संस्थितः' ।

इति । सत्यानृतयोर्धर्माधर्मरूपत्वे ऽपि पृथगुपादानं धर्माधर्मावुदाहृत्य प्रदर्शनार्थम् । यावत्[2] यावत् कलिर्विवर्द्धते तावत्तावदधर्मो विवर्धत इति विवक्षया चोराद्युदाहरणबाहुल्यम् । तदुक्तं विष्णुपुराणे–

'यदा यदा सतां हानिर्वेदमार्गानुसारिणाम् ।
तदा तदा कलेर्वृद्धिरनुमेया विचक्षणैः[3] ॥
न प्रीतिर्वेदवादेषु पाषण्डेषु दयारसः[4] ।
तदा तदा कलेर्वृद्धिरनुमेया द्विजोत्तमैः[5]' ॥

(वि॰ पु॰ ६. १. ४५–४६)

इति ॥ ३०–३१ ॥

यदुक्तं 'तपः परं कृतयुगे' इत्यादि तत्र हेतुमाह–

---

१. A. B. C. E. F. G. H. I. and M. read तस्मिन् for अस्मिन्; while D. reads कस्मिन्. २. C. D. F. and G. have only one यावत् followed by only one तावत्; B. repeats यावत् but not तावत्. ३. C. and G. read द्विजोत्तमैः for विचक्षणैः, this appears to be a mistake of the writer who has mistaken अनुमेया in the second verse for that of the first verse, and consequently has passed over the second verse altogether. ४. D. reads सदा रतिः for दयारसः. ५. For द्विजोत्तमैः D. reads विचक्षणैः.

कृते[1] त्वस्थिगताः प्राणास्त्रेतायां मांसमाश्रिताः।
द्वापरे रुधिरं चैव कलौ त्वन्नादिषु स्थिताः॥ ३२॥

इति। प्राणशब्दो वायुविशेषं वृत्तिपञ्चकोपेतं हृदयादि-स्थाननिवासिनं[2] माचष्टे। प्राणस्वरूपं च मैत्रेय[3]शाखायां विस्पष्टं श्रूयते—

'प्रजापतिर्वा एको ऽग्रे ऽतिष्ठत्[4] स नारमतैकः स आत्मान-मभिध्यायन् बह्वीः प्रजा असृजत। ता अश्मेवाऽप्रबुद्धा अप्राणाः स्थाणुरिव सन्तिष्ठमानाः सो ऽपश्यत्। स नारमत सो ऽमन्यत एतासां प्रतिबोधनायाभ्यन्तरं विशानि इति। स वायुमिवात्मानं कृत्वा ऽभ्यन्तरं प्राविशत् स एको नादात्मकं पञ्चधा ऽऽत्मानं प्र-विभज्योच्यते। यः प्राणो ऽपानः समान उदानो व्यान इति। अथ योयमतिर्यगूर्ध्वमुत्क्रामयति एष वाव स प्राणः। अथ यो ऽयम-वाञ्चं संक्रामति एष वाव सो ऽपानो ऽथ यो ऽयं स्थविष्ठमन्नधातु-मपाने स्थापयति अणिष्ठे चाङ्गे समं नयति एष वाव समानो ऽथ यो ऽयं पीताशितमुद्गिरति निगिरति एष वाव स उदानो ऽथ येनैताः शिरा अनुव्याप्ता एष वाव स व्यानः'।

(मै. उ. २, ६)

इति। अश्मेव पाषाणवदित्यर्थः। वाक्-चक्षुरादीनीन्द्रिया-

१. M. places this verse before the two previous verses ३० and ३१ of the original that is before: जितोऽधर्मो, &c., reading-कृते चास्थिगताः, मांससं-स्थिताः, रुधिरं यावत् and कलावन्नादिषु. २. H. reads -निवासं for -निवासिनं. ३. All except A. and D. read मैत्र- for मैत्रेय.- ४. B. C. E. and F. ऽग्रे ऽतिसत्, G. ऽग्रेऽतिसन्, H. ऽग्रे निवसत् and D. ऽग्रे ऽतिष्ठन्; all for ऽग्रे ऽतिष्ठत्.

ण्यपि प्राणाधीन[१]व्यापारत्वात्[२] प्राणशब्देन व्यवह्रियन्ते । अत एव छन्दोगा आमनन्ति—

'न वै वाचो न चक्षूंषि न श्रोत्राणि न
मनांसीत्याचक्षते प्राण इत्येवाचक्षते' ।

(छां. उ. ५. १. १५)

इति ।

तस्मात् इन्द्रिय-वायुसमुदायरूपं लिङ्गशरीरं लोकान्तरगमनागमनक्षमं[३] प्राणशब्देन विवक्षितम् । तच्च अस्थिमांसादिमये स्थूलशरीरे कर्मरज्जुभिर्निर्बध्यते[४] । तच्च[५] बन्धनं तत्तद्युगसामर्थ्यादस्थ्यादिषु[६] व्यवतिष्ठते । तथा च कृच्छ्र-चान्द्रायणाद्यर्थं[७] आहारपरित्यागात् मांसाद्यपक्षये[८] ऽप्यस्थ्नां सहसाऽनुपक्षयात् प्राणानामव्याकुलतेति कृतयुगे तपः सुकरम् । त्रेतादिषु मांसाद्यपक्षयेण[९] प्राणानां व्याकुलत्वात् तपो दुष्करम् । यद्यपि प्राणानां मांसाद्याश्रयेण ज्ञानादिषूपयोगविशेषो[१०] दुर्भणः[११] । तथापि तपसो ऽसम्भवं वक्तुं तद्वर्णनम् । अत एव कूर्मपुराणे युगान्तराभिप्रायेण तपोऽन्तरं वर्णितम्—

---

१. D. reads प्राधान्य- for प्राणाधीन-. २. H. reads व्यापारवत्त्वात् instead of व्यापारत्वात्. ३. A. and I. read -गमनक्षमं instead of -गमनागमनक्षमं. ४. B. C. F. and I. -विबध्यते, and E. G. H. simply -बध्यते for -निबध्यते. ५. G. and H. read तत्र for तच्च, as also B. C. and F. ६. B C. and F. read merely -युगसामर्थ्यादिषु instead of -युगसामर्थ्यादस्थ्यादिषु. ७. A. and I. read -चान्द्रायणादिषु अन्नाद्याहार- for -चान्द्रायणाद्यर्थं आहार-. ८. A. and I. read मांसाद्युपक्षये for मांसाद्यपक्षये; D. reads for the same मांसाद्यपेक्षया. ९. A. and H. read -द्युपक्षयेण instead of -द्यपक्षयेण. १०. B. C. and F. read ज्ञानादिरूपयोगाविशेषो; and E. G. H. ज्ञानाद्युपयोगाविशेषो for ज्ञानादिषूपयोगविशेषो. ११. I. reads दुर्लभः for दुर्भणः.

'अहिंसा सत्यवचनमानृशंस्यं दमो[1] घृणा ।
एतत्तपो विदुर्धीरा न शरीरस्य शोषणम्' ॥
(म. भा. शां. रा. ७९. १८)

इति ॥ ३२ ॥

इदानीं युगसामर्थ्यवर्णनस्य प्रयोजनमाह—

युगे युगे च ये धर्मास्तत्र च[2] ये द्विजाः ।
तेषां निन्दा न कर्त्तव्या युगरूपा हि ते द्विजाः॥३३॥

इति । युगरूपाः युगानुरूपाः कालपरतन्त्रा इति यावत् । तदुक्त[3]मारण्यपर्वणि—

'भूमिर्नद्यो नगाः शैलाः[4] सिद्धा देवर्षयस्तथा ।
कालं तमनुवर्त्तन्ते यथा[5] भावा युगे युगे ॥
कालं[6] कालं समासाद्य नराणां नरपुङ्गव[7] ।
बल-[8]वर्ष्म-प्रभावादि[9] प्रभवन्त्युद्भवन्ति च' ॥

इति ॥ ३३ ॥

ननु—एवं कलौ पापिनामनिन्द्यत्वात् कृत्स्न[10]धर्माधर्म-व्यवस्थापकं[11] शास्त्रं विप्लवेत । तथा हि[12]—

'जितो धर्मो ह्यधर्मेण' (प. स्मृ. १. ३०)

१. A. reads तपो घृणा instead of दमो घृणा. २. B. C. and F. read तत्र हि ते, and E. G. H. तत्र हि ये; both for तत्र च ये. ३. A. reads यदुक्तं for तदुक्तं. ४. A. and I. read -गाश्चैते instead of -गाः शैलाः, and कालं समनुवर्त्तन्ते for कालं तमनुवर्त्तन्ते; H. for the same कालान्तमनुवर्त्तन्ते. ५. A. and I. read तथा for यथा. ६. For the first कालं D. reads काले. ७. A. and I. read नरपुङ्गवाः instead of नरपुङ्गव. ८. A. and I. read बल-वर्ण- for बल-वर्ष्म-. ९. A. D. and I. read -प्रभावा हि instead of -प्रभावादि. १०. Except B. all others read कृत्स्नं धर्माधर्म- for कृत्स्नधर्माधर्म-. ११. All except H. read -व्यवस्थापकशास्त्रं for -व्यवस्थापकं शास्त्रं. १२. B. C. and F. omit हि.

इति यदुक्तं तत्र 'धर्मं चर[1]' (तै. उ. ११. १.) इति श्रूयमाणो विधिः पीडयेत।

'नास्ति सत्यात् परो धर्मो नानृतात् पातकं परम्।
स्थितिर्हि सत्ये धर्मस्य तस्मात् सत्यं न लोपयेत्' ॥

इति राजे[2]धर्मेषूक्तम्। तच्च अनृतस्यानिन्द्यत्वे बा[3]ध्येत।

'अदण्ड्यान् दण्डयन् राजा दण्ड्यांश्चैवाप्यदण्डयन्।
अयशो महदाप्नोति नरकं चै[4]वं गच्छति' ॥

(म. स्मृ. ८. १२८)

इति[5] वचनं चोरस्यानिन्द्यत्वे बाध्येत।

'स्त्रीभिर्भर्तृवचः कार्यमेष धर्मः परः स्त्रियाः'।

(या. स्मृ. १. ७७.)

इति याज्ञवल्क्योक्तिः[6]—

'भर्त्तारं लङ्घयेद् या तु स्त्री ज्ञातिगुणदर्पिता।
तां श्वभिः खादयेद्राजा संस्थाने बहुसंस्थिते' ॥

(म. स्मृ. ८. ३७१.)

इति मनूक्तिः[7]—

'परित्याज्या त्वया[8] भार्या भर्त्तुर्वचनलङ्घिनी।
तत्र दोषो न चास्तीति त्वं हि वेत्थ[9] यथातथम् ॥

१. All except A. and I. read चरेत् for चर. २. D. reads simply इति यत् omitting the following;—राजधर्मेषूक्तम्. ३. D. बाध्यते for बाध्येत. ४. D. reads प्राप्ति in the place of चैव. ५. D. adds राजधर्मेषूक्तं after इति and before वचनं, and again बाध्यते for बाध्येत. ६. D. याज्ञवल्क्योक्तेः for याज्ञवल्क्योक्तिः. ७. B. C. and F. add अपि after मनूक्तिः; D. reads मनूक्तेः. ८. B. reads तु या; D. च या for त्वया. ९. Except A. D. and I. all others read वेत्सि for वेत्थ.

सर्वलक्षणयुक्तापि या तु भर्त्तुर्व्यतिक्रमम् ।
करोति सा परित्याज्येत्येष धर्मः सनातनः' ॥

इति ब्रह्मपुराणे महर्षीणामुक्तिः । तदिदमुक्तित्रयं स्त्रीजितस्य अनिन्दायां बाधितं स्यात् । अच्छिद्रकाण्डे अग्निहोत्र-प्रायश्चित्तं बहुधा श्रुतम् । आश्वमेधिके पर्वणि चैवाप्युक्तम् ।

'होतव्यं विधिवद्राजन् ऊर्ध्वामिच्छति यो गतिम् ।
आजन्मसत्रमेतत् स्यादग्निहोत्रं युधिष्ठिर ॥ (८८)
न त्याज्यं क्षणमप्येतद् गृहीतव्यं द्विजातिभिः । (८९)
यच्चैतन्यं पृथिव्यां हि किञ्चिदस्ति चराचरम् ॥
तत् सर्वमग्निहोत्रस्य कृते सृष्टं स्वयम्भुवा ॥ (५६)
नावबुध्यन्ति ये चैवं नरास्तु तमसाऽऽवृताः ।
ते यान्ति नरकं घोरं रौरवं नाम विश्रुतम्' ॥ (७९)
(वृ. गौ. स्मृ. १५)

इति । तदेतत् श्रुति-स्मृतिद्वयमग्निहोत्रावसादस्यानिन्दायां बाध्येत ।

'गुरोरनिष्टाचरणं गुरोरिष्टविवर्जनम् ।
गुरोश्च सेवाऽकरणं ज्ञानानुत्पत्तिकारणम् ॥

---

१. D. reads परित्याज्या ह्येष for परित्याज्येत्येष. २. D. reads only तदिदमुक्तं omitting त्रयं. ३. We read with H.; all others read -स्त्रीविजयस्य for स्त्रीजितस्य. ४. A. B. and E. read आश्वमेधिकपर्वणि instead of आश्वमेधिके पर्वणि. ५. A. and I. read -मिच्छन्ति ये for -मिच्छति यो. ६. Except A. and D. all read आत्मकं सत्रमेतत् for आजन्मसत्रमेतत्; D. आत्मजं सत्र-. ७. For यच्चैतन्यं B. C. and F. यज्ञेतव्यं, E. यद्धोतव्यं, and G. H. यच्चेतव्यं. ८. B. C. and F. चैनं for चैवं; A. D. G. I. चैतत् for the same; and E. चैतं. ९. A. omits तदेतत्. १०. H. and I. read simply स्मृतिद्वय-.

आचार्यनिन्दाश्रवणं तद्बाधस्य* च दर्शनम् ।
विवादश्च तथा तेन ज्ञानानुत्पत्तिकारणम्' ॥

इति स्कन्दपुराणवचनम्[1] । एतच्च गुरुपूजाप्रणाशस्य[2] अनिन्दायां बाध्येत ।

'प्राप्ते तु द्वादशे वर्षे[3] यः कन्यां न प्रयच्छति ।
मासि मासि रजस्तस्याः[4] पिता पिबति शोणितम्' ॥
(य. स्मृ. २२)

इति यमवचनम् ।

'पितुर्गृहे तु या कन्या रजः पश्यत्यसंस्कृता ।
भ्रूणहत्या पितुस्तस्याः सा कन्या वृषली स्मृता' ॥
(वि. स्मृ. २४. ४१.)

इति वचनम् । एतदुभयं[5] कुमारीप्रसवस्यानिन्दायां बाध्येत । ततः कथमनिन्दा? इत्यत आह—

**युगे युगे तु सामर्थ्यं शेषं मुनिविभाषितम् ।**
**पराशरेण चाप्युक्तं प्रायश्चित्तं विधीयते ॥ ३४ ॥**

इति । शेषं अवशिष्टं तत्तद्युगसामर्थ्यं मुनिभिरन्यैर्विशेषेण भाषितम् । तथा चारण्यपर्वणि पठ्यते—

'कृतं नाम युगं श्रेष्ठं यत्र धर्मः[6] सनातनः ।
कृतमेव न कर्त्तव्यं तस्मिन् काले युगोत्तमे' ॥ (११)

---

*बाधः परिभवः । क्वचित् 'तद्वधस्य' इत्यपि पाठः ।

---

१. A. and I. स्कान्दपुराण- for स्कन्दपुराण-. २. A. and D. substitute -शुश्रूषा- for -पूजा-. ३. All except A. and I. read प्राप्ते द्वादशमे instead of प्राप्ते तु द्वादशे. ४. A. D. and H. read तस्य for तस्याः. ५. All except D. read तदुभयं; while B. तदीय. ६. D. reads धर्माः सनातनाः instead of धर्मः सनातनः.

न तत्र धर्माः सीदन्ति न क्षीयन्ते[१] च वै प्रजाः ।
ततः कृतयुगं नाम कालेन गुणतां गतम् ॥ (१२)
कृते युगे चतुष्पादः श्वेतवर्णः[२] स चाच्युतः ।
एतत्[३] कृतयुगं नाम त्रैगुण्यपरिवर्जितम् ॥ (२२)
पादेन ह्रसते ऽधर्मो रक्ततां याति चाच्युतः । (२३)
सत्यप्रवृत्ताश्च नराः क्रियाधर्मपरायणाः ।
ततो यज्ञाः प्रवर्त्तन्ते धर्म्याश्च विविधाः क्रियाः ॥ (२४)
स्वधर्मस्थाः क्रियावन्तो जनास्त्रेतायुगे ऽभवन् । (२६)
विष्णुः पीतत्वमायाति चतुर्द्धा वेद एव च । (२७)
सत्यस्य[४] इह विभ्रंशः सत्ये कश्चिदवस्थितः ।
सत्यात् प्रच्यवमानानां व्याधयो बहवो ऽभवन् ॥ (३०)
कामाश्चोपद्रवाश्चैव[५] तथा दैवतकारिताः । (३१)
कामकामा ह्यर्थकामा यज्ञांस्तन्वन्ति चापरे ।
एवं द्वापरमासाद्य प्रजाः क्षीयन्त्यधर्मतः ॥ (३२)
पादेनैकेन कौन्तेय धर्मः कलियुगे स्थितः । (३३)
वेदाचाराः प्रशाम्यन्ति धर्म[६]-यज्ञक्रियास्तथा ।
इतयो[७] व्याधयस्तन्द्री दोषाः क्रोधादयस्तथा' ॥ (३४)

(म. भा. व. १४९. ११–३४)

---

१. A. and I. substitute जीर्यन्ते for क्षीयन्ते. २. B. C. E. F. G. and H. read चातुर्वर्ण्यश्च शाश्वतः; whose correct form appears to be चातुर्वर्ण्यं च शाश्वतम्, to be found in A. I. When we read in the next but one line, we think we are justified in adopting the reading in the text. ३. A. omits the whole line. ४. A. reads सत्ये नाऽस्त्येव विभ्रंशो, and E. G. H. सत्यस्य त्विह विभ्रंशो ; for सत्यस्य इह विभ्रंशः. ५. B. and H. read कामश्चोपद्रवाश्चैव instead of कामाश्चोपद्रवाश्चैव. ६. B. C. E. F. G. and H. धर्मो यज्ञ- for धर्म-यज्ञ-. ७. A. reads आधयो for इतयो.

इति । तत्रैव—

'ब्राह्मणाः क्षत्रिया वैश्याः सङ्कीर्यन्तः परस्परम् ॥ (१७)
शूद्रतुल्या भविष्यन्ति तपःसत्यविवर्जिताः । (१८)
स्वभावात् क्रूरकर्माणश्चान्योन्यमभिशङ्किनः[1] ॥ (५६)
भवितारो नराः सर्वे सम्प्राप्ते युगसङ्क्षये' । (५७)
(म. भा. व. १९०. १७–५७)

इत्यादि । ब्रह्मपुराणेऽपि—

'दीर्घकालं[2] ब्रह्मचर्यं धारणं च कमण्डलोः* ।
गोत्रान्मातुः सपिण्डाच्च विवाहो गोवधस्तथा ॥
नरा-ऽश्वमेधौ मद्यं च कलौ वर्ज्यं[3] द्विजातिभिः' ।

इति । क्रतुरपि—

'देवराच्च† सुतोत्पत्तिर्दत्ता कन्या न दीयते ।
न यज्ञे गोवधः कार्यः कलौ न[4] च कमण्डलुः' ॥

---

* एतद्वचनमारभ्य 'निर्वर्तितानि कर्माणि' (पृ. १३७ पं. १०) इत्यन्तानि वाक्यानि बहुभिर्निबन्धकारैः कलिवर्ज्यप्रकरणत्वेन तत्र तत्र सङ्गृहीतानि दृश्यन्ते । कुत्रचित् पञ्चैव कर्माणि वर्ज्यान्युक्तानि कुत्रापि बहूनीति भेदः । तानि च सुखावबोधार्थं सङ्क्षेपेण व्याख्यास्यामः । कमण्डलोर्धारणमुक्तं व्यासेन स्नातकव्रतेषु—

'यज्ञोपवीतद्वितयं सोदकं च कमण्डलुम्' ।

इति । एतादृशः मृण्मयो वा कमण्डलुः ।

† देवरात् सुतोत्पत्तिस्तु—

---

१. -मविशङ्किताः is that of H. for -मभिशङ्किनः; these three lines beginning with ब्राह्मणा- are omitted by A. २. A. and G. read दीर्घकालब्रह्मचर्यं for दीर्घकालं ब्रह्मचर्यं. ३. Except E. and H. all others read वर्ज्या for वर्ज्यं. ४. B. C. E. F. and H. reverse the order of न and च.

इति । वायुपुराणे[१]ऽपि—

'ऊढायाः पुनरुद्वाहं* ज्येष्ठांशं[२] गोवधं तथा ।
कलौ पञ्च न कुर्वीत भ्रातृजायां कमण्डलुम्[३]' ॥

इति । तथा अन्येऽपि धर्मज्ञ[४]समयप्रमाणकाः सन्ति । यथा[५]—

'विधवायां प्रजोत्पत्तौ देवरस्य नियोजनम् ।
†बालिका-ऽक्षतयोन्योश्च वरेणान्येन संस्कृतिः[६] ॥
कन्यानामसवर्णानां विवाहश्च द्विजातिभिः ।
आततायिद्विजाग्र्याणां धर्मयुद्धे न हिंसनम् ॥

---

'अपुत्रां गुर्वनुज्ञातो देवरः पुत्रकाम्यया ।
सपिण्डो वा सगोत्रो वा घृताभ्यक्त ऋतावियात्' ॥

इत्यादिवचनैरुक्ता व्यासादिभिराचरिता चेति ज्ञेयम् ।

* ऊढाया अपि कन्यायाः पत्यौ मृते सति पुनरुद्वाह उक्तः । यथा—

'पुरा पुरुषसंयोगात् मृते देयेति केचन' ।

इति ।

† हेमाद्रौ 'बालायाः क्षतयोन्यास्तु' इति पठ्यते । अयमेव पाठो युक्त इति प्रतीमः । 'बालिका-ऽक्षतयोन्योः' इति द्विवचनान्तत्वात् द्वन्द्वे कृते बालिकाशब्दस्य नको ऽप्यर्थविशेषः सम्पद्यते । अनेन क्षतयोन्या अपि पूर्वस्मिन् युगे विवाहो विहित आसीदिति गम्यते । अन्यथा निषेधस्य वैयर्थ्यापातात् ।

---

१. Except D. all others merely पुराणेऽपि for वायुपुराणेऽपि. २. B. reads ज्येष्ठांशो गोवधस्तथा and H. ज्येष्ठांशं गोवधस्तथा. ३. D. कमण्डलुः for कमण्डलुम्. ४. G. reads धर्मज्ञे instead of धर्मज्ञ-. ५. A. and I. omit यथा. ६. All except A. substitute सङ्कृतिः for संस्कृतिः.

द्विजस्याब्धौ तु नौयातुः[१] शोधितस्यापि* सङ्ग्रहः।
सत्त्रदीक्षा[२] च सर्वेषां कमण्डलुविधारणम्॥
महाप्रस्थानगमनं† गोसंज्ञप्तिश्च गोसवे।
सौत्रामण्यामपि‡ सुराग्रहणस्य च[३] संग्रहः।
अग्निहोत्रहवण्याश्च[४]§ लेहो लीढापरिग्रहः[५]।
वानप्रस्थाश्रमस्यापि प्रवेशो विधिचोदितः॥
वृत्त-स्वाध्यायसापेक्षमघसङ्कोचनं तथा¶।
प्रायश्चित्तविधानं च विप्राणां मरणान्तिकम्॥
संसर्गदोषः स्तेनाद्यैर्महापातकनिष्कृतिः।
वरातिथि-पितृभ्यश्च पशूपाकरणक्रिया[६]॥

---

* शोधितस्य कृतप्रायश्चित्तस्य।

† एतच्च मनुनोक्तम्। यथा—
'अपराजितां वास्थाय व्रजेद्दिशमजिह्मगः। आनिपाताच्छरीरस्य युक्तो वार्यनिलाशनः'॥

‡ अत्र सुराग्रहस्यैव निषेधात् 'पयोग्रहा वा स्युः' इत्यापस्तम्बोक्तेः सुराग्रहस्य वैकल्पिकत्वात् पयोग्रहैः सौत्रामण्यनुष्ठाने न दोष इति सुधीभिरूह्यम्।

§ अग्निहोत्रहवनी यज्ञपात्रविशेषः। तत्र स्थितस्य हविषो लेह उक्तः।

¶ वृत्तं यायावर-गृहस्थाद्याचारः। स्वाध्यायो वेदः तदध्ययनं वा। अघं आशौचम्।

---

१. A. D. E. G. H. and I. read निर्याणं and B. C. F. निर्यातुः both for नौयातुः. २. D. substitutes त्रयी- for सत्त्र. ३. D. E. and G. substitute न for च. ४. G. and I. -हवन्याः for -हवण्याः. ५. B. C. D. E. and F. read लीढ-परिग्रहः for लीढापरिग्रहः; A. reads लीढो लेह्यापरिग्रहः for लेहो लीढा परिग्रहः. ६. B. C. and F. read पशूपाकरणी क्रिया for पशूपाकरणक्रिया.

दत्तौरसेतरेषां तु पुत्रत्वेन परिग्रहः ।
सवर्णान्याङ्गनादुष्टौ[1] संसर्गः शोधितैरपि ॥
अयोनौ[2] सङ्ग्रहे वृत्ते परित्यागो गुरुस्त्रियाः ।
*अस्थिसञ्चयनादूर्ध्वमङ्गस्पर्शनमेव च ॥
शामित्रं† चैव विप्राणां सोमविक्रयणं तथा ।
षड्भक्ता[3]नशनेनान्नहरणं[4] हीनकर्मणः‡ ॥
शूद्रेषु दास-गोपाल-कुलमित्रा-ऽर्द्धसीरिणाम् ।
भोज्यान्नता गृहस्थस्य तीर्थसेवाऽतिदूरतः ॥
शिष्यस्य गुरुदारेषु गुरुवद्वृत्तिरीरिता ।
आपद्वृत्तिर्द्विजाग्र्याणामश्वस्तनिकता तथा ॥
प्रजार्थं तु द्विजाग्र्याणां प्रजाऽरणिपरिग्रहः ।
ब्राह्मणानां प्रवासित्वं मुखाग्निधमनक्रिया ॥

---

* अत्रेदमधिकं हेमाद्रौ—
'परोद्देशान्यसन्त्याग उद्दिष्टस्यापि वर्जनम् ।
प्रतिमाभ्यर्चनार्थाय सङ्कल्पश्च सधर्मकः' ॥ इति ।

† शमिता यज्ञीयपशुहिंसकः तस्य कर्म शामित्रम् ।

‡ षड्दिनपर्यंतमलब्धाहारेण सप्तमे दिने हीनकर्मणोऽपि ग्राह्यम् । यथा—
'तथैव सप्तमे भक्ते भक्तानि षडनश्नता ।
अश्वस्तनविधानेन हर्तव्यं हीनकर्मणः' । इति ।

---

१. A. B. C. D. E. and F. read सवर्णानां तथा दुष्टैः for सवर्णान्याङ्गनादुष्टौ. २. B. C. D. and F. read सयोनौ for अयोनौ. ३. Except E. G. H. and I. all others read षड्भुक्ता for षड्भक्ता. ४. D. reads ग्रहणम् for हरणम्.

बलात्कारादिदुष्टस्त्रीसङ्ग्रहो विधिचोदितः।
यतेस्तु[1] सर्ववर्णेषु[2] भिक्षाचर्या विधानतः॥
नवोदके दशाहं* च दक्षिणा गुरुचोदिता।
ब्राह्मणादिषु शूद्रस्य पचनादिक्रियापि च॥
भृग्वग्निपतनैश्चैव[3] वृद्धादिमरणं तथा।
गोतृप्तिमात्रे[4] पयसि शिष्टैराचमनक्रिया॥
पिता-पुत्रविरोधेषु† साक्षिणां दण्डकल्पनम्।
यत्र[5] सायंगृहत्वं च सूरिभिस्तत्त्वतत्परैः[6]॥
एतानि लोकगुप्त्यर्थं कलेरादौ महात्मभिः।
निवर्त्तितानि‡ कर्माणि व्यवस्थापूर्वकं बुधैः॥
समयश्चापि साधूनां प्रमाणं वेदवद्भवेत्'§।

* 'दशाहेनैव शुद्ध्येत भूमिष्ठं च नवोदकं' इत्युक्तो दशाहोऽत्रानुसन्धेयः।

† पिता-पुत्रविवादे तु साक्षिणां त्रिपणो दमः' इत्यादिनोक्तः।

‡ एतानि कर्माणि निवर्तितानि। तथापि देवलेन 'यावद्वर्णविभागोऽस्ति यावद्वेदः प्रवर्तते। संन्यासं चाग्निहोत्रं च तावत्कुर्यात्कलौ युगे'॥ इत्यादिना व्यवस्थोक्ता।

§ इमान्युपरितनानि वचनानि कुत्रत्यानीति सम्यङ् न ज्ञायते। हेमाद्रौ आदित्यपुराणान्तर्गतानीति मदनपारिजाते सारसङ्ग्रहस्थानीति क्वचित् देवलवचनानीति चोक्तम्। मूलं तु न कुत्रापि दृश्यते।

१. D. substitutes एतेषु for यतेस्तु. २. A. and I. reads -वर्णेभ्यः for -वर्णेषु. ३. A. and I. read -पतनाद्यैश्च, G. -तपनैश्चैव for -पतनैश्चैव. ४. All except D. read गोतृप्तिशिष्टे, and D. गोतृप्तिसृष्टे; for गोतृप्तिमात्रे. ५. A. reads यतेः सायंगृहस्थत्वं, and all others except H. and G. यत्र सायं ग्रहस्थत्वं for यत्र सायंगृहत्वं च. We read with H. and G. ६. D. substitutes तत्त्वदर्शिनः- for तत्त्वतत्परैः.

इति। तदुक्तमापस्तम्बेनापि— 'धर्मज्ञसमयः प्रमाणं वेदाश्च' (आ. ध. सू. १. २) इति। एवमन्यदप्युदाहार्यम्। यथा मुनिभिस्तत्तद्युगसामर्थ्यं विधि-निषेधाभ्यां विशेषेण भाषितम्। तथा विहितातिक्रम-निषिद्धाचरणयोः प्रायश्चित्तमपि [1]चिरन्तनेन पराशरेणोक्तम्। पठ्यन्ते हि वृद्धपराशरस्य वचनानि—

'जरायु[2]जाऽण्डजाश्चैव जीवा[3]: संस्वेदजाश्च ये।
अवध्याः सर्व [4]एवैते बुधैः समनुवर्णितम्॥
निश्चयार्थं विबुद्धानां प्रायश्चित्तं विधीयते।
अनस्थि[5]शतमेकं तु यदि प्राणैर्वियोजयेत्॥
उपोष्यैकाहमादध्यात् प्राणायामांस्तु षोडश[6]।
त्रिःस्नानमुदके कृत्वा तस्मात् पापात् प्रमुच्यते॥
[7]अस्थिमद्वधे तु द्विगुणं प्रायश्चित्तं विधीयते।
अनेन विधिना वाऽपि स्थावरेषु न संशयः॥
कायेन पद्भ्यां हस्ताभ्यामपराधाद्वि[8]मुच्यते।
चतुर्गुणं कर्मकृते द्विगुणं वाक्य[9]दूषिते॥
कृत्वा तु मानसं पापं तथैवैकगुणं स्मृतम्'।

इति। चकारो याज्ञवल्क्य-मन्वादिसमुच्चयार्थः। प्रसिद्धा हि तदीयग्रन्थेषु प्रायश्चित्ताध्यायाः। पराशरग्रहणं तु

१. D. reads चिरन्तरेण for चिरन्तनेन. २. B. C. D. and F. read जरायुजोऽण्डजश्चैव, and G. जरायुजोऽण्डजाश्चैव for जरायुजाऽण्डजाश्चैव. ३. D. continues जीवो यः स्वेदजश्च यः instead of जीवाः संस्वेदजाश्च ये. ४. B. C. E. F. and G. read सर्वथैवैते for सर्व एवैते. ५. A. reads अनस्थिमल्पमेकं तु for अनस्थिशतमेकं तु. ६. Except A. and I. all others read द्वादश instead of षोडश. ७. E. reads अस्थिमद्वधेषु, and H. अस्थिवद्वधेषु; for अस्थिमद्वधे तु. ८. All except A. and E. read न मुच्यते, E. तदुच्यते; for विमुच्यते. ९. A. D. H. and I. read वाक्प्रदूषिते for वाक्यदूषिते.

कलियुगाभिप्रायम् । सर्वेष्वपि कल्पेषु पराशरस्मृतेः कलि-युगधर्मपक्षपातित्वात् । प्रायश्चित्तेष्वपि कलि[1]विषयेषु पराशरः प्राधान्येनादरणीयः[2] । अतः पराशर-मन्वादिप्रोक्तं प्रायश्चित्तं तत्तत्पापपरिहाराय विद्वत्परिषदा विधीयते । एतदुक्तं भवति । नानामुनिभिस्तत्तद्युगसामर्थ्यस्य प्रायश्चित्तस्य च[3] प्रपञ्चितत्वात् तदुभयं पर्यालोच्य निन्दाऽनिन्दयोः[4] व्यवस्था[5] कल्पनीया । यः पुरुषो युगसामर्थ्यमनुसृत्य विहितानुष्ठानं प्रतिषिद्धवर्जनं प्रमादकृतपापस्य[6] प्रायश्चित्तं च कर्तुं शक्तो ऽपि न कुर्यात् तद्विषयाणि—

'भ्रूणहत्या पितुस्तस्याः सा कन्या वृषली स्मृता' ।
(वि. स्मृ २४. ४१)

इत्यादि निन्दावचनानि । अशक्तविषयं 'तेषां निन्दा न कर्त्तव्या' इत्यादि वचनम् । अत एव शैवागमे पठ्यते—

'अत्यन्तरोगयुक्ताऽङ्ग[7]-राज-चोरभयादिषु ।
गुर्वग्नि-देवकृत्येषु नित्यहानौ न पापभाक्' ॥

इति । तस्मात् न कोऽपि धर्मशास्त्रस्य[8] विप्लवः इति ॥३४॥

ननु—उक्तप्रकारेण युगसामर्थ्यस्याशेषस्यानेकग्रन्थपरि-चयमन्तरेण दुर्बोधत्वात् कथं मन्दप्रज्ञानामल्पायुषां युगसाम-र्थ्यानुसारिणश्चातुर्वर्ण्यसमाचारस्य निर्णयः ? इत्यत आह—

---

१. Between कलि- and -विषयेषु, A. and I. insert -युग-. २. D. substitutes -नानुसरणीयः for -नादरणीयः. ३. Except B. C. and F. all others omit च. ४. G. E. and H. read निन्द्यानिन्द्ययोः for निन्दानिन्दयोः. ५. D. reads व्यवस्थाः कल्पनीयाः for the singulars. ६. All except A. and I. -कृतपापप्रायश्चित्तं for -कृतपापस्य प्रायश्चित्तं. ७. A. and I. read -युक्तेऽङ्गे, D. -युक्ताङ्गे and H. -युक्ताङ्गो; for -युक्ताङ्ग-. ८. All except H. read धर्माधर्मशास्त्रस्य instead of simply धर्मशास्त्रस्य.

अहमद्यैव तत्[1] सर्वमनुस्मृत्य ब्रवीमि वः[2] ।
चातुर्वर्ण्यसमाचारं शृण्वन्तु ऋषिपुङ्गवाः[3] ॥३५॥

इति । अनुस्मृतस्य[4] सर्वस्य सङ्क्षेप्याभिधानात् मन्दानामप्येतत् सुग्रहम् । 'अद्यैव'—इति कालविलम्बनिषेधात् अल्पायुषामप्यत्र ग्रन्थे निर्णयः सुलभः । चत्वारो वर्णाश्चातुर्वर्ण्यम् । तस्य समाचारो धर्मः । आचारशब्दः शीलापरपर्यायं[5] लौकिकं वृत्तमाचष्टे । समीचीनः शिष्टाभिमत आचारो यस्य धर्मस्य कारणत्वेन वर्त्तते सोऽयं यजन-याजनादिकर्मलक्षणो धर्मः समाचारः । अत एव आचार-धर्मयोर्हेतु-हेतुमद्रूपेण भेदं वक्ष्यति । 'आचारो धर्मपालकः' (प. स्मृ. १. ३७) इति । श्रुतिश्च धर्माचारौ भेदेन व्यपदिशति—

'यथाकारी यथाऽऽचारी तथा भवति'।

(बृ. उ. ४.४.५)

इति । श्रुत्यन्तरे च कर्म-वृत्तयोर्भेद आम्नायते—

'अथ यदि ते कर्मविचिकित्सा वा वृत्तविचिकित्सा वा स्यात्'

(तै. उ. १.११.३)

—इति । यद्यपि—

'शृणु पुत्र प्रवक्ष्यामि शृण्वन्तु मुनिपुङ्गवाः' ।

इत्यप्रमत्तत्वं पूर्वमेव उदितं[6] तथापि युगसामर्थ्यप्रपञ्चनेन व्यवहितत्वात् तदेव पुनः स्मार्यते[7] । अथ वा पूर्वोक्तं युग-

१. M. substitutes तद्धर्मं for तत् सर्वं. २. D. substitutes च for वः. ३ Except D. E. G. H. and J. all others मुनिपुङ्गवाः for ऋषिपुङ्गवाः. ४. A. and I. read अनुस्मृत्य for अनुस्मृतस्य. ५. A. and I. read simply शीलपर्यायः for शीलापरपर्यायं. ६. A. D. and I. read विहितं for उदितं. ७. A. reads स्मर्यते for स्मार्यते.

सामर्थ्यश्रवणविषयम् । इदं तु धर्म[1]श्रवणविषयम् । इत्यपुनरुक्तिः ॥३५॥

वक्ष्यमाणधर्मज्ञा[2]नस्य परमपुरुषार्थहेतुतां कैमुतिकन्यायेन अभिधातुं ग्रन्थपाठ-तदर्थज्ञाने प्रशंसति—

> पराशरमतं पुण्यं पवित्रं पापनाशनम् ।
> चिन्तितं ब्राह्मणार्थाय धर्मसंस्थापनाय च ॥३६॥

इति । पराशरेण प्रोक्तं ग्रन्थजातं 'पराशरमतं' । तच्च पाठमात्रेण पुण्यप्रदम् । पुण्यं च द्विविधम् । इष्टप्रापकमनिष्टनिवर्त्तकं च । तदुभयं 'पवित्र-पापनाशन' शब्दाभ्यां विवक्ष्य[3]ते । त[4]देवं ग्रन्थजातं 'चिन्तितं' अर्थतो विचारितं स[5]त् पूर्ववत् पुण्यप्रदं भवति । अर्थविचारस्य प्रयोजनं द्वेधा । स्वा[6]नुष्ठानं परोपदेशश्च । तदुभयं 'ब्राह्मण' इत्यादिपदद्वयेनोच्यते । ब्राह्मण[7]स्यार्थो ब्राह्मण्यनिमित्तं स्वधर्मानुष्ठानमिति यावत् । 'धर्मसंस्थापनं' परेषां धर्मोपदेशेनानुष्ठा[8]पनम् । य[9]दा ग्रन्थपाठ-तदर्थज्ञानयोरपीदृशो महिमा तदा किमु वक्तव्यमनुष्ठानं पुरुषार्थहेतुः—इति । युक्तं चैतत् । पराशरस्य

---

१. A. reads श्रवणं धर्मविषयम् for धर्मश्रवणविषयम्. २. A. D. and I. read ज्ञातस्य for -ज्ञानस्य ; and B. C. F. read अनुष्ठानस्य; for the same. ३. B. and F. read -उच्यते ; D. विभज्यते ; and C. E. G. H. विबुध्यते for विवक्ष्यते. ४. Except H. all others read तदेव ग्रन्थ- for तदेवं ग्रन्थ-. ५. D. E. G. and H. read तत् instead of सत्. ६. B. C. and F. read merely अनुष्ठानं for स्वानुष्ठानं. ७. A. reads ब्राह्मणार्थो instead of ब्राह्मणस्यार्थो. ८. C. and D. read अनुष्ठानम् for अनुष्ठापनम्. ९. A. and D. substitute यथा for यदा.

पुलस्त्य-वसिष्ठप्रसादलब्धवरेण सर्वशास्त्रहृदयाभिज्ञत्वम्[1]। तथा च विष्णुपुराणम्—

'वैरे महति मद्वाक्यात्[2] गुरोरप्याश्रिता[3] क्षमा।
त्वया तस्मात् समस्तानि भवान् शास्त्राणि वेत्स्यति[4]॥
सन्ततेर्न ममोच्छेदः[5] क्रुद्धेनाऽपि[6] यतः कृतः।
त्वया तस्मान्महाभाग ददाम्यन्यमहं वरम्[7]॥
पुराणसंहिताकर्त्ता भवान् वत्स भविष्यति।
देवतापारमार्थ्यं च यथावद्वेत्स्यते भवान्॥
प्रवृत्ते च निवृत्ते च कर्मण्यस्त्वमला[8] मतिः।
मत्प्रसादादसंदिग्धा तव वत्स भविष्यति॥
ततश्च[9] प्राह भगवान् वसिष्ठो[10] ऽस्मत्पितामहः।
पुलस्त्येन यदुक्तं ते सर्वमेतद्भविष्यति'॥

(वि. पु. १. १. २८–३१)

इति॥ ३६॥

## इत्याचारकाण्डे प्रथमाध्याये आचारावतारः समाप्तः॥

## ॥ ग्रन्थानुक्रमणिका च समाप्ता॥

१. Except A. and D. all others read -अभिज्ञत्वात् for -अभिज्ञत्वम्. २. B. reads तद्वाक्यात्, E. G. H. तद्वाक्ये, and D. यद्वाक्यात्; all for मद्वाक्यात्. ३. Except A. and D. all others read गुरोरस्याश्रिता for गुरोरप्याश्रिता. ४. After वेत्स्यति A. adds इति outside the verse. ५. E. G. H. and I. read समुच्छेदः for ममोच्छेदः. ६. B. C. F. H. and I. read क्रोधेनाऽपि for क्रुद्धेनापि. ७. B. C. F. and G. read ददाम्यन्यं महद्वरम्; while D. and H. ददाम्यन्यन्महद्वरम्; both ददाम्यन्यमहं वरम्. ८. H. reads कर्माणि त्वमला मतिः for कर्मण्यस्त्वमला मतिः ९. A. and I. omit the verse; but we think it is necessarily required here. For, in the preceding lines, the commentator says पुलस्त्य-वसिष्ठप्रसादलब्धवरेण. Then there must appear two gifts. Of these one only is described in the preceding eight lines Then there should be one वर as appearing in the introduced verse. १०. B. C. and F. read वशिष्ठो मत्पितामहः for वसिष्ठोऽस्मत्पितामहः.

अथाचारो निरूप्यते। यत् पृष्टम्—

'चातुर्वर्ण्यसमाचारं किञ्चित् साधारणं वद'।

(प. स्मृ. १.१७)

इति तत्रोत्तरमाह—

**चतुर्णामपि वर्णानामाचारो धर्मपालकः।**
**आचारभ्रष्टदेहानां भवेद्धर्मः पराङ्मुखः॥ ३७॥**

इति। आचारस्यान्वय-व्यतिरेकाभ्यामैहिकामुष्मिकश्रेयोहेतुत्वम्[1]। आचारलक्षणं च आनुशासनिके पर्वण्यभिहितम्—

'आचाराल्लभते ह्यायुराचाराल्लभते श्रियम्[2]।
आचारात् कीर्तिमाप्नोति पुरुषः प्रेत्य चेह च॥
दुराचारो हि पुरुषो नेहायुर्विन्दते महत्।
त्रसन्ति[3] चास्य भूतानि तथा परिभवन्ति च॥
तस्मात् कुर्यादिहाचारं यदीच्छेद् भूतिमात्मनः।
अपि पापशरीरस्य आचारो हन्त्यलक्षणम्[4]॥
आचारलक्षणो धर्मः सन्तश्चाचारलक्षणाः[5]।
साधूनां च यथावृत्तमेतदाचारलक्षणम्'॥

(म. भा. आ. १०४. ६–९)

---

१. Except A. C. and F. all others read -हेतूत्तरम् for -हेतुत्वम्. २. A. D. E. and G. substitute च for हि. ३. E. and G. अदनन्ति, D. त्रस्यन्ति; for त्रसन्ति; and in the text of Mahâbhârât यस्मात् त्रसन्ति. ४ D. reads ह्यस्य for हन्त्य. ५. In the text of Mahâbhârât -चारित्र-.

इति । हारीतोऽपि स्मरति—

'साधवः क्षीणदोषाः स्युः[1] सच्छब्दः[2] साधुवाचकः ।
तेषामाचरणं यत्तु स[3] सदाचार उच्यते' ॥

इति । मनुरप्याह[4]—

'यस्मिन्[5] देशे य आचारः पारम्पर्यक्रमागतः ।
वर्णानां सान्तरालानां स सदाचार उच्यते' ॥

(म. स्मृ. २. १८)

इति । सन्तः शिष्टाः । तेषां स्वरूपमाह भगवान् बौधायनः[6]—
'शिष्टाः खलु विगतमत्सरा निरहङ्काराः कुम्भीधान्याः अलोलुपाः दम्भ-दर्प-लोभ-मोह-क्रोधविवर्जिताः'—

(बौ. स्मृ. १. १. ५)

इति । आरण्यपर्वणि—

'अक्रुध्यन्तोऽनसूयन्तो निरहङ्कार-मत्सराः ।
ऋजवः शमसम्पन्नाः शिष्टाचारा भवन्ति ते ॥
त्रैविद्यवृद्धाः[7] शुचयो वृत्तवन्तो यशस्विनः[8] ।
गुरुशुश्रूषवो दान्ताः शिष्टाचारा भवन्ति ते[9]' ॥

(म. भा. व. २०७. ७८–७९)

---

१. All but A. and I. substitute तु for स्युः. २. B. C. F. and G. सच्छब्दाः साधुवाचकाः instead of the singulars. ३. In A. स follows सदाचारः instead of preceding it. ४. Except A. and H. all others omit मनुरप्याह, together with the following śloka. ५. I. and in the text of manu तस्मिन् for यस्मिन्. ६. A. and I. read बोधायनः for बौधायनः. ७. D. reads -विद्याः for -वृद्धाः. ८. In the text of Mahâbhârat मनस्विनः for यशस्विनः. ९ In the text of Mahâbhârat भवन्त्युत for भवन्ति ते.

इति । अत्र सर्वत्र[1]-शिष्टानामभिमतो दया-दाक्षिण्य-विनयाद्यन्वितो वृत्तविशेष आचारः—इत्युक्तं भवति । स सदाचारः[2] श्रौतं स्मार्तं[3] च धर्मं पालयति । सति सदाचारे[4] धर्मविघातिनां नैर्घृण्य-क्रोधादीनामभावात् । असति त्वाचारे विरोधिसद्भा[5]वात् धर्म एव न प्रवर्त्तेत[6] । कथञ्चित् प्रवृत्तो ऽपि परावर्त्तेत[7] । सो ऽयं धर्मपालक आचारश्चतुर्णां[8] वर्णानां साधारणः । ननु—'किञ्चित् साधारणं वद'—इति धर्मः पृष्टः प्रत्युत्तरं त्वाचारविषयं इति न सङ्गच्छते—इति चेत् । न । निमित्त-नैमित्तिकयोराचार-धर्मयोरभेदस्य विवक्षितत्वात् ॥ ३७ ॥

इदानीं ब्राह्मणस्यासाधारणं[9] धर्मं दर्शयति—

षट्कर्माभिरतो नित्यं देवता-ऽतिथिपूजकः ।
हुतशेषं तु भुञ्जानो ब्राह्मणो नावसीदति ॥ ३८ ॥

इति । यजन-याजना-ऽध्ययना-ऽध्यापन-दान-प्रतिग्रहाः षट्कर्माणि । तदाह मनुः—

'अध्यापनं चाध्ययनं यजनं याजनं तथा ।

---

१. A. omits सर्वत्र; while E. and H. read सर्वशिष्टानां for simply शिष्टानां. २. A. reads आचारः for सदाचारः; D. G. and H. omit सः and read सदाचारः merely. E. altogether omits the whole sentence. ३. Except A. and I. all others omit the expression श्रौतं स्मार्तं च; but H. in its margin has श्रौतस्मार्तं. ४. With the exception of E. all omit सति सदाचारे. This expression is not found in any of the MSS., but I think that the sentence without this expression gives no consistent complete idea. ५. D. विरोधसद्भावात् for विरोधिसद्भावात्. ६. A. and I. प्रवर्तते for प्रवर्त्तेत, ७. Again परावर्तते for परावर्त्तेत. ८. All except A. read चतुर्वर्णानां instead of चतुर्णां वर्णानां. ९. Except A. and D. all others read असाधारणधर्मं instead of असाधारणं धर्मं.

दान प्रतिग्रहश्चापि षट्कर्माण्यग्रजन्मनः' ॥

(म. स्मृ १०, ७५)

इति । तत्र अध्यापनं कूर्मपुराणे प्रपञ्चितम्—

'एवमाचारसम्पन्नमात्मवन्तमदाम्भिकम् ।
वेदमध्यापयेद् धर्मं पुराणाङ्गानि नित्यशः ॥
संवत्सरोषिते शिष्ये गुरुर्ज्ञानमनिर्दिशन् ।
हरते दुष्कृतं तस्य शिष्यस्य वसतो गुरुः ॥
आचार्यपुत्रः शुश्रूषुः कनिष्ठो धार्मिकः शुचिः ।
आप्तः शक्तोऽर्थदः साधुरध्याप्या दश धर्मतः ॥
कृतज्ञश्च तथा ऽद्रोही मेधावी शुभकृत्तरः ।
आप्तः प्रियो ऽथ विधिवत् षडध्याप्या द्विजोत्तमैः' ॥

(कू. पु. १. २. १४. ३७–४०)

इति । विष्णुरप्याह—

'नापरीक्षितं याजयेत् नाध्यापयेत् नोपनयेत्' ।

(वि. स्मृ. २९. ४–६)

इति । वसिष्ठश्च—

१. A. and E. read -धर्मपुराणा- for -धर्मं पुराणा-. २. A. substitutes ग्रसते for. हरते. ३. A. and in the text of Kûrma Purâna ज्ञानदो for कनिष्ठो. ४. All except A. read शक्तोऽर्थदो ऽर्थी स्वः साधु- for आप्तःशक्तोऽर्थदः साधु-; and in the text of Kûrma Purâna सूक्तार्थदो ऽरसः. ५. A. reads स्वोऽध्याप्या दश- instead of merely अध्याप्या दश. ६. B. C. and F. read कृत्योद्यतो यो न द्रोहि; E. G. and H. कृत्यो यतो यो अद्रोहि, for कृतज्ञश्च तथाऽद्रोही. ७. All except G. read -कृन्तरः for -कृत्तरः, and in the text of Kûrma Purâna तूपकृत्तरः for शुभकृत्तरः. ८. In the text of Kûrma Purâna द्विजातयः for द्विजोत्तमैः. ९. B. C. and F. read नापरिज्ञायाध्यापयेत्; E. G. and H. नापरिज्ञातमध्यापयेत् for नापरीक्षितम्. १०. With the exception of A. D. and G. all others omit याजयेत्; G. interchanges the places of याजयेत् and अध्यापयेत्. ११. A, and I. omit च.

'विद्या ह वै ब्राह्मणमाजगाम
गोपाय मा शेवधिष्टे ऽहमस्मि ।
असूयकाया ऽनृजवे ऽयताये[2]
न मां[3] ब्रूया ऽवीर्यवती तथा स्याम्' ॥

(व. स्मृ. २. ८ ; वि. स्मृ. २९. ९ ; मु. उ. १. ६१)

इति । अध्यापने नियममाह यमः—

'सततं प्रातरुत्थाय दन्तधावनपूर्वकम् ।
स्नात्वा हुत्वा च शिष्येभ्यः कुर्यादध्यापनं नरः' ॥

इति । मनुरपि—

'अध्येष्यमाणं[4] तु गुरुर्नित्यकालमतन्द्रितः ।
अधीष्व[5] भो इति ब्रूयाद्विरामो ऽस्त्विति चारमेत्' ॥

(म. स्मृ. २. ७३)

इति । अध्येष्यमाणः शिष्यः[6] । तं प्रति[7] वेदमुच्चारयिष्यन् प्रतिदिनमध्यापनप्रारम्भे अतन्द्रितः— '[8]अधीष्व भोः'—इति ब्रुवन्नारभेत । समाप्तौ 'विरामो ऽस्तु'—इति ब्रुवन्नुपरमेत ईश्वर[9]-प्रीतये । एतत् सर्वमभिप्रेत्य श्रुतिराह—

---

१. In the text of Vasishtha Smriti शेवधिस्ते for शेवधिष्टे. २. A. and I. read शठाय for ऽयताय. ३. Except E. and H. all others read मा for मां. ४. With the exception of H. all read अध्येष्यमाणस्तु for अध्येष्यमाणं तु. ५. E. reads अधीहि for अधीष्व. ६. For शिष्यः तं प्रति B. C. E. F. G. and H. read शिष्यान्प्रति ; besides C. and F. read अध्येष्यमाणशिष्यान्. ७. D. drops प्रति. ८. E. omits अध्यापनप्रारम्भे and reads अधीहि भो for अधीष्व भो, B. C. D. F. and G. omit the following:—प्रतिदिनं अध्यापनप्रारम्भे अतन्द्रितः 'अधीष्व भो' इति ब्रुवन्नारभेत and read प्रतिदिनमध्यापनसमाप्तौ &c. H. reads भो अधीष्व instead of अधीष्व भो. ९. With the exception of A. and I. all omit ईश्वरप्रीतये.

'अष्टवर्षं ब्राह्मणमुपनयीत । तमध्यापयीत'–इति ।

अत्र प्रभाकरो[1] मन्यते–'उपनयीत'–इति नयतेरात्मनेपदस्य आचार्यकरणे पाणिनिना सूत्रितत्वात् (पा.सू. १.३.३६) उपनयनाध्यापनयोश्चाङ्गाङ्गीरूपत्वेनैककर्तृकत्वात् आचार्यत्वकामोऽध्यापनेऽधिकारी । अत एव मनुना स्मर्यते–

'उपनीय तु[2] यः शिष्यं वेदमध्यापयेद्द्विजः ।
सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते[3]' ॥

(म. स्मृ. २. १४०)

इति । एवं चाध्यापनविधौ सुस्थिते सत्यप्य[4]ध्ययनस्य पृथग्विधिर्न कल्पनीयो भविष्यति । विहितस्याध्यापनस्याध्ययनमन्तरेणानुपपत्तेरध्ययनस्यार्थे–सिद्धत्वात् । ननु–नाध्ययन[5]विधौ कल्पनादोषोऽस्ति[6] । क्लृप्तस्यैव विधेः सत्त्वात् । 'स्वाध्यायोऽध्येतव्यः' (तै. आ. २. ११) इति श्रुतेः । मैवम् । अधिकार्यश्रवणे[7]नास्य[8] विधेरनुष्ठापकत्वायोगात् । अथोच्येत[9]–विश्वजिन्न्या[10]येन रात्रिसत्रन्यायेन[11] वाऽधिकारी परिकल्प्यताम्[12] । 'विश्वजिता यजेत' इत्यत्र 'एतत्[13]कामः'–इति नियोज्यविशेषणस्या[14]श्रवणात् अनु[15]ष्ठानाप्राप्तौ स्वर्गस्य सर्वैरिष्यमाणत्वात् स

१. B. C. E. F. and H. read प्राभाकरो for प्रभाकरो. २. For तु यः B C. D. and F. substitute गुरुः. ३. D. reads प्रकल्पते for प्रचक्षते ४. Except H. all others omit अपि. ५. G. reads नाध्यापन- for नाध्ययन- and D. चाध्ययन- for the same. ६. A. replaces अस्ति by स्यात् and omits the following:–क्लृप्तस्यैव विधेः सत्त्वात्. ७. D. and E. rea[d] -श्रवणे instead of -श्रवणेन. ८. All except G. and H. substitute तस्य fo[r] अस्य. ९. D. अथोच्यते. १०. A. reads विश्वजिन्नयेन for विश्वजिन्न्यायेन ११. G. omits रात्रिसत्रन्यायेन. १२. H. reads कल्पताम् for -कल्प्यताम् १३. A. तत् for एतत्. १४. A. विशेषस्य instead of विशेषणस्य. १५. Al[l] except A. read अननुष्ठानप्राप्तौ for अनुष्ठानाप्राप्तौ.

एव तद्विशेषणत्वेन परिकल्पितः। एवमत्र स्वर्गकामो माणवको नियोज्यो ऽस्तु। रात्रिसत्रे 'प्रतितिष्ठन्ति ह वा एते य एता रात्रीरुपयन्ति' इत्यर्थवादे श्रुतायाः प्रतिष्ठायाः [१]अत्यन्तमश्रुतात् स्वर्गतः प्रत्यासन्नतया प्रतिष्ठाकामोऽधिकारी कल्पितः। एवमत्र पयःकुल्यादिकामो ऽधिकारी स्यात्। 'यदृचो ऽधीते पयसः कुल्या अस्य पितॄन् स्वधा अभिवहन्ति। यद्यजूंषि घृतस्य कुल्याः। यत्सामानि सोम [२]एभ्यः पवते' (तै. आ. २. ११) [३]इत्यर्थवादात्–इति। मैवम्। पयःकुल्यादेर्ब्रह्मयज्ञविधिशेषत्वात् माणवकस्याप्रबुद्धत्वेन स्वर्गकामत्वाऽसम्भवाच्च। कथञ्चित् सम्भवे ऽप्यन्योन्याश्र[४]यत्वं दुर्वारम्। अधीते स्वाध्याये पश्चादध्ययनविध्यवगमः। तदव[५]गमे चाध्ययनम्–इति। तस्मात् अध्ययनस्याध्यापनप्रयुक्तत्वादध्यापनमेव विधीयते नाध्ययनम्' इति।

तदेतद्गुरुमतमन्ये वादिनो न क्षमन्ते। अनित्येनाध्यापनेन नित्यस्याध्ययनस्य प्रयोक्तुमशक्यत्वात्। अनित्यं चाध्यापनम्। जीवनकामस्य तत्राधिकारात्। [६]तदाह मनुः–

'षण्णां तु कर्मणामस्य त्रीणि कर्माणि जीविका।
याजनाऽध्यापने चैव विशुद्धाच्च प्रतिग्रहः' ॥

(म. स्मृ. १०. ७६.)

१. D. omits अत्यन्तम्. २. All except A. and G. read एकेभ्यः for एभ्यः. ३. B. C. and F. read इतोऽस्त्विति, D. -इत्यादि अस्ति, E. G. इत इति, and H. इत्यादिस्तुतिरिति, for simply इति. ४. D. and H. read -अयं for -अयत्वं. ५. G. and E. read अवगमने for अवगमे. ६. A. reads तथाह for तदाह.

इति । अध्ययनं तु नित्यम् । अकरणे प्रत्यवायस्य मनुना स्मृतत्वात्—

'योऽनधीत्य द्विजो वेदानन्यत्र कुरुते श्रमम् ।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः' ॥
(म. स्मृ. २. १६८; व. स्मृ. ३. २.)

इति । अतः स्वविधिप्रयुक्तमेवाध्ययनम् । न चा[१]स्त्यन्योन्याश्रयः । अध्ययनात् प्रागेव सन्ध्यावन्दनादाविव पित्रादिमुखेन विध्यर्थावगमात् । पित्रा[२]दिनियमितत्वादे[३]व माणवकस्य न अप्रबुद्धत्वदोषोऽस्ति । यद्यपि तैत्तिरीयशाखायाम्—'स्वाध्यायोऽध्येतव्यः' इति वाक्यस्य पञ्चमहायज्ञप्रकरणे पठितत्वाद् ब्रह्मयज्ञविधिरूपता[४] तथाप्यशेषस्मृतिषूपनयनपूर्वकस्या[५]ध्ययनस्य प्रपञ्च्यमानत्वान्मूलभूता श्रुतिरनुमातव्या[६] । विवरणकारस्तु—'अध्यापयीत' इत्यत्रापि[७] णिजर्थस्य जीवनार्थत्वेन रागतः प्राप्तत्वात् प्रकृत्यर्थस्याध्ययनस्य विधेयतामभिप्रेत्य 'अष्टवर्षो ब्राह्मण उपगच्छेत् । सोऽधीयीत' इति वाक्यं विपरिणमय्य[८] उपपादयामास । सर्वथाऽस्ति[९] नित्यः[१०] स्वाध्यायाध्ययनविधिः 'स्वाध्यायोऽध्येतव्य' इत्येवमात्मकः श्रौतः । तथा स्मृतिरपि—

१. A. E. G. and H. omit अस्ति ; A. and G. substitute वा for च. २. H. and I. read पित्रादिभिः instead of पित्रादि-. ३. A. reads एवं for एव. ४. A. reads विधिरयम् for विधिरूपता ; E. विधिः श्रूयते for the same. ५. A. reads -पूर्वकं स्वाध्यायस्य for -पूर्वकस्याध्ययनस्य. ६. We read with A. and I. all others read अनुगन्तव्या for अनुमातव्या. ७. Except B. C. and F. all others omit अपि. ८. E. G. and H. read विपरिणम्य for विपरिणमय्य. ९. A. reads सर्वथाप्यस्ति, B. C. E. F. H. सर्वथास्त्वस्ति, and D. सर्वथा स्वस्थः; all for सर्वथाऽस्ति. १०. All others except A. and D. read merely नित्य dropping the *visarga* after it.

'तपोविशेषैर्विविधैर्व्रतैश्च[१] विधिचोदितैः ।
वेदः कृत्स्नो ऽधिगन्तव्यः सरहस्यो द्विजन्मना' ।
(म. स्मृ. २. १६५)

इति । अधिगतिरर्थ[२]विचारपर्यन्तमध्ययनम् । तथा च कूर्मपुराणे अध्ययन-तदर्थविचारयोरभावे प्रत्यवायः स्मर्यते—

'यो ऽन्यत्र कुरुते यत्नमनधीत्य श्रुतिं[३] द्विजः[४] ।
स वै मूढो न सम्भाष्यो वेदबाह्यो द्विजातिभिः ॥
न वेदपाठमात्रेण सन्तुष्टो[५] वै भवेद्द्विजः ।
पाठमात्रा[६]वसायी तु पङ्के गौरिव सीदति ॥
यो ऽधीत्य विधिवद्वेदं वेदार्थं न विचारयेत् ।
स सान्वयः शूद्रसमः पात्रतां न प्रपद्यते' ॥
(कू. पु. १. २. १४. ८६–८८)

इति[७] । अध्ययनस्येतिकर्त्तव्य[८]तामाह याज्ञवल्क्यः—

'गुरुं चैवाप्युपासीत स्वाध्यायार्थं समाहितः ।
आहूतश्चाप्यधीयीत लब्धं चास्मै निवेदयेत् ॥
हितं चास्या[९]चरेन्नित्यं मनो-वाक्काय-कर्मभिः' ।
(या. स्मृ. १. २६–२७)

इति । विष्णुपुराणे ऽपि[१०]—

---

१. A. reads श्रौतैः, and D. श्रुतैः for व्रतैः. २. D. reads अधिगम्य-विचार- instead of अधिगतिरर्थविचार-. ३. Except A. E. and I. all others read श्रुतं for श्रुतिं. ४. In the text of Kûrma Purâna द्विजाः for द्विजः and for सवै मूढो न संमूढो. ५. In the text of Kûrma Purâna सन्तुष्येदेष वै for संतुष्टो वै भवेत्. ६. In the text of Kûrma Purâna एवमाचाररहितस्तु for पाठमात्रावसायी तु. ७. At the end of the line B. C. and F. have a redundant इति. ८. B. C. E. and F. read कर्तव्यमाह for कर्तव्यतामाह. ९. D. reads तस्य for चास्य. १०. A. omits अपि.

'उभे सन्ध्ये रविं भूप तथैवाग्निं समाहितः।
उपतिष्ठेत् तथा कुर्याद्गुरोरप्यभिवादनम्॥
स्थिते तिष्ठेद् व्रजेत् याति[1] नीचैरासीत चासिते[2]।
शिष्यो गुरोर्नरश्रेष्ठ प्रतिकूलं न सञ्चरेत्॥
तेनैवोक्तः[3] पठेद्वेदं नान्यचित्तः पुरःस्थितः।
अनुज्ञातश्च भिक्षान्नमश्नीयात् गुरुणा ततः॥
व्रतानि चरता ग्राह्यो वेदश्च कृत[4]बुद्धिना'।
(वि. पु. ३. ९. २-५)

इति। कौर्मे[5]ऽपि-
'आहूतो ऽध्ययनं कुर्याद्वीक्षमाणो गुरोर्मुखम्।
नित्यमुद्धृत[6]पाणिः स्यात् साध्वाचारः सुसंयतः'॥
(कू. पु. १. २. १४. १-२)

इति। स्वकुलपरम्पराऽऽगतायाः शाखायाः पाठो ऽध्ययनम्। तदाह वसिष्ठः-
'पारम्पर्यागतो येषां वेदः स परिबृंहणः।
तच्छाखं[7] कर्म कुर्वीत तच्छाखाऽध्ययनं तथा'॥
(व. स्मृ. ६. ४३)

इति। स्वशाखापरित्यागं स एव निषेधति-
'यः स्वशाखां परित्यज्य पारक्या[8]मधिगच्छति।
स शूद्रवद्बहिः कार्यः सर्वकर्मसु साधुभिः॥

१. A. has instead of याते for याति. २. A. B. C. and F. read चासने for चासिते, and D. reads वाऽऽसिते. ३. D. reads तेनैवोक्तं. ४. D. changes कृत- into धृत-. ५. With the exception of D. and H. all others read कूर्मेऽपि. ६. E. reads नित्यमक्षतपाणिः for नित्यमुद्धृतपाणिः, and in the text of Kûrma Purâna नित्यमुद्यतपाणिः स्यात् सन्ध्याचारसमन्वितः. ७. A. reads तच्छाखाकर्म- for तच्छाखं कर्म. ८. B. C. D. and F. read पारक्यमधिगच्छति.

[1]स्वीया शाखोज्झिता येन ब्रह्म तेनोज्झितं परम् ।
ब्रह्महैव स विज्ञेयः सद्भिर्नित्यं विगर्हितः' ॥

इति । स्वशाखाऽध्ययनपूर्वकं [2]त्वन्यशाखा ऽध्य[3]यनं तेनैवाङ्गीकृतम्—

'अधीत्य शाखामात्मीयां परशाखां ततः पठेत्' ।

इति । वेदवद्धर्मशास्त्रम[4]प्यधीयीत । तदाह बृहस्पतिः—

'एवं दण्डादिकैर्युक्तं संस्कृत्य तनयं पिता ।
वेदमध्यापयेत् पश्चात् शास्त्रं मन्वादिकं तथा ॥
ब्राह्मणो वेदमूलः स्याच्छ्रुति-स्मृत्योः समः स्मृतः ।
सदाचारस्य च तथा ज्ञेयमेतत्त्रिकं सदा ॥
अधीत्य चतुरो वेदान् सा[5]ङ्गोपाङ्ग-पद-क्रमान् ।
स्मृतिहीना न शोभन्ते चन्द्रहीनेव शर्वरी' ॥

इति । अत्र अध्ययनेन पञ्चधा वेदाभ्यास उपलक्षितः । [6]तदाह दक्षः—

'वेदस्वीकरणं पूर्वं विचारो ऽ[7]भ्यसनं [8]जपः ।
तद्दानं चैव शिष्येभ्यो वेदाभ्यासो हि पञ्चधा' ॥

इति । हारीतो ऽपि—

'मन्त्रार्थज्ञो जपन् जुह्वन् तथैवा ऽध्यापयन् द्विजः ।
[9]स्वर्गलोकमवाप्नोति नरकं तु विपर्यये' ॥

---

१. D. reads the following:— स्वीयशाखापलापे तु for स्वीया शाखोज्झिता येन ; A. reads स्वीय– for स्वीया- retaining all the rest according to text. २. All except A. omit तु. ३. After–शाखाध्ययनम् D. adds पूर्ववत्. ४. All the MSS. omit अपि. ५. D. reads साङ्गोपाङ्गान् पदक्रमान् instead of the compound word. ६. All except A. omit the expression तदाह दक्षः; and I. reads तथा च. ७. A. substitutes ऽध्ययनं for ऽभ्यसनं; D. भाषनं for the same. ८. D. and G. read पुनः instead of जपः. ९. E. and H. read स्वर्गं लोकम् for स्वर्गलोकम्.

इति । गुरुमुखादेवाध्येतव्यं नतु लिखितपाठः कर्त्तव्यः । तदाह नारदः—

‘पुस्तकप्रत्ययाधीतं नाधीतं गुरुसन्निधौ ।
भ्राजते न सभामध्ये जारगर्भ इव स्त्रियाः’ ॥
(ना. शि. २. १३)

इति । अध्ययने वर्जनीयानाह मनुः—

‘नाविस्पष्टमधीयीत न शूद्रजनसन्निधौ ।
न निशान्ते प्रतिश्रान्तो[1] ब्रह्माधीत्य पुनः स्वपेत्’ ॥
(म. स्मृ. ४. ९९)

इति । नारदो[2] ऽपि—

‘ह्रस्वहीनस्तु यो ऽधीते स्वर-वर्णविवर्जितः ।
ऋग्यजुः-सामभिर्दग्धो[3] वियोनिमाधिगच्छति’ ॥
(ना. शि. २. २७; पा. शि. १०. ६)

इति । व्यासो ऽपि—

‘अनध्यायेष्वधीतं यत् यच्च शूद्रस्य सन्निधौ ।
प्रतिग्रहनिमित्तं च नरकाय तदुच्यते’ ॥

## ॥ इत्यध्ययना-ऽध्यापनयोः प्रकरणम् ॥

अथानध्यायाः । ते च द्विविधाः । नित्या नैमित्तिकाश्च । तत्र नित्यानाह हारीतः—

‘प्रतिपत्सु चतुर्दश्यामष्टम्यां पर्वयोर्द्वयोः[4] ।
श्वो ऽनध्याये ऽद्य शार्वर्यां नाधीयीत कदाचन’ ॥

---

१. P. and H. read परिश्रान्तो for प्रतिश्रान्तो. २. All except A. and I. omit नारदो ऽपि. ३. B. C. D. and F. read -सामनिर्दग्धो for -सामभिर्दग्धो. ४. All the copies consulted read पर्वणोः instead of पर्वयोः.

इति । नैमित्तिकानाह याज्ञवल्क्यः—

‘ श्व-क्रोष्टु-गर्दभोलूक-साम-बाणार्त्त-निःस्वने ।
अमेध्य-शव-शूद्रान्त्य-श्मशान-पतितान्तिके ॥
देशे[1] ऽशुचावात्मनि च विद्युत्-स्तनित-संप्लवे ।
भुक्त्वा[2] ऽऽर्द्रपाणिरम्भोन्तरर्द्धरात्रे ऽतिमारुते ॥
पांसुवर्षे[3] दिशां दाहे सन्ध्या-नीहार-भीतिषु ।
धावतः पूतिगन्धे च शिष्टे च गृहमागते ॥
खरोष्ट्र-यान-हस्त्यश्व-नौ-वृक्षेरिण-रोहणे ।
सप्तत्रिंशदनध्यायानेतांस्तात्कालिकान् विदुः’ ॥

(या. स्मृ. १. १४८–१५१)

इति । अन्ये[4] ऽप्यनध्यायास्तत्र तत्र स्मर्यन्ते । तदाह[5] नारदः—

‘अयने विषुवे चैव शयने बोधने हरेः ।
अनध्यायस्तु कर्त्तव्यो मन्वादिषु युगादिषु ’ ॥

इति । मन्वादयो मत्स्यपुराणे ऽभिहिताः—

‘आश्वयुक्शुक्लनवमी कार्त्तिके द्वादशी तथा ।
तृतीया चैत्रमासस्य तथा भाद्रपदस्य च ॥

---

१. D. and G. read शिष्ये for देशे. २. All except A. read भक्तार्द्र- for भुक्त्वार्द्र-. ३. D. and G. read पांसुप्रवर्षे दिग्दाहे for पांसुवर्षे दिशां दाहे. ४. A. and I. read तु for अपि. ५. A. and I. read तथा च, while others except D. read तथाह for तदाह.

फाल्गुनस्य त्वमावास्या पौषस्यैकादशी[1] तथा ।
आषाढस्याथ[2] दशमी माघमासस्य सप्तमी ॥
श्रावणस्याष्टमी कृष्णा आषाढस्यापि[3] पूर्णिमा ।
कार्तिकी फाल्गुनी चैत्री ज्यैष्ठी पञ्चदशी सिता ॥
मन्वन्तरादयश्चैते[4] दत्तस्याक्षय्यकारकाः' ॥
(म. पु. १७. ६-८)

इति । युगादयो विष्णुपुराणे वर्णिताः[5]—
'वैशाखमासस्य च या तृतीया
नवम्यसौ कार्तिकशुक्लपक्षे ।
नभस्य मासस्य च कृष्णपक्षे
त्रयोदशी पञ्चदशी च माघे' ॥
(वि. पु. ३. १४. १३)

इति[6] । कूर्मपुराणे—
'उपाकर्मणि चोत्सर्गे त्रिरात्रक्षपणं[7] स्मृतम् ।
अष्टकासु त्वहोरात्रमृत्वन्तासु च रात्रिषु ॥
मार्गशीर्षे तथा पौषे माघमासे तथैव च ।
तिस्रोऽष्टकाः समाख्याताः कृष्णपक्षे तु सूरिभिः' ॥
(कू. पु. १. २. १४. ७७-७८)

इति । गौतमोऽपि—'कार्तिकी फाल्गुन्याषाढी पौर्णमासी तिस्रोऽष्टकाः[8] त्रिरात्रम्' (गौ. स्मृ. १६. ७)—इति[9] । उक्त-

१. A. D. E. G. and H. read पुष्यस्य for पौषस्य २. H. and I. with the exception of all others have आषाढस्यापि for आषाढस्याथ. ३. D. reads अषाढस्य तु for आषाढस्यापि. ४. B. C. D. and F. read एताः for एते. ५. All except A. and I. omit वर्णिताः. ६. A. D. and I. omit इति. ७. A. D. G. H. and I. read त्रिरात्रं क्षपणं for त्रिरात्रक्षपणं. ८. D. reads पौर्णमासीः तिस्रोष्टकाः. ९. All except A. omit इति.

पौर्णमासीरारभ्य त्रिरात्रम् । तथा तिस्रोऽष्टकाः सप्तम्यादयः । तास्वपि त्रिरात्रमनध्ययनमित्यर्थः । पैठीनसिः—

‘कृष्णे भवाः तिस्रोऽष्टकाः । मार्गशीर्षप्रभृतय इत्येके’ ।

इति । आपस्तम्बस्तु उपाकर्माऽऽरभ्य मासं प्रदोषेऽनध्यायमाह—

‘श्रावण्यां पौर्णमास्यामध्यायमुपा-
कृत्य मासं प्रदोषे नाधीयीत’ ।
(आ. ध. सू. ९. १)

इति । प्रदोषशब्देनात्र पूर्वरात्रिः विवक्षिता । त्रयोदश्यादिप्रदोषेष्वपि नाधीयीत । तथा च आदित्यपुराणम्[१]—

‘मेधाकामस्त्रयोदश्यां सप्तम्यां च विशेषतः ।
चतुर्थ्यां च[२] प्रदोषेषु न स्मरेन्न च कीर्त्तयेत्’ ॥

इति[३] । चतुर्थ्यादितिथिद्वैविध्ये प्रजापतिः—

‘षष्ठी च द्वादशी चैव अर्द्धरात्रो[४]ननाडिका ।
प्रदोषे न त्वधीयीत तृतीया नवनाडिका’ ॥

इति । याज्ञवल्क्योऽपि—

‘त्र्यहं[५] प्रेतेष्वनध्यायः शिष्यर्त्विग्-गुरु-बन्धुषु ।
उपाकर्मणि चोत्सर्गे स्वशाखाश्रोत्रिये मृते[६] ॥
सन्ध्या-गर्जित-निर्घात-भूकम्पोल्कानिपातने ।
समाप्य वेदं द्यु[७]-निशमारण्यकमधीत्य च ॥

१. D. reads मत्स्यपुराणे for आदित्यपुराणम्, all others except A. read simply पुराणम् omit आदित्य-. २. D. substitutes न, and G. तु; for च. ३. A. omits इति. ४. A. reads अर्धरात्र्यूननाडिका. ५ .D. reads अहं for त्र्यहं. ६. We read with A.; all others read तथा for मृते. ७. D. reads ह्य-निशम् for द्यु-निशम्.

पञ्चदश्यां चतुर्दश्यामष्टम्यां राहुसूतके ।
ऋतुसन्धिषु भुक्त्वा वा श्राद्धिकं प्रतिगृह्य च ॥
पशु-मण्डूक-नकुल-श्वाहि-मार्जार-मूषकैः ।
कृतेऽन्तरे त्वहोरात्रं शक्रपाते तथोच्छ्रये' ॥
(या. स्मृ. १. १४४–४७.)

इति । मनुरपि–

'चोरैरुपप्लुते ग्रामे सम्भ्रमे वाऽग्निकारिते ।
आकालिकमनध्यायं विद्यात्सर्वाद्भुतेष्वपि' ॥
(म. स्मृ. ४. ११८)

इति । कूर्मपुराणे–

'श्लेष्मातकस्य छायायां शाल्मलेर्मधुकस्य च ।
कदाचिदपि नाध्येयं कोविदार-कपित्थयोः' ॥
(कू. पु. १. २. १४. ७९)

इति । उक्तानामप्यनध्यायानामपवादमाह मनुः–

'वेदोपकरणे चैव स्वाध्याये चैव नैत्यके ।
नानुरोधोऽस्त्यनध्याये होममन्त्रेषु चैव हि' ॥

इति । वेदोपकरणानि अङ्गानि । नित्यस्वाध्यायो ब्रह्मयज्ञः । शौनकोऽपि–

'नित्ये जपे च काम्ये च क्रतौ पारायणेऽपि च ।
नाऽनध्यायोऽस्ति वेदानां ग्रहणे ग्राहणे तथा' ॥

---

१. All except G. read -ष्विति for -ष्वपि. २. A. C. F. and I. read नित्यके for नैत्यके. ३. All except H. substitute स्मृतः for तथा.

इति। कूर्मपुराणेऽपि[1]–

'अनध्यायस्तु नाङ्गेषु नेतिहास-पुराणयोः।
न धर्मशास्त्रेष्वन्येषु पर्वण्येतानि वर्जयेत्' ॥
(कू. पु. १. २. १४. ८४)

इति।

॥ इत्यनध्यायप्रकरणम् ॥

पूर्वमध्ययना-ऽध्यापने[2] सेतिकर्त्तव्यते निरूपिते। अथ यजन-याजने निरूपयामः।

तत्र यजनस्य सृष्टिं प्रयोजनं चाह भगवान्–

'सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः।
अनेन प्रसविष्यध्वमेष वो ऽस्त्विष्टकामधुक् ॥
देवान् भावयताऽनेन ते देवा भावयन्तु वः।
परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ॥
इष्टान् भोगान् हि वो देवा दास्यन्ते यज्ञभाविताः।
तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः' ॥
(भ. गी. ३. १०–१२)

इति। तस्य च यजनस्य[3] सात्त्विक-राजस-तामसभेदेन त्रैविध्यं स एवाह–

'अफलाकांक्षिभिर्यज्ञो विधिदृष्टो य इज्यते।
यष्टव्यमेवेति मनः समाधाय स सात्त्विकः ॥

१. B. C. E. F. and G. omit अपि; while D. omits the whole sentence together with the following verse and the subsequent इति. २. A. reads पूर्वमध्यापना-ऽध्ययने इतिकर्तव्यत्वेन निरूपिते. ३. E. reads तस्य च सर्वस्य; while all others except A. read तस्य चाध्वरस्य, but D. omits तस्य reading अध्वरस्य for यजनस्य; all for तस्यच यजनस्य.

अभिसन्धाय तु फलं दम्भार्थमपि चैव यत्[1] ।
इज्यते भरतश्रेष्ठ तं यज्ञं विद्धि राजसम् ॥
विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम् ।
श्रद्धाविरहितं यज्ञं तामसं परिचक्षते' ॥

(भ. गी. १७. ११-१३)

इति । आश्वमेधिके पर्वणि द्विजातिप्रभृतिसृष्टेर्[2]यज्ञार्थत्वप्रतिपादनेन प्रस्तूयते[3]—

'यजनार्थं द्विजाः सृष्टास्तारका दिवि देवताः ।
गावो यज्ञार्थमुत्पन्ना दक्षिणार्थं तथैव च ॥
सुवर्णं रजतं चैव पात्री[4]-कुम्भार्थमेव च ।
इध्मार्थमथ यूपार्थं ब्रह्मा चक्रे वनस्पतीन्[5] ॥
ग्राम्याऽऽरण्याश्च पशवो जायन्ते यज्ञकारणात्' ।

(वृ. गौ. स्मृ. १५.६३-७७)

इति । हारीतोऽपि[6] अन्वय-व्यतिरेकाभ्यां यज्ञमहिमानं दर्शयति[7]—

'यज्ञेन लोका विमला विभान्ति
यज्ञेन देवा अमृतत्वमाप्नुवन् ।

१. A. reads यः instead of यत्. २. A. G. and I. read द्विजादिसृष्टेः for द्विजातिप्रभृतिसृष्टेः; while all others merely omit -प्रभृति-. ३. A. and I. read प्रशस्यते for प्रस्तूयते. We think that the author supposing that the conversation being between Yudhishthira and Krishna, his memory have failed him, and he mentioned it as from Mahâbhârat, but we find it in Vriddha Gowtam Sanhitâ 15, from 74-79, and this conversation is between Yudhishthira and Krishna. ४. A. reads पात्रं कुम्भार्थमेव च for पात्रीकुम्भार्थमेव च. ५. All except D. read वनस्पतिम् for वनस्पतीन्. ६. A. omits अपि. ७. D. reads प्रदर्शयति instead of simply दर्शयति.

यज्ञेन पापैर्बहुभिर्विमुक्तः
प्राप्नोति लोकानजरस्य[1] विष्णोः ॥
नास्त्ययज्ञस्य लोको वै नायज्ञो विन्दते शुभम्।
अनिष्टयज्ञो ऽपूतात्मा भ्रश्यति[2] छिन्नपर्णवत्' ॥

इति। यज्ञविशेषास्त्वग्निहोत्रादयः। तथा च श्रूयते—'प्रजापतिर्यज्ञानसृजताग्निहोत्रं चाग्निष्टोमं च पौर्णमासीं चोक्थ्यं चामावास्यां चातिरात्रं च'—इति। अग्निहोत्रादीनां संस्कृतैरग्निभिः साध्यत्वात् तत्संस्कारकमाधानमादा[3]वनुष्ठेयम्[4]। तत्र प्रजापतिः—

'सर्वसंस्थाधिकारः[5] स्यादाहिताग्नेर्धने सति।
आदध्यान्निर्धनोऽप्यग्निं नित्यं पापभयात्[6] द्विजः' ॥

इति। अकरणे प्रत्यवायः कूर्मपुराणे दर्शितः[7]—

'नास्तिक्यादथवाऽऽलस्याद्यो[8]ऽग्नीन्नाऽऽधातुमिच्छति।
यजेत वा न यज्ञेन स याति नरकान् बहून् ॥
तस्मात्सर्वप्रयत्नेन ब्राह्मणो हि[9] विशेषतः।
आधायाग्नीन्[10] विशुद्धात्मा यजेत परमेश्वरम्' ॥
(कू. पु. १. २. २४. ७,१०)

१. All except D. read -नमरस्य for -नजरस्य. २. All except A. and I. read नश्यति. for भ्रश्यति. ३. B. C. and F. read तत्संस्कारकर्माधानादा-, D. तत्संस्कारसाधनमादा-, and E. तत्संस्कारकसाधनत्वेन आधानमादा-; all for तत्संस्कारकमाधानमादा-. ४. A. substitutes -वनुमेयम् for -वनुष्ठेयम्. ५. We read with A., but all others read the following:—सर्वयज्ञाधिकारी स्यादाहिताग्निर्धने सति। ६. All except A. read पापक्षयात् instead of पापभयात्. ७. D. substitutes अभिहितः for दर्शितः; while H. omits both. ८. A. omits -यो. ९. A. substitutes वा for हि. १०. All read -आग्निं for -अग्नीन्.

इति । श्रुतिश्च कालादिविशिष्टमाधानं विधत्ते—

'वसन्ते ब्राह्मणो[१]ऽग्नीनादधीत । वसन्तो वै ब्राह्मणस्यर्तुः । स्वै[२] एवैनमृतावाधाय ब्रह्मवर्चस्वी भवति । ग्रीष्मे राजन्य आदधीत । ग्रीष्मो वै राजन्यस्यर्तुः । स्व एवैनमृतावाधाय इन्द्रियावी वीर्यवान्[३] भवति । शरदि वैश्य आदधीत । शरद्वै वैश्यस्यर्तुः । स्व एवैनमृतावाधाय पशुमान् भवति' ।

इति । आश्वमेधिके[४]ऽपि—

'वसन्ते ब्राह्मणस्य स्यादाधेयोऽग्निर्नराधिप ।
वसन्तो ब्राह्मणः प्रोक्तो वेदयोनिः स उच्यते ॥
अग्न्याधानं[५] तु येनाथ वसन्ते क्रियते नृप ।
तस्य श्रीर्ब्रह्मवृद्धिश्च ब्राह्मणस्य विवर्द्धते ॥
क्षत्रियस्याग्निराधेयो ग्रीष्मे श्रेष्ठः स वै नृप ।
येनाधानं तु वै ग्रीष्मे क्रियते तस्य वर्द्धते ॥
श्रीः प्रजाः पशवश्चैव वित्तं चैव बलं यशः ।
शरत्काले तु[६] वैश्यस्याप्याधानीयो हुताशनः ॥

१. A. reads ऽग्निमादधीत for ऽग्नीनादधीत. २. Except A. E. and H. all others read स एवैन- instead of स्व एवैन- repeating the same in the places of all स्व coming hereafter in the passage. ३. With the exception of B. all omit वीर्यवान्; H. and I. besides this read इन्द्रियवान् for इन्द्रियावी of all others. ४. A. omits अपि but adds पर्वणि in its place. This quotation is also Vriddh Gowtama Sanhitâ 15, 46-52. ५. A. reads अग्न्याधेयं for अग्न्याधानं. ६. B. C. D. G. and H. read शरद्रात्रे ऽथ for शरत्काले तु; while E. शरत्काले ऽथ for the same.

शरद्रात्रैः[1] स्वयं वैश्यो वैश्ययोनिः स उच्यते।
शरद्याधानमेवं वै क्रियते येन[2] पाण्डव॥
तस्य वै श्रीः[3] प्रजा ऽऽयुश्च पशवो ऽर्थश्च वर्द्धते'।
(वृ. गौ. स्मृ. १८. ४७–५२)

इति। आधानपूर्वकाश्च[5] यज्ञाः दर्शादयः। तथा च[4] वसिष्ठः—
'अवश्यं ब्राह्मणो ऽग्नीनादधीत। दर्श-पूर्णमासा-[6]
ऽऽग्रयणेष्टि-चातुर्मास्य-पशु-सोमैश्च[7] यजेत'।

इति। हारीतो ऽपि—
'पाकयज्ञान् यजेन्नित्यं हविर्यज्ञांस्तु नित्यशः।
सौम्यांस्तु विधिपूर्वेण य इच्छेत् ब्रह्म[8] चाव्ययम्'॥

इति[9]। ते च गौतमेन दर्शिताः—
'अष्टका पार्वणश्राद्धं[10] श्रावण्याषाढी प्रौष्ठपदी
चैत्र्याश्वयुजीति सप्त पाकयज्ञसंस्थाः। अग्न्याधे-[11]
यमग्निहोत्रं दर्श-पूर्णमासौ[12] चातुर्मास्यान्याग्रयणे-

---

१. A. reads शरद्रात्रिः instead of शरद्रात्रैः. २. All except A. read तेन for येन. ३. A. B. C. D. E. and F. read तस्यैव श्रीः for तस्य वै श्रीः; while H. reads तस्य श्रीर्वै for the same. ४. D. omits च. ५. D. reads for the sentence:—आधानपूर्वकार्याश्च यज्ञा दर्शादयस्तथा. ६. B. and F. read पूर्ण-दर्शमासा—for दर्श-पूर्णमासा-. ७. All except A. read पशु-सोमांश्च instead of पशु-सोमैश्च. ८. A. reads धर्ममव्ययम् for ब्रह्म चाव्ययम्. ९. इति is omitted by all. १०. B. C. and F. omit -श्राद्धं, and read पार्वणं श्रावण्याग्रयणी चैत्राश्वयुजीति सप्तपाक-&c.; G. reads अष्टकापार्वणश्राद्धश्रावण्याग्रयणीचैत्राश्व- &c.; H. reads अष्टका पार्वणश्राद्धे चैत्राश्वयु-; and A. reads अष्टका-पार्वणश्राद्धे श्रावण्याग्रहायणीचैत्र्याश्वयुजीति &c. ११. B. reads आग्न्याधेयमग्निहोत्रं for अग्न्याधेयमग्निहोत्रं. १२. B. E. C. F. and H. read दर्शपूर्णमास्ये; D. दर्शपूर्णमास्य-; both for दर्श-पूर्णमासौ; and A. reads दर्शपूर्णमासावाग्रयणं चातुर्मास्यम् for दर्शपूर्णमासौ चातुर्मास्यान्याग्रयणेष्टि-.

ष्टिर्निरूढपशुबन्धः सौत्रामणीति सप्त हविर्यज्ञ-संस्थाः । अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयोऽतिरात्रोऽप्तोर्यामः इति सप्त सोम[1]संस्थाः'।

(गौ. स्मृ. ८. ३.)

इति । अपरांस्तु महायज्ञक्रतून् देवलो दर्शितवान्—

'अश्वमेध-राजसूय-पौण्डरीक-
गोसवादयो महा[2]यज्ञक्रतवः'।

इति । एते सर्वे यज्ञाः यथायोगं नित्य-नैमित्तिक-काम्य-भेदेन त्रिविधाः—

'नित्यं नैमित्तिकं काम्यं त्रिविधं कर्म पौरुषम्'।

(मा. पु. ३४. ४)

इति मदालसोक्तेः । त[3]त्र यज्ञानां नित्यत्वं कु[4]थुमशा-खायां श्रूयते—

'मन्त्रेषु कर्माणि कवयो यान्यपश्यंस्तानि त्रे-
तायां बहुधा सन्ततानि । तान्याच[5]रथ नियतम् ।

(मुं. उ. १. २. १)

इति । वाजसनेयिशाखायामपि—

'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः'।

(ई. उ. २)

इति ।

---

१. D. inserts -याग- between सोम- and -संस्थाः. २. A. reads महायज्ञाः क्रतवः for महायज्ञक्रतवः. ३. With the exception of A. all read अत्र for तत्र. ४. A. reads अथर्वणशाखायां for कुथुमशाखायां ५. A. reads तान्याहरथ for तान्याचरथ.

'एतद्वै[1] जरामर्यमग्निहोत्रं जरसा[2]
वा ह्येवास्मान्मुच्यते मृत्युना[3] च' ।

(म. ना. उ. २९. १)

इति च । विधिवाक्येषु च जीवनाद्युपबन्धस्तु[4] नित्यत्व-लक्षकः । तद्यथा[5]—

'यावज्जीवमग्निहोत्रं जुहुयात्' ।
'यावज्जीवं दर्श-पौर्णमासाभ्यां[6] यजेत' ।
'वसन्ते[7] वसन्ते ज्योतिषा यजेत' ।

इति । अकरणे प्रत्यवायश्च नित्यत्वगमकः । तथा चाथर्वणे[8] श्रूयते—

'यस्यानग्निहोत्रमदर्श[9]-पौर्णमासमचातुर्मास्यम-
नाग्रयण-मतिथिवर्जितं वाऽहुतमवैश्वदेवमवि-[10]
धिना हुतमासप्तमांस्तस्य लोकान् हिनस्ति-'

(मु. उ. १. २. ३)

इति । तथा[11] च[12] श्रुत्यन्तरम्[13]—

'यस्य पिता पितामहो वा
सोमं न पिबेत् स व्रात्यः' ।

---

१. B. reads एतद्वैराजमयमग्निहोत्रं for एतद्वै जरामर्यमग्निहोत्रं. २. Except A. all others read जरया for जरसा. ३. B. C. and F. read मृत्युना वेति च for मृत्युना च'. ४. All but A. replace च by तु. ५. A. reads simply तथा for तद्यथा. ६. A. and H. read दर्श-पूर्ण-मासाभ्यां. for दर्श-पौर्णमासाभ्यां. ७. A. omits expression वसन्ते वसन्ते ज्योतिषा यजेत ; D. reads वसन्ते only once. ८. D. reads चाथर्वण: for चाथर्वणे. ९. B. C. and F. read -होत्रमदर्शमचातुर्मास्यमपौर्णमासमना- for -होत्रमदर्श-पौर्णमासमचातुर्मास्यमना-, All others omit only अचातुर्मास्यम्. १०. A. and D. read चाहुत- for वाहुत-. ११ D. reads यथा for तथा. १२. All except A. omit च. १३ H. reads श्रुत्यन्तरे.

इति । जीवन-कामनाव्यतिरिक्तं[१] गृह-दाहाद्यनियत-निमित्तमुपजीव्य प्रवृत्तं नैमित्तिकम् । तथा च श्रुतिः—

'यस्य गृ[२]हान् दहत्यग्निरग्नये क्षाम-
वते पुरोडाशमष्टाकपालं निर्वपेत्[३]' ।

इति । कामनया प्रवृत्तं काम्यम् । तद्यथा—

'वायव्यं श्वेतमालभेत भूतिकामः[४]' ।
(तै. सं. २. ३. १)-

इत्याद्याः काम्यपशवः ।

'ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकामः' ।
(तै. सं. २. २. ५)

इत्याद्याः काम्येष्टयः । तत्र काम्यानां कामितार्थसिद्धिः फलम् । नित्य-नैमित्तिकयोस्तु यथाविध्यनुष्ठितयोरिन्द्रलोकप्रापकत्वमाथर्वणे श्रूयते—

'काली कराली च मनोजवा च
सुलोहिता या[५] च सुधूम्रवर्णा ।
स्फुलिङ्गिनी विश्वरुची च देवी
लेला[६]यमाना इति सप्त जिह्वाः ॥

---

१. A. reads —व्यतिरिक्तग्रह- instead of -व्यतिरिक्तं गृह- separate. २. A. reads गृहं दहत्यग्नये for गृहान्दहत्यग्निरग्नये D. omits the word अग्निः. ३. E. reads विनिर्वपेत् for निर्वपेत्; H. adds च before निर्वपेत्. ४. After भूतिकामः A. continues in the inverted commas वायुर्वै क्षेपिष्ठा देवता. ५ A. reads चापि for या च. ६. A. reads लेलीयमाना for लेलायमाना; H. reads लालायमाना for the same.

एतेषु यश्चरते भ्राजमानेषु
यथाकालं चाहुतयो ह्याददायन् ।
[2]तं नयन्त्येताः सूर्यस्य रश्मयो
यत्र देवानां पतिरेकोऽधिवासः ॥
एह्येहीति तमाहुतयः सुवर्चसः
सूर्यस्य रश्मिभिर्यजमानं वहन्ति ।
प्रियां वाचमभिवदन्त्योऽर्चयन्त्य
एष वः पुण्यः सुकृतो ब्रह्मलोकः' ॥

(मुं. उ. १. २. ४)

इति । आनुशासनिकेऽपि—

'सुशु[3]द्धैर्यजमानैश्च ऋत्विग्भिश्च तथा[4]विधैः ।
शुद्धैर्द्रव्योपकरणैर्यष्टव्यमिति निश्चयः ॥
तथाकृतेषु यज्ञेषु देवानां तोषणं भवेत् ।
तुष्टेषु देवसङ्घेषु [5]यज्वा यज्ञफलं लभेत् ॥
देवाः सन्तोषिता यज्ञैर्लोकान् संवर्द्धयन्त्युत ।
उभयोर्लोकयोर्देवि भूति[6]र्यज्ञे प्रदृश्यते ॥
तस्माद्यज्ञाद्दिवं [7]याति अमरैः सह मोदते ।
नास्ति यज्ञसमं दानं नास्ति यज्ञसमो विधिः ।
सर्वधर्मसमुद्देशो [8]देवि यज्ञे समाहितः' ॥

---

१. G. omits the whole passage from श्वेतमालभेत भूतिकामः &c., up to यथा both inclusive. २. G. repeats तं twice. ३. C. D. and F. read सुशुभैः for सुशुद्धैः. ४. D. reads तथाकृतैः for तथाविधैः. ५. A. substitutes यज्ञी for यज्वा; D. reads यज्ञात् for the same. ६. A. C. E. F. and G. read भूतिर्यज्ञैः प्रदृश्यते ; B. reads भूतिर्यज्ञः प्रदृश्यते; H. reads प्रदश्यते for प्रदृश्यते, all for भूतिर्यज्ञे प्रदृश्यते. ७. D. reads यान्ति for याति. ८. D. reads देव यज्ञे for देवि यज्ञे.

इति । यदि[1] कथञ्चिन्नित्यकर्माणि लुप्येरन् तदा तत्समाधानमाह प्रजापतिः—

'दर्शं च पूर्णमासं च लुप्त्वा ऽथोभयमेव[2] वा[3] ।
एकस्मिन् कृच्छ्रपादेन द्वयोरर्द्धेन शोधनम् ॥
हविर्यज्ञेष्वशक्तस्य लुप्तमप्येकमादितः ।
प्राजापत्येन शुध्येत पाकसंस्थासु चैव हि ॥
सन्ध्योपासनहानौ तु नित्यस्नानं विलोप्य[4] च ।
होमं च नैत्यकं[5] शुध्येद् गायत्र्यष्टसहस्रकृत् ॥
समाऽन्ते सोमयज्ञानां हानौ चान्द्रायणं चरेत् ।
अकृत्वाऽन्यतमं यज्ञं यज्ञानामधिकारतः ॥
उपवासेन शुध्येत पाकसंस्थासु चैव हि ' ।

इति । कात्यायनो ऽपि—

' पितृयज्ञात्यये चैव वैश्वदेवात्ययेऽपि च ।
अनिष्ट्वा नवयज्ञेन नवान्नप्राशने तथा ॥
भोजने पतितान्नस्य चरुर्वैश्वानरो भवेत् ' ।

(का. स्मृ. ३. १८. १९-२०)

इति । विहितदक्षिणापर्याप्तद्रव्याभावे[6]ऽपि नित्यं न लोपयेत् । तदाह बौधायनः[7]—

---

१. D. reads यदा कथञ्चित् for यदि कथञ्चित्. २. B. C. and F. read लुप्त्वा चोभय- for लुप्त्वाऽथोभय-. ३. B. C. D. and F. replace वा by च. ४. B. C. E. F. and G. read तु लोप्य च for विलोप्य च; A. reads विलुप्य च for the same. ५. A. and D. read होमं नैमित्तिकं for होमं च नैत्यकम्; G. reads होमं च नैत्तिके for the same. ६. All except A. read -द्रव्यालाभेऽपि न for द्रव्याभावेऽपि न. ७. A. B. C. and F. read बोधायनः for बौधायनः.

'यस्य नित्यानि लुप्तानि तथैवाऽऽगन्तुकानि च ।
विपद्यपि न स स्वर्गं गच्छेत्तु पतितो हि सः ॥
तस्मात् कन्दैः फलैर्मूलैर्मधुनाऽऽज्यरसेन वा ।
नित्यं नित्यानि कुर्वीत न च नित्यानि लोपयेत्' ।

इति । ननु—सम्पूर्णद्रव्यसम्पत्तावेव सोमयागः कार्यः । तदाह मनुः—

'यस्य त्रैवार्षिकं वित्तं पर्याप्तं भृत्यवृत्तये ।
अधिकं वाऽपि विद्येत स सोमं पातुमर्हति' ॥

इति । याज्ञवल्क्योऽपि— (म. स्मृ. ११. ७)

'त्रैवार्षिकाधिकान्नो यः स हि सोमं पिबेद्द्विजः' ।
(या. स्मृ. १. १२४)

इति । त्रैवार्षिकान्नालाभे सोमयागादर्वाचीना दर्शादय एव कार्याः । एतदपि स एवाह—

'प्राक् सौमिकीः क्रियाः कुर्याद्यस्यान्नं वार्षिकं भवेत्' ।
(या. स्मृ. १. १२४)

इति । अल्पधनस्य यज्ञो मनुना निषिध्यते—

'पुण्यान्यन्यानि कुर्वीत श्रद्दधानो जितेन्द्रियः ।
न त्वल्पदक्षिणैर्यज्ञैर्यजेताऽथ कथञ्चन ॥
इन्द्रियाणि यशः स्वर्गमायुः कीर्तिं प्रजाः पशून् ।
हन्त्यल्पदक्षिणो यज्ञस्तस्मान्नाऽल्पधनो यजेत्' ॥
(म. स्मृ. ११. ३९–४०)

---

१. A. reads सुपथस्थोऽपि न for विपद्यपि न स; G. and D. विपद्दिस्थो ऽपि न, and B. C. F. विपद्य सोऽपि न for the same. २. A. and D. read मधुनाथ रसेन for मधुनाऽऽज्यरसेन. ३. A. reads -तृप्तये for -वृत्तये. ४. D. reads सौमिकी क्रिया dropping the visarga; E. reads सौमिकीं क्रियां both for सौमिकीः क्रियाः. ५. D. reads यजेताऽपि for यजेताऽथ; and G. यजेताप्यथ किञ्चन for यजेताथ कथञ्चन. ६. All but A. read प्रजां for प्रजाः.

इति । मत्स्यपुराणे ऽपि—

‘ अन्नहीनो दहेद्राष्ट्रं मन्त्रहीनस्तथर्त्विजः[१] ।
आत्मानं दक्षिणाहीनो नास्ति यज्ञसमो रिपुः’ ॥
(म. स्मृ. ११. ४१)

इति । एवञ्च सत्येतानि वचनानि ‘कन्दैर्मूलैः’ इत्यादिवचनेन विरुद्ध्येरन्—इति चेत् । मैवम् । एतेषां वचनानां काम्ययागविषयत्वात् । ‘सम्पूर्णानुष्ठानशक्तौ सत्यामेव काम्यं कर्तव्यम्’—इति षष्ठाध्याये मीमांसितम् । तथा हि—‘ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकामः’—इत्यत्र किं यथाशक्तिप्रयोगेणाप्यधिकारः[२]? उत सर्वाङ्गोपसंहारेण?—इति संशयः । नित्येषु यथाशक्तिप्रयोगस्य पूर्वाधिकरणे निर्णीतत्वात् काम्येष्वपि तथा—इति प्राप्ते[३] ब्रूमः । नित्यानामसमर्थेनाप्यपरित्याज्यत्वात् तत्र[४] यथाशक्तिप्रयोगः[५] । अपरित्याज्यानि हि नित्यानि । जीवनादिनिमित्तवशेन तत्प्रवृत्तेः । नैमित्तिके प्रत्यप्रवर्तकत्वे निमित्तत्वमेव हीयेत । कामना तु न निमित्तं येनावश्यमिष्टिं[६] प्रवर्त्तयेत् । अतो न काम्यस्याऽपरित्याज्यत्वम् । तथा सति फलसिद्ध्यर्थमेव काम्यस्यानुष्ठेयत्वात्[७] फलस्य च कृत्स्नाङ्गोपकृतप्रधानमन्तरेणानिष्पत्तेः । यदा कृत्स्नाङ्गानुष्ठानशक्तिस्तदैव[८] काम्यमनुष्ठेयम्—इति सिद्धान्तः ॥

॥ इति यजनप्रकरणम्[९] ॥

१. B. C. and F. read तथर्त्विजम् for तथर्त्विजः. २. G. reads -प्यधिकारस्य for -प्यधिकारः. ३. D. and G. omit प्राप्ते. ४. D. replaces तत्र by तथा. ५. A. reads यथाप्रशक्ति- for यथाशक्ति-. ६. H. reads -मिष्टं for -मिष्टिं. ७. G. reads कामस्य- for काम्यस्य-. ८. A. reads कृत्स्नांगानुष्ठाने शक्तिः for कृत्स्नाङ्गानुष्ठानशक्तिः. ९. D. omits इति यजनप्रकरणम्.

इत्थं यजनं निरूपितं याजने तु विधिः श्रूयते–

'द्रव्यमर्जयन् ब्राह्मणः प्रतिगृह्णीयाद्याजयेदध्यापयेद्वा' । न चायं नित्यविधिः । अकरणे प्रत्यवायादिनित्यलक्षणाभावात् । अपि तु काम्यविधिः । द्रव्यार्जनकामस्य तत्राधिकारात् । तत्रापि नापूर्वविधिः। जीवनोपायत्वेन याजनस्य प्राप्तत्वात् । तद्धेतुत्वं च मार्कण्डेयपुराणे दर्शितम् –

'याजनाध्यापने शुद्धे तथा शुद्धः प्रतिग्रहः ।
एषा सम्यक् समाख्याता त्रिविधा तस्य जीविका' ॥
(मा. पु. २८. ४)

इति । नापि परिसंख्या । नित्यप्राप्तेरभावात् । तस्मात् पक्षे प्राप्तत्वान्नियमविधिरयम् । स चायं नियमः पुरुषार्थ एव । न तु क्रत्वर्थः । द्रव्यार्जनविधानस्य पुरुषार्थत्वेन लिप्सासूत्रे विचारितत्वात् ।

तथा हि –द्रव्यप्राप्तिः क्रत्वर्था पुरुषार्था वा?–इति संशयः । तत्र पूर्वः पक्षः क्रत्वर्थेयम् । तथा सति नियमस्यार्थवत्त्वात् । ब्राह्मणस्य याजनादिना क्षत्रियस्य जयादिना वैश्यस्य कृष्यादिना–इति नियमः। स च पुरुषार्थपक्षे ऽनर्थकः स्यात् ।

---

१. A. reads द्रव्यमार्जयन् for द्रव्यमर्जयन्. २. We read with A. ; and B. E. G. H. read पूतप्रातिग्रहः ; and C. D. F. पूतःपरिग्रहः for शुद्धः प्रतिग्रहः. ३. B. C. D. F. and H. read त्रितयं instead of त्रिविधा. ४. H. reads -नैय्यमविधिः for -न्नियमाविधिः. ५. A. C. and F. read पूर्वपक्षः for पूर्वः पक्षः; and D. reads पूर्वपक्षे for the same. ६. B. C. F. and H. read तथापि for तथा सति ; E. reads तथा हि ; while G. only तथा. ७. A. omits क्षत्रियस्य जयादिना.

उपायान्तरेणार्जितस्यापि द्रव्यस्य क्षुत्प्रतिघातादिपुरुषार्थसम्पादकत्वात् । क्रतुस्तु नान्यथा सिद्ध्यति । अतस्तत्र नियमो ऽर्थवान्–इति प्राप्ते ब्रूमः । द्रव्यं हि सम्पादितं सत् पुरुषं प्रीणयति । अतस्तस्य पुरुषार्थत्वं प्रत्यक्षेदृष्टम् । क्रत्वर्थता तु नियमान्यथाऽनुपपत्त्या कल्प्यते । क्लृप्तं च कल्प्याद्बलीयः । सति च पुरुषार्थत्वे क्रतोरपि भोजनादिवत् पुरुषकार्यतया तदर्थता ऽप्यर्थान् सम्पद्यते । नियमस्तु पुरुषार्थे ऽप्यर्जनविधौ किञ्चिददृष्टं जनयिष्यति । क्रत्वर्थत्ववादिनो जीवनलोपेन क्रतुरपि न सिध्येत् । अतः पुरुषार्थो याजनादिः–इति सिद्धम् ।

ऋत्विग्भिर्विना याजयिता ऽन्यो न को ऽप्यस्ति–इति चेत् । नैवम् । आपस्तम्बसूत्रे षोडशानामृत्विजां वरणमभिधाय याजयितुः सप्तदशस्य पृथग्वरणाभिधानात्–

'सदस्यं सप्तदशं कौषीतकिनः समामनन्ति । स कर्मणामुपद्रष्टा भवति'–इति । अत एव वसिष्ठवंशोत्पन्नस्य सात्यहव्यनामकस्य महर्षेः प्रश्नवाक्ये देवभागस्य सृञ्जयनामकान् ब्राह्मणान् प्रति याजकत्वं तैत्तिरीयकब्राह्मणे श्रूयते–

'वासिष्ठो ह सात्यहव्यो देवभागं पप्रच्छत् सृञ्जयान् बहुयाजिनो यजे'– तै. सं. ६. ६. २)

---

१. D. reads नियमो ऽनर्थवानिति. for नियमो ऽर्थवानिति. २. A. reads प्रत्यक्षं द्रष्टव्यम instead of प्रत्यक्षदृष्टम्. ३. H. in the original has क्लृप्तं च; but in the margin it has been corrected to श्रुतं च. ४. A. omits च. ५. A. and D. read पुरुषार्थतया for पुरुषकार्यतया. ६. A. reads क्रत्वर्थवादिनो for क्रत्वर्थत्ववादिनो. ७. B. C. and F. read सिध्येत for सिध्येत. ८. A. substitutes तस्मात for अतः; while B. C. D. and F. omit both. ९. D. reads ऋत्विग्विना instead of ऋत्विग्भिर्विना. १०. D. omits अस्ति. ११. All except I. omit the following from नैवम् up to वर्णाभिधानात् both inclusive in the next line. १२. A. reads सत्यहव्यनामकस्य instead of सात्यहव्यनामकस्य.

इति । तथा कौषीतकिब्राह्मणे[1] चित्रनामकं प्रति श्वेतकेतो-र्याजकत्वमाम्नातम्—

‘चित्रोऽङ्गवो[2] गार्ग्यायणिर्यक्ष्यमाण आरुणिं[3] वव्रे । स ह पुत्रं श्वेतकेतुं प्रजिघाय[4] याजयेति’—

इति । तस्माद् ऋत्विग्भ्योऽन्यः सदस्यो याजयिता । ऋत्विजो वा याजयितारः सन्तु । सर्वथाऽप्यस्ति ब्राह्मणानां जीवनहेतुर्याजनम् ।

तत्रेतिकर्तव्यतारूपेण कृष्णाजिन-वाससोरन्यतरेणोपवीतित्वं तैत्तिरीयके विधीयते—

‘तस्माद्यज्ञोपवीत्येवाधीयीत[5] याजयेद्यजेत् वा यज्ञस्य प्रसृत्या अजिनं वासो वा दक्षिणत उपवीय’— (तै. आ. २.१)

इति । मन्त्रेषु[6] ऋष्यादिज्ञानं च याजनाङ्गत्वेन छन्दोगब्राह्मणे समाम्नायते—

‘यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति वा अध्यापयति वा स्थाणुं वर्च्छति गर्तं[7] वा पद्यते वा[8] म्रियते पापीयान् भवति । यातयामान्यस्य छन्दांसि भवन्ति । अथ यो मन्त्रे मन्त्रे वेद[9] सर्वमायुरेति । श्रेयान् भवति । अयातयामान्यस्य च्छन्दांसि भवन्ति । तस्मादेतानि मन्त्रे मन्त्रे विद्यात्’—(छं. ब्रा. ३. ७. ५ )इति ।

---

१. A. reads कौषातिकब्राह्मणे for कौषीतकिब्राह्मणे. २. A. reads चित्रो ह वै for चित्रोऽङ्गवो. ३. We read with A.; all others read -यक्षमाणमारुणिं for -यक्षमाण आरुणिं. ४. A. reads प्रतिहूय for प्रजिघाय. ५. D. omits the whole quotation तस्मात् &c., up to इति after the sentence. ६. B. C. D. E. and F. read मन्त्रे instead of मन्त्रेषु ; and G. H. read मन्त्र-ऋष्यादि- ७. G. reads गर्तं वा पाद्यते for गर्तं वा पद्यते. ८. A. E. G. and H. प्रवामीयते for वा म्रियते. ९. A. omits वेद.

ननु—क्वचित् याजनस्य[1] क्वचित् प्रतिग्रहस्य च निन्दितत्वात्[2] तदनुष्ठानवतः स्वाध्याय-गायत्र्योर्जप आम्नायते—

'रिच्यत इव वा[3] एष प्रैवं[4] रिच्यते यो याजयति प्रति वा गृह्णाति। याजयित्वा प्रतिगृह्य वा ऽनश्नन् त्रिःस्वाध्यायं वेदमधीयीत। त्रिरात्रं वा सावित्रीं गायत्रीमन्वातिरेचयति'—
(तै. आ. २. १८)

इति। तथा ऽन्यत्रापि—

'दुहे ह वा एष छन्दांसि यो याजयति स येन यज्ञक्रतुना याजयेत्। सो ऽरण्यं परेत्य शुचौदेशे स्वाध्यायमेवैनमधीयन्नासीत। तस्यानशनं[5] दीक्षा, स्थानमुपसदः, आसनस्य सुत्या, वाग् जुहूः, मन उपभृत्, धृतिः ध्रुवा, प्राणो हविः, सामाऽध्वर्युः, स वा एष यज्ञः प्राणदक्षिणो ऽनन्तदक्षिणः समृद्धतरः'। (तै. आ. २. १६)

इति चेत्। नायं दोषः। तस्य[6] अयाज्ययाजनविषयत्वात्। जीवितात्ययमापन्नस्य प्राणरक्षणार्थमयाज्ययाजनमपि[7][8] सम्भाव्यते। तथा च वाजसनेयब्राह्मणम्—

'प्राणस्य वै सम्राट्कामायायाज्यं याजयति अप्रतिग्राह्यस्य[9] वा प्रतिगृह्णाति'— (बृ. उ. ४. १. ३)

इति। तत्र प्रायश्चित्तं छन्दोगा आमनन्ति—

१. All except A. read यजनं for याजनस्य; and omit the following:—क्वचित् प्रतिग्रहस्य च. २. B. C. E. F. and H. read निन्दितत्वात् instead of निन्दितत्वात्. ३. All except A. omit वा. ४. A. and G. read प्रेव for प्रैव. ५. All except A. omit the whole of the remaining beginning with तस्यानशनं; and ending with समृद्धतरः in the next but one line. For इति चेत् they all read only इति. ६. None of the copies referred mention तस्य, but we think that the connection requires it here. ७. B. C. E. F. and H. read प्राणरक्षार्थम् for प्राणरक्षणार्थम्. ८. D. omits अपि. ९. B. C. D. E. F. and G. read अप्रतिगृह्यस्य; and H. reads अप्रतिगृह्य, and all omit वा.

'तदा अयाज्ययाजने दक्षिणास्त्यक्त्वा मासं चतुर्थकाले भुञ्जानः तन्मन्त्रान् गायेत्'--छं. ब्रा. ५. १. ३)

इति । तथा सुमन्तुरपि स्मरति--

'शूद्रयाजकः सर्वद्रव्यपरित्यागात् पूतो भवति । अभिशस्त-पतित-पौनर्भव-भ्रूणहृ-पुंश्चल्यशुचि-शस्त्रकार-तैलिक-चाक्रिक-ध्वाजि-सुवर्णकार-वर्मकार-पङ्कक-वर्धकि-गण-गणिक-सौनि-क-व्याध-निषाद-रजक-बुरुड-चर्मकारा अभोज्यान्ना अप्रति-ग्राह्या अयाज्याश्च' ।

इति । तथा च वसिष्ठः--

'दक्षिणात्यागाच्च पूतो भवतीति-विज्ञायते' ।

इति । तथा बौधायनोऽपि--

*'बहुप्रतिग्राह्यस्य वा प्रतिगृह्य अयाज्यं वा याजयित्वा

* अत्रेदमशुद्धमिव प्रतिभाति । बौधायनस्मृतौ तु--'बहु प्रतिग्रा-ह्यस्याऽप्रतिग्राह्यस्य वा प्रतिगृह्य अयाज्यं वा याजयित्वा अनाश्याम्नस्य वा ऽन्नमशित्वा तरत्समन्दीयं जपेदिति' ।

१. A. omits तदा; H. reads तदीयाज्ययाजने for तदा अयाज्ययाजने. २. D. reads दक्षिणां instead of दक्षिणाः. ३. B. C. and F. read -जाने इत्येतद्धारयेदिति; E. reads जान इत्येतद्धायेदिति; G. जान इत्येतद्धापयेदिति; and H. जानीतित्येतद्धारयेदिति all for तन्मन्त्रान् गायेदिति. ४. All except A. and D. read शूद्रद्रव्यपरित्यागात् for सर्वद्रव्यपरित्यागात्. ५. Excepting A. and I. others read -वस्त्रकार-; G. reads -वस्त्रकारि-, for -शस्त्रकार-. ६. A. reads आलेख्यक- for -वर्मकार-; and omits -बुरुड-; B. C. and F. read -वेश्मक- for -वर्मकार- with no other difference; E. reads after -सुवर्णकार-, चर्मक-पङ्कु-बान्धकिनेय-गाणिक-सौनिक-व्याध निषाद-रजक-चुरुंड-वर्मकाराः for all that follows in the text; G. continues after स्वर्णकार, चर्मकर-पङ्कु-बन्धकिलागणिक- all the rest is that given in the text with the exception -चर्मकार- for which it substitutes वर्मकाराः; and H. proceeds after -सुवर्णकार-, वर्मकर-पङ्कु-बन्धकि- all the remaining being that of the text except -बुरुड- for which it reads -वरुड-. ७. A. reads विज्ञायत for विज्ञायते. ८. B. C. D. and F. read बहुप्रतिग्राह्यस्य for बहुप्रतिग्राह्यस्य. ९. All except A. omit वा.

नाद्यात्। तस्य च[2]न्नमशित्वा तरत्स[3]मन्दीयं जपेत्’

(बौ. स्मृ. २. २. ५. ८)

इति। अयाज्य[4]याजकलक्षणं देवलेन दर्शितम्—

‘यः शूद्रान् पतितांश्चापि याजयेदर्थकारणात्।
याजितो वा पुनस्ताभ्यां ब्राह्मणो ऽयाज्ययाजकः’॥

इति[5]।

## ॥ इति याजनप्रकरणम् ॥

त[6]देवं याजनं निरूपितम्। अथ दान-प्रतिग्रहौ निरूप्येते। तत्र दानविषया श्रुतिः—

‘दानमिति सर्वाणि भू[7]तानि प्रशंसन्ति।
दानान्नातिदु[8]श्चरं तस्माद्दाने रमन्ते’—

(म. ना. उ. २१. २)

इति। तथा वाक्यान्तरमपि—

‘दानं यज्ञानां वरूथं दक्षिणा लोके दातारं सर्वभूतान्युपजीवन्ति। दानेनारातीनपानुदन्त। दानेन द्विषन्तो मित्रा भवन्ति। दाने सर्वं प्रतिष्ठितम्। तस्माद्दानं परमं वदन्ति’—

(म. ना. उ. २२. १.)

* अयमेव पाठो युक्तः। प्रतिग्राह्यस्य बहु प्रतिगृह्य अप्रतिग्राह्यस्य वा प्रतिगृह्येति योजना। प्रतिग्राह्यस्यापि बहुप्रतिग्रहो निषिद्धः। ‘यावता पञ्चयज्ञानां कर्तुर्निर्वहणं भवेत्’ इत्यादिना मूले स्पष्ट एव।

१. A. reads नाश्यात् for नाद्यात्. २. A. D. and G. substitute वा for च. ३. A. omits तरत्समन्दीयं जपेदिति. ४. E. reads only अयाजकलक्षणं for अयाज्ययाजकलक्षणं. ५. A. omits इति. ६. A. reads इत्थं for तदेवं. ७. B. C. D. E. and F. read भुतानि for भूतानि. ८. A. reads दुष्करम् for दुश्चरम्.

इति । आदित्यपुराणे ऽपि—

‘न दानादधिकं किञ्चित् दृश्यते भुवनत्रये ।
दानेन प्राप्यते स्वर्गः श्रीर्दानेनैव लभ्यते ।
दानेन शत्रून् जयति व्याधिर्दानेन नश्यति ।
दानेन लभ्यते विद्या दानेन युवतीजनः ॥
धर्मा-ऽर्थ-काम-मोक्षाणां साधनं परमं* स्मृतम्’ ।

इति । एवं श्रुति-स्मृतिभ्यां प्रशंसापूर्वको दानविधिरु[1]न्नीतः । याज्ञ[2]वल्क्यस्तु साक्षाद्दानं व्यधत्त—

‘दातव्यं प्रत्यहं पात्रे निमित्तेषु विशेषतः ।
याचितेनापि दातव्यं श्रद्धापूर्वं[3] तु शक्तितः ॥ (२०३)
गो-भू-तिल-हिरण्यादि पात्रे दातव्यमर्चिते[4] ।
नाऽपात्रे विदुषा किञ्चिदात्मनः श्रेय इच्छता’ ॥
(या. स्मृ. १. २०१)

इति । ए[5]तयोरन्यतरः स्वरूपविधिः । इतरस्तु गुणविधिः । मनुरपि—

‘दान[6]धर्मं निषेवेत नित्य-नैमि[7]त्तसंज्ञकम् ।
परितुष्टेन भावे[8]न पात्रमासाद्य शक्तितः’ ॥
(म. स्मृ. ४. २२७)

* अत्र ‘दानं’ इति शेषः ।

१. H. reads दानविधिराम्नातः instead of दानविधिरुन्नीतः. २. All except A. read याज्ञवल्क्यो. ऽपि for याज्ञवल्क्यस्तु. ३. B. C. and F. read -पूतं तु for -पूर्वं तु. ४. We read with A., while all others read -मार्चितम् for -मर्चिते. ५. A. D. E. G. and H. read तयोः for एतयोः. ६. A. and D. read दानं धर्मं for दानधर्मं. ७. B. C. G. and H. read नित्य-नैत्यक-पौष्टिकम् for नित्य-नैमित्तसंज्ञकम्, D. for the same reads नित्यमौष्टिक-पौष्टिकम्; while E. and F. read नित्य-नित्यक-पौष्टिकम्. ८. D. reads वेदेन for भावेन.

इति । वह्निपुराणे[1] च अदाने[2] वित्तवैयर्थ्योक्ति[3]पुरःसरं दानं विहितम्–

'यस्य वित्तं न दानाय नोपभोगाय देहिनाम् ।
नापि कीर्त्यै न धर्माय तस्य वित्तं निरर्थकम् ॥
तस्माद्वित्तं समासाद्य दैवाद्वा पौरुषादथ[4]* ।
दद्यात् सम्यग् द्विजातिभ्यः कीर्त्तनानि न कारयेत्' ॥

इति । विष्णुधर्मोत्तरे दानाभावे बाधमाह[5]–

'सीदते द्विजमुख्याय यो ऽर्थिने न प्रयच्छति ।
सामर्थ्ये सति दुर्बुद्धिर्नरकायोपपद्यते' ॥

इति । ब्रह्मपुराणे ऽपि–

'सदाचाराः कुलीनाश्च रूपवन्तः प्रियंवदाः ।
बहुश्रुताश्च[6] धर्मज्ञा याचमानाः परान् गृहान् ॥
दृश्यन्ते दुःखिताः[7] सर्वे प्राणिनः सर्वदा मुने ।
अदत्तदाना जायन्ते परभाग्योपजीविनः' ॥

इति । व्यासो ऽपि–

'अक्षरद्वयमभ्यस्तं नास्तिनास्तीति यत् पुरा ।
तदिदं देहिदेहीति विपरीतमुपस्थितम्' ॥

* दैवं पुरुषकारश्चेत्युभावपि न पृथक्त्वेन कार्यकरणक्षमौ। दैव–पौरुषवादिनस्तु तयोरितरेतरानपेक्षत्वं साटोपं प्रतिपादयन्ति । तथापि 'उभाभ्यामेव पक्ष्याभ्यां यथा खे पक्षिणां गतिः । दैवं पुरुषकारश्च निर्दिष्टौ कार्यसिद्धये' अयमेव सिद्धान्तः । उभयथापि प्राप्तं वित्तं देयमित्यर्थः ।

१. A. substitutes अग्नि- for वह्नि-. २. D. E. G. and H. omit अदाने. ३. B. C. E. F. and H. read -व्यर्थोक्ति- for -वैयर्थ्योक्ति-; while G. reads -व्ययोक्ति- for the same. ४. D. reads पुरुषादथ for पौरुषादथ. ५. B. C. D. and F. read बाधकमाह for बाधमाह. ६. All except A. substitute तु for च. ७. A. B. C. D. and F. read दुःखिनः for दुःखिताः.

इति[1]। स्कान्दे ऽपि—

'देहीत्येवं ब्रुवन्नर्थी जनं बोधयतीव सः।
य[2]दिदं कष्टमर्थित्वं प्रागदानफलं हि तत्॥
एकेन तिष्ठता ऽधस्तादन्येनोपरि तिष्ठता।
दातृ-याचकयोर्भेदः कराभ्यामेव सूचितः॥
दीयमानं तु यो मोहात् गो-विप्रा-ऽग्नि-सुरेषु च।
निवारयाति पापात्मा तिर्यग्योनिं व्रजेत्तु सः'॥

इति। शातातपो ऽपि—

'मा[3] ददस्वेति यो ब्रूयात् गव्यग्नौ ब्राह्मणेषु च।
तिर्यग्योनिशतं गत्वा चाण्डालेष्व[4]भिजायते'॥

(वृ. गौ. स्मृ. १४. ४१)

इति। दानस्य[5] स्वरूपं तत्रेतिकर्त्तव्यतां च देवलो दर्शयति—

'अर्थानामुदिते पात्रे श्रद्धया प्रतिपादनम्।
दानमित्यभिनिर्दिष्टं व्याख्यानं तस्य वक्ष्यते॥
द्विहेतु[6] षडधिष्ठानं षडङ्गं षड्विपाकयुक्।
चतुःप्रकारं त्रिविधं त्रिणाशं[7] दानमुच्यते॥
नाल्पत्वं वा बहुत्वं वा दानस्याभ्युदयावहम्।
श्रद्धा-भक्ती[8]* च दानानां वृद्धि[9]-श्रेयस्करे हि ते॥

* यस्मात् श्रद्धा च भक्तिश्च दानस्य वृद्धि-श्रेयस्करे तस्मादिमौ द्वौ हेतू भवतः इति योजना।

१. A. omits इति. २. B. C. D. and F. read य इदं. ३. D. reads अददस्वेति for मा ददस्वेति. ४. A. D. G. and H. read -ष्वपि जायते for -ष्वभिजायते. ५. D. reads दानस्वरूपं for दानस्य स्वरूपं. ६. A. E. G. and H. read द्विहेतुः for द्विहेतु. ७. A. reads त्रिनाद्रं for त्रिणाशं; E. त्रिवाचं; G. त्रिवाचां and H. त्रिबाधं; all for the same. ८. All except A. read श्रद्धाभक्तिश्च. for श्रद्धा-भक्ती च. ९. We read with A., all others read वृद्धि-क्षयकरे for वृद्धि-श्रेयस्करे.

धर्ममर्थं च कामं च व्रीडा-हर्ष-भयानि च ।
अधिष्ठानानि दानानां षडेतानि प्रचक्षते ॥
पात्रेभ्यो* दीयते नित्यमनपेक्ष्य[1] प्रयोजनम् ।
केवलं त्यागबुद्ध्या[2] यत् धर्मदानं तदुच्यते ॥
प्रयोजनमुपेक्ष्यैव प्रसङ्गात् यत् प्रदीयते ।
तदर्थदानमित्याहुरैहिकं[3] फलहेतुकम् ॥
स्त्री-पान-मृगया-ऽक्षाणां प्रसङ्गाद् यत् प्रदीयते ।
अनर्हेषु च रागेण[4] कामदानं तदुच्यते ।
संसदि व्रीडया तुल्यैष्वर्थो[5] ऽर्थिभ्यः प्रयाचितः ॥
प्रदीयते च यद्दानं व्रीडादानमिति स्मृतम् ।
दृष्ट्वा प्रियाणि श्रुत्वा वा हर्षाद् यद्यत् प्रयच्छति ॥
हर्षदानमिति प्राहुर्दानं तद्धर्मचिन्तकाः[6] ॥
आक्रोशा[7]-ऽनर्थ-हिंसानां प्रतीकाराय यद्भयात्[8] ।
दीयते वा[9]ऽपकर्तृभ्यो भयदानं तदुच्यते ॥
दाता प्रतिग्रहीता च श्रद्धा देयं च[10] धर्मयुक् ।
देश-कालौ च दानानामङ्गान्येतानि षड्विदुः ॥

---

* अधिष्ठानान्येव विवृणोति पात्रेभ्य इत्यादिना ।

---

१. D. reads -मनवेक्ष्य for -मनपेक्ष्य. २. A. reads धर्मबुद्ध्या for त्यागबुद्ध्या. ३. D. reads -वैदिकम् for -रैहिकम्. ४. B. C. and F. read राजेन्द्र for रागेण. ५. For तुल्यैष्वर्थोऽर्थिभ्यः प्रयाचितः A. reads -स्तुत्या चार्थिभ्यो यत्प्रयाचितम्; and B. C. E. F. H. read स्तुत्या चार्थोऽर्थिभ्यः प्रयाचितः. ६. A. omits तत् and reads -विचिन्तकाः for -चिन्तकाः. ७. A. and I. read आक्रोशनार्थं for आक्रोशानर्थ-, and D. -चित्तानां for -हिंसानां. ८. All others except A. read भवेत् for भयात्. ९. B. C. and F. read चापहारिभ्यो ; and D. reads the whole line दीयते तापकर्तृभ्यः तापदानं तदुच्यते; E. G. पापकर्तृभ्यः, and H. reads तत्प्रकर्तृभ्यः for वापकर्तृभ्यः. १०. D. has तु for च; and all others except A. D. read कर्मयुक् for धर्मयुक्.

अपापरोगी* धर्मात्मा दित्सुरव्यसनः[1] शुचिः ।
अनिन्द्यजीवकर्मा च षड्भिर्दाता प्रशस्यते ॥
त्रिशुक्लः[2] कृशवृत्तिश्च घृणालुः सकलेन्द्रियः[3] ।
विमुक्तो योनिदोषेभ्यो ब्राह्मणः पात्रमुच्यते' ॥

इति । 'त्रिशुक्ल' इति त्रिभिर्माता-पित्राचार्यैः शिक्षितत्वेन शुद्धः ।

'शौचंशुद्धिर्महाप्रीतिरर्थिनां[4][5] दर्शने तथा ।
सत्कृतिश्चाऽनसूया च दानश्रद्धेत्युदाहृता[6] ॥
अपराबाधमक्लेशं[7] स्वयत्नेनार्जितं धनम् ।
स्वल्पं वा विपुलं वा ऽपि देयमित्यभिधीयते ॥
यद्यत्र दुर्लभं द्रव्यं यस्मिन् काले ऽपि वा पुनः ।
दानार्हौ देश-कालौ तौ स्यातां श्रेष्ठौ न चान्यथा ॥
अवस्था-देश-कालानां पात्र-दात्रोश्च सम्पदा ।
हीनं वापि[8] भवेच्छ्रेष्ठं श्रेष्ठं वा ऽप्यन्यथा भवेत् ॥
दुष्फलं निष्फलं हीनं तुल्यं विपुलमक्षयम् ।
नास्तिक-स्तेन हिंस्रेभ्यो जाराय[9] पतिताय च ॥

* अङ्गान्येव विभजति अपापरागीत्यादिना ।

१. A. reads अव्याजतः for अव्यसनः if this reading is applied here the number shown in the text falls below, *i. e.*, it becomes only five. २. A. only reads शुक्लवृत्ति- for कृशवृत्ति-. ३. A. and I. read संयतेन्द्रियः for सकलेन्द्रियः; but this does not give good meaning. ४. A. and I. read शौचं शुद्धिः for शौचशुद्धिः. ५. I. only reads -रर्थिनो for -रर्थिनां. ६. A. and I. read दाने- for दान-. ७. A. and I. read आचारा- for अपरा-; this reading does not give good sense. We refer to the twelfth line from this line. ८. A. reads चा- for वा-. ९. All others except A. and I. read चोराय for जाराय; we do not accept this because स्तेन being in the verse before the word चोर gives the same meaning, therefore our reading gives good sense.

षड्विपाकयुगुद्दिष्टं षडेतानि विपाकतः ।
पिशुन-भ्रूणहन्तृभ्यां प्रदत्तं दुष्फलं भवेत् ॥
महदप्यफलं दानं श्रद्धया परिवर्जितम् ।
परबाधाकरं[1] दानं स्फीतमप्यूनतां[2] व्रजेत् ॥
यथोक्तमपि चेद्दत्तं[3] चित्तेन कलुषेण तु ।
तत्तु[4] सङ्कल्पदोषेण[5] दानं तुल्यफलं भवेत् ॥
युक्ताङ्गैः सकलैः षड्भिर्दानं स्याद्विपुलोदयम् ।
अनुक्रोशवशाद्दत्तं[6] दानमक्षयतां[7] व्रजेत् ॥
ध्रुवमाजस्रिकं काम्यं नैमित्तिकमिति क्रमात् ।
वैदिको[8] दानमार्गो ऽयं चतुर्धा वर्ण्यते[9] बुधैः[10] ॥
प्रपा-ऽऽराम-तडागादि सर्वकामफलं ध्रुवम्[11] ।
तदाऽऽजस्रिकमित्याहुर्दीयते यद्दिने दिने ॥
अपत्य-विजयैश्वर्य-स्त्री-बालार्थं यदिष्यते ।
इच्छासंज्ञं तु यद्दानं[12] काम्यमित्यभिधीयते ॥
कालापेक्षं क्रियापेक्षमर्थापेक्षमिति स्मृतम् ।
त्रिधा नैमित्तिकं प्रोक्तं सहोमं होमवर्जितम् ॥

---

१. All others except A. and I. read बाधकरं for बाधाकरं. २. All others except A. read कृतं for स्फीतं; and D. reads remaining half line कृतं च न कृतं भवेत् ।. ३. A. and I. read यद्दानं for चेद्दत्तं; and E. G. H. read चेद्वृत्तं, but this does not give good sense. ४. B. C. E. F. and H. read यत्तु for तत्तु; but this is not applicable to the past line. ५. D. reads -शोषेण for -दोषेण. ६. B. C. F. and H. read अनुक्रोशवता for अनुक्रोशवशात्; F. and G. read -वशाद्दत्तम्. ७. A. and D. read अक्षय्यतां for अक्षयतां. ८. A. reads दिव्यं च, and I. दैविको for वैदिको. ९. D. reads वर्णितो for वर्ण्यते. १०. All others except A. I. read द्विजैः for बुधैः. ११. A. D. and G. read फलप्रदं for फलं ध्रुवम्; as the four divisions are quoted in the preceding line such as ध्रुवं, आजस्रिकं, काम्यम्, नैमित्तकम्, the reading फलप्रदं is not applicable here. १२. D. reads तत् for यत्.

तत्रो[1]त्तमानि चत्वारि मध्यमानि विधानतः ॥
अधमानि तु शेषाणि त्रिविधत्वमिदं विदुः ।
अ[2]न्न-विद्या-मधु[3]-स्त्रीणां गो-भू-रुक्मा-ऽश्व-हस्तिना[4]म् ॥
दानान्युत्तमदानानि उत्तमद्रव्यदानतः ।
विं[5]द्योदाच्छादनं वासः परिभोगौषधानि च ॥
दानानि मध्यमानीति मध्यमद्रव्यदानतः ।
उपानत्-प्रेष्य-यानानि छत्र-पात्रा-ऽसनानि च ॥
दीप-काष्ठ-फलादीनि चरमं बहुवार्षि[6]कम् ।
बहुत्वादर्थजातानां संख्या शेषेषु नेष्यते ॥
अधमान्यवशिष्टानि सर्वदानान्यतो विदुः ।
इष्टं* दत्तमधीतं वा प्रणश्यत्यनुकीर्तनात् ॥
श्लाघा-ऽनुशोचनाभ्यां वा भग्नतेजा[7] विपद्यते ।
तस्मादात्मकृतं पुण्यं न वृथा परिकीर्त्तयेत्' ॥

इति[8] । नित्य-नैमित्तिक-काम्य-विमलाख्याश्च[9]त्वारो दानभेदाः पुराणसारे दर्शिताः । सात्त्विकादिभेदान् भगवानाह—

'दातव्यमिति यद्दानं दीयते ऽनुपकारिणे ।
[10]देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम् ॥

---

*यदुक्तं त्रिणाशमिति तानेव त्रिविधान् नाशानाह । इष्टमित्यादिना ।

---

१. A. and I. read नवोत्तमानि, and D. reads न चोत्तमानि for तत्रोत्तमानि. २. D. reads अन्नंविद्या for अन्न-विद्या-. ३. A. -वधू-वस्त्र- for-मधु-स्त्रीणां and D. H. read -मधुत्राणां for the same. ४. D. reads -हस्तिनः for -हस्तिनाम्. ५. A. D. G. and H. read विद्यात् for विंद्यात्. ६. A. reads -साक्षिकं for -वार्षिकम्. ७. E. H. and I. read -तेजो for-तेजा-. ८. A. B. C. and F. omit इति. ९. I. alone takes च. १०. G. H. read काले देशे च for देशे काले च ; but such reading does not occur in गीता.

यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः ।
दीयते च परिक्लिष्टं तद्राजसमुदाहृतम् ॥
अदेश-काले यद्दानमपात्रेभ्यश्च दीयते ।
असत्कृतमवज्ञातं तत्तामसमुदाहृतम्' ॥
( भ. गी. १७. २०–२२ )

इति । तत्र फलविशेषो विष्णुधर्मोत्तरे दर्शितः–

'तामसानां फलं भुङ्क्ते तिर्यक्त्वे[1] मानवः सदा ।
वर्णसङ्करभावेन वार्द्धके यदि वा पुनः ॥
बाल्ये वा दास[2]भावेन नात्र कार्या विचारणा ।
अतोऽन्यथा तु मानुष्ये राजसानां[3] फलं भवेत् ॥
सात्विकानां फलं भुङ्क्ते देवत्वे नात्र संशयः' ।

इति । तत्र दान[4]पात्रमाह याज्ञवल्क्यः—

'न विद्यया केवलया तपसा वाऽपि पात्रता ।
यत्र वृत्तमिमे चोभे तद्धि पात्रं प्रचक्षते' ॥
( या. स्मृ. १. २०० )

इति । यमोऽपि—

'विद्यायुक्तो धर्मशीलः[5] प्रशान्तः
क्षान्तो दान्तः सत्यवादी कृतज्ञः ।
स्वाध्यायवान् धृतिमान्[6] गोशरण्यो
दाता यज्वा ब्राह्मणः पात्रमाहुः'

१. G. alone reads तिर्यक्त्वं for तिर्यक्त्वे. २. All except A. H. I. read समभा- for दासभा-, the reading समभावेन is marginally noted afterwards on H. by striking off that the समभाव. ३. D. and G. read राक्षसानां for राजसानां; this is quite contrary to what is meant by the author. ४. D. omits the word दान- before -पात्र-. ५ A. धर्मवान्. ६. This quotation cannot be found in the यमस्मृति (Calcutta Edition by Jivanand).

इति। वसिष्ठः—

‘किञ्चिद्वेदमयं पात्रं किञ्चित् पात्रं तपोमयम्।
पात्राणामपि तत्पात्रं शूद्रान्नं यस्य नोदरे’॥
(व. स्मृ. ६. २६; व्या. स्मृ. ४. ३३)

इति। बृहस्पतिः—

‘आगमिष्यति यत् पात्रं तत् पात्रं तारयिष्यति’।
(व्या. स्मृ. ४. ३२)

इति। विष्णुधर्मोत्तरे—

‘पतनात् त्रायते यस्मात् तस्मात् पात्रं प्रकीर्त्तितम्’।

इति। स्कन्दपुराणे पात्रविशेषो ऽभिहितः[1]—

‘प्रथमं तु गुरोर्दानं दद्याच्छ्रेष्ठ[2]मनुक्रमात्।
ततो ऽन्येषां च विप्राणां दद्यात् पात्रानुसारतः॥
गुरोरभावे तत्पुत्रं तद्भार्यां तत्सुतां तथा।
पौत्रं प्रपौत्रं दौहित्रमन्यं वा तत्कुलोद्भवम्॥
तद्दाना[3]तिक्रमे[4] दानं प्रत्युताऽधोगतिप्रदम्’।

इति। यमो ऽपि—

‘सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे[5]।
प्राधीते शतसाहस्रमनन्तं वेदपारगे’॥
(व्या. स्मृ. ४.४१; द. स्मृ. ३. २९)

इति। ‘प्राधीतः’ प्रारब्धाध्ययन इत्यर्थः। संवर्त्तः—

---

१. D. reads दर्शितः, and all others except A. read विहितः for ऽभिहितः. २. D. reads -शिष्ट- for -श्रेष्ठ-. ३. B. C. E. and F. read तद्दाना-, and H. reads नद्दाना- for तद्दाना-. In H. its original reading being struck there on the margin written as न तस्यातिक्रमे दानं &c. ४. D. reads -क्रमात् for -क्रमे. ५. D. reads ब्राह्मणे ऽव्रते for ब्राह्मणब्रुवे.

'[1]उत्पत्ति-प्रलयौ चैव भूतानामागतिं गतिम् ।
वेत्ति विद्यामविद्यां च स भवेद्वेदपारगः' ॥

इति ।

'शूद्रे समगुणं दानं वैश्ये तद्द्विगुणं स्मृतम् ।
क्षत्रिये त्रिगुणं प्राहुः षड्गुणं ब्राह्मणे स्मृतम्' ॥

इति[2] । शूद्रादीनां पात्रत्वप्रतिपादनमन्नदानादिविषयम्[3] ।

'कृतान्नमितरेभ्यः' (गौ. स्मृ. ५. ९)

इति गौतमवचनात् । व्यासः—

'माता-पित्रोश्च यद्दत्तं भ्रातृ-स्वसृ-सुतासु च ।
जाया-ऽऽत्मजेषु यद्दत्तं सो ऽनिन्द्यः[4] स्वर्गसंक्रमः[5] ॥
पितुः शतगुणं दानं सहस्रं मातुरुच्यते ।
अनन्तं दुहितुर्दानं सोदर्ये दत्तमक्षयम्' ॥

(व्या. स्मृ. ४. ३०-३१)

इति[6] । भविष्योत्तरे—

'न केवलं ब्राह्मणानां दानं सर्वत्र शस्यते[7] ।
भगिनी[8]-भागिनेयानां मातुलानां पितुः[9] स्वसुः ॥
दरिद्राणां च बन्धूनां दानं कोटिगुणं भवेत्' ।

इति । शातातपो ऽपि—

१. H. omits 'प्राधीतः प्रारब्धाध्ययन इत्यर्थः । संवर्तः-' उत्पत्ति-प्रलयौ चैव भूतानामागतिं गतिं। वेत्ति विद्यामविद्यां च स भवेद्वेदपारग' इति. २. D. omits इति. ३. A. B. C. F. read दानविषयं for दानादिविषयम्; while H. reads अन्नदानातिरिक्तविषयम्. ४. स धर्मः for सो ऽनिन्द्यः. ५. A. इति is superfluous. ६. D. omits इति. ७. D. reads सर्वं प्रशस्यते for सर्वत्र शस्यते. ८. D. reads भागिनां for भगिनी-. ९. A. B. C. and E. read पितृष्वसुः for पितुः स्वसुः.

'सन्निकृष्टमधीयानमतिक्रामति[1] यो द्विजम्।
भोजने चैव दाने च दहत्यासप्तमं कुलम्' ॥

(व्या. स्मृ. ४. ३७)

इति। महाभारते ऽपि[2]—

'हृतस्वा हृतदाराश्च ये विप्रा देशविप्लवे।
अर्थार्थमभिगच्छन्ति तेभ्यो दत्तं[3] महाफलम्' ॥

इति। अपात्रमाह मनुः—

'न वार्यपि[4]* प्रयच्छेत्तु बैडालव्रतिके द्विजे।
न बकव्रतिके पापे नावेदविदि धर्मवित् ॥
त्रिष्वप्येतेषु दत्तं हि विधिना ऽप्यर्जितं धनम्।
दातुर्भवत्यनर्थाय परत्रा ऽदातुरेव च ॥
यः कारणं पुरस्कृत्य व्रतचर्यां निषेवते।
पापं व्रतेन संछाद्य बैडालं नाम तद्व्रतम्†

* 'वार्यपि' इत्यनेन अतिशयोक्त्या द्रव्यान्तरदाननिषेधो ऽयम्। वारिणस्तु सर्वार्थत्वादनिषेध इति बोध्यम्। 'पापे' इत्यत्र 'विप्रे' इति मूले विष्णुस्मृतौ च पाठः।

† मनुस्मृतौ तु नायं श्लोक उपलभ्यते। अस्य स्थाने—

'धर्मध्वजी सदा लुब्धश्छाद्मिको लोकदम्भकः।
बैडालव्रतिको ज्ञेयो हिंस्रः सर्वाभिसन्धकः' ॥

इति दृश्यते। विष्णुस्मृतावप्येवमेव। मेधातिथ्यादिभिस्त्वयमेव व्याख्यातः।

'यस्य धर्मध्वजो नित्यं सुरध्वज इवोच्छ्रितः।
प्रच्छन्नानि च पापानि बैडालं नाम तद्व्रतम्' ॥

इति चोपलभ्यते। त्रयो ऽप्येते बैडालव्रतप्रतिपादकाः प्रायशः समानार्थका एव। उपलभ्यन्ते च तत्र तत्र विभिन्नेषु पुराणादिग्रन्थेषु।

१ A. alone reads -मतिक्लिष्टं for -मधीयानं. २. A. D. and I. omit अपि; while H. omits the whole महाभारते ऽपि. ३. I. only reads दानं for दत्तं. ४. B. C. E. F. and H. read अण्वपि, and A. reads अन्येपि for वार्यपि.

अधोदृष्टिर्नैकृतिकः स्वार्थसन्धानतत्परः ।
शठो मिथ्याविनीतश्च बकव्रतचरो द्विजः' ॥
( म. स्मृ. ४. १९२-१९६ ; वि. स्मृ. ९३. ७-९ )

इति । शातातपोऽपि-

'नष्टं देवलके दत्तमप्रतिष्ठं च वार्धुषौ ।
यच्च वाणिजके दत्तं न च तत् प्रेत्य नो इह' ॥

इति । देवलकश्च स्कान्दे दर्शितः-

'देवार्चनरतो विप्रो वित्तार्थी वत्सरत्रयम् ।
स वै देवलको नाम हव्य-कव्येषु गर्हितः' ॥

इति । वृद्धमनुः-

'पात्रभूतोऽपि यो विप्रः प्रतिगृह्य प्रतिग्रहम् ।
असत्सु विनियुञ्जीत तस्मै देयं न किञ्चन ॥
सञ्चयं कुरुते यश्च प्रतिगृह्य समन्ततः ।
धर्मार्थं नोपयुङ्क्ते च नं तं तस्करमर्चयेत्' ॥

इति विष्णुधर्मोत्तरे-

'परस्वादेर्वृथा दानमशेषं परिकीर्त्तितम् ।
आरूढपतिते चैव अन्यथाप्तैर्धनैश्च यत् ॥
व्यर्थमब्राह्मणे दानं पतिते तस्करे तथा ।
गुरोश्चाऽप्रीतिजनके कृतघ्ने ग्रामयाजके ॥

१. A. reads -वृत्तिकरः, and G. -व्रतधरः for -व्रतचरः. २. H. omits तातपोऽपि. ३. D. omits from देवलकश्च स्कान्दे दर्शितः to गर्हितः. ४. A. reads -कव्यविगर्हि- for -कव्येषु गर्हि-. ५. A. reads नोपयुञ्जीत for नोपयुंक्ते. ६. A. D. E. G. H. and I. read परस्थाने for परस्वादेः. ७. I. reads आरूढे for आरूढ-.

वेदविक्रयके चैव यस्य चोपपतिर्गृहे।
स्त्रीभिर्जितेषु यद्दत्तं व्यालग्राहे तथैव च॥
ब्रह्मबन्धौ च यद्दत्तं यद्दत्तं वृषलीपतौ।
परिचारेषु यद्दत्तं वृथा दानानि षोडश' ॥

इति। महाभारते—

'पङ्ग्वन्ध-बधिरा मूका व्याधिनोपहताश्च ये।
भर्तव्यास्ते महाराज न तु देयः प्रतिग्रहः' ॥

इति। पात्रोपेक्षणमपात्रदानं च मनुर्निषेधति—

'अनर्हते यद्ददाति न ददाति यदर्हते।
अर्हानर्हापरिज्ञानाद्दानाद्धर्माच्च हीयते' ॥

(म. स्मृ. ३. ९९; म. भा. शां. २०. ९)

इति। भविष्योत्तरे देयस्वरूपं निरूपितम्—

'यद्यदिष्टं विशिष्टं च न्यायप्राप्तं च यद्भवेत्।
तत्तद् गुणवते देयमित्येतद्दानलक्षणम्' ॥

(म. स्मृ. ३. ११९; वि. स्मृ. ९३. ३२;
सं. स्मृ. ४६; म. पु. १४५. ५१)

इति। अशेषस्य देयत्वप्राप्तौ विशेषमाह याज्ञवल्क्यः—

'स्वकुटुम्बाविरोधेन देयं दार-सुतादृते।
नान्वये* सति सर्वस्वं यच्चान्यस्मै प्रतिश्रुतम्' ॥

( या. स्मृ. २. १७५ )

* कुटुम्बभरणावशिष्टं दार-सुतौ वर्जयित्वा देयम्। पुत्र-पौत्रादिरूपे ऽन्वये सति तु विद्यमानं सर्वं धनं न दद्यादित्यर्थः।

१. D. reads कालग्राहे for व्यालग्राहे. २. H. reads व्याधिना ऽप- for व्याधिनोप-. ३. B. C. E. F. and G. read धर्मा ऽधर्माच्च for दानाद्धर्माच्च, and in H. the original धर्मा ऽधर्माच्च being stricken दानाद्धर्माच्च is written on the margin. ४. D. reads समप्रा- for न्यायप्रा-. ५ D. reads यथा -for यच्चा-.

इति । बृहस्पतिरपि—

'कुटुम्बभक्त-वसनाद्देयं यदतिरिच्यते' ।

इति । शिवधर्मे—

'तस्मात्त्रिभागं[1] *वित्तस्य जीवनाय प्रकल्पयेत् ।
भागद्वयं तु धर्मार्थमनित्यं जीवितं यतः' ॥

इति । कुटुम्बाविरोधेन देयमित्युक्तं तस्यापवादमाह व्यासः—

'कुटुम्बं पीडयित्वाऽपि ब्राह्मणाय महात्मने ।
दातव्यं भिक्षवे† चान्नमात्मनो भूतिमिच्छता' ॥

इति । देयविशेषेण फलविशेषमाह मनुः—

'वारिदस्तृप्तिमाप्नोति सुखमक्षय्यमन्नदः ।
तिलप्रदः प्रजामिष्टां दीपदश्चक्षुरुत्तमम् ॥
भूमिदो भूमिमाप्नोति दीर्घमायुर्हिरण्यदः ।
गृहदोऽग्र्याणि[2] वेश्मानि रूप्यदो रूपमुत्तमम् ॥
वासोदश्चन्द्रसालोक्यमश्विसालोक्यमश्वदः ।
अनडुहः श्रियं जुष्टां[3] गोदो ब्रध्नस्य विष्टपम् ॥

---

* नारदेन तु वित्तस्य पञ्चधा विभागो दर्शितः । तद्यथा—

'धर्माय यशसेऽर्थाय कामाय स्वजनाय च ।
पञ्चधा विभजन्वित्तमिहामुत्र च मोदते' ॥

इति । अयमेव युक्तो द्रव्यविभाग इति भाति ।

† इदमपि मोक्षमार्गैकरतस्य दानशूरस्य वा संभवति । नान्यस्य । यतः कुटुम्बनिर्वाहावशिष्टस्यैव अंशतः दानमुचितम् ।

---

१. A. reads तस्मात्तु for तस्मात्त्रि-. २. B. C. F. ऽच्छानि, F. and H. ऽर्घ्याणि, and G. ऽक्तानि for ऽग्र्याणि. ३ For जुष्टां I. reads तुष्टां.

यान-शय्याप्रदो भार्यामैश्वर्यमभयप्रदः ।
धान्यदः शाश्वतं सौख्यं[1] ब्रह्मदो ब्रह्म शाश्वतम् ॥
सर्वेषामेव दानानां[2] ब्रह्मदानं विशिष्यते[3]' ।
(म. स्मृ. ४. २२९-२३३; वृ. गौ. स्मृ. १०.२३-२८)

इति । भविष्योत्तरे पात्रविशेषेण देयविशेषो दर्शितः—

'तथा द्रव्यविशेषांश्च दद्यात् पात्र[4]विशेषतः ।
आर्तानामन्नदानं च गोदानं[5] च कुटुम्बिने ॥
तथा प्रतिष्ठाहीनानां क्षेत्रदानं विशिष्यते ।
सुवर्णं याजकानां[6] च विद्यां चैवोर्ध्वरेतसाम् ॥
कन्यां चैवानपत्यानां ददतां गतिरुत्तमा' ।

इति । स्कान्दे ऽपि—

'श्रान्तस्य यानं तृषितस्य पानम्
अन्नं क्षुधार्त्तस्य नरो नरेन्द्र ।
दद्याद्विमानेन सुराङ्गनाभिः
संस्तूयमानं त्रिदिवं नयन्ति' ॥

इति[7] । अङ्गिराः—

'देवतानां गुरूणां च माता-पित्रोस्तथैव च ।
पुण्यं देयं प्रयत्नेन नाऽपुण्यं चोदितं[8] क्वचित्' ॥

इति । विष्णुधर्मोत्तरे—

---

१. E. G. and H. read सौम्यं for सौख्यं. २. For दानानां G. reads देवानां. ३. A. reads परं स्मृतं for विशिष्यते. ४. A. B. C. D. and F. read पात्रे for पात्र-. ५. E. reads धनदानं कुटुम्बिने, and for the same A. reads गोदानं यज्वने तथा; for गोदानं च कुटुम्बिने. ६. A. reads याचकानां for याजकानां. ७. A. and I. omit इति. ८. A. reads चार्जितं, and H. नोदितं for चोदितं.

'यस्योपयोगि यद्द्रव्यं देयं तस्यैव तद्भवेत्' ।

इति । दाननिमित्तान्याह शातातपः—

'अयनादौ सदा देयं द्रव्यमिष्टं गृहे तु[1] यत् ।
षडशीतिमुखे चैव विमोक्षे चन्द्र-सूर्ययोः ॥
संक्रान्तौ यानि दत्तानि[2] हव्य-कव्यानि दातृभिः ।
तानि नित्यं ददात्यर्कः पुनर्जन्मनि जन्मनि' ॥

इति । वृद्धवसिष्ठोऽपि[3] अयनादीन्[4] दर्शयति—

'झष[5]-कर्कटसंक्राती द्वे तूदग्-दक्षिणायने ।
विषुवे च तुला-मेषौ तयोर्मध्ये ततोऽपराः ॥
वृष-वृश्चिक-कुम्भेषु सिंहे चैव यदा रविः ।
एतद्विष्णुपदं नाम विषुवादधिकं[6] फलम् ॥
कन्यायां मिथुने मीने धनुष्यपि रवेर्गतिः ।
षडशीतिमुखाः प्रोक्ताः षडशीतिगुणाः फलैः' ॥

इति । विष्णुधर्मोत्तरे—

'वैशाखी कार्तिकी माघी पूर्णिमा तु महाफला ।
पौर्णमासीषु सर्वासु मासर्क्षसहितासु च ।
दत्तानामिह दानानां फलं दशगुणं भवेत्' ॥

इति । मनुः—

'सहस्रगुणितं दानं भवेद्दत्तं युगादिषु[7] ।
कर्म श्राद्धादिकं चैव तथा मन्वन्तरादिषु' ॥

इति । याज्ञवल्क्यः—

---

१. A. reads गृहादि for गृहे तु. २. D. and G. read दानानि for दत्तानि. ३. All others except B. C. and F. omit अपि. ४. D. reads उपरागादीन् for अयनादीन्. ५. A. and I. read मृग- for झष-. ६. A. reads विष्णुपादाधिकं for विषुवादधिकं. ७. D. reads गुणादिषु for युगादिषु.

'शतमिन्दुक्षये दानं सहस्रं तु दिनक्षये।
विषुवे शतसाहस्रं व्यतीपाते [1]त्वनन्तकम्' ॥

इति। भारद्वाजः—

'व्यतीपाते वैधृतौ च दत्तमक्षयकृद्भवेत्'।

इति। विष्णुः—

'दि[2]नक्षयो दिनच्छिद्रं पुत्रजन्मादि चाऽपरम्।
आदित्यादिग्रहाणां च नक्षत्रैः सह सङ्गमैः[3] ॥
विज्ञेयः पुण्यकालोऽयं ज्योतिर्विद्भिर्विचार्य च।
तत्र दानादिकं कुर्यादात्मनः पुण्यवृद्धये' ॥

इति। दिनक्षयलक्षणमुक्तं वसिष्ठेन—

'एकस्मिन् सा[4]वने त्वह्नि तिथीनां त्रितयं यदा।
तदा दिनक्षयः प्रोक्तः शतसाहस्रिकं फलम्' ॥

दिनच्छिद्रस्य तु[5] लक्षणं ज्योतिःशास्त्रेऽभिहितम्—

'तिथ्य[6]र्ध-तिथियोगर्क्षच्छेदादी [7]राशिपर्वणः।
सदृशौ दिवस-च्छिद्र[8]समाख्यौ प्राह भार्गवः' ॥

इति।

'छेदादिकालः कथितः तिथि[9]कृत्योर्घटिद्वयम्।
[10]ऋक्षादिसङ्गमोपेतं तच्छेदत्वफलैर्युतम् ॥

---

१. A. E. H. and I. read -ऽद्वनन्त-, and D. G. ह्यनन्त- for त्वनन्त-. २. A. reads this line as follows:—दिनक्षये दिनच्छिद्रे पुत्रजन्मादिके ऽपि च. ३. A. B. and D. read सङ्गमे for सङ्गमः. ४. D. reads वासरे for सावने. ५. A. G. and I. omit तु. ६. A. and I. read तिथ्यृक्ष- for तिथ्यर्ध-. ७. A. D. G. and I. read शशिपर्वणः for राशिपर्वणः. ८. I. reads -समाख्याः for -समाख्यौ. ९. A. omits तिथिकृत्योर्घटिद्वयम्. १०. All others except A. read as follows:—नागवह्निसमोपेतं तद्धे तत्त्वपलैर्युतम्; while I. तच्छेद- and D. G. -फलैः for -पलैः according to the reading.

पलैः[1] षोडशाभिर्युक्तं नाडिकाद्वितयं युतौ[2] ।
छेदादिसमयः प्रोक्तो दाने ऽनन्तफलप्रदः' ॥

इति । दानस्य निषिद्धकालमाहतुः शङ्ख-लिखितौ—
'आहारं मैथुनं निद्रां सन्ध्याकालेषु वर्जयेत् ।
कर्म चाध्यापनं चैव तथा दान-प्रतिग्रहौ' ॥

इति[4] । स्कन्दपुराणे[5]—
'रात्रौ दानं न कर्त्तव्यं कदाचिदपि केनचित् ।
हरन्ति राक्षसा यस्मात्तस्माद्दातुर्भयावहम् ॥
विशेषतो निशीथे तु न शुभं कर्म शर्मणे ।
अतो विवर्जयेत् प्राज्ञो दानादिषु महानिशाम्' ॥

इति । तत्र प्रतिप्रसवमाह देवलः—
'राहुदर्शन-संक्रान्ति-यात्रा[6] ऽऽदौ प्रसवेषु च ।
दानं नैमित्तिकं ज्ञेयं रात्रावपि तदिष्यते[7]' ॥

इति । अत्र संक्रान्तिशब्दो मकर-कर्कटविषयः । स्मृत्यन्तरे संक्रान्तिषु[8] रात्रिदानादिनिषेधं प्रक्रम्य 'मुक्त्वा मकर-कर्कटौ'—इति पर्युदासात् ।

मत्स्यपुराणे दानस्य प्रशस्ता देश[9]विशेषा निर्दिष्टाः—
'प्रयागादिषु तीर्थेषु पुण्येष्वायतनेषु च ।
दत्त्वा चा ऽक्षय्यमाप्नोति नदी-पुण्यवनेषु च' ॥

इति । तथा व्यासेना ऽपि—

---

१ A. reads फलैः for पलैः. २. A. reads युगे for युतौ. ३. A. reads निमित्त- for निषिद्ध-, probably this might be an error. ४. H. omits इति. ५. D. reads स्कान्दे for स्कन्दपुराणे. ६. D. reads -यात्रार्तै- for -यात्रादौ. ७. D. reads न दुष्यति for तदिष्यते. ८. B. C. and F. add च after संक्रान्तिषु. ९. A. adds काल- to देश-.

'गङ्गाद्वारे प्रयागे च अविमुक्ते च पुष्करे।
मकरे चाऽट्टहासे[1] च गङ्गा-सागरसङ्गमे॥
कुरुक्षेत्रे गयातीर्थे तथा चाऽमरकण्टके।
एवमादिषु तीर्थेषु दत्तमक्षय्यतामियात्'॥

॥ इति दानप्रकरणम् ॥

तदेवं सेतिकर्तव्यं दानप्रकरणं निरूपितम्। अथ प्रतिग्रहो निरूप्यते। तत्र श्रौतो विधिः पूर्वमुदाहृतः। 'द्रव्यमर्जयन् ब्राह्मणः प्रतिगृह्णीयात्'-इति। तत्र याजने येयं चर्चा[2] पूर्वमनुक्रान्ता सेयं[3] प्रतिग्रहे ऽपि यथासम्भवमनुसन्धातव्या[4]।

ननु-प्रतिग्रहो मनुना निन्दितः-

'प्रतिग्रहः प्रत्यवरः स तु विप्रस्य गर्हितः'॥

(म. स्मृ. १०. १०९)

इति। मैवम्। अस्या निन्दाया असत्[5]प्रतिग्रहविषयत्वात्। तच्चोपरितने वचने स्पष्टीकृतम्।

'प्रतिग्रहस्तु क्रियते[6] शूद्रादप्यन्त्यजन्मनः'।

(म. स्मृ. १०. ११०)

इति। यः प्रतिग्रहो नीचात् क्रियते स गर्हित इत्यर्थः। सत्प्रतिग्रहस्तु तेनैवाऽभ्यनुज्ञातः-

'नाध्यापनात्[7] याजनाद्वा ऽगर्हिताद्वा प्रतिग्रहात्।
दोषो भवति विप्राणां ज्वलना-ऽर्क[8]समा हि ते[9]'॥

(म. स्मृ. १०. १०३; म. भा. व. २००, ८७)

---

१. H. reads च प्रभासे for चाऽट्टहासे; the प्रभासे is written on margin. २. A. omits येयं चर्चा. ३. A. reads अयं for सेयं. ४. A. reads -सन्धातव्यः for -सन्धातव्या. ५. A. reads असाधु- for असत्-. ६. A. and I. read प्रतिग्रहो ऽगर्हितः स्यात् for प्रतिग्रहस्तु क्रियते. ७. A. substitutes विशुद्धाच्च प्रतिग्रहः for the whole verse नाध्यापनात् &c., and omits अगर्हितादिति छेदः. ८. In Manu Smriti ज्वलनाम्बु- for ज्वलनार्क-. ९. This verse is to be found in Mahâbhârata 3, 200, 87.

इति । अगर्हितादिति छेदः । अगर्हितप्रतिग्रहादप्यप्रतिग्रहः श्रेयान् । तथा च याज्ञवल्क्यः—

‘प्रतिग्रहसमर्थो ऽपि नादत्ते यः प्रतिग्रहम् ।
ये लोका दानशीलानां स [1]तानाप्नोति पुष्कलान्’ ॥
(या. स्मृ. १. २१३)

इति । ननु—यमः प्रतिग्रहं प्रशंसति—

‘प्रतिग्रहा-ऽध्यापन-याजनानाम्
प्रतिग्रहं श्रेष्ठतमं वदन्ति ।
[2]प्रतिग्रहात् शुध्यति जप्य-होमैर्
[3]याज्यं तु पापं न पुनन्ति वेदाः’ ॥

इति । मनुस्तु तद्विपर्ययमाह—

‘जप-होमैरपैत्येनो याजना-ऽध्यापनैः कृतम् ।
प्रतिग्रहनिमित्तं तु त्यागेन [4]तपसैव च’ ॥
(म. स्मृ. १०. १११)

इति । नायं दोषः । द्विजातिभ्यः [5]प्रतिग्रहः प्रशस्तः शूद्रात् प्रतिग्रहो निन्दितः—इति व्यवस्थायाः सुवचत्वात् ।

ननु—सत्प्रतिग्रहे ऽपि कियानपि प्रत्यवायः प्रतीयते । ‘प्रतिग्रहः शुद्ध्यति जप्य-होमैः’-इत्युक्तेः । बाढम् । अस्त्येव वेदपारगत्वादिसामर्थ्यरहितस्य प्रतिग्रहे [6]प्रत्यवायः । [7]एतदेवा ऽभिप्रेत्य स्कान्दे वेदपारगस्य प्रत्यवायो निवारितः—

१. G. reads तानवाप्नोति for स तानाप्नोति. २. Except A. and I. all read प्रतिग्रहः for प्रतिग्रहात्. ३. A reads याज्यात्तु पापात् for याज्यं तु पापं. ४. G. reads तपसा न for तपसैव. ५. E. omits this. ६. A. reads दोषः for प्रत्यवायः. ७. D. reads एतदेवाभिप्रेत्योक्तं स्कान्दे वेदपारगस्य प्रत्यवायो नास्ति for एतदेव- &c.

'षडङ्गवेदविद्विप्रो यदि कुर्यात् प्रतिग्रहम्।
न स पापेन लिप्येत पद्मपत्रमिवाम्भसा' ॥

इति। एष एव न्यायो याजना-ऽध्यापनयोर्योजनीयः। अयाज्ययाजन-भृतकाध्यापन-दुष्टप्रतिग्रहेष्वेनोबाहुल्यम्। स्वे[1]-स्मिन्नीषद[2]धिकारवैकल्ये[3] सति प्रवर्त्तमानस्य स्वल्पः प्रत्यवायः। मुख्याधिकारिणो विहितयाजनादिप्रवृत्तौ न किञ्चिदप्येन[4]— इति विवेकः। सदसत्प्रतिग्रहौ विवेचयति व्यासः—

'द्विजातिभ्यो धनं लिप्सेत् प्रशस्तेभ्यो द्विजोत्तमः।
अपि वा जातिमात्रेभ्यो न तु शूद्रात् कथञ्चन' ॥

इति। सतामसम्भवे सति असतो ऽपि प्रतिग्रहश्चतुर्विंशतिमते ऽभ्यनुज्ञातः—

'सीदंश्चेत्[5] प्रतिगृह्णीयाद् ब्राह्मणेभ्यस्ततो नृपात्।
ततस्तु वैश्य-शूद्रेभ्यः शङ्खस्य वचनं यथा' ॥

इति। शूद्रप्रतिग्रहे विशेषमाहाङ्गिराः—

'यत्तु राशीकृतं धान्यं खले[6] क्षेत्रे ऽथवा[7] भवेत्।
शूद्रादपि ग्रहीतव्यमित्याङ्गिरसभाषणम्[8]' ॥

इति। तत्रैव विशेषान्तरमाह व्यासः—

'कुटुम्बार्थे[9] तु सच्छूद्रात्[10] प्रतिग्राह्यमयाचितम्[11]।

---

१. E. and H. read अन्यस्मिन्, D. reads तस्मिन् for स्वस्मिन्. २. D. reads विशेषात् for ईषत्. ३. I. reads वैकल्येन for वैकल्ये सति. ४. For -दप्येन D. has -दप्येतत्. ५. A. substitutes सदा च for सीदंश्चेत्. ६. A. reads धान्यामिति for धान्यं खले. ७. D. and I. read तथा for ऽथवा. ८. D. alone has भाषितम्. ९. B. C. and F. read कुटुंबार्थे तुयः शूद्रात्प्रतिग्राह्यं तु याचितम्. १०. D. E. G. and H. have यत् for सत्-. ११. D. reads प्रतिगृह्णाति याचितम्- and G. प्रतिगृह्णीत याचितम्.; for प्रतिग्राह्यमयाचितम्.

क्रत्वर्थमात्मने चैव न हि याचेत कर्हिचित्' ॥

इति । मनुरपि—

'न यज्ञार्थं धनं शूद्रात् विप्रो[1] भिक्षेत धर्मवित् ।
यजमानो ऽपि भिक्षित्वा चाण्डालः[2] प्रेत्य जायते' ॥
(म. स्मृ. ११. २४)

इति । असत्प्रतिग्रहोचितो ऽवस्थाविशेषः स्कन्दपुराणे दर्शितः—

'दुर्भिक्षे दारुणे प्राप्ते कुटुम्बे सीदति क्षुधा ।
असतः प्रतिगृह्णीयात् प्रतिग्रहमतन्द्रितः' ॥

इति । याज्ञवल्क्यो ऽपि—

आपद्गतः सम्प्रगृह्णन् भुञ्जानो ऽपि[3] यतस्ततः ।
न लिप्येतैनसा विप्रो ज्वलना ऽर्कसमो[4] हि सः' ॥
(या. स्मृ. ३. ४१)

इति । मनुरपि—

'वृद्धौ च माता-पितरौ साध्वी भार्या सुतः शिशुः ।
अप्यकार्यशतं कृत्वा भर्त्तव्या मनुरब्रवीत् ॥
(म. स्मृ. ११. ११)

जीवितात्ययमापन्नो यो ऽन्नमत्ति यतस्ततः ।
आकाशमिव पङ्केन न स पापेन लिप्यते' ॥
(म. स्मृ. १०. १०४)

इति । गारुडपुराणे प्रतिग्राह्यस्य द्रव्यस्येयत्ता दर्शिता[5]—

'यावता पञ्चयज्ञानां कर्तुर्निर्वहणं भवेत्[6] ।
तावदेव हि गृह्णीयात् कुटुम्बस्यात्मनस्तथा' ॥

---

१. A. reads द्विजो for विप्रो. २. चण्डाल: is substituted by A. D. E. and H. for चाण्डाल:. ३. A. and I. read वा for ऽपि. The text of Yâjnavalkya Smriti reads वाग्यतस्ततः ४. All MS. read -समप्रभः ; but the Smriti itself has समो हि सः. ५. G. adds पुरा after दर्शिता. ६. A. reads करणं नियतं भवेत्, D. and G. कर्तुर्निर्वाहता व्रजेत् for कर्तुर्निर्वहणं भवेत्

इति। व्यासोऽपि—

‘प्रतिग्रहरुचिर्न स्यात् यज्ञार्थं[1] तु समाचरेत्।
स्थित्यर्थादधिकं[2] गृह्णन् ब्राह्मणो यात्यधोगतिम्॥
वृत्तिसङ्कोचमन्विच्छेन्नेहेत धनविस्तरम्।
धनलाभे प्रवृत्तस्तु ब्राह्मण्यादेव हीयते’॥

इति। अनापदि राजप्रतिग्रहं निन्दति याज्ञवल्क्यः—

‘न राज्ञः प्रतिगृह्णीयात् लुब्धस्योच्छास्त्रवर्तिनः[3]।
प्रतिग्रहे सूनि[4]-चक्रि-ध्वजि-वेश्या-नराधिपाः।
दुष्टा दशगुणं पूर्वात् पूर्वादेते यथोत्तरम्[5]’॥
(या. स्मृ. १. १४०–१४१)

इति। संवर्त्तः—

‘राजप्रतिग्रहो घोरो मध्वास्वादो विषोपमः।
पुत्रमांसं वरं भोक्तुं न तु राजप्रतिग्रहः’॥

इति। स्कान्दे—

‘मरुदेशे निरुदके ब्रह्मरक्षस्त्वमागतः।
राजप्रतिग्रहात् पुष्टः पुनर्जन्म न विन्दति॥
ब्राह्मण्यं यः परित्यज्य द्रव्यलोभेन मोहितः।
विषयामिषलुब्धस्तु कुर्याद्राजप्रतिग्रहम्॥
रौरवे नरके घोरे तस्यैव पतनं ध्रुवम्।
वृक्षा दवाग्निना दग्धाः प्ररोहन्ति[6] घनागमे॥
राजप्रतिग्रहाद्दग्धा न प्ररोहन्ति कर्हिचित्’।

इति। विष्णुधर्मोत्तरे—

१. A. यात्रार्थं, D. स्थित्यर्थं for यज्ञार्थं. २. G. has स्थिरो यदधिकं for स्थित्यर्थादधिकं. ३. D. substitutes लब्धं स्याच्छास्त्र- for लुब्धस्योच्छ-. ४. D. reads सूति-, G. स्वानि–for सूनि-. ५. The text of याज्ञवल्क्यस्मृति reads यथाक्रमम्. ६. D. omits following–प्ररोहन्ति घनागमे। राजप्रतिग्रहाद्दग्धा-, and reads वृक्षा दवाग्निना दग्धा न प्ररोहन्ति कर्हिचित्.-

'देशसूनिसमश्चक्री[1] दशचक्रिसमो ध्वजी।
दशध्वजिसमा वेश्या दश वेश्यासमो नृपः॥
दशसूनासहस्राणि यो वाहयति सौनिकः।
तेन तुल्यः स्मृतो राजा घोरस्तस्मात्[3] प्रतिग्रहः'॥
(म. स्मृ. ४. ८५-८६)

इति। अधार्मिकराजविषयेयं[4] निन्दा। तथा च तत्रैव विशेषितम्–

'येषां[5] न विषये विप्राः यज्ञैर्यज्ञपतिं हरिम्।
यजन्ते भूभुजां तेषामेतत् सूनोदितं फलम्॥
येषां पाषण्डसङ्कीर्णं राष्ट्रं न ब्राह्मणोत्कटम्[6]।
एते सूनासहस्राणां दशानां भागिनो नृपाः॥
येषां न यज्ञपुरुषः कारणं पुरुषोत्तमः।
ते तु पापसमाचाराः सूनापापोपभोगिनः[7]'॥

इति। अदुष्टात्तु राज्ञः प्रतिग्रहो न निन्दितः। अत एव छन्दोगशाखायां प्राचीनशालादीन् महामुनीन्[8] राजप्रतिग्रहे प्रवर्त्तयितुमश्वपतिनामकेन राज्ञा दोषाभाव उपन्यस्तः–

'न मे[9] स्तेनो जनपदे न कदर्यो न मद्यपः।
नाऽनाहिताग्निर्नाऽविद्वान् न स्वैरी स्वैरिणी कुतः[10]'॥
(छां. उ. ५।११।५)

---

१. This verse is altogether omitted by B. C. and F. also; we find this and the foregoing verse in Manu Smriti, but this verse is differently written there as:— दशसूनासमं चक्रं दशचक्रसमो ध्वजः। दशध्वजसमो वेशो दशवेशसमो नृपः॥. २. D. E. G. and H. read -सूना- for -सूनि-. ३. Manu Smriti has तस्य for तस्मात्. ४. All except A. E. and I. omit इयं. ५. D. reads the verse as:- येषां न विद्यते विप्राः प्राज्ञैर्यज्ञपरिग्रहः। जायते भूभुजां तेषां.- ६. A. reads ब्राह्मणास्पदम् for ब्राह्मणोत्कटम् ७. A. has पापा हि ते स्मृताः for पापोपभागिनः. ८. D. omits महामुनीन्. ९. D. has च for मे, and for the same G. reads यः. १०. A. reads तथा for कुतः.

इति। याज्ञवल्क्यवचने ऽपि राजप्रतिग्रहनिन्दायां 'लुब्धस्योच्छास्त्रवर्तिनः'-इति विशेषणात् अदुष्टराजप्रतिग्रहो न निन्दित इति गम्यते। तथा च नारदो ऽपि–

'श्रेयान् परिग्रहो राज्ञां नान्येषां ब्राह्मणादृते॥ (४१)
ब्राह्मणश्चैव राजा च द्वावप्येतौ धृतव्रतौ।
नैतयोरन्तरं किञ्चित् प्रजाधर्माभिरक्षणे॥ (४२)
शुचीनामशुचीनां च सन्निवेशो यथाम्भसाम्।
समुद्रे समतां याति तद्वद्राज्ञां धनागमः॥ (४५)
यथा ऽग्नौ संस्थितं चैव शुद्धिमायाति काञ्चनम्।
एवं धनागमाः सर्वे शुद्धिमायान्ति राजनि'॥ (४६)
(ना. स्मृ. १७. ४१–४६)

इति। दुष्टप्रतिग्रहवत् सत्प्रतिग्रहस्यापि आपद्विषयता कुतो न कल्प्यते?–इति चेत् तन्न। ब्रह्माण्डपुराणे सत्प्रतिग्रहस्य अनापद्यपि विहितत्वात्।

'अनापद्यपि धर्मेण याज्यतः शिष्यतस्तथा।
गृह्णन् प्रतिग्रहं विप्रो न धर्मात् परिहीयते॥
गृह्णीयाद् ब्राह्मणादेव नित्यमाचारवर्तिनः।
श्रद्धया विमलं दत्तं तथा धर्मान्न हीयते'॥

---

१. D. omits the whole from याज्ञवल्क्य to गम्यते. २. A. and G. read -रक्षणं for -रक्षणे. ३. A. has सन्निपातो for सन्निवेशो. ४. D. omits this whole line. ५. All except A. and I. read दुष्प्रतिग्रह-. ६. A. omits अपि. ७. A. C. F. and I. omit तत्. ८. A. substitutes ब्रह्मपुराणे. Brahmânda Purâna is a Mahá Purâna and Brahma Purân is an Upa Purâna, therefore it is difficult to find out the above quotation. ९. D, E. G. and H. have प्रति- for परि-. १०. A. reads धर्मो for धर्मात्.

इति। केषु चिद्वस्तुविशेषेषु अयाचितेषु न प्रतिग्रह-दोष इत्याह भारद्वाजः[1]—

'अयाचितोपपन्नेषु नास्ति दोषः प्रतिग्रहे।
अमृतं तद्विदुर्देवास्तस्मात्तन्नैव निर्णुदेत्'[2] ॥

इति। तत्र भरद्वाजाऽभिप्रेतान् वस्तुविशेषान्निर्दिशति याज्ञवल्क्यः—

'कुशाः शाकं पयो मत्स्या गन्धाः[3] पुष्पं दधि क्षितिः*।
मांसं शय्या ऽऽसनं धानाः[4] प्रत्याख्येयं न वारि च ॥
अयाचिताहृतं[5] ग्राह्यमपि दुष्कृतकर्मणः।
अन्यत्र कुलटा-षण्ढ-पतितेभ्यस्तथा द्विषः[6]' ॥
(या. स्मृ. १. २१४–१५)

इति। मनुरपि—

'शय्यां कुशान् गृहान् गन्धानपः[7] पुष्पं मणिं दधि।
मत्स्यान् धानाः पयो मांसं शाकं चैव न निर्णुदेत्' ॥
(म. स्मृ. ४. २५०)

'एधोदकं मूलफलमन्नमभ्युद्यतं च यत्[8]।
सर्वतः प्रतिगृह्णीयान्मधु चाऽभयदक्षिणाम्[9]' ॥
(म. स्मृ. ४. २४७)

---

* नात्र क्षितिशब्देन भूमिर्विवक्षिता अपि तु मृत्तिकैव। भूमिग्रहणे दोषश्रवणात् 'क्षितिर्मृत्तिका' इति विज्ञानेश्वरः।

---

१. All others except A. G. read भरद्वाजः. २. D. reads नैव विनिर्णुदेत् for तन्नैव निर्णुदेत्. ३. B. C. and F. read गन्धान् for गन्धाः. ४. A. has धान्यं. ५ D. reads अयाचितादयं. ६. D. and G. have द्विजः. ७. A. reads वासः ८ A. and I. read असतः. ९. D. reads वाऽक्षयदक्षिणाम् for चाभयदक्षिणाम्, and the text of Manu अथ for च.

इति। प्रतिग्रहानधिकारिणं स एवाह–

'हिरण्यं भूमिमश्वं गामन्नं वासस्तिलान् घृतम्।
अविद्वान् प्रतिगृह्णानो[1] भस्मी भवति काष्ठवत्'॥

(म. स्मृ. ४. १८८)

इति। याज्ञवल्क्योऽपि–

'विद्या-तपोभ्यां हीनेन न तु ग्राह्यः प्रतिग्रहः।
गृह्णन् प्रदातारमधो[2] नयत्यात्मानमेव च'॥

(या. स्मृ. १. २०२)

इति। विदुषस्तु न कोऽपि प्रतिग्रहो दोषावह इति वाजसनेयिब्राह्मणे गायत्रीविद्यायां श्रूयते–

'यदि ह वा अप्येवंवित् बह्विव प्रतिगृह्णाति न हैव तद्गायत्र्या एकं चनपदं प्रति स य इमाꣳस्त्रीँल्लोकान् पूर्णान् प्रतिगृह्णीयात् सोऽस्या एतत्प्रथमं पदमाप्नुयादथ यावतीयं त्रयी विद्या यस्तावत् प्रतिगृह्णीयात् सोऽस्या एतत् द्वितीयं पदमाप्नुयादथ यावदिदं प्राणि यस्तावत् प्रतिगृह्णीयात् सोऽस्या एतत् तृतीयं पदमाप्नुयादथास्या एतदेव तुरीयं दर्शतं पदं परो रजा य एष तपति। नैव केनच नाऽऽप्यं कुत

---

१. D. reads प्रतिगृह्णीते and the text of Manu reads the whole line thus:— प्रतिगृह्णन्नविद्वांस्तु भस्मीभवति दारुवत्. २. A. reads -मथो.

उ एतावत् प्रतिगृह्णीयात्'[1]—इति ।
(बृ. उ. ५. १४. ५–६)

॥ इति प्रतिग्रहप्रकरणम् ॥

ऐवं निरूपितानामध्यापनादीनां[8][2] प्रतिग्रहान्तानां शब्दान्तराधिकरणन्यायेन (पू. मी. २. २. १) कर्मभेदमभिप्रेत्य 'षट्कर्माभिरतः'—इत्युक्तम् । स च न्याय इत्थं प्रवर्त्तते । यजति ददाति जुहोतीत्युदाहरणम् । तत्र संशयः[3] किं सर्वधात्वर्थानुरक्तैका भावना उत प्रतिधात्वर्थं भिन्ना[4]? तत्र भावनावाचकस्याख्यातस्यैकत्वात् भिन्नानामपि[10] धात्वर्थानामुपसर्जनत्वे[5]न प्रधानभेदकत्वासम्भवाच्चैकैव भावनेति पूर्वःपक्षः । धात्वर्थानुरञ्जनमन्तरेण केवलाख्याते[6]न भावनाया अप्रतीतेः उत्पत्तिशिष्टधात्वर्थैनैकेनानुरक्ते[7] आख्यातार्थे धात्वर्थान्तराणामननुप्रवेशात् प्रतिधात्वर्थं भावनाभेदः—इति सिद्धान्तः । एवं चाध्ययनादिभिः षड्भिर्धात्वर्थैः[9] षोढा भावना भिद्यते—इति भवन्त्येतानि षट्कर्माणि । तेषु 'अभिरतिः' श्रद्धापूर्वकमनुष्ठानम् । अश्रद्धालुना ऽनुष्ठितमप्यफलं स्यात् । तदाह भगवान्—

१. All others except A. and I. read इति, and B. C. F. omit both. २. H. omits नि- and reads रूपितानां. ३. D. has the following wonderful reading:–किं सर्वधनार्थैका भावना उत न प्रतिधात्वर्थं वाचा तत्रभवतो वाचकस्याख्यातस्यैकत्वाभिन्नानामपि धात्वर्थानां उपसर्जनेन प्रधानभेदकत्वात् संभवाच्चैकभावने चेति पूर्वपक्षत्वाद्धात्वर्थानुरञ्जनमन्तरेण केवलाख्यातेन भावनाया अप्रतीतेः उत्पत्तिशिष्टधात्वर्थैनैकेनानुरक्ते आख्याता ये धात्वन्तराणाम–. ४. All others except A. substitute नाना for भिन्ना. ५. E. omits the following:––त्वैन प्रधानभेदकत्वासंभवाच्चैकैव भावनेति पूर्वः पक्षः । धात्वर्थानुरञ्जनमन्तरेण केवलाख्यातेन भावनाया अप्रतीतिरुत्पत्तिशिष्टधा—. ६. A. reads -ख्याते. ७. F. has -नानुक्त for -नानुरक्त. ८. A. and I. read अध्यापना–. ९. H. has धात्वर्थः. १०. D. omits अपि.

'अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् ।
असदित्युच्यते पार्थ न च तत् प्रेत्य नो इह[1]' ॥
(भ. गी. १७. २८)

इति । 'नित्यम्' इत्युत्तरत्रा[2]न्वेति न[3] पूर्वत्र । अध्यापनादीनां त्रयाणामनित्यत्वात् । देवता च अतिथिश्च देवतातिथी तयोः प्रतिदिनं पूजको भवेत् । देवता[4]स्वरूपं च वाजसनेयिब्राह्मणे शाकल्य-याज्ञवल्क्यसंवादे विचार्य निर्णीतम् । तत्र[5] शाकल्यः प्रष्टा याज्ञवल्क्यो वक्ता देवताविस्तार-संक्षेपौ स्वरूपं[6] च प्रष्टव्योऽर्थः । तत्र चैषा श्रुतिः—

'अथ हैनं विदग्धः शाकल्यः पप्रच्छ । कति देवा याज्ञवल्क्येति । स हैतयैव निविदा प्रतिपेदे । यावन्तो वैश्वदेवस्य निविद्युच्यन्ते । त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेति । ओमिति होवाच कत्येव देवा याज्ञवल्क्येति । त्रयस्त्रिंशदिति । ओमिति होवाच कत्येव देवा याज्ञवल्क्येति । त्रय इति । ओमिति होवाच कत्येव देवा याज्ञवल्क्येति । द्वाविति । ओमिति होवाच कत्येव देवा याज्ञवल्क्येति । अध्यर्ध इति । ओमिति होवाच कत्येव देवा याज्ञवल्क्येति । एक

---

१. Except A. D. and I. all others read नेह च. २. B. has उत्तरतोऽन्वेति न तु पूर्वत्र, C. and F. उत्तरतो नान्वेति न, D. उत्तरत्वात् नेति पूर्वत्र, G. उत्तरत्वान्नेति न पूर्वत्र, H उत्तरत्र नान्वेति पूर्वत्र. ३. E. substitutes किन्तु for न. ४. D. reads देवतानां. ५. D. omits the following :—शाकल्यः प्रष्टा याज्ञवल्क्यो वक्ता देवताविस्तार-संक्षेपौ स्वरूपं च प्रष्टव्योऽर्थः अत्र चैषा श्रुतिः । अथ हैनं विदग्धः. ६. A. omits स्वरूपं.

इति । ओमिति होवाच कतमे ते त्रयश्च त्री
च शता त्रयश्च त्री च सहस्रेति ॥ १ ॥ स
होवाच महिमान एवैषामेते त्रयस्त्रिꣳशत्त्वेव
देवा इति । कतमे ते त्रयस्त्रिंशदिति । अष्टौ
वसव एकादश रुद्रा द्वादशादित्यास्त एक-
त्रिंशदिन्द्रश्चैव प्रजापतिश्च त्रयस्त्रिꣳशाविति
॥ २ ॥ कतमे ते वसव इति । अग्निश्च
पृथिवी च वायुश्चान्तरिक्षं चाऽऽदित्यश्च द्यौश्च
चन्द्रमाश्च नक्षत्राणि चैते वसव एतेषु हीदꣳ
सर्वꣳ वसु निहितमेते हीदं सर्वं वासयन्त
तस्माद्वसव इति ॥ ३ ॥ कतमे ते रुद्रा इति ।
दश वै पुरुषे प्राणा आत्मैकादशस्ते यदा
ऽस्माच्छरीरादुत्क्रामन्त्यथ रोदयन्ति यस्मा-
द्रोदयन्ति तस्माद्रुद्रा इति ॥ ४ ॥ कतम
आदित्या इति । द्वादश एव मासाः संवत्स-
रस्यैत आदित्या एते हीदꣳ सर्वमाददानायन्ति
तद्यदिदं सर्वमाददानायन्ति तस्मादादित्या
इति ॥ ५ ॥ कतम इन्द्रः कतमः प्रजाप-
तिरिति । स्तनयित्नुरेवेन्द्रो यज्ञः प्रजाप-
तिरिति । कतमस्तनयित्नुरित्यशनिरिति ।
कतमो यज्ञ इति । पशव इति ॥ ६ ॥ कतमे
षडिति । अग्निश्च पृथिवी च वायुश्चान्तरिक्षं
चाऽऽदित्यश्च द्यौश्चैते षडेते हीदꣳ सर्वꣳ
षडिति ॥ ७ ॥ कतमे ते त्रयो देवा इति ।

इमे एव त्रयो लोका एषु हीमे सर्वे देवा इति।
कतमौ तौ द्वौ देवाविति। अन्नं चैव प्राण-
श्चेति। कतमो ऽध्यर्ध इति। योयं पवत
इति॥ ८॥ तदाहुर्यदयमेक इवैव पवते।
स कथमध्यर्ध इति। यदस्मिन्निदं सर्व-
मध्यार्त्तेनाध्यर्ध इति। कतम एको देव
इति। प्राण इति स ब्रह्मेत्याचक्षते इति' ॥

( बृ. उ. ३. ९.१-९ )

अस्याः श्रुतेरयमर्थः। उपासनार्हाणां देवानां सङ्ख्यावि-स्तारेण[1] कतीति[2] पृष्टो याज्ञवल्क्यो विजिगीषुकथायां प्रवृत्तत्वात् परबुद्धिव्यामोहाय निविदा प्रत्युत्तरं प्रतिपेदे। निविच्छब्दो वैश्वदेवनामके शास्त्रविशेषे[3] ऽवस्थितानां[4] सङ्ख्यावाचिनां[5] पदानां[6] समुदायमाचष्टे इति वैदिकप्रसिद्धिः। ततो यावन्तो देवा वैश्वदेवस्य निविद्युच्यन्ते। तावन्त उपास्या इत्युक्तं भवति। तानि च पदानि त्रयश्च त्री चेत्यादीनि[7]। शतत्रयं सहस्रत्रयं षट्कं च देवविस्तारः। कत्येवेत्येवकारेण तत्र तत्र[8] देवान्तरशङ्का व्युदस्यते। य एव देवाः पूर्वं विस्तृताः त एव सङ्क्षेपेण कियन्त? इति तत्र तत्र प्रश्नार्थः। कतीति सङ्ख्याप्रश्नः। कतमे[9] त इति स्वरूपविशेषप्रश्नः। तत्र शतसहस्रसङ्ख्याका

---

१. A. reads संख्यादिविस्तारे, C. and F. read सन्ध्याख्यविस्तारेण. २. A. and I. omit कतीति, A. adds शाकल्येन, and I. साकल्येन. ३ D. and G. have शास्त्र- for शस्त्र-. ४. D. omits ऽव-. ५. D. has संभा-वितानां, and G. संख्याभाविनां for संख्यावाचिनां. ६. D. omits पदानां. ७. A. reads त्रिंशदित्येवमादीनि. ८. A. has तत्रत्य-. ९. All except A. and I. read कथमेतादिति for कतमे त इति.

ये देवा उक्तास्ते सर्वे प्रधानभूता न भवन्ति । किं तर्हि प्राधान्येन हविर्भुजां त्रयस्त्रिंशद्देवानां योगमहिम्ना स्वीकृतैच्छिकविग्रहा एव ततो न तेषां स्वरूपविशेषः पृथक् निरूपणीय इति । त्रयस्त्रिंशद्देवेषु श्रुता वस्वादयः पुराणप्रसिद्धेभ्यो वस्वादिभ्यो ऽन्ये । तेषु शब्दप्रवृत्तिर्यौगिकी । प्राणा बाह्येन्द्रियाणि । आत्मा ऽन्तःकरणम् । इन्द्र-प्रजापतिशब्दौ लक्षणया स्तनयित्नु-यज्ञयोर्वर्त्तेते । लक्षितलक्षणया त्वशनि-पश्वोः[३] । अन्न-प्राणौ भोग्य-भोक्त्रभिमानिनौ । अध्यर्धशब्दो रूढ्या[४] सङ्ख्यावाची । योगेन तु समृद्धं वायुं वक्ति । वायुः सूत्रात्मा । 'वायुर्वै गौतम तत्सूत्रम्' (बृ. उ. ३. ७. २) इति श्रुतेः । अन्ते प्राणशब्दः परमात्मवाचकः । तदेव स्पष्टयितुं से ब्रह्मेत्युक्तम् । तत्[६] शब्दः परोक्षवाची । अकृतब्रह्मविचारं पुरुषं प्रति ब्रह्मणः शास्त्रैकसमधिगम्यत्वात् पारोक्ष्यम्[७]—इति । तत्र प्राणशब्दवाच्यः परमात्मैवैको मुख्यो देवः । तत्स्वरूपं च श्वेताश्वतरा विस्पष्टमामनन्ति—

'एको देवः सर्वभूतेषु गूढः
सर्वव्यापी सर्वभूतान्तरात्मा ।
कर्माध्यक्षः सर्वभूताधिवासः
साक्षी चेता[८] केवलो निर्गुणश्च' ॥

(श्वे. उ. ६. ११; ब्र. उ. ३.)

---

१. B. C. and F. omit ऐच्छिक-, and E. G. H. substitute भौतिक for the same. २. इति is omitted by all except A. and I. ३. G. reads -स्तनयित्नोः for -पश्वोः. ४. D. omits रूढ्या. ५. A. omits स. ६. त्यत् is substituted by all except A. and I. ७. A. and I. read परोक्षम्. ८. H. reads चेत्ता. We think this reading is more correct; but the Bhâshya and others prefer चेता; while D. reads चेताः.

इति। एतमेव देवं शास्त्रकुशलास्तैस्तैः शब्दविशेषैर्बहुधा व्यवहरन्ति। तथा च[1] मन्त्रवर्णः—

'सुपर्णं* विप्राः कवयो वचोभि-
रेकं सन्तं बहुधा कल्पयन्ति'।

इति। ते च शब्दविशेषा विस्पष्टमन्यस्मिन्मन्त्रे श्रूयन्ते—

'इन्द्रं मित्रं वरुणमग्निमाहु-
रथो दिव्यः स सुपर्णो गरुत्मान्।
एकं सद्विप्रा बहुधा वद-
न्त्यग्निं यमं मातरिश्वानमाहुः'॥

इति। ननु—इन्द्र-मित्र-वरुणादयः शब्दा भिन्नदेववाचिनो न त्वेकं देवमभिदधति। अन्यथा वारुणयागे[2] ऐन्द्रो[3] मन्त्रः प्रयुज्येत्[4]। नायं दोषः। एकत्वे ऽपि देवतात्वम्[5]। मूर्तिभेदेन मन्त्रव्यवस्थोपपत्तेः। यथा शैवागमेषु शिवस्यैकत्वे ऽपि प्रतिमाभेदेन[6] दक्षिणामूर्ति-चिन्तामणि-मृत्युञ्जयादयो मन्त्रा

* शोभने पर्णे पक्षावस्य सुपर्णः। 'बृहद्रथन्तरे ते पक्षौ' इति श्रुतेः। सुपर्णः परमेश्वरः। विप्रातीति विप्रः। 'प्रा पूर्तौ' स्वज्ञानेन पूरणकर्तारो विद्वांसो विप्राः। ते एकं सन्तमप्येनं बहुधा कल्पयन्ति उपास्त्यादिसिद्धये। वस्तुतस्त्वेक एव परमेश्वरः। एतेन—मन्दमतीनामनुग्रहार्थं विविधकर्मानुष्ठानसिद्ध्यर्थं च कल्पितं शिव-विष्ण्वादिमूर्तिभेदमेव परमार्थसत्यं मत्वा ईश्वरबाहुल्यादुद्विजमानाः अनाकलितवैदिकधर्मरहस्याः पारक्यधर्ममुररीकुर्वन्तो ऽल्पप्रज्ञत्वादुपेक्ष्या इत्यलमतिप्रसङ्गेन।

१. E. G. H. omit च. २. A. has वरुणयागस्य. ३. B. adds अपि before ऐन्द्रो. ४. B. C. and F. read युज्येत for प्रयुज्येत्. ५. A. G. and I. read देवस्य मू-; D. E. देवत्वमू-, and H. देवत्वस्य मू-, for देवतात्वम्। मू-. ६. A. substitutes प्रासाद- for प्रतिमा- and reads प्रासाददक्षिणामूर्त्ति-; B. C. and F. प्रतिमाभेदैः द-, D. E. and H. प्रतिमाभेदद-, and G. प्रतिमाभेदात् द-.

मूर्तिविशेषेषु व्यवस्थिताः । यथा वा[1] वैष्णवागमेषु गोपाल-वामनादयो मन्त्राः तथा देवे[2] ऽपि किं न स्यात् ।

ननु—द्रव्य-देवते यागस्य स्वरूपम् । रूपभेदाच्च[3] कर्मभेदः प्रतिपादितः । 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्'—इत्यत्र यथा ऽऽमिक्षा-वाजिनयोर्द्रव्ययोर्भेदः तथा विश्वेषां[4] देवानां वाजिभ्यो देवेभ्यो भेदो ऽभ्युपगन्तव्यः—इति । बाढम् । अभ्युपगम्यते ह्येकस्यैव वास्तवस्य[5] देवस्य कर्मानुष्ठानदशायामौपाधिको भेदः* । अत एव वाजसनेयिब्राह्मणे इष्टिप्रकरणे कर्मानुष्ठानात्[6] प्रसिद्धं देवभेदमनूद्य तदपवादेन[7] वास्तवं देवैकत्वमवधारितम्—

'तद्यदिदमाहुरमुं यजेतामुं यजेतेत्येकं देवमेतस्यैव
सा विसृष्टिरेष उ ह्येव सर्वे देवा इति' ।

न चैकस्माद्देवात् फलभेदो दुःसम्पाद इति शङ्कनीयम् । उपास्तिप्रकारभेदेन तदुपपत्तेः । 'तं यथायथोपासते तदेव भवति'—इति श्रुतेः । यथैको ऽपि राजा छत्र-चामरादिसेवाप्रकारभेदेन फलभेदे[8] हेतुस्तद्वत् ।

* उपाधिशब्देनात्र सत्त्व-रजस्तमो गुणाः तज्जनितत्वेन कल्पितानि शरीराणि वा ग्राह्याणि । तद्यथा—कर्मारम्भे विघ्ननाशनार्थं कल्पितस्य गजमुखाद्याकारविशेषोपाधिविशिष्टस्य गणपतेः कल्पनम् । एवमेवेन्द्र-वरुणादीनां देवानां कर्मानुष्ठानकाले तत्तत्कार्यसिद्ध्यर्थं कल्पनम् ।

---

१. A. omits वा, and D. substitutes च. २. A. and I. read वेदे for देवे. ३. A. and I. have स्वरूप-. ४. H. reads विशेषात्. ५. H. and I. read वासवस्य. ६. A. and D. have कर्मानुष्ठान-. ७. E. G. and H. read तदनुवादेन for तदपवादेन. ८. All others except A. and I. read फलभेदहे-.

ननु-देवः फलं ददातीत्येतन्मीमांसको न सहते। तथा हि नवमाध्याये विचारितम्। किं यागेनाराधिताया देवतायाः फलं? उतापूर्वद्वारकं यागस्य फलसाधनत्वं? इति संशयः। तत्र भङ्गुरस्य यागस्य कालान्तरभाविफलम्प्रति साधनत्वायोगादवश्यं द्वारं किञ्चित् कल्पनीयम्। देवताप्रसादश्च श्रुति-युक्तिभ्यां तद्वारं स्यात्।

'तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयति'।

(तै. सं. २. ५. ४. ३)

इति श्रुतिः। युक्तिरप्युच्यते। [1]क्रियया प्राप्तुमिष्टतमत्वात् कर्म कारकं प्रधानम्। तेन [2]कर्मणा व्याप्यत्वात्[3] सम्प्रदानं ततोऽपि प्रधानम्। इन्द्रादिदेवताश्च सम्प्रदानत्वेन प्राधान्यात् पूजार्म[4]र्हन्ति। यागश्च[5] पूजारूपत्वादतिथे[6]र्भोजनमिव देवताया अङ्गं स्यात्। तस्मात् राजादिवद्देवः फलं ददातीति पूर्वः पक्षः। अत्रोच्यते। याग-देवतयोर्योऽयमङ्गाङ्गिभाव उपन्यस्तः स तु शब्दाकाङ्क्षानुसारेण विपर्येति। तथा हि– यजेतेत्याख्यातेन भावनाऽभिधीयते। सा च–किं? केन? कथं? इति भाव्यकरणे इतिकर्तव्यतालक्षणमंशत्रयं क्रमेणाकाङ्क्षति। तत्र यागस्य समानपदोपनीतत्वेऽप्ययोग्यत्वान्न भाव्यता। स्वर्गस्य तु वाक्यादुपनीतस्यापि पुरुषार्थत्वेन योग्यत्वात् भाव्यता स्यात्। तस्य च स्व[7]र्गस्य साधनाकाङ्क्षायां यागः करणत्वेनान्वेति।

---

१. A. inserts कर्तुः. २. A. B. C. F. insert च before कर्मणा. ३. A. and I. read व्याप्तत्वात्. ४. All others except A. and I. take singular. ५. A. has यागस्य. ६. A. retains plural. ७. C. and F. read सर्वस्य for स्वर्गस्य.

तच्च करणं साध्यरूपत्वात्[१] स्वनिष्पादकं सिद्धं द्रव्यदैवतमितिकर्त्तव्यत्वेन गृह्णाति—इति । ततो यागो ऽङ्गी देवता च तदङ्गम् । एवं च सति नातिथिवद्देवता यागेनाराध्यते[२] । या तु श्रुतिः—‘तृप्त एवैनम्’—इति नासौ स्वार्थे तात्पर्यवती । प्रत्यक्षादिविरोधात्* । न हि काचिद्विग्रहवती देवता हविर्भुक्त्वा[३] तृप्ता फलं प्रयच्छतीति प्रत्यक्षेणोपलभ्यते । प्रत्युत तदभावः प्रत्यक्षेण योग्यानुपलब्ध्या वा प्रमीयते । किं च अश्वमेधे ‘गां[४] दंष्ट्राभ्यां मण्डूकान् दन्तैः’ इत्यादावश्वावयवानां[५] दंष्ट्रादिद्रव्याणां हविषां भोक्तृत्वेन गोमण्डूकादयस्तिर्यञ्चो[६] ऽपि[७] देवताविशेषाः श्रूयन्ते । न च तेषां फलप्रदातृत्वं[८] सम्भाव्यते ।

‘ओषधीभ्यः स्वाहा वनस्पतिभ्यः स्वाहा मूलेभ्यः स्वाहा’—

(तै. सं. ७. ३. १९; ७. ३. २०)

इत्यादावचेतनानामोषधि-वनस्पति-तदवयवानां देवतात्वं श्रूयते । तत्र कुतो हविर्भोक्तृत्वं कुतस्तरां तृप्तिः कुतस्तमां

---

* असति प्रत्यक्षोपलम्भे अर्थो बाधितो भवति । इन्द्रस्य प्रत्यक्षत्वाभावात् श्रुतिरियं न स्वार्थे तात्पर्यवती भवतीति भावः ।

---

१. A. and I. read -स्वरूपत्वात्. २. G. reads -न राध्यते. ३. D. omits from भुक्त्वा to प्रत्यक्षेण. both inclusive. ४. This mantra is differently read by the following manuscripts as:—A. has स्तेगां दंष्ट्राभ्यां मण्डूकान् जम्भ्येभिः, B. and C. स्तेगां दंष्ट्राभ्यां मण्डूकान् जम्भेभिः. E. and F. स्तेगां दंष्ट्राभ्यां मण्डूकान् दन्तैः, D. and G. गां दंष्ट्राभ्यां मण्डूका काङ्क्षन्. ५. A. has इत्यादावय-, B. C. E. F. H. इत्याद्यश्वावय-, and I. इत्याद्यवय-. ६. A. B. C. F. have स्तेगमण्डूः. ७. Except A. and I. all omit ऽपि. ८. C. F. and H. read फलदातृत्वं.

फलदानम्। तस्माद्विग्रहादिमतां देवानामभावान्न देवताप्रसादो यागस्य फलद्वारम्। किन्तु श्रूयमाणफलसाधनत्वान्यथानुपपत्तिकल्प्यमपूर्वं तद्वारम्। अभ्युपगतेष्वपि देवेष्वपूर्वस्यैव फलद्वारत्वमवश्यं वक्तव्यम्। मन्त्रा-ऽर्थवादेतिहास-पुराणेषु देवनानामपि[2] तपश्चरण-क्रत्वनुष्ठान-ब्रह्मास्त्रादिमन्त्रप्रयोगेभ्यः* समीहित[3]सिद्ध्यनुकीर्त्तनात्। तस्मान्न देवः फलप्रदः इति सिद्धम्। औपनिषदास्त्वीश्वरस्य† फलदातृत्वं मन्यन्ते। तथा हि तदीये शास्त्रे तृतीयाध्याये विचारितम्। किं धर्मः फलं ददाति? आहोस्विदीश्वरः? इति संशयः। तत्र मीमांसकोक्तन्यायेन धर्मः फलप्रद इति पूर्वःपक्षः। सिद्धान्तस्तु किं धर्मो ऽन्यानधिष्ठित एव फलप्रदः? किं वा केनचिच्चेतनेनाधिष्ठितः? नाद्यः। अचेतनस्य तारतम्यानभिज्ञस्य यथोचितफलदातृत्वायोगात्। द्वितीये तु येनाधिष्ठितः स एव फलदाता ऽस्तु[4]। न चैवं धर्मस्य[5] वैयर्थ्यमिति शङ्कनीयम्। वैषम्य-नैर्घृण्यपरिहाराय धर्मापेक्षणात्। असति तु धर्मे कांश्चिदुत्तमसुखं कांश्चिन्मध्यमं कांश्चिदधमं प्रापयन्नीश्वरः कथं विषमो न भवेत्। कथं वा विविधं[6] दुःखं प्रापयन्निर्घृणो न स्यात्। धर्माधर्मानुसारेण तत् प्रापणे गुरु-पितृ-राजादीना-

* अयमर्थः— मन्त्रार्थवाद-पुराणादिषु देवतानामपि समीहितं तपश्चरणादिद्वारैव सिद्धमित्यनुवर्णितं न साक्षात् तस्मात् कर्मैव फलप्रदं न देवता।

† औपनिषदा वेदान्तिनः। ते च कर्मानुरूपं शुभमशुभं वा ईश्वरः फलं ददातीति मन्यन्ते।

१. A. has देवादीना-. २. C. and F. देवात्मनामपि, I. देवानामपि. ३. D. F. G. and H. have समाहित- for समीहित-. ४. A. reads फलं ददातु. ५. All except A. H. and I. have धर्मवैयर्थ्य-. ६. A. has चित्रं for विविधं, and all others except I. विचित्रं for the same.

मिव न वैषम्य-नैर्घृण्ये प्राप्नुतः। न हि दुष्टशिक्षां शिष्ट-परिपालनं च कुर्वतां गुर्वादीनां वैषम्य-नैर्घृण्ये विद्येते। यदुक्तं—'गो-मण्डूकादीनां[1] तिरश्चामोषधि-वनस्पत्यादीनां च स्थावराणां फलप्रदत्वमयुक्तम्'—इति। तत् तथैवास्तु। ईश्वरस्य फलदातृत्वे कः प्रत्यूहः। यदपि—

'तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयति'।

(तै. सं. २. ६. ४. ३)

—इति तत्रापीन्द्रदेवतायामवस्थितो ऽन्तर्यामी फलप्रदत्वेन विवक्षितः।

'अन्तः प्रविष्टः शास्ता जनानाम्'।

इति श्रुतेः। तस्मादीश्वरस्य[2] प्रसाद एव फलद्वारम्। न च जैमिनेय-वैयासिकयोर्मतयोः परस्परं विरोधः। विवक्षाविशेषेण तत्समाधानात्। यथा देवदत्तस्यैव पक्तृत्वे ऽपि सम्यगभिज्वलनं[3] विवक्षित्वा 'काष्ठानि पचन्ति'—इति व्यवहारः तथा परमेश्वरस्यैव फलप्रदत्वे ऽपि तारतम्यापादन[4]-निमित्ततया प्राधान्यं विवक्षित्वा 'धर्मः फलप्रदः[5]'—इति व्यवहारः किं न स्यात्। तस्मादविरोधात् फलप्रदो जगदीश्वर एक एव सर्वत्र पूजनीयो[6] देव इत्यलमतिप्रसङ्गेन[7]।

॥ इति देवतास्वरूपनिरूपणप्रकरणम् ॥

अतिथेर्लक्षणं स्वयमेव वक्ष्यति। उभयोः पूजनप्रकार-मुपरितनश्लोके निरूपयामः। 'देवता ऽतिथिपूजको नावसी-

१. A. B. C. and F. स्तेग- for गो-. २. All others except H. I. read ईश्वरप्रसाद. ३. H. has अभिज्वालनं. ४. A. and I. read -पादनिमित्त-. ५. From फलप्रदः to the end is omitted by D. ६. All others except A. and I. read पूजनीय एवाल-. ७. H. -मिति प्रसं-.

दति'-इत्युक्तेरपूजायामवसीदति इत्यवगम्यते । तथा च कूर्मपुराणे-

'यो मोहादथवाऽऽलस्यादकृत्वा देवतार्चनम्[1] ।
भुङ्क्ते स याति नरकं सूकरेष्वभिजायते[2]' ॥
(कू. पु. १. २. १८. १२१)

'अकृत्वा[3] देवपूजां च महायज्ञान् द्विजोत्तमः ।
भुञ्जीत चेत्स मूढात्मा तिर्यग्योनिं निगच्छति[4]' ॥
(कू. पु. १, २. १८. ११९)

इति[5] । मार्कण्डेयः—

'अतिथिर्यस्य भग्नाशो गृहात् प्रतिनिवर्त्तते ।
स तस्य दुष्कृतं दत्त्वा पुण्यमादाय गच्छति' ॥
(मा. पु. २९. ३१; वि. पु. ३. ९. १५; वि. स्मृ. ६७. ३३)

इति । देवलो ऽपि-

'अतिथिर्गृहमभ्येत्य यस्य प्रतिनिवर्त्तते ।
असत्कृतो निराशश्च स सद्यो हन्ति तत्कुलम्' ॥

---

१. In Kûrma Purâṇa we find as अज्ञानात्. २. A. and I. read -ष्विह. ३. In the text of Kûrma Purâṇa we find the reading as follows :— अकृत्वा तु द्विजः पञ्चमहायज्ञान् द्विजोत्तमाः referring to both these verses this reading is more correct. ४. All others except A. and D. as also the text of the Kûrma Purâṇa read स गच्छति. ५ This quotation from मार्कण्डेयः- to -गच्छति is omitted by A. and I.; the author quotes this verse from Mârkaṇḍaya, but we also find it in Vishṇu Smriti and Vishṇu Purâṇa.

इति । पूजायां तु न केवलं[1] पापाभावः[2] किन्त्वभ्युदयो ऽप्यस्ति । तथा च विष्णुधर्मोत्तरे–

'ये ऽर्चयन्ति सदा विष्णुं शङ्ख-चक्र-गदाधरम् ।
सर्वपापविनिर्मुक्ता ब्रह्माणं प्रविशन्ति ते' ॥

इति । कूर्मपुराणे–

'वेदाभ्यासो ऽन्वहं शक्त्या महायज्ञक्रियास्तथा ।
नाशयन्त्याशु पापानि देवानामर्चनं तथा' ॥

(कू. पु. १. २. १८. १९.)

इति । मनुरपि–

'अतिथिं पूजयेद्यस्तु श्रान्तं चादुष्टमानसम्[3] ।
सवृषं[4] गोशतं तेन दत्तं स्यादिति मे मतिः' ॥

(व. स्मृ. २७. ७)

इति । विष्णुरपि–

'स्वाध्यायेनाग्निहोत्रेण यज्ञेन तपसा तथा ।
नाऽवाप्नोति गृही लोकान् यथा त्वतिथिपूजनात्' ॥

(वि. स्मृ. ६७. ४४.)

इति[5] । वैश्वदेवाद्यर्थमोदनं पाचयित्वा तेन होमे कृते सति यो[6] ऽवशिष्ट ओदनः स हुतशेषः । तमेव भुञ्जीत न तु स्वभोजनार्थं पाचयेत् । यदाह[7] भगवान्–

---

१. B. C. D. and F. add एव to केवलं. २. A. and I. read अवसादः for पापाभावः. ३. A. and I. -मागतम्, B. C. F. -मानस; and F. वा दुष्टमानसम्. ४. D. सवत्सं. ५. A. omits इति. ६. All except A. and I. omit यो. ७. A. reads तथाह; and the other all except I. तदाह.

'यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः।
भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात्' ॥
(भ. गी. ३. १३)

इति। 'हुतशेषम्'—इत्यत्र हुतशब्दो महाभारते व्याख्यातः—
'वैश्वदेवादयो होमा हुतमित्युच्यते बुधैः'।

इति। तस्य शेषो हुतशेषः। स च हुतशेषशब्दो देवर्षि-मनुष्यादिपूजोपयुक्तावशिष्टमुपलक्षयति। तदाह मनुः—

'देवानृषीन् मनुष्यांश्च पितृन् गृह्यांश्च देवताः।
पूजयित्वा ततः पश्चाद् गृहस्थः शेषभुग्भवेत् ॥
अघं स केवलं भुङ्क्ते यः पचत्यात्मकारणात्।
यज्ञशिष्टाशनं ह्येतत् सतामन्नं विधीयते' ॥
(म. स्मृ. ३. ११७–११८)

इति। 'ब्राह्मणो नावसीदति' इत्यत्र विवक्षितस्य ब्राह्मणस्य लक्षणं महाभारते दर्शितम्—

'सत्यं दानं तपः शौचमानृशंस्यं दमो घृणा।
दृश्यन्ते यत्र विप्रेन्द्र स ब्राह्मण इति स्मृतः ॥
जितेन्द्रियो धर्मपरः स्वाध्यायनिरतः शुचिः।
काम-क्रोधौ वशे यस्य तं देवा ब्राह्मणं विदुः ॥
यस्य चात्मसमो लोको धर्मज्ञस्य मनस्विनः।
स्वयं धर्मेण चरति तं देवा ब्राह्मणं विदुः ॥

१. D. omits from 'हुतशेषम्'—to अघं स केवलं भुङ्क्ते यः पचत्यात्मकारणात् both inclusive, this is only on account of the writer's carelessness.
२. G. ब्राह्मयाश्च, E. and H. read बाह्याश्च. ३. H. adds इति after भवेत्.
४. A. and I. वशौ. ५. All except A. and I. read सर्वं धर्मेण चरितं.

योऽध्यापयेदधीते वा याजयेद्वा यजेत वा ।
दद्याद्वाऽपि यथाशक्ति तं देवा ब्राह्मणं विदुः ॥
क्षमा दया च विज्ञानं सत्यं चैव दमः शमः ।
अध्यात्मनि रतिर्ज्ञानमेतद्ब्राह्मणलक्षणम्' ॥

इति । तथा[2] च अनाहिताग्नितायामपि उक्तलक्षणलक्षितो ब्राह्मणो नावसीदतीति वाक्यार्थः पर्यवसितो भवति ।

'चतुर्णामपि वर्णानाम्'–इति 'षट्कर्माभिरतः'–इति वचनद्वयेन साधारणा-ऽसाधारणधर्मौ संक्षिप्योपदर्शितौ । यद्यप्यध्यापनादित्रयमेव विप्रस्याऽसाधारणं नाध्ययनादित्रयम् । तस्य वर्णत्रयसाधारणत्वात् । तथापि षट्कर्माभिरतत्वं विप्रस्यैवेति न कोऽपि विरोधः ॥ ३८ ॥

अथा[3]त्र साधारणाध्ययनादिप्रसङ्गेन बुद्धिस्थं साधारणमाह्निकं संक्षिप्याह–

सन्ध्या स्नानं जपो होमो देव[4]तातिथिपूजनम् ।
आतिथ्यं वैश्वदेवं च षट्कर्माणि दिनेदिने ॥३९॥

इति । 'सन्ध्यास्नानम्'–इत्यत्र यवागूपाकन्यायेन स्नानस्य प्राथम्यं व्याख्येयम् । स च न्यायः पञ्चमाध्याये प्रथमपादे प्रतिपादितः । 'य[5]वाग्वाऽग्निहोत्रं जुहोति । यवागुं च[6] पचति'–इति श्रूयते । तत्र[7] संशयः किमग्निहोत्र-यवागूपाकयोर-

---

१. All others except A. and I. have रतं for रतिः. २. From तथा च—to पर्यवसितो भवति is omitted by all except A. and I. ३. A. reads तथात्र, and all others except I. तत्र. ४. All except K. and L. read देवतानां च for देवतातिथि-. ५. A. omits यवाग्वा. ६. Except F. G. H. All others omit च. ७. A. omits तत्र.

नियतः क्रमः? उत नियतः ? यदपि[1] नियतः तदपि पाठेन निय-
म्यते उतार्थेन? तत्र विध्योरनुष्ठानमात्रपर्यवसानात् क्रमस्य नि-
यामका[2]भावात् अनियतः[3]—इत्येकः पूर्वः[4] पक्षः । पूर्वाधिकरणेषु[5]
'अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं[6] दीक्षयति '* इत्यत्र पाठ-
स्य नियामकत्वाभ्युपगमात् अत्रापि तत्सम्भवात् यथापाठ[7]क्रम-
नियमः-इत्यपरः पूर्वः पक्षः । 'यवाग्वा '—इति तृतीयया श्रुत्या
होमसाधनत्वावगमादसति[8] च द्रव्ये होमानिष्पत्तेरर्थाद् यवागू-
पाकः पूर्वभावी-इति सिद्धान्तः । एवमत्रापि[9] स्नानस्य शुद्धिहे-
तुत्वाच्छुद्धस्यैव सन्ध्यावन्दनाधिकारित्वात् स्नानं पूर्वभावि
इति द्रष्टव्यम् । तत्र स्नानं तत्पूर्वभाविनां ब्राह्ममुहूर्तोत्थान-हि-
तचिन्तनादीनां सर्वेषामुपलक्षणम् । तत्र याज्ञवल्क्यः—

'ब्राह्मे मुहूर्ते उत्थाय चिन्तयेदात्मनो हितम् ।
धर्मा-ऽर्थ-कामान् स्वे काले यथाशक्ति न हापयेत्[10]' ॥
(या. स्मृ. १. ११५)

इति । मनुरपि—

'ब्राह्मे मुहूर्ते बुध्येत धर्मार्थावनुचिन्तयेत् ।
कायक्लेशांश्च तन्मूलान् वेदतत्त्वार्थमेव च'॥
( म. स्मृ. ४. ९२ )

* द्रष्टव्यमिदं पूर्वमीमांसायां पञ्चमे ऽध्याये प्रथमे पादे 'श्रुतिलक्षणमानुपूर्व्यं तत्प्रमाणत्वात् ' इत्येतत्सूत्रव्याख्यायां शबरभाष्ये ।

१. A. and I. read यद्य नियतस्तद्य, and others except H. यद्यपि नियतस्तद्यपि. २. A. has नियामकत्वा-. ३. A. adds क्रमः after अनियतः. ४. D. omits पूर्वः. ५. D. reads -धिकरणे. ६. B. D. and E. read ब्राह्मणं. ७. A. reads तथापाठक्रम-. ८. D. reads असति द्रव्यहोमो निःपतेत् अर्थाद्यवागूपाकः पूर्वभावीति द्रष्टव्यम् । तत्र स्नानपूर्वभावि -for the intermediate portion of -साधनत्वावगमात् and ब्राह्ममुहूर्तो-. ९. अत is added to एव by A. १०. D. reads उपाददेत् for न हापयेत्.

इति । 'वेदतत्त्वार्थः' परमात्मा । तथा च कूर्मपुराणे—

'ब्राह्मे मुहूर्त्ते उत्थाय धर्ममर्थं च चिन्तयेत् ।
कायक्लेशं तदुद्भूतं ध्यायीत मनसेश्वरम्' ॥
(कू. पू. १. २. १८. ३)

इति । विष्णुपुराणेऽपि—

'ब्राह्मे मुहूर्त्ते उत्थाय[1] मानसे मतिमान्नृप ।
विबुध्य[2] चिन्तयेद्धर्ममर्थं चास्याविरोधिनम्[3] ॥
अपीडया[4] तयोः[5] काममुभयोरपि चिन्तयेत् ।
परित्यजेदर्थ-कामौ धर्मपीडाकरौ नृप ॥
धर्ममप्यसुखोदर्कं लोकविद्विष्टमेव च' ॥
(वि. पु. ३. ११. ६-७)

इति । सूर्योदयात् प्रागर्द्धप्रहरे द्वौ मुहूर्त्तौ । तत्राद्यो ब्राह्मो द्वितीयो रौद्रः । तत्र ब्राह्मे चिन्तनीयार्थविशेषं दर्शयति विष्णुः—

'उत्थायोत्थाय बोद्धव्यं किमद्य सुकृतं कृतम् ।
दत्तं वा दापितं[6] वाऽपि वाक् सत्या वापि[7] भाषिता ॥
उत्थायोत्थाय बोद्धव्यं मद्द्वयमुपस्थितम्[8] ।
मरण-व्याधि-शोकानां किमद्य निपतिष्यति' ॥

इति । 'ध्यायीत मनसेश्वरम्' इति यदुक्तं तत्र प्रकारविशेषो वामनपुराणे दर्शितः[9]—

---

१. The text of Vishṇu Purâṇa सुस्थे च for उत्थाय. २. In Vishṇu Purâṇa विबुद्धः for विबुध्य. ३. All except I. read चाप्यविरोधिनम्. ४. In Vishṇu Purâṇa the following one line is seen between अपीडया, &c., and परित्यजेदर्थकामौ, &c., but the author did not find it necessary to the present. 'दृष्टादृष्टविनाशाय त्रिवर्गे समदर्शिना. ५. A. reads ऽनयोः for तयोः. ६. A. reads ऽपि इतं for दापितं. ७. E. H. and I. read चापि. ८. D. and G. have यद्भयं समुप-. ९. I. omits दर्शितः.

'ब्रह्मा मुरारिस्त्रि[1]पुरान्तकारी
भानुः शशी भूमिसुतो बुधश्च।
गुरुश्च शुक्रः श[2]नि-राहु-केतवः
कुर्वन्तु सर्वे मम सुप्रभातम्' ॥

(वा. पु. १४. २३)

इत्यादि।

॥ इति ब्राह्मे मुहूर्ते आत्महितचिन्तनप्रकरणम्॥

हितचिन्तनानन्तरं श्रोत्रियादिकमवलोकयेत् न तु पापिष्ठादिकम्। त[3]दाह कात्यायनः—

'श्रोत्रियं सुभ[4]गं गां च अग्निमग्निचितं तथा।
प्रातरुत्थाय यः पश्ये[5]दापद्भ्यः स प्रमुच्यते ॥
पापिष्ठं दुर्भगं चा[6]न्धं नग्नमुत्कृत्तनासिकम्।
प्रातरुत्थाय यः पश्येत् तत्कलेरुपलक्षणम्' ॥

(का. स्मृ. १९. ९-१०)

इति। ततो मूत्र-पुरीषे कुर्यात्। त[7]दाहाङ्गिराः—

'उत्थाय पश्चिमे रात्रे तत आचम्य चोदकम्।
अन्तर्धाय तृणैर्भूमिं शिरः प्रावृत्य वाससा ॥
वाचं नियम्य यत्नेन ष्ठी[8]वनोच्छ्वासवर्जितः।
कुर्यान्मूत्र-पुरीषे तु शुचौ देशे समाहितः'॥

१. A. substitutes त्रिपुरान्तकोऽभिर्-. २. All others except D. and G. substitute सहभानुजेन for शनि-राहु-केतवः. ३. A. omits तदाह. ४. All except A. and G. read सुभगां. ५. A. reads -दार्तिभ्यः स विमुच्यते. ६. A. and I. read मद्यं for चान्धं. ७. A. reads तथाचाऽङ्गिराः. ८. E. G. H. and I. read निष्ठीवो-. for ष्ठीवनो-.

इति । तत्र तृणनियमं विशिनष्टि[१]—

'शिरः प्रावृत्य कुर्वीत शकृन्मूत्रविसर्जनम् ।
अयज्ञीयैरनार्द्रैश्च तृणैः सञ्छाद्य मेदिनीम्' ॥

इति । तत्र कालभेदेन दिङ्नियमसाह[२] याज्ञवल्क्यः—

'दिवा सन्ध्यासु कर्णस्थब्रह्मसूत्र उदङ्मुखः ।
कुर्यान्मूत्र-पुरीषे तु रात्रौ चेद्दक्षिणामुखः' ॥
( या. स्मृ. १.१६ )

इति । कर्णश्च दक्षिणः ।

'पवित्रं दक्षिणे कर्णे कृत्वा विण्मूत्रमुत्सृजेत्' ॥

इति स्मृत्यन्तरे पवित्रस्य दक्षिणकर्णस्थत्वाभिधानात्[३] । यज्ञोपवीतस्यापि तदेव स्थानं न्याय्यम् । अङ्गिरास्तु विकल्पेन[४] स्थानान्तरमाह—

'कृत्वा यज्ञोपवीतं तु पृष्ठतः कण्ठलम्बितम् ।
विण्मूत्रं तु गृही कुर्यात् यद्वा कर्णे समाहितः' ॥

इति । तत्र कर्णे निधानमेकवस्त्रविषयम् । तथा च सांख्यायनः—

'यद्येकवस्त्रो[५] यज्ञोपवीतं कर्णे
कृत्वा मूत्र-पुरीषोत्सर्गं[६] कुर्यात्' ॥

---

१. D. substitutes तत्र नियमं वसिष्ठ आह for तत्र तृणनियमं विशिनष्टि. If we allow the reading of D. it means that it is of Vasishṭa; but we cannot find it in Vasishta Smriti. For the same तृणनियमान् appears in A. I.; and in B. C. E. G. H. तृणनियमो. This is grammatically incorrect. २. B. E. and H. omit दिक्. ३. All except A. and I. read -स्थानाभि-. ४. G. has विकल्पे for विकल्पेन. ५. G. reads यद्देकवस्त्रो for यद्येकवस्त्रो. ६. D. omits उत्सर्गं and reads मूत्रपुरीषे कुर्यात्; while B. C. E. F. and H. read - उत्सर्गे.

इति। ननु—उक्तो दिङ्नियमो न व्यवतिष्ठते। अन्यैरन्यथा-स्मरणात्। तत्र यमः—

'प्रत्यङ्मुखस्तु पूर्वाह्णे ऽपराह्णे प्राङ्मुखस्तथा ।
उदङ्मुखस्तु मध्याह्ने निशायां दक्षिणामुखः' ॥

इति। अत्र केचिद्विकल्पमाश्रित्य व्यवस्थापयन्ति। तदयु[1]-क्तम्। सामान्य-विशेषशास्त्रयोर्विकल्पायोगात्। सामान्य-शास्त्रं हि[2] याज्ञवल्क्यवचनम्। दिवसे कृत्स्ने ऽप्यु[3]दङ्मुखत्वं[4]-विधानात्। यमवचनं तु विशेष[5]शास्त्रम्। उदङ्मुखत्वस्य मध्याह्नविषयत्वेनात्र सङ्कोचप्रतीतेः। मा ऽस्तु तर्हि विकल्पः। [6]यमवचनोक्ता तु[7] व्यवस्था भविष्यति—इति चेत्। तदपि[8] न युक्तम्। प्राक्-प्रत्यङ्मुखत्वनिराकरणायैव देवलेन सदैवेति विशेषितत्वात्।

'सदैवोदङ्मुखः प्रातः सायाह्ने दक्षिणामुखः'।

इति। अत्र प्रातः-सायाह्नशब्दौ दिवा-रात्रिविषयौ। तथा च मनुः—

'मूत्रोच्चार-समुत्सर्गं दिवा कुर्यादुदङ्मुखः ।
दक्षिणाभिमुखो रात्रौ सन्ध्ययोश्च यथा दिवा' ॥
(म. स्मृ. ४. ५०)

इति। एवं तर्हि यमोक्तयोः प्राक्-प्रत्यङ्मुखत्वयोः का गतिः? सू[9]र्याभिमुखनिषेधगमकोक्तिरिति ब्रूमः। तदुक्तं महाभारते—

---

१. G. has तदेतदयुक्तम्. २. D. omits हि. ३. B. C. and F. omit अपि. ४. D. and G. omit -त्व-; while H. reads उदङ्मुख इति वचनात् for उदङ्मुखत्वविधानात्. ५. D. reads विशेषवच्छास्त्रम्. ६. A. reads यमवचनोक्तो नियमः for यमवचनोक्ता तु व्यवस्था भविष्यति-इति चेत्, D. substitutes अव्यवस्था भवष्यतीति चेत्, this reading is correct and gives different sense. ७. H. omits तु. ८. A. reads एतदपि for तदपि. ९. A. and I. read सूर्याभिमुख्यनिषेधपरा यमोक्तिरिति. The reading is correct, but it seems the repetition 'यमोक्तिरिति' is contrary to the style.

'प्रत्यादित्यं प्रत्यनलं प्रतिगां च प्रतिद्विजम् ।
मेहन्ति ये च पथिषु ते भवन्ति गतायुषः'॥

इति । यत्तु देवलेनोक्तम्—

'विण्मूत्रमाचरेन्नित्यं सन्ध्यासु परिवर्जयेत्'॥

इति तन्निरुद्धेतरविषयम् ।

'न वेगं धारयेत् । नोपरुद्धः क्रियां कुर्यात्'

इति स्मरणात् । यदपि मनुनोक्तम्—

'छायायामन्धकारे वा रात्रावहनि वा द्विजः ।
यथासुखमुखः कुर्यात् प्राणबाधभयेषु च' ॥
(म. स्मृ. ४. ५१; ग. पु. १. २१७. २७)

इति । तदपि नीहारान्धकारादिजनितदिङ्मोहनविषयम् । देशनियमो विष्णुपुराणेऽभिहितः—

'नैर्ऋत्यामिषुविक्षेपमतीत्याभ्यधिकं भुवः ।
दूरादावसथान्मूत्रं पुरीषं च समाचरेत्'॥
(वि. पु. ३. ११. ८-९)

इति । आपस्तम्बोऽपि—

'दूरादावसथान्मूत्र-पुरीषे कुर्यात्
दक्षिणां दिशमपरां वा' ।
(आ. ध. सू. १. ११. ३१. २)

इति । मनुरपि—

'दूरादावसथान्मूत्रं दूरात् पादावसेचनम् ।
उच्छिष्टान्ननिषेकं च दूरादेव समाचरेत्'॥
(म. स्मृ. ४. १५१)

इति । स एव वर्ज्यदेशानाह—

---

१. D. reads प्रत्यमरं प्रतिगङ्गां, E. प्रत्यबलं for प्रत्यनलं. २. I. reads यदपि for यत्तु. ३. H. I. and also the text of manu read प्राणबाधा-. ४. The text of the Âpastambhadharmśûtra reads आरादा-............ दक्षिणां दिशं दक्षिणापरां वा. (See G. Bühler's 1st Edition which seems to be incorrect.)

'न मूत्रं पथि कुर्वीत न भस्मनि न गोव्रजे ॥ (४५)
न फाल[1]कृष्टे न [2]जले न चित्यां न च पर्वते ।
न जीर्णदेवायतने न वल्मीके कदा[3]चन ॥ (४६)
न ससत्त्वेषु [4]गर्तेषु न गच्छन्नापि[5] च स्थितः ।
न नदीतीरमा[6]साद्य न च पर्वतमस्तके ॥ (४७)
वाय्वग्नि-विप्रानादित्यमपः पश्यंस्तथैव गाः[7] ।
न कदाचन कुर्वीत विण्मूत्रस्य विसर्जनम्' ॥ (४८)
(म. स्मृ. ४. ४५–४८)

इति । पर्वतमस्तक इति पुनर्ग्रहणं दोषाधिक्यज्ञापनाय । यमो ऽपि–

'तुषाङ्गार-कपालानि देवताऽऽयतनानि च ।
राजमार्ग-श्मशानानि क्षेत्राणि च खलानि च ॥
उपरुद्धो न सेवेत [9]छायां वृश्यं चतुष्पथम् ।
उदकं चोदकान्तं च पन्थानं च विवर्जयेत् ॥
वर्जयेत् वृक्षमूलानि चैत्य-श्वभ्र-बिलानि च' ।

इति । हारीतः–

'आहारं तु रहः कुर्यात् विहारं चैव [10]सर्वदा ।
गुह्याभ्यां [11]लक्ष्म्युपेतः स्यात् प्रकाशे हीयते श्रिया' ॥

१. A. हलकृष्टे न च जले for न फालकृष्टे न जले. २. All others except D. H. and I. read बहुले for न जले. ३. H. reads न शाद्वले for कदाचन. ४. A. has चैत्येषु for गर्तेषु. ५. Others except D. read नाप्यवास्थितः. for नापि च स्थितः; while A. reads नाधिरोहितः. ६. H. reads आश्रित्य for आसाद्य. ७. I. reads च for गाः. ८. This sentence is omitted by all others except H. ९. I. reads छायावृक्षं चतुष्पथम्; G. छायां नश्यं चतुष्पथम् and A. छायादृश्ये चतुष्पथे for छायां वृश्यं चतुष्पथम्. १०. A. reads सर्वथा. ११. A. and D. read लक्ष्मियुक्तः.

इति । आपस्तम्बो ऽपि–

'न च सोपानत्को मूत्र-पुरीषे कुर्यात्' ।

(आ. ध. सू. १. १०. ३०. १८)

इति । यमो ऽपि–

'प्रत्यादित्यं न मेहेत न पश्येदात्मनः शकृत् ।
दृष्ट्वा सूर्यं निरीक्षेत गामग्निं ब्राह्मणं तथा' ॥

इति । ततो लोष्टादिना परिमृष्टगुद-मेहनो गृहीतशिश्नश्चोत्तिष्ठेत् । तथा च भरद्वाजः–

'अथापकृष्य विण्मूत्रं लोष्ट-काष्ठ-तृणादिना ।
उदस्तवासा उत्तिष्ठेत् दृढं विधृतमेहनः' ॥

इति ।

॥ इति विण्मूत्रोत्सर्जनप्रकरणम् ॥

अथ शौचप्रकरणम् । तत्र याज्ञवल्क्यः–

'गृहीतशिश्नश्चोत्थाय मृद्भिरभ्युद्धृतैर्जलैः ।
गन्धलेपक्षयकरं शौचं कुर्यादतन्द्रितः' ॥

(या. स्मृ. १. १७)

इति । देवलो ऽपि–

'आ शौचान्तं मृजेच्छिश्नं प्रस्रावोच्चारयोरपि ।
गुदं हस्तं च निर्मृज्यान्मृदम्भोभिर्मुहुर्मुहुः' ॥

१. गुद- is omitted by A. २. I. reads अवकृष्य च for अथापकृष्य, and A. यथा प्रकृष्य for the same. ३. All others except I. read -विधिः for -प्रकरणम. ४. D. and I. read आ शौचान्नोत्सृजेत. B. C. and F. आ शौचान्तान्मृजेत to आ शौचान्तं मृजेत्.

इति । दक्षोऽपि—

'तीर्थे शौचं न कुर्वीत कुर्वीतोद्धृतवारिणा' ॥

इति । अभ्युद्धरणासम्भवे विशेषमाह विवस्वान्[१]—

'रत्निमात्राज्जलं त्यक्त्वा[२] कुर्याच्छौचमनुद्धृते ।
पश्चात्तच्छोधयेत्तीर्थमन्यथा ह्यशुचिर्भवेत्' ॥

इति । शौचयोग्यां मृत्तिकामाह यमः—

'आहरेन्मृत्तिकां विप्रः कूलात् ससिकतां तथा' ॥

इति । तत्रैव विशेषमाह मरीचिः—

'विप्रे शुक्ला तु मृच्छौचे रक्ता क्षत्रे विधीयते ।
हारिद्रवर्णा वैश्ये तु शूद्रे कृष्णां विनिर्दिशेत्'[३] ॥

इति । उक्तविशेषासम्भवे या काचित् ग्राह्या । तदाह मनुः—

'यस्मिन् देशे तु यत्तोयं या च यत्रैव मृत्तिका ।
सैव तत्र प्रशस्ता स्यात् तया शौचं विधीयते' ॥

(म. स्मृ. १०. ४७)

इति । विष्णुपुराणे वर्ज्या मृद्विशेषा दर्शिताः—

'वल्मीक-मूषकोत्खातां[४] मृदमन्तर्जलात्तथा[५] ।
शौचावशिष्टां गेहाच्च नादद्याल्लेपसम्भवाम् ॥ (१५)
अन्तःप्राण्यवपन्नां च हलोत्खातां न कर्दमात्' ।

(वि. पु. ३. ११. १५–१६)

---

१. A. omits विवस्वान्, and I. reads विश्वामित्रः for the same. २ D. reads रत्निमात्रजलं त्यक्त्वा, and I. रत्निमात्रजलात्तीर्थे for रत्निमात्राज्जलं त्यक्त्वा. ३. All others except I. read कृष्णेति निर्दिशेत् for कृष्णां विनिर्दिशेत्. ४ All others except H. read -मूषिक; but मूषक is correct. ५. D. reads -जले and I. -जलां for -जलात्.

इति। अन्तर्जलमृत्तिकाप्रतिषेधस्तु वापी-कूपादिव्यतिरिक्त-विषयः। अत एव यमः—

'वापी-कूप-तडागेषु नाहरेद्बाह्यतो मृदम्।
आहरेज्जलमध्यात् तु परतो मणिबन्धनात्'॥

इति। देवलो ऽपि काश्चिन्निषिद्धा मृदो दर्शयति—

'अङ्गार-तुष-कीटा-ऽस्थि-शर्करा-वालुकान्विताम्।
वल्मीकोपरि तोयान्त[1]-कुड्या[2]-फाल-श्मशानजाम्॥
ग्रामबाह्यान्तरालस्थां वालुकां पांसुरूपिणीम्।
आहृतामन्यशौचार्थमाददीत न मृत्तिकाम्'॥

इति। हस्तनियममाह देवलः—

'धर्मविद्दक्षिणं हस्तमधः शौचे न योजयेत्।
तथा च वामहस्तेन नाभेरूर्ध्वं न शोधयेत्'॥

इति। ब्रह्माण्डपुराणे दिङ्नियमो ऽभिहितः—

'उद्धृत्योदकमादाय मृत्तिकां चैव वाग्यतः।
उदङ्मुखो दिवा कुर्याद्रात्रौ चेद्दक्षिणामुखः'॥

इति। मृत्सङ्ख्यामाह शातातपः—

'एका लिङ्गे करे सव्ये तिस्रो द्वे हस्तयोर्द्वयोः।
मूत्रशौचं समाख्यातं शकृति त्रिगुणं भवेत्'[3]॥

---

१. I. reads तोयान्तः for तोयान्त-. २. D. reads कुड्या-यूप-श्मशानजाम्; while all others except A. and I. read कुड्या-पूतश्मशानजाम्, and on the margin of H. appears the correction -यूप- for -पूत-. ३. A. reads पुरीषे द्विगुणं भवेत्; while D. reads शकृति द्विगुणं भवेत्.

इति। मनुरपि[1]—

'एका लिङ्गे गुदे तिस्रस्तथैकत्र करे दश।
उभयोः सप्त दातव्या मृदः शुद्धिमभीप्सता[2]॥
एतच्छौचं गृहस्थस्य द्विगुणं ब्रह्मचारिणः।
वानप्रस्थस्य त्रिगुणं यतीनां तु चतुर्गुणम्'॥

(म. स्मृ. ५. १३६–१३७; वि. स्मृ. ६०. २५–२६)

इति। बौधायनोऽपि—

'पञ्चाऽपाने मृदो योज्या[3] वामपादे[4] तथा करे।
तिस्रस्तिस्रः क्रमाद्योज्याः सम्यक्शौचं चिकीर्षता[5]'॥

इति। वसिष्ठोऽपि—

'पञ्चाऽपाने दशैकस्मिन्नुभयोः सप्त मृत्तिकाः।
उभयोः पादयोः सप्त लिङ्गे द्वे परिकीर्त्तिते[6]॥
'एकस्मिन् विंशतिर्हस्ते द्वयोर्ज्ञेयाश्चतुर्दश'।

(व. स्मृ. ६. १८)

इति। विंशत्यादिकं ब्रह्मचारिविषयम् 'द्विगुणं ब्रह्मचारिणः' इत्युक्तत्वात्। आदित्यपुराणे—

१. E. and H. omit मनुरपि. The following two verses are found in the text of the Vishṇu Smṛiti, and the latter verse is found in the text of the Vasiṣṭha Smṛiti. २. All others except A. D. and I. read शुद्धिमवाप्नुयात्, and B. C. F. add इति after शुद्धिमवाप्नुयात्. ३. E. and G. read ऽपाने गुदे योज्या, but this appears to be a mistake. ४. All others except A. and I. read वामपाणौ दशेतरे; but the meaning would be contrary. ५. A. has चिकीर्षतः for चिकीर्षता. ६. All others except G. and I. read -कीर्त्तिताः for -कीर्त्तिते. This latter half is not found in the text of the Vasiṣṭha Smṛiti. I. has आदित्यपुराणे after the end of this verse, but we do not see any use of the words in this place.

'स्त्री-शूद्रयोरर्द्धमानं प्रोक्तं शौचं मनीषिभिः ।
दिवाशौचस्य निश्यर्द्धं पथि पादं[1] विधीयते ॥
आर्त्तः कुर्याद्यथाशक्ति शक्तः कुर्याद्यथोदितम्' ।

इति । बौधायनो ऽपि—

'देशं कालं तथाऽऽत्मानं द्रव्यं द्रव्यप्रयोजनम् ।
उपपत्तिमवस्थां च ज्ञात्वा शौचं प्रकल्पयेत्'[2] ॥
(बौ. स्मृ. १. १. १-६३)

इति । वृद्धपराशरः—

'उपविष्टस्तु विण्मूत्रं कर्तुं[3] यस्तु[4] न विन्दति ।
स[5] कुर्यादर्द्धशौचं तु स्वस्य शौचस्य सर्वदा' ॥
( ग. पु. १. २१७-३३ )

इति । आनुशासनिके [6]शौचेतिकर्तव्यता दर्शिता—

'शौचं कुर्याच्छनैर्धीरो बुद्धिपूर्वमसङ्करम् ।
विप्रुषश्च तथा न स्युर्यथा चोरुं[7] न संस्पृशेत् ॥
बुद्धिपूर्वं प्रयत्नेन यथा नैवं स्पृशेत् स्फिचौ'[8] ।

इति । दक्षो ऽपि—

१. G. reads पादे for पादं. २. A. reads समाचरेत् for प्रकल्पयेत्. ३. A. and I. read कर्तुः. ४. All others except A. and I. substitute च for तु. ५. A. has न for स. As in the Tilgu character the letters न and स resemble each other, we cannot positively say whether this is a mistake. ६. D. reads शौनकेनेतिकर्तव्यता for शौचेतिकर्त्तव्यता. ७. D. reads यथाचोक्तं न संस्पृशेत्, and A. न च स्पृशेत् for न संस्पृशेत्. ८. B. C. and F. read नैव स्पृशेदिति, G. नैनं स्पृशेदिति, and I. नैनं स्पृशेद्द्विजाः. For the same. E. and H. read चोरू न संस्पृशेत्.

'षडन्या नखशुद्धौ तु देयाः शौचेप्सुना मृदः ।
न शौचं वर्षधाराभिराचरेत्तु कदाचन' ॥

इति । मरीचिरपि—

'तिसृभिश्चातलात्[1] पादौ शोध्यौ गुल्फात्तथैव च[2] ।
हस्तौ त्वामणिबन्धाच्च[3] लेप-गन्धापकर्षणे[4]' ॥

इति । यथाविधि कृते शौचे गन्धश्चेन्नापगच्छति तदाऽऽह मनुः—

'यावन्नापैत्यमेध्याक्ताद्गन्धो[5] लेपश्च तत्कृतः ।
तावन्मृद्वारी देयं[6] स्यात् सर्वासु द्रव्यशुद्धिषु' ॥
(म. स्मृ. ५. १२६)

इति । मनस्तुष्ट्यभावे तु देवल आह—

'यावत्तु शुद्धिं मन्येत तावच्छौचं विधीयते ।
प्रमाणं शौचसङ्ख्यायां[7] न विप्रैरुपदिश्यते' ॥
(ग. पु. १. २१७-३६)

इति । पितामहोऽपि—

'न यावदुपनीयन्ते[8] द्विजाः, शूद्रास्तथाऽङ्गनाः ।
गन्धलेपक्षयकरं शौचमेषां[9] विधीयते' ॥

१. A. and I. read शोधयेत् for चातलात्; while D. reads चाबलात् for the same. २. G. and I. read गुल्फौ तथैव च. ३. A. has द्वौ मणिबन्धाच्च. ४. All others except I. read -गंधापकर्षणम्. ५. All others except A. and the text of Manu read -त्यमेध्याक्तो गन्धो. ६. All others except A. and the text of Manu read चादेयं, but the commentators of मनु do not follow this reading, as they think वारि and मृत् are used separately. ७. A. reads शौचसंख्यायाः. ८. G. and H. have तावत् for यावत्, but in the margin of H. appears the correction यावत्. ९. D. has शौचमेव, A. and G. शौचमेवं.

इति । अत्र स्त्री-शूद्रग्रहणं अकृतोद्वाहाभिप्रायम् । अनुपनीतद्विजसाहचर्यात्* । मृत्परिमाणमाह शातातपः—

'आर्द्रामलकमात्रास्तु ग्रासा इन्दुव्रते† स्थिताः ।
तथैवाहुतयः सर्वाः शौचार्थे या च मृत्तिका[१]' ॥

इति । यत्तु दक्षाङ्गिरोभ्यां परिमाणान्तरमुक्तम्—

'अर्धप्रसृतिमात्रा तु प्रथमा मृत्तिका स्मृता ।
द्वितीया च तृतीया च तदर्धेन प्रकीर्तिता ॥

प्रथमा प्रसृतिर्ज्ञेया द्वितीया तु तदर्द्धिका ।
तृतीया मृत्तिका ज्ञेया त्रिभागकरपूरणी' ॥

(द. स्मृ. ५. ७.; ग. पु. १. २१७. २)

इति तत्र सर्वत्र न्यूनपरिमाणेन[२] गन्धाद्यक्षये सत्यधिकपरिमाणं द्रष्टव्यम् । सत्यपि गन्धक्षये शास्त्रोक्तसङ्ख्या पूरणीयैव[३] । यथाह दक्षः—

* 'स्त्रीणामुपनयनस्थाने विवाहः' इत्युक्तेः 'स्त्री-शूद्रौ च सधर्माणौ' इत्युक्तेश्च अनुपनीतद्विजवत् अकृतोद्वाहयोः स्त्री-शूद्रयोरपि गन्धलेपक्षयकरमेव शौचं विधीयते इत्यभिप्रायः ।

† इन्दुव्रतं चान्द्रायणम् । तत्र ग्रासाः होमेषु आहुतयः शौचे मृत्तिकाश्च आर्द्रामलकप्रमाणाः कर्तव्या इत्यर्थः ।

१. B. C. and F. read शौचार्थे यास्तु मृत्तिकाः, A. E. G. and H. शौचे देयास्तु मृत्तिकाः, and I. शौचे देयाश्च मृत्तिकाः for शौचार्थे या च मृत्तिका,
२. D. reads -परिमाणे for -परिमाणेन. ३. All others except D. omit एव.

'न्यूनाधिकं न कर्त्तव्यं शौचं शुद्धिमभीप्सता[1]।
प्रायश्चित्तेन पूयेत विहितातिक्रमे कृते' ॥

(द. स्मृ. ५. १३)

इति। एवमुक्तशौचकरणेऽपि यस्य भावशुद्धिर्नास्ति न तस्य शुद्धिरित्याह व्याघ्रपादः—

'शौचं तु द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं तथा।
मृज्जलाभ्यां स्मृतं बाह्यं भावशुद्धिस्तथाऽऽन्तरम् ॥
गङ्गातोयेन कृत्स्नेन मृद्भारैश्च नगोपमैः[2]।
आ मृत्योश्चाचरन् शौचं भावदुष्टो न शुद्ध्यति' ॥

इति। शौचस्य द्विविधस्यापि सर्वकर्माधिकारहेतुत्वमन्वयव्यतिरेकाभ्यां दक्षो दर्शयति—

'शौचे यत्नः सदा कार्यः शौचमूलो द्विजः स्मृतः।
शौचाचारविहीनस्य समस्ता निष्फलाः क्रियाः' ॥

इति। (द. स्मृ. ५. २)

## ॥ इति शौचप्रकरणम् ॥

अथ[3] गण्डूषविधिः। तत्रापस्तम्बः—

'एवं शौचविधिं कृत्वा पश्चाद्गण्डूषमाचरेत्।
मूत्रे रेतसि विट्सर्गे दन्तधावनकर्मणि ॥

1. D. reads शौचसिद्धि- for शौचं शुद्धि-, A. B. C. and F. read शौचे सिद्धि-, and E. G. H. शौचं सिद्धि-. 2. A. reads न गोमयैः. 3. The intermediate portion from this heading to the next heading 'अथाचमनविधिः is omitted by all others except A. and I.; it is difficult to state whether this portion has been entirely omitted by the author himself or it has been inserted by some one else.

भक्ष्याणां भक्षणे चैव क्रमाद्गण्डूषमाचरेत् ।
चतुरष्ट-द्विषट्-त्र्यष्टगण्डूषैः षोडशैस्तथा ॥
मुखशुद्धिं प्रकुर्वीत ह्यन्यथा दोषमाप्नुयात् ।
पुरस्ताद्देवताः सर्वा दक्षिणे पितरस्तथा ॥
पश्चिमे मुनि-गन्धर्वा वामे गण्डूषमाचरेत् ।
गण्डूषसमये विप्रस्तर्जन्या वक्त्रताडनम् ॥
कुर्वीत यदि मूढात्मा रौरवं नरकं व्रजेत्' ।

इति ।

## ॥ इति गण्डूषविधिः ॥

अथाचमनविधिः । तत्र वृद्धपराशरः—

'कृत्वाऽथ शौचं प्रक्षाल्य पादौ हस्तौ च मृज्जलैः ।
निबद्ध[1]शिख-कच्छ[2]स्तु द्विजे[3] आचमनं चरेत् ।
कृत्वोपवीतं सव्यांसे[4] वाङ्मनः-कायसंयतः' ॥

इति । याज्ञवल्क्योऽपि—

'अन्तर्जानुः[5] शुचौ देशे उपविष्ट उदङ्मुखः ।
प्राग्वा ब्राह्मेण तीर्थेन द्विजो नित्यमुपस्पृशेत्' ॥
(या. स्मृ. १. १८)

इति । गौतमोऽपि—

१. A. reads प्रबद्ध-. २. H. reads -कक्ष- for -कच्छ-. ३. D. and H. read द्विराचमनमाचरेत् for द्विज आचमनं चरेत्. ४. D. reads सव्येन; while all others except A. and I. read सव्येऽसे for सव्यांसे. ५. All except D. and the text of Yājñavalkyasmṛiti omit the Visarga and read अन्तर्जानु शुचौ.

'शुचौ देशे आसीनो दक्षिणं बाहुं जान्वन्तरा कृत्वा यज्ञोपवीती आ मणिबन्धनात् पाणी प्रक्षाल्य वाग्यतो हृदयस्पृशः त्रिश्चतुर्वा अप आचामेत्। द्विः[४] प्रमृज्यात्। पादौ चाभ्युक्षेत्। खानि चोपस्पृशेत् शीर्षण्यानि* मूर्द्धनि च दद्यात्'। (गौ. स्मृ. १. ११)

इति। तत्र त्रिश्चतुर्वेत्यैच्छिको विकल्पः। ब्रह्मतीर्थं तीर्थान्तरेभ्यो विविनक्ति याज्ञवल्क्यः—

'कनिष्ठा-देशिन्यङ्गुष्ठमूलान्यग्रं करस्य च।
प्रजापति-पितृ-ब्रह्म-देवतीर्थान्यनुक्रमात्' ॥
(या. स्मृ. १. १९)

इति। एतदेव शङ्ख-लिखिताभ्यां स्पष्टीकृतम्—
(या. स्मृ. १. १९)

'अङ्गुष्ठमूलस्योत्तरतः प्रागग्रायां रेखायां ब्राह्मं तीर्थम्। प्रदेशिन्यङ्गुष्ठयोरन्तरा पित्र्यम्। कनिष्ठातलयोरन्तरा प्राजापत्यम्। पूर्वेणाङ्गुलिपर्वणि दैवम्'।

* खानि इन्द्रियाणि। शीर्षण्यानि शीर्षे भवानि नासिका-चक्षुः-श्रोत्रादीनि चोपस्पृशेत्। मूर्धनि च जलं दद्यात् इति योजना।

१. All others except A. and the text of Gautama read दक्षिणबाहुं. २. A. reads जान्वन्तरं. ३. Except A. D. I. and the text of Gautama others read पाणिं for पाणी. ४. This is omitted by all others except A. and the text of Gautama. ५. A. reads -भ्युक्षयेत्. ६. D. reads नखानि for खानि. ७. D. adds अपि to अंगुष्ठयोः. ८. A. and I. read कनिष्ठिका-करतल-.

इति । आचमनीयमुदकं विशिनष्टि शङ्खः–

'अद्भिः समुद्धृताभिस्तु हीनाभिः फेन-बुद्बुदैः ।
वह्निना[1] न च तप्ताभिरक्षाराभिरुपस्पृशेत्' ॥

( शं.स्मृ. ९. ६ )

इति । याज्ञवल्क्योऽपि[2]–

'अद्भिस्तु प्रकृतिस्थाभिर्हीनाभिः फेन-बुद्बुदैः ।
हृत्-कण्ठ-तालुगाभिस्तु यथासङ्ख्यं द्विजातयः'* ॥
शुध्येरन् स्त्री च शूद्रश्च[3] सकृत्स्पृष्टाभिरन्ततः ॥

( या. स्मृ. १. २०-२१ )

इति । मनुरपि–

'हृद्गाभिः पूयते विप्रः कण्ठगाभिस्तु भूमिपः[4] ।
वैश्योऽद्भिः प्राशिताभिस्तु शूद्रः स्पृष्टाभिरन्ततः†' ॥

( म. स्मृ. २. ६२ )

इति । प्रचेता अपि–

'अनुष्णाभिरफेनाभिः पूताभिर्वस्त्र-चक्षुषा ।
हृद्गताभिरशब्दाभिः त्रिश्चतुर्वाऽद्भिराचमेत्' ॥

---

* द्विजातयः ब्राह्मण-क्षत्रिय-वैश्याः शुद्धयेरन् इति पूर्वेणान्वयः । स्त्री-शूद्रौ चकारात् अनुपनीतद्विजश्च अन्ततः अन्तेन तालुना स्पृष्टाभिरपि । तृतीयार्थे तसिः ।

† प्राशिताभिः अन्तरास्यप्रविष्टाभिः कण्ठमप्राप्ताभिरपीत्यर्थः । 'अन्ततः जिह्वौष्ठान्तेनापि' इति कुल्लूकभट्टः ।

---

१. 'वह्निना नच तप्ताभिरक्षाराभिरुपस्पृशेत्'। याज्ञवल्क्यो ऽपि 'अद्भिस्तु प्रकृतिस्थाभिर्हीनाभिः फेन-बुद्बुदैः is omitted by D. २. A. and I. omit अपि. ३. A. D. and I. read शूद्राश्च. ४. H. and I. read भूपतिः.

इति। तत्रापवादमाह यमः—

'यात्रायामीक्षितेनापि* शुद्धिरुक्ता मनीषिणाम्।
उदकेनातुराणां च तथोष्णेनोष्णपायिनाम्' ॥

इति। उदकस्य ग्रहणप्रकारं परिमाणं चाह भरद्वाजः—

'आयतं पर्वतः कृत्वा गोकर्णाकृतिवत्करम्।
संहतांगुलिना तोयं गृहीत्वा पाणिना द्विजः॥
मुक्ताङ्गुष्ठकनिष्ठेन शेषेणाचमनं चरेत्।
माषमज्जनमात्रास्तु संगृह्य त्रिः पिबेदपः' ॥

इति। स च पाणिर्दक्षिणो द्रष्टव्यः।

'त्रिः पिबेद्दक्षिणेनापः'।

इति पुराणवचनात्। उदकपानानन्तरभाविनीमितिकर्त्तव्यतामाह दक्षः—

'संवृत्याङ्गुष्ठमूलेन द्विःप्रमृज्यात्ततो मुखम्।
संहताभिस्त्रिभिः पूर्वमास्यमेवमुपस्पृशेत्॥

* यात्रायां प्रयाणे केवलं जलावलोकनेनापि शुद्धिर्भवति। न तत्र स्पर्शनाद्यपेक्षा। 'रात्रावबीक्षितेनापि' इति पाठस्तु असङ्गत इव प्रतिभाति।

१. B. C. and F. add अपि to तत्र. २. A. substitutes याज्ञवल्क्यः for यमः, but we do not find this verse in the text of the same. ३. All others except D. read रात्राववीक्षितेनापि for यात्रायामीक्षितेनापि, but we would not see the meaning of अवीक्षितेनापि; if right, would be an exception to an आचमन how the सायंसंध्यावन्दन is to be performed. ४ A. and I. read सर्वतः. ५. I. reads -मत्करम्. ६. A. reads संहताङ्गुलिना. ७. D. reads -दथ for -दपः. ८. D. reads भावि निमित्तकर्त्तव्यता-. ९. A. reads सम्पत्याङ्गुष्ठ-, B. C. D. and F. संमृज्याङ्गुष्ठ-, and E. G. H. संभृत्याङ्गुष्ठ- for संवृत्याङ्गुष्ठ-. १०. A. reads संहताभिश्चतसृभिः पूर्वमास्यमुपस्पृशेत्, B. C. E. F. and H. संहताभिस्त्रिभिः पूर्वमास्यमेतदुपस्पृशेत्। and D. संहताङ्गुलिभिः पूर्वमास्यमेतदुपस्पृशेत्.

अङ्गुष्ठेन प्रदेशिन्या घ्राणं स्पृष्ट्वा त्वनन्तरम् ।
अङ्गुष्ठानामिकाभ्यां तु चक्षुः-श्रोत्रे ततः परम् ॥
कनिष्ठाङ्गुष्ठयोर्नाभिं हृदयं तु तलेन वै ।
सर्वाभिश्च शिरः पश्चात् बाहू चाग्रेण संस्पृशेत्[1] ॥

( द. स्मृ. २.१४-१७ )

इति । वृद्धशाङ्खस्त्वन्यथास्पर्शनमाह—

'तर्जन्यङ्गुष्ठयोगेन स्पृशेन्नासापुटद्वयम् ।
मध्यमाङ्गुष्ठयोगेन स्पृशेन्नेत्रद्वयं ततः ॥
नाभिं च हृदयं तद्वत् स्पृशेत् पाणितलेन तु ।
संस्पृशेच्च ततः शीर्षमयमाचमने विधिः' ॥

( शं. स्मृ. ९. ६-७ )

इति । एवमन्ये ऽप्यन्यथान्यथा वर्णयन्ति । तत्र यथा-शाखं व्यवस्था द्रष्टव्या । आचमननिमित्तान्याह मनुः—

'कृत्वा मूत्रं पुरीषं वा खान्याचान्त उपस्पृशेत् ।
वेदमध्येष्यमाणश्च अन्नमश्नंश्च सर्वदा' ॥

( म. स्मृ. ५.१३८ )

इति । कूर्मपुराणे ऽपि—

१. B. C. and F. reads बाहूनग्रेण for बाहू चाग्रेण. २. D. omits the portion intervening between तर्जन्यङ्गुष्ठयोगेन स्पृशेत् in the first half of the first line and स्कन्धद्वयं ततः in the latter half of the 4th line. ३. D. substitutes तु for च. ४. A. D. and I. do not repeat the word अन्यथा. ५. D. omits तत्र. ६. A. and I. read पाण्याचान्त, and D. स्नात्वावाप. ७. All others except A. and the text of Manu read पीत्वापोऽध्येष्यमाणश्च. ८. I. reads वेदमग्निं च; while others except A. read वेदमन्नं च. ९. A. D. H. and I. omit अपि.

'चण्डाल-म्लेच्छसम्भाषे[1]* स्त्री-शूद्रोच्छिष्टभाषणे।
उच्छिष्टं पुरुषं स्पृष्ट्वा[2] भोज्यं वा[3]ऽपि तथाविधम्॥
आचामेदश्रुपाते वा लोहितस्य तथैव च[4]।
अग्नेर्गवामथाऽऽलम्भे स्पृष्ट्वा ऽप्रयतमेव च॥
स्त्रीणामथाऽऽत्मनः स्पर्शे[5] नीलीं[6] वा परिधाय च'॥
(कू. पु. १. २. १३. ४–८)

इति। 'स्त्री-शूद्रोच्छिष्टभाषणे-'इत्येतज्जपादिविषयम्। तथा च पद्मपुराणे[7]–

'चाण्डालादीन् जपे होमे दृष्ट्वा ऽऽचामेद्द्विजोत्तमः'।

इति। मनुरपि–

'सुप्त्वा क्षुत्त्वा च भुक्त्वा च निष्ठीव्योक्त्वाऽनृतं[8] वचः।
रथ्यां श्मशानं चाक्रम्य आचामेत् प्रयतोऽपि सन्'॥
(म. स्मृ. ५. १४५)

इति। बृहस्पतिरपि[9]–

* चाण्डालैः म्लेच्छैश्च सह सम्भाषे सम्भाषणे। उच्छिष्टैः स्त्री-शूद्रैः सह उच्छिष्टेन वा तैः सह भाषणे आचामेदिति भावः।

१. B. C. and F. read -भाषणम्. २. B. C. E. F. and G. read दृष्ट्वा for स्पृष्ट्वा. ३. All others except A. and I. substitute चा for वा. ४. After this line we find in the Kûrma Purâṇa the following two lines:- भोजने सन्ध्ययोः स्नात्वा त्यागे मूत्र-पुरीषयोः। आचान्तोऽप्याचमेत्स्पृष्ट्वा सकृत्सकृ-दथान्यतः. ५. A. reads तथात्मसंस्पर्शे, and I. यथात्मसंस्पर्शे for अथात्मनःस्पर्शे. ६. All others except A. I. and the Kûrma Purâṇa read नीवीं for नीलीं. ७. All others except A. and I. read -पुराणम्. ८. In the text of manu appears -नृतानि च. ९. A. omits this portion, and I. omits only अपि.

'अधोवायुसमुत्सर्गे आक्रन्दे क्रोधसम्भवे ।
मार्जार-मूषकस्पर्शे[1] प्रहासे ऽनृतभाषणे ॥
निमित्तेष्वेषु सर्वेषु कर्म कुर्वन्नपि[2] स्पृशेत्' ॥

इति । यमो ऽपि–

'उत्तीर्योदकमाचामेदवतीर्य तथैव च ।
एवं स्यात्तेजसा युक्तो वरुणो[3] ऽपि सुपूजितः'* ॥

इति । हारीतो ऽपि–

'नोत्तरेदनुपस्पृश्य जलम्' ।

इति । वसिष्ठो ऽपि–

'क्षुते निष्ठीवने सुप्ते परिधाने ऽश्रुपातने ।
पञ्चस्वेतेषु चाचामेच्छ्रोत्रं[4] वा दक्षिणं स्पृशेत्' ॥

इति । दक्षिणकर्णस्पर्शनमाचमनासम्भवे वेदितव्यम् ।

तथा च मार्कण्डेयपुराणम्–

'सम्यगाचम्य तोयेन क्रियाः[5] कुर्वीत वै शुचिः ॥ (६७)
देवतानामृषीणां च पितॄणां चैव यत्नतः ॥ (६८)
कुर्यादाचमनं स्पर्शं गोपृष्ठस्यार्कदर्शनम् † ।

---

* एवं कृते सति जलाधिष्ठातृदेवता वरुणोऽपि पूजितो भवतीत्यर्थः ।

† नेदमुपलब्धपुस्तकेषु दृश्यते । तथापि 'पूर्वाभावे ततः परं'–इत्यस्य ग्रहणे इदमपेक्षितमेवेति स्पष्टमेव ।

---

१. All others except A. and D. read -मूषिकास्पर्शे, which appears to be a mistake. If the word मूषिका meaning a female rat is kept then the meaning would be that at the touch of the female rat alone the आचमन is to be performed. २. All others except D. read कुर्वन्नुपस्पृशेत्. ३. A. and I. read वरुणेन सुपूजितः, and D. वरुणेनापि पूजितः for the same. ४. D. and I. substitute वा for चा. ५. A. H. and I. read क्रियां.

कुर्वीतालम्भनं चापि[1] दक्षिणश्रवणस्य वा ॥ (७०)
यथाविभवतो ह्येतत् पूर्वाभावे ततः परम्।
न विद्यमाने पूर्वोक्ते उत्तरप्राप्तिरिष्यते' ॥ (७१)

(मा. पु. ३४. ६७-७१)

इति। दक्षिणकर्णप्रशंसा च 'प्रभासादीनि तीर्थानि'-इत्यादिना वक्ष्यते। अथ वा बौधायनोक्तं द्रष्टव्यम्-

'नीवीं विसृज्य परिधायाप उपस्पृशेत्।
आर्द्रं तृणं गोमयं[2] भूमिं वा समुपस्पृशेत्'।

(बौ. स्मृ. १. १०. १६-१७)

इति। षट्त्रिंशन्मते द्विराचमननिमित्तं दर्शितम्-

'होमे भोजनकाले च सन्ध्ययोरुभयोरपि।
आचान्तः पुनराचामेज्जप-होमार्चनादिषु'॥

इति। याज्ञवल्क्योऽपि-

'स्नात्वा पीत्वा क्षुते सुप्ते भुक्त्वा रथ्योपसर्पणे।
आचान्तः पुनराचामेद्वासो विपरिधाय च' ॥

(या. स्मृ. १. १९६)

इति। बौधायनोऽपि-

'भोजने हवने दाने उपहारे प्रतिग्रहे।
हविर्भक्षणकाले* च तत् द्विराचमनं स्मृतम्'॥

---

* हविर्भक्षणं पुरोडाशेडादिभक्षणम्।

---

१. A. B. C. D. and F. substitute वा for च. २. B. C. and F. read गोभूमिं गोमयं वा संस्पृशेत; while A. E. H. and I. भूमिं गोमये वा सस्पृशेत्.

इति । कूर्मपुराणेऽपि—

'प्रक्षाल्य पाणी पादौ च भुञ्जानो द्विरुपस्पृशेत् ।
शुचौ देशे समासीनो भुक्त्वा च द्विरुपस्पृशेत् ॥
( कू. पु. १. २. १२. ६४ )

ओष्ठौ विलोमकौ स्पृष्ट्वा वासो विपरिधाय च ।
रेतो-मूत्र-पुरीषाणामुत्सर्गेऽयुक्त[1]भाषणे ॥
ज़ृम्भित्वा[2]ऽध्ययनारम्भे कास-श्वासागमे तथा ।
चत्वरं वा श्मशानं वा समागम्य[3] द्विजोत्तमः ॥
सन्ध्ययोरुभयोस्तद्वदाचान्तोऽप्याचमेत् पुनः[4]' ॥
( कू. पु. १. २. १३. १–३ )

इति । अयुक्त[5]भाषणं निष्ठुरभाषणम् । आचमनापवादमाह बौधायनः—

'दन्तवद्दन्तलग्नेषु दन्तसक्तेषु धारणा ।
ग्रस्तेषु[6] तेषु नाचामेत्तेषां संस्थानवच्छुचिः[7]' ॥
( बौ.स्मृ. १. ४. १. २४ )

---

१. A. D. E. G. and H. read शुष्कभाषणे for ऽयुक्तभाषणे. २. D. reads शयित्वा; while A. and the text of Kûrma Purâṇa read ष्ठीवित्वा. ३. The text of the Kûrma Purâṇa reads समाक्रम्य. ४. A. and I. read ततः for पुनः. ५. A. D. E. G. and H. read शुष्क- for अयुक्त. ६. A. and I. read अस्थितेषु च; while D. reads स्रस्तेषु तेषु for ग्रस्तेषु तेषु. ७. The text of the Baudhâyana smrite reads the whole verse as follows:—

दन्तवद्दन्तसक्तेषु दन्तवत्तेषु धारणा ।
स्रस्तेषु तेषु नाचामेत्तेषां संस्राववच्छुचिः ॥

In this verse both the readings संस्थानवत् and संस्राववत are doubtful. They do not give any proper meaning. Dr. Bühler corrects संस्रावणा, but we think संस्था न चाऽशुचिः would be a more correct reading.

इति। दन्तलग्न-दन्तसक्तयोर्निर्हार्यानिर्हार्यरूपेण भेदः। अत एव देवलः—

'भोजने दन्तलग्नानि निर्हृत्याचमनं चरेत्।
दन्तलग्नमसंहार्यं लेपं मन्येत दन्तवत्॥
न तत्र बहुशः कुर्याद्यत्नमुद्धरणे पुनः।
भवेच्चाशौचमत्यर्थं तृणवेधाद्व्रणे कृते'॥

इति। ग्रस्तेषु[1] तेषु स्व[2]स्थानाच्च्युतेषु[3] च निगीर्णेष्वित्यर्थः। तत्र मनुः—

'दन्तवद्दन्तलग्नेषु[4] जिह्वास्पर्शकृते[5] न तु।
परिच्युतेषु च स्थानान्निगिरन्नेव तच्छुचिः'॥
(बौ. स्मृ. १. ९. १. २९)

इति। एतच्च रसानुपलब्धौ वेदितव्यम्। यथाऽऽह शङ्खः—
'दन्तवद्दन्तलग्नेषु रसवर्जनमन्यतो जिह्वाभिस्पर्शनात्'।
इति। फल-मूलादिषु विशेषमाह शातातपः—

---

१. A. and I. read अस्थितेषु च; while D. reads स्रस्तेषु for ग्रस्तेषु. २. A. and I. omit स्व-. ३. Except A. D. and I. all others read स्वस्थानेषु तेषु, omitting च्युतेषु. ४. This verse the author quotes from Manu; but we find this only in one manuscript with Govind Rajâ's commentary (5 between 141 and 142 verse), but neither Govindrâja nor any of the other six commentators on Manu has commented it, the reading of it being—

दन्तवद्दन्तलग्नेषु दन्तास्पर्शेषु चैव हि।
च्युतेष्वाश्रववद्विद्यान्निगरैनैव तच्छुचि॥

५. All others except A. and I. read स्पर्शे कृते for स्पर्शकृते.

'दन्तलग्ने फले मूले भुक्तस्नेहावशिष्टके ।
ताम्बूले चेक्षुदण्डे च नोच्छिष्टो भवति[१] द्विजः' ॥

इति । षट्त्रिंशन्मते[२] ऽपि.—

'ताम्बूले चैव सोमे* च भुक्तस्नेहावशिष्टके ।
दन्तलग्नस्य संस्पर्शे नोच्छिष्टस्तु भवेन्नरः[३] ॥
त्वग्भिः पत्रैर्मूल-पुष्पैस्[४]तृण-काष्ठमयैस्तथा ।
सुगन्धिभिस्तथा द्रव्यैर्नोच्छिष्टो भवति द्विजः' ॥

इति । एतच्च मुखसौरभ्याद्यर्थो[५]पभुक्तावशिष्टविषयम् । ताम्बूलसाहचर्यात् । 'दन्तलग्नस्य संस्पर्शे' इति अनिर्हार्यस्य[६] दन्तलग्नस्य जिह्वया संस्पर्शे इत्यर्थः । याज्ञवल्क्यो ऽपि—

'मुखजा विप्रुषो मेध्यास्तथा ऽऽचमनबिन्दवः ।
श्मश्रु चास्यगतं दन्तसक्तं त्यक्त्वा ततः शुचिः' ॥

(या. स्मृ. १. १९६)

इति । मुखनिःसृता बिन्दवो यद्यङ्गे पतन्ति[७] तदा नाचमनापादकाः[८] । तथा च गौतमः—

---

* सोमः सोमवल्लीरस इति यावत् ।

---

१. G. reads भवतु for भवति. २. E. and H. read षड्विंशतिमते ऽपि but we do not find any work of this name on Dharmasâstra. Probably this is a mistake of the writer. ३. A. adds इति after भवेन्नरः. ४. B. reads फलैः पुष्पैः for मूल-पुष्पैः. ५. All others except A. and I. read सौरभाद्यर्थो. ६. D. reads प्रतिहार्यस्य, B. C. and F. निर्हार्यस्य, E. G. and H. हार्यस्य for अनिर्हार्यस्य. ७. B. C. and F. read न पतन्ति, D. E. G. and H. निपतन्ति for पतन्ति. ८. A. reads आचमनापवादकाः, I. and D. आचमनापादकाः for नाचमनापादकाः.

'न[1] मुख्या विप्रुष उच्छिष्टं कुर्वन्ति ताश्चेदङ्गे[2] निपतन्ति' ।
(गौ. स्मृ. १. १६)

इति । आचमनबिन्दवस्त्वेङ्गस्पृष्टा[3] अपि मेध्याः । तथा च मनुः—

'स्पृशन्ति बिन्दवः पादौ य[4] आचामयतः परान् ।
भौमिकैस्ते[5] समा ज्ञेया न तैरप्रयतो[6] भवेत्' ॥
(म. स्मृ. ५. १४२; वि. स्मृ. २३. ५४)

इति । अत्र पादग्रहणं अवयवान्तरस्याप्युपलक्षणार्थम्[7] । तथा च यमः—

'पतन्त्याचामतो[8] यांश्च[9] शरीरे विप्रुषो नृणाम् ।
उच्छिष्टदोषो नास्त्यत्र भूमितुल्यास्तु ताः स्मृताः' ॥

इति । श्मश्रुविषये विशेषमाहाऽऽपस्तम्बः—

'न श्मश्रुभिरुच्छिष्टो भवत्यन्तरास्ये
सद्भिः यावन्न हस्तेनोपस्पृशति' ।
(आ. ध. सू. १. ५. १६. ११)

इति । आचमने वर्ज्यानाह भृगुः—

---

१. A. and I. omit न; for the same E. G. and H. substitute अ-. २. All others except A. and the text of Gautama read न चेदङ्गे for ताश्चेदङ्गे. ३. D. reads अङ्गास्पृष्टा, B. C. E. F. and H. अङ्गं स्पृष्ट्वा, and A. I. G. अङ्गं स्पृष्टा for अङ्गस्पृष्टा. ४ All others except A. I. and the text of Manu read यस्याचामयतः for य आचामयतः. ५. D. reads भूमिगैः; while the commentator Govindrâja reads भूमिकैः for भौमिकैः. ६ Except Govindrâja all other commentators and A. read राप्रयतो. ७. D. reads अवान्तरस्य for अवयवान्तरस्य. ८. A. B. C. E. F. and I. read आचमतो. ९. A. reads यस्य for यांश्च-.

‘ विना यज्ञोपवीतेन तथा ऽधौतेन वाससा ।
मुक्त्वा शिखां वा[1]प्याचामेत् कृतस्यैव पुनः क्रिया ॥
सो[2]ष्णीषो बद्धपर्यङ्कः प्रौढपादश्च* यानगः ।
दु[3]र्देशप्रगतश्चैव नाचामन् शुद्धिमाप्नुयात्’ ॥

इति । बौधायनो ऽपि—

‘ पादप्रक्षालनो[4]च्छेषेण नाचामेत् । यद्या[5]चामेत् भूमौ स्रावयित्वाऽऽचामेत् । ना[6]ङ्गुलीभिर्न स[7]बुद्बुदाभिर्न [8]सफेनाभिर्नो[9]ष्णाभिर्न क्षा[10]राभिर्न वि[11]वर्णाभिर्न दु[12]र्गन्धरसाभिर्न कलुषाभिः । न हसन् न ज[13]ल्पन् न ति[14]ष्ठन्

---

* प्रौढपादो यथा—

‘आसनारूढपादस्तु जानुनोर्जङ्घयोस्तथा ।
कृतावसक्थिको यस्तु प्रौढपादः स उच्यते’ ॥

इत्युक्तलक्षणः । जानुनोः जङ्घयोः कृतावसक्थिकः कृतपृष्ठजानुजङ्घाबन्ध इति भावः ।

---

१. B. C. and F. read वा नाचामेत्, H. and I. चाचामेत् for वाप्याचामेत्. २. Except D. all others read सोष्णीषी. ३. B. C. E. F. and H. read दुर्देशप्रपदश्चैव, G. दुर्देशः प्रपदश्चैव, and D. दुर्वेषश्च प्रदश्चैव for दुर्देशप्रगतश्चैव. ४. All others except G. and the text of Baudhâyana read पादप्रक्षालना-च्छेषेण. ५. Except D. and the text of Baudhâyana all others omit यद्याचामेत्. ६. Except A. and the text of Baudhâyana all others omit नाङ्गुलीभिः. ७. D. substitutes च for स-. ८. All others except A. I. and the text of Baudhâyana omit स-. ९. A. and I. read नोच्छिष्टाभिः. १०. B. C. and F. read न जाताभिः, E. न जात्याभिः, and G. न जातिभिः for न क्षाराभिः. ११. D. omits न विवर्णाभिः, and A. adds नोष्णाभिः before न कलुषाभिः. १२. This is omitted by all others except A. and the text of Baudhâyana. १३. B. C. and F. read जलस्थो for जल्पन्. १४. A. omits न जल्पन् न तिष्ठन्.

न विलोकयन् न प्रह्वो न प्रणतो न मुक्त[3]शिखो न प्रावृतकण्ठो न वेष्टितशिरा न बद्धकक्ष्यो न बहिर्जानुः न त्वरमाणो नाऽयज्ञोपवीती न प्रसारितपादः शब्दमकुर्वन् त्रिरपो हृदयङ्गमाः पिबेत्'।

(बौ. स्मृ. १. ९. १२.-१९)

इति। देवलोऽपि–

'सोपानत्को जलस्थो वा मुक्तकेशोऽपि वा नरः।
उष्णीषी वाऽपि नाचामेद्वस्त्रेणाबध्य वा शिरः[4]' ॥

इति। आपस्तम्बोऽपि–

न वर्ष[5]धाराभिराचामेत्'।

(आ. ध. सू. १. ६. १९. ४)

इति। यमोऽपि–

'[6]अपः कर-नख[7]स्पृष्टा य आचामति वै द्विजः।
सुरां पिबति स व्य[8]क्तं यमस्य वचनं यथा' ॥

इति। ब्रह्माण्डपुराणेऽपि–

'कण्ठं शिरो वा प्रावृत्य रथ्या-ऽऽपणगतोऽपि वा।
अकृत्वा पादयोः शौचमाचान्तोऽप्यशुचिर्भवेत्' ॥

इति। गौतमोऽपि–

---

१. B. C. E. F. and I. omit न विलोकयन्; while H. in its correction reads नाविलोकयन्. २. B. C. D. E. F. G. H. and I. add after this word नाबद्धकच्छो न बहिर्जानुर्न वेष्टितशिरा न बद्धकक्षो न पठमानो नायज्ञोपवीति न प्रसारितपादः for न प्रावृतकण्ठो न वेष्टिताशिरा न बद्धकक्ष्यो न बहिर्जानुः. न त्वरमाणो नायज्ञोपवीती न प्रसारितपादः ३. A. and D. read मुक्तकेशोऽथ वा. ४. D. reads-णाबद्धशीर्षकम्. ५. A. and I. read धाराभिराचामेत्. ६. This verse and the words ब्रह्माण्डपुराणेऽपि following it are omitted by D. ७. A. and I. read -नखैः. ८. All others except A. and I. read व्यक्तां.

' नाञ्जलिना पिबेन्न तिष्ठन् उ[१]द्धृतोदकेनाचामेत्' ।

( गौ. स्मृ. ९. ३ )

इति । न तिष्ठन्निति स्थलविषयम् । जले तु तिष्ठन्नप्या[२]चामेत् । तथा च विष्णुः—

' जान्वोरूर्ध्वं जले तिष्ठन्नाचान्तः शुचितामियात् ।
*अधस्ताच्छतकृत्वोऽपि समाचान्तो न शुद्ध्यति' ॥

इति । कौशिकोऽपि—

'अपवित्रकरः कश्चिद्ब्राह्मणोऽपि[३] उपस्पृशेत् ।
अकृतं तस्य तत् सर्वं भवत्याचमनं तथा ॥
वामहस्ते स्थिते दर्भे दक्षिणेनाचमेद्यदि ।
रक्तं तु तद्भवेत्तोयं पीत्वा चान्द्रायणं चरेत्' ॥

इति । मार्कण्डेयस्तु[४] दक्षिणहस्तस्य स[५]पवित्रतां विधत्ते—

'सपवित्रेण हस्तेन कुर्यादाचमनक्रियाम् ।
नोच्छिष्टं तत्पवित्रं तु भुक्तोच्छिष्टं तु वर्जयेत्' ॥

इति । गोभिलो[६] हस्तद्वयेऽपि[७] पवित्रं[८] प्रशंसति—

' उ[९]भयत्र स्थितैर्दर्भैः समाचामति[१०] यो द्विजः ।
सोमपानफलं तस्य भुक्त्वा यज्ञफलं भवेत्[११]' ॥

---

* अधस्तात् जान्वोरधः परिमाणे जले स्थित्वा शतकृत्वोऽप्याचमनं निष्फलमित्यर्थः ।

---

१. A. and I. add न and read नोद्धृतोदकेन. २. D. omits अपि. ३. D. and H. read ब्राह्मणो य उपस्पृशेत्. ४. H. substitutes अपि for तु. E. omits the portion from मार्कण्डेयस्तु.................गोभिलो. H. also has omitted this portion, but it appears as correction in its margin. ५. G. and H. omit स-. ६. A. and I. add तु. after गोभिल-. ७. All others except A. omit अपि. ८. I. reads सपवित्रत्वं. ९. A. reads हस्तद्वय-. १०. G. reads -चरति for -चामति. ११. G. reads लभेत्.

इति। स्नानानन्तरभाविन्याचमने दक्षो विशेषमाह–

'स्नात्वा ऽऽचामेत्तदा विप्रः पादौ कृत्वा जले स्थले।
उभयोरप्यसौ शुद्धस्ततः कार्यक्षमो* भवेत्॥

इति। हारीतः–

'आर्द्रवासा जले कुर्यात्तर्पणाचमनं जपम्।
शुष्कवासा स्थले कुर्यात्तर्पणाचमनं जपम्'॥

इति। स्थलविषये विशेषो दर्शितः स्मृत्यन्तरे–

'अलाभे ताम्रपात्रस्य करकं च कमण्डलुम्।
गृहीत्वा स्वयमाचामेत् नरो नाऽप्रयतो भवेत्॥
करकालाबुकाद्यैश्च ताम्र-पर्णपुटेन च।
स्वहस्ताचमनं कार्यं स्नेहलेपांश्च वर्जयेत्॥
करपात्रे च यत्तोयं यत्तोयं ताम्रभाजने।
सौवर्णे राजते चैव नैवाऽशुद्धं तु तत् स्मृतम्'॥

इति। एवमुक्तलक्षणस्याचमनस्य प्रशंसामाह व्याघ्रपात्–

'एवं यो ब्राह्मणो नित्यमुपस्पर्शनमाचरेत्।
ब्रह्मादिस्तम्बपर्यन्तं जगत् स परितर्पयेत्'॥

---

* कार्यक्षमः सन्ध्यावन्दनादीन्यन्यानि वा कार्याणि कर्तुं योग्यः भवति।

---

१. B. C. E. F. G. and H. omit कार्य- and read ततः क्षेमो भवेदिति. in the margin of H. appears correction. २. D. G. and F. omit this latter half of this verse. ३. All others except A. and I. read अलाबुं ताम्रपात्रं च for अलाभे ताम्रपात्रस्य. ४. All others except A. and I. read -चर्मपुटेन for पर्णपुटेन. ५. All others except A. D. and I. read करपत्रे for करपात्रे. ६. B. C. and F. substitute च for यो; while G. substitutes स for the same.

इति । वृद्धशङ्खो[1]ऽपि–

'त्रिःप्राश्नीयाद्यदम्भस्तु प्रीतास्तेनास्य देवताः ।
ब्रह्मा विष्णुश्च रुद्रश्च भवन्तीत्यनुशुश्रुम[2] ॥
गङ्गा च यमुना चैव प्रीयेते परिमार्जनात् ।
पादाभ्यां प्रीयते विष्णुर्ब्रह्मा शिरसि कीर्त्तितः ॥
नासत्य-दस्रौ प्रीयेते स्पृष्टे[3] नासापुटद्वये ।
स्पृष्टे लोचनयुग्मे तु प्रीयेते शशि-भास्करौ ॥
कर्णयुग्मे तथा स्पृष्टे प्रीयेते त्वनिला-ऽनलौ ।
स्कन्धयोः स्पर्शनादेव प्रीयन्ते सर्वदेवताः ॥
नाभिसंस्पर्शनान्नागाः प्रीयन्ते चास्य नित्यशः ।
संस्पृष्टे हृदये चास्य प्रीयन्ते सर्वदेवताः ॥
मूर्द्धसंस्पर्शनादस्य प्रीतस्तु पुरुषो भवेत्' ।
(शं. स्मृ. ९. ९–१३)

इति । आचमनाकरणे प्रत्यवायो दर्शितः पुराणसारे[4]–

'यः क्रियाः कुरुते मोहादनाचम्यैव[5] नास्तिकः* ।
भवन्ति हि वृथा तस्य क्रियाः सर्वा न संशयः' ॥

इति ।

॥ इति आचमनप्रकरणम् ॥

* अत्र नास्तिकशब्देन आचमनस्यावश्यकर्तव्यत्वमनादृत्य कर्म प्रवृत्त इति ज्ञेयम् । ननु नास्ति कश्चित् परलोक इति वदन् इत्युक्तलक्षणो नास्तिकः । तस्य प्राप्तेरभावात् निषेधस्य वैयर्थ्यमेव स्यात् ।

---

१. This line and the following lines the author quotes from Vṛidhaśankha. We have no such work as Vṛidhaśankha. The work we have bears the name Ṣankha wherein these eleven lines appear. It is difficult to say whether the work we have is the work of Vṛidhaśankha or Sankha. २. All except A. and D. read अनुशुश्रुमः. ३. D. reads स्पृशेत् for स्पृष्टे. ४. A. omits पुराणसारे. ५. D. substitutes च for एव.

अथ दन्तधावनविधिः तत्रात्रिः[1]—

'मुखे पर्युषिते नित्यं भवत्यप्रयतो नरः।
तदार्द्रकाष्ठं शुष्कं वा भक्षयेद्दन्तधावनम्[5]' ॥

(ल. अ. स्मृ. ४. ५–६)

इति। व्यासोऽपि—

'प्रक्षाल्य हस्तौ पादौ च मुखं च सुसमाहितः।
दक्षिणं बाहुमुद्धृत्य कृत्वा जान्वन्तरा[2] ततः॥
तिक्तं कषायं कटुकं दुर्गन्धं[3] कण्टकान्वितम्।
क्षीरिणो वृक्षगुल्मादीन्[4] वर्जयेद्दन्तधावने' ॥

इति। विष्णुः[6]—

'कण्टकिक्षीरवृक्षोत्थं द्वादशाङ्गुलसम्मितम्।
कनिष्ठाङ्गुलिवत् स्थूलं पर्वार्द्धकृतकूर्चकम्॥
दन्तधावनमुद्दिष्टं जिह्वोल्लेखनिका तथा।
सुसूक्ष्मं सूक्ष्मदन्तस्य समदन्तस्य मध्यमम्॥
स्थूलं विषमदन्तस्य त्रिविधं दन्तधावनम्।
द्वादशाङ्गुलकं[7] विप्रे काष्ठमाहुर्मनीषिणः॥
क्षत्र-विट्-शूद्रजातीनां नव-षट्-चतुरङ्गुलम्'।

इति। अङ्गिराः—

---

१. A. and I. read अ- for त-. २. D. reads जान्वन्तरात् for जान्वन्तरा ३. A. reads सगन्धं, and others सुगन्धं for दुर्गन्धं. ४. B. C. and F. read -गुल्माद्या for -गुल्मादीन्. ५. All others except A. read भक्षयेत्, but this reading is quite useless. ६. D. omits this word. ७. A. D. H. and I. read -ङ्गुलिकं; while D. reads -ङ्गुलिकं विप्रे दन्तकाष्ठं मनीषिणः.

'आम्र-पुन्नाग-बिल्वानामपामार्ग-शिरीषयोः ।
भक्षयेत् प्रातरुत्थाय वाग्यतो दन्तधावनम् ॥
वटाश्वत्थार्क-खदिर-करवीरांश्च वर्जयेत् ।
जात्यं च बिल्व-खदिरमूलं तु ककुभस्य च ॥
अरिमेदं प्रियङ्गुं च कण्टकिन्यस्तथैव च ।
प्रक्षाल्य भक्षयेत् पूर्वं प्रक्षाल्यैव च सन्त्यजेत् ॥
उदङ्मुखः प्राङ्मुखो वा कषायं तिक्तकं तथा ।
प्रातर्भूत्वा च यतवाग्भक्षयेद्दन्तधावनम्' ॥

इति । कात्यायनो दन्तधावनस्य काष्ठाभिमन्त्रणमन्त्रं दर्शयति—

'आयुर्बलं यशो वर्चः प्रजाः पशु-वसूनि च ।
ब्रह्म प्रज्ञां च मेधां च त्वं नो धेहि वनस्पते' ॥
(का. स्मृ. १. १०. ४.)

इति । वर्ज्यानाहोशनाः—

'नाङ्गुलीभिः स्वकान् दन्तान्नरैः प्रक्षालयेत्सदा ।
दक्षिणाभिमुखो नाद्यात् नीलं धव-कदम्बकम् ॥

१. All others except D. and I. add इति after दन्तधावनम्. This word is generally used at the end of a quotation. If the word was used by the author himself then the following verses would appear to have been quoted from some other work, the name whereof is not found mentioned. २. B. C. F. and G. read भक्षयेत् for वर्जयेत्; while H. adds इति after वर्जयेत्. ३. D. reads खदिरं for खदिर-. ४. All others except D. read भुक्त्वा for भूत्वा, but it is quite incorrect and does not give any sense. ५. The text of Kátyâyana reads पशून् for पशु-. ६. D. and G. read देहि for धेहि. ७. All others except A. omit some letters in this line. B. C. E. F. and I. read नाङ्गुलिभिर्दन्तान्न प्रक्षालयेत्, D. अङ्गुलिभिर्दन्तान्न प्रक्षालयेत्; while G. नाङ्गुलिभिर्दन्तान्न प्रक्षालयेत्. This is in prose but we do not find the text of Usanas in prose. ८. A. and I. read नद्यां for नाद्यात्. ९. B. C. and F. read नालं for नीलं.

तिन्दुकेङ्गुद-बन्धूक-मोचामरज-बल्वजम् ।
कार्पासं दन्तकाष्ठं च विष्णोरपि हरेच्छ्रियम् ॥
न भक्षयेत पालाशं कार्पासं शाकमेव च ।
एतानि भक्षयेद् यस्तु क्षीणपुण्यः स जायते' ॥

इति । वर्ज्यतिथ्यादीनाह विष्णुः—

'प्रतिपद्दर्शषष्ठीषु चतुर्दश्यष्टमीषु च ।
नवम्यां भानुवारे च दन्तकाष्ठं विवर्जयेत्' ॥

इति । यमोऽपि—

'चतुर्दश्यष्टमी दर्शः पूर्णिमा संक्रमो रवेः ।
एषु स्त्री-तैल-मांसानि दन्तकाष्ठं च वर्जयेत् ॥
श्राद्धे जन्मदिने चैव विवाहेऽजीर्णदोषतः ।
व्रते चैवोपवासे च वर्जयेद्दन्तधावनम्' ॥

इति । व्यासोऽपि—

'श्राद्धे यज्ञे च नियमान्नाद्यात् प्रोषितभर्तृका ।
श्राद्धे कर्तुर्निषेधोऽयं न तु भोक्तुः कदाचन ॥
अलाभे दन्तकाष्ठानां निषिद्धायां तथा तिथौ ।
अपां द्वादशगण्डूषैर्विदध्याद्दन्तधावनम्' ॥

इति । वृद्धयाज्ञवल्क्यः—

---

१. B. C. E. F. G. and H. read मोचाकरजवल्लिजं for मोचामरजबल्वजं; while D. reads मोचामरजवाल्लिजं. २. D. reads शाकमेव चं for शाकमेव च. It seems more correct. ३. B. C. F. and H. substitute च्च for -षु. ४. All others except A. and I. read दर्श-. ५. The next three lines after this word and the word इति after these lines are omitted by G. ६. D. reads काष्ठानि. ७. A. reads न तत् for नाद्यात्. ८. A. and D. read श्राद्धकर्तुर्निषेधो; while G. reads श्राद्धकर्तृनिषेधो for श्राद्धे कर्तुर्निषेधो. ९. A. omits वृद्ध- and reads simply याज्ञवल्क्यः, but we do not find this verse in yâjnyavalkyasmṛiti.

'इष्टका-लोष्ट-पाषाणैरितराङ्गुलिभिस्तथा ।
मुक्त्वा चानामिका-ऽङ्गुष्ठौ वर्जयेद्[1]दन्तधावनम्' ॥

इति ।

॥ इति दन्तधावनप्रकरणम् ॥

अथ स्नान-जप[2]-होमादिर्दर्भपाणिना कर्त्तव्यत्वादादौ दर्भविधिरुच्यते । तत्र हारीतः—

'अच्छिन्नाग्रान् सपत्रांश्च[3] समूलान् कोमलान् शुभान् ।
पितृ-देव-जपार्थं[4] तु समादध्यात् कुशान् द्विजः ॥
कुशहस्तेन यज्जप्तं दानं[5] चैव कुशैः सह ।
कुशहस्तस्तु यो भुङ्क्ते तस्य संख्या न विद्यते' ॥

इति । पुराणे[6] ऽपि—

'कुशपूतं भवेत् स्नानं[7] कुशेनोपस्पृशेत् द्विजः ।
कुशेन चोर्द्धृतं[8] तोयं सोमपानेन सम्मितम्' ॥

इति । गोभिलो ऽपि—

'कुशमूले स्थितो[9] ब्रह्मा कुशमध्ये जनार्दनः ।
कुशाग्रे शङ्करं विद्यात् त्रयो देवा व्यवस्थिताः' ॥

इति । कौशिकः—

'शुचौ देशे शुचिर्भूत्वा स्थित्वा पूर्वोत्तरामुखः ॥
ओँकारेणैव मन्त्रेण कुशाः स्पृश्या[10] द्विजोत्तमैः' ॥

---

१. B. C. and F. read न कुर्यात् for वर्जयेत्. २. A. omits -जप-. ३. A. reads पवित्रांश्च for सपत्रांश्च. ४. A. and I. read पितृ-देवर्षिपूजार्थं for पितृ-देव-जपार्थं तु; while D. substitutes च in the place of तु. ५. A. and I read पानं for दानं. ६. A. and I. read पुराणान्तरे ऽपि, but it seems incorrect. ७. D. substitutes खातं in the place of स्नानं. ८. All others except A. D. and I. read चाहृतं for चोद्धृतं. ९. D. reads स्थितः. १० D. reads कुशान् स्पृष्ट्वा for कुशाः स्पृश्याः.

इति। उत्पाटनमन्त्रस्तु—

'विरिञ्चिना सहोत्पन्न परमेष्ठिनिसर्गजे[1]।
नुद पापानि सर्वाणि दर्भ स्वस्तिकरो मम'॥

इति। वर्णभेदेन विनियोगभेदमाह कात्यायनः—

'हरिता यज्ञिया दर्भाः पीतकाः पाक[2]यज्ञियाः।
समूलाः पितृदैवत्याः कल्माषा वैश्वदेविकाः'॥
(का. स्मृ. १. २. ३)

इति[3]। कुशाभावे शङ्खः—

'कुशाभावे द्वि[4]ज[5]श्रेष्ठैः काशैः कुर्वीत य[6]त्नतः।
तर्पणादीनि कर्माणि काशाः कुशसमाः स्मृताः'॥

इति। यमोऽपि—

'कुशाः काशा यवा दूर्वास्तथा व्रीहय एव च।
ब[7]ल्वजाः पुण्डरीकाश्च सप्तधा बर्हि उच्यते'॥

इति। वर्ज्यानाह हारीतः—

'चितौ* दर्भाः पथि दर्भा ये दर्भा यज्ञभूमिषु।
स्तरणासन-पिण्डेषु षट् कुशान् परिवर्जयेत्॥
[9]ब्रह्मयज्ञेषु ये दर्भा ये दर्भाः पितृ[10]तर्पणे।
हता मूत्र-पुरीषाभ्यां तेषां त्यागो विधीयते॥

---

* अस्मिन्श्लोके पूर्वार्द्धे 'भवाः' इत्यध्याहृत्यान्वयः कार्यः। उत्तरार्धे भवानिति योजनीयम्।

---

१. A. reads निसर्गतः, and I. निसर्गजः. २. E. G. and H. read पाकयज्ञिकाः for पाकयज्ञियाः. ३. D. omits इति. ४. D. reads द्विजः. ५. All others except A. and I. read -श्रेष्ठ. ६. All others except A. and I. read तत्त्वतः for यत्नतः. ७. D. reads बिल्वकाः for बल्वजाः. ८. A. reads गर्त्तेषु. ९. A. reads ब्रह्मयज्ञे च. १०. D. reads तर्पिताः.

अपूता गर्हिता[1] दर्भा ये संच्छिन्ना नखैस्तथा[2] ।
क्वथितानग्निदग्धांश्च कुशान् यत्नेन वर्जयेत्' ॥

इति । कुशोत्पाटने कालनियममाह[3] हारीतः—

'मासे नभस्यमावास्या तस्यां दर्भोच्चयो[4] मतः ।
अयातयामास्ते दर्भा नियोज्याः स्युः पुनः पुनः' ॥

इति । शङ्खो[5]ऽपि—

'दर्भाः कृष्णाजिनं मन्त्रा ब्राह्मणाश्च विशेषतः ।
अयातयामान्येतानि नियोज्यानि पुनः पुनः' ॥

इति । पवित्रधारणे फलमाह मार्कण्डेयः—

'कुशपाणिः सदा तिष्ठेत् ब्राह्मणो दम्भवर्जितः[6] ।
स नित्यं हन्ति पापानि तूलराशिमिवानलः' ॥

इति । शातातपः—

'जपे होमे च दाने च स्वाध्याये पितृतर्पणे ।
अशून्यं[7] तु करं कुर्यात् सुवर्णरजतैः कुशैः' ॥

इति । पवित्रप्रकारमाह कात्यायनः—

१. H. in its margin reads गर्भिताः. २. All others except A. and I. read नखैः स्मृताः. ३. B, C. and F. read कालनियमेनायातयामतामाह for कालनियममाह. ४, A. reads दर्भोच्छ्रयो, and I. दर्भचयो for दर्भोच्चयो. ५. A. and I. omit अपि; while E. omits the words शंखोऽपि and the verse following it. H. also omits, but it appears in its marginal correction excepting the word अपि after शङ्खः, and in D. it appears after the next quotation of Mârkandeya. ६. G. reads दर्भवर्जितः for दम्भवर्जितः, but it does not give any good sense. ७. A. and D. read अन्यूनं for अशून्यं.

'अनन्तर्गर्भिणं साग्रं कौशं[1] द्विदलमेव च ।
प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित्' ॥

( का. स्मृ. १. २. १० )

इति[2] । मार्कण्डेयो ऽपि[3]—

'चतुर्भिर्दर्भपिञ्जूलैर्ब्राह्मणस्य पवित्रकम् ।
एकैकन्यूनमुद्दिष्टं वर्णे वर्णे यथाक्रमम्[4] ॥

त्रिभिर्दर्भैः शान्तिकर्म पञ्चभिः पौष्टिकं तथा ।
चतुर्भिश्चाभिचारांश्च[5]* कुर्वन् कुर्यात् पवित्रकम्' ॥

इति । अत्रिः—

'ब्रह्मयज्ञे जपे चैव ब्रह्मग्रन्थिर्विधीयते ।
भोजने वर्त्तुलः[6] प्रोक्त एवं धर्मो न[7] हीयते' ॥

इति ।

॥ इति दर्भविधि[8]प्रकरणम् ॥

* अभिचारः शत्रुहननाद्यर्थमनुष्ठीयमानं कर्म । तच्च श्येनयागादि वैदिकं भैरवमन्त्रादितान्त्रिकमिति द्विविधम् ।

---

१ A. and I. read कुशं for कौशं. २. All others except A. B. C. F. and I. omit इति. ३. I. omits अपि. ४. In the margin of H. after this verse appears the following portion:—

स्मृत्यर्थसारे-'सर्वेषां वा भवेद्द्वाभ्यां पवित्रं ग्रंथितं नवम्' ।

५. A. reads अभिचाराणि for अभिचारांश्च. ६. A. and I. read वर्तुल प्रोक्तं. ७. A. reads विधीयते for न हीयते. ८. A. and I. omit -विधि-, and read दर्भप्रकरणम्.

तदेवं 'सन्ध्या स्नानम्' इत्यस्मिन् वचने स्नानशब्दोपलक्षितानि ब्राह्ममुहूर्तोत्थानादीनि कुशविध्यन्तानि कर्माणि निरूपितानि। अथेदानीं मूलवचनोक्तं स्नानं प्रपञ्च्यते[१]। तत्र कूर्मपुराणम्—

'प्रक्षाल्य दन्तकाष्ठं वै भक्षयित्वा यथाविधि।
आचम्य प्रयतो नित्यं प्रातःस्नानं समाचरेत्'॥
(कू. पु. १. २. १८. १८)

इति। व्यासः—

'उषःकाले तु सम्प्राप्ते कृत्वा चावश्यकं बुधः॥
स्नायान्नदीषु शुद्धासु शौचं कृत्वा यथाविधि'।
(व्या. स्मृ. १. २-३)

इति। दक्षो ऽपि—

'अस्नात्वा नाचरेत् कर्म जप-होमादि किञ्चन[३]।
लाला-स्वेदसमाकीर्णः शयनादुत्थितः पुमान्॥ (९)
अत्यन्तमलिनः कायो नवच्छिद्रसमन्वितः।
स्रवत्येव दिवा-रात्रौ[४] प्रातःस्नानं विशोधनम्॥ (७)
प्रातःस्नानं प्रशंसन्ति दृष्टादृष्टफलं हि तत्।
सर्वमर्हति शुद्धात्मा प्रातःस्नायी जपादिकम्'॥(१२)
(द. स्मृ. २. ७–१२)

व्यासः-

१. A. reads प्रक्रम्यते. २. This is omitted by A. ३. A. substitutes य for न. ४. A. and D. read दिवा-रात्रं प्रातःस्नानेन शुध्यति. ५. G. omits इति.

'ऋषीणामृषिता नित्यं प्रातःस्नानान्न संशयः।
अलक्ष्मीः कालकर्णी च दुःस्वप्नं दुर्विचिन्तितम्[1] ॥
प्रातःस्नानेन पापानि पूयन्ते नात्र संशयः'।
(व्या. स्मृ. १. ४-६)

इति। दक्षो ऽपि—

'अज्ञानाद्यदि वा मोहाद्रात्रौ दुश्चरितं कृतम्।
प्रातःस्नानेन तत् सर्वं शोधयन्ति द्विजातयः'॥

इति। स्नानप्रकारः चतुर्विंशतिमते ऽभिहितः—

'स्नानमब्दैवतैर्मन्त्रैर्वारुणैश्च* मृदा सह।
कुर्याद्व्याहृतिभिर्वा[2]ऽथ 'यत् किञ्चेद'मृचा ऽपि वा' ॥

इति। कात्यायनो ऽपि—

'यथाऽहनि तथा प्रातः नित्यं स्नायादतन्द्रितः[3]।
दन्तान् प्रक्षाल्य नद्यादौ गृहे चेत् तदमन्त्रवत्' ॥
(का. स्मृ. १. १०. १.)

इति। अमन्त्रवदिति मन्त्रसंक्षेपोऽभिप्रेतः[4]। यतः स एवाह—

* अब्दैवता मन्त्राः—'आपोहिष्ठा मयोभुवः०, यो वः शिवतमो रसः० तस्मा अरंगमामवः०', एते त्रयः। ते च—ऋक्संहितायां (१०.१.९) वाजसनेयिसंहितायां (११.१) सामसंहितायां उत्तरार्चिके (९.१०) द्रष्टव्याः। वारुणमन्त्राश्च—'तत्त्वायामि ब्रह्मणा वन्दमानः' (ऋ. सं. १.६.१.) इति पञ्च 'त्वन्नोऽग्ने वरुणस्य' (ऋ. सं. १.१.४-५.) इति द्वौ 'इमं मे वरुण श्रुधि०' (ऋ. सं. १.६.१) इत्येकः एतेऽष्टौ ऋक्संहितायां प्रसिद्धाः। 'यत्किञ्चेदं०' (ऋ. सं. ७.५.१९) एषो ऽपि प्रसिद्ध एव।

१. I. reads दुर्विचिन्तनम्. २. A. and D. substitute च for वा. ३. I. reads अनातुरः for अतन्द्रितः. ४. D. reads ऽभिहितः for ऽभिप्रेतः.

'अल्पत्वाद्धोमकालस्य बहुत्वात् स्नानकर्मणः ।
प्रातः संक्षेपतः स्नानं होमलोपो विगर्हितः' ॥
(का. स्मृ. २. १२. ६)

इति । कालनियममाह जाबालिः—

'सततं प्रातरुत्थाय दन्तधावनपूर्वकम् ।
आचरेदुषसि स्नानं तर्पयेद्देव-मानुषान्' ॥[1]

इति । चतुर्विंशतिमते अपि[2]—

'उषस्युषसि यत् स्नानं सन्ध्यायामुदिते ऽपि वा ।
प्राजापत्येन तत्तुल्यं सर्वपापप्रणाशनम्' ॥

इति । उदिते इत्युदयाभिमुखे इत्यर्थः । उदयस्याप्युपरि स्नानं चेत्[3] सन्ध्याऽप्युत्कृष्येत । स्नानपूर्वकत्वात् सन्ध्यायाः । सन्ध्योत्कर्षश्च योगि[4]याज्ञवल्क्येन निषिद्धः—

'सन्धौ सन्ध्यामुपासीत नास्तगे नोद्गते[5] रवौ' ।

इति । यथोक्तकाले स्नानं कुर्वन्[6]नघमर्षणं* कुर्यात् । तथा[7]-ह शौनकः—

'स्नात्वा ऽऽचान्तो वारिमध्ये त्रिः पठेद[8]घमर्षणम् ।

इति । ब्रह्माण्डपुराणे स्नानाङ्गतर्पणं विहितम्—

*अघमर्षणं तु—'ऋतं च सत्यं'० (ऋ. सं. १०. १९०. १२; तै. आ. १०.१.) इति तृचेन सूक्तेन त्रिरावृत्तेन कर्तव्यम् । कात्यायनानां तु 'द्रुपदा दिवे०' इति मन्त्रेणाघमर्षणं विहितम् ।

१. Srautachandrikâ reads प्रातर्न तनुयात्स्नानं दैव-. २. D. omits अपि. ३. G. reads चेत स्नानं for स्नानं चेत. ४. A. omits this word and reads simply याज्ञवल्क्येन; while all others except I. read योग- for योगि-. ५. D. reads चोद्गगे; while all others except A. and I. read चोद्गते for नोद्गते. ६. A. and I. read यथोक्तं स्नानं कुर्वन् for यथोक्तकाले स्नानं कुर्वन्. ७. A. and I. read तदाह for तथाह. ८. D reads पिबेत् for पठेत्.

'नित्यं नैमित्तिकं* काम्यं त्रिविधं स्नानमुच्यते।
तर्पणं तु भवेत्तस्य अङ्गत्वेन प्रकीर्तितम्' ॥

इति। यमो ऽपि–

'द्वौ हस्तौ युग्मतः कृत्वा पूरयेदुदकाञ्जलिम्।
गोशृङ्गमात्रमुद्धृत्य जलमध्ये जलं क्षिपेत्' ॥

इति। कार्ष्णाजिनिः–

'नाभिमात्रे जले स्थित्वा चिन्तयन्नूर्ध्वमानसः'।

इति। तर्पयेदिति शेषः। नृसिंहपुराणे ऽपि–

'स्वेन तीर्थेन† देवादीनद्भिः सन्तर्पयेत्ततः।
देवान् देवगणांश्चापि मुनीन्मुनिगणानपि ॥
पितॄन् पितृगणांश्चापि नित्यं सन्तर्पयेत्ततः'।

(नृ. पु. ५८. ८८-८९)

इति। चतुर्विंशतिमते–

* नित्यं प्रत्यहमवश्यं कर्तव्यं सन्ध्यावन्दनादि नित्यकर्माङ्गत्वेन विहितम्। काम्यं घर्मादिपरिहारार्थं मलापकर्षणार्थं वा कृतम्। नैमित्तिकं ग्रहण-सङ्क्रान्त्यादिनिमित्तेन कृतम्।

†अत्र तृतीयार्धं वर्जयित्वा 'पितॄन् पितृगणान् देवान्' इत्यादि केचन पठन्ति तत्प्रामादिकमिव प्रतिभाति। पूर्वं सामान्यतः देव-पितृ-ऋषींस्तर्पयेदित्युक्त्वा पुनः विशेषेण तर्पणमभिहितमिति ज्ञेयम्।

---

१. A. reads व्यवस्थितम्. २. D. reads पूजयेत् for पूरयेत्, but it seems incorrect. ३. D. omits this. ४. D. reads कार्ष्णाजिनः. ५. D. reads चिन्तयेत् for चिन्तयन्. ६. A. B. C. F. and I. omit अपि. ७. I. reads पितॄन् पितृगणान् देवानद्भिः while all others except A. and the text of Nrisinha Purâṇa read पितॄन् ऋषिगणान्. देवानद्भिः. ८. B. C. and F. read सर्वान् for देवान्. ९. This line is omitted by A. and I.

'स्नानादनन्तरं तावत् तर्पयेत् *पितृदेवताः ।
उत्तीर्य पीडयेद्वस्त्रं सन्ध्याकर्म ततः परम्' ॥

इति । भरद्वाजोऽपि—

'वस्त्रोदकमपेक्षन्ते ये मृता दा[१]सकर्मिणः ।
तस्मात् सर्वप्रयत्नेन जलं भूमौ निपातयेत्' ॥

इति । वस्त्रनिष्पीडनमन्त्रस्तु—

'ये के चास्मत्कुले जाता अपुत्रा गोत्रिणो मृताः ।
ते गृह्णन्तु मया दत्तं वस्त्रनिष्पीडनोदकम्' ॥

इति ।

## ॥ इति स्नानप्रकरणम् ॥

स्नानानन्तरं वासः परिदध्यात् । तथा च [२]मत्स्यपुराणे—

'एवं स्नात्वा ततः पश्चादाचम्य च वि[३]धानतः ।
उत्थाय वाससी [४]शुक्ले शुद्धे तु परिधाय च[५]' ॥

(म. पु. ११२. १३)

इति । कर्म कुर्यादिति शेषः । [६]योगियाज्ञवल्क्यः—

* इदं च स्नानाङ्गतर्पणमिति ज्ञेयम् । तच्च 'भूर्देवांस्तर्पयामि' इत्यादिरूपं व्याहृतिभिरेव कर्तव्यमित्युक्तमन्यत्र ।

१. B. C. and F. read दारकर्मिणः, and D. दासकर्मणः for दासकर्मिणः. २. A. reads वामनपुराणे; while all others except I. read मत्स्यपुराणम् for मत्स्यपुराणे. ३. A. and D. read यथाविधि for विधानतः. ४. D. reads मुक्ते for शुक्ले. ५. All others except A. and I. substitute वा for च. ६. All others except A. and I. substitute योग- for योगि-.

'स्नात्वैवं वाससी धौते[1] अच्छिन्ने परिधाय च ।
प्रक्षाल्योरू मृदाऽद्भिश्च[2] हस्तौ प्रक्षालयेत्ततः[3]' ॥

इति । अत्र विशेषमाह व्यासः—

'नोत्तरीयमधः कुर्यान्नोपर्यधस्थम्[4]म्बरम् ।
नान्तर्वासो विना जातु निवसेद्[5]वसनं बुधः' ॥

इति । अत्र मार्कण्डेयपुराणे विशेषोऽभिहितः—

'अवमृज्यान्न[6] च स्नातो गात्राण्यम्बर-पाणिभिः* ।
न च निर्धुनुयात् केशान् वासश्चैव न निर्धुनेत्[7]' ॥
(मा. पु. ३४. २५)

इति । अत्र[8] कारणमाह गोभिलः[9]—

'पिबन्ति शिरसो देवाः पिबन्ति पितरो मुखात् ।
मध्यतः सर्वगन्धर्वा अधस्तात् सर्वजन्तवः ॥
तस्मात् स्नातो न प्रमृज्यात्[10] स्नानशाट्या न पाणिना' ।

इति । व्यासोऽपि—

'तिस्रः कोट्यो ऽर्द्धकोटी च[11] यावन्त्यङ्गरुहाणि वै ।
वसन्ति[12] सर्वतीर्थानि तस्मान्न परिमार्जयेत्' ॥

इति । जाबालिः—

* इदं नैमित्तिकस्नाने क्रियाङ्गस्नाने वा भवितुमर्हति । न तु मलापकर्षणादौ । अवमार्जनं विना मलापकर्षणस्यैवासम्भवात् ।

१. A. reads शुक्ले. २. A. and I. read मृदा चाद्भिः. ३. A. substitutes इति in the place of ततः. ४. All others except A. D. and I. read अधस्त्य- for अधस्थ-. ५. D. reads विवसेत्. ६. A. reads नरः for न च. ७. I. reads पीडयेत् for निर्धुनेत्. ८. D. reads तत्र for अत्र. ९. A. reads देवलः for गोभिलः. १०. A. and I. read नावमृज्यात्; while D. reads न मृज्याच्चु for न प्रमृज्यात्. ११. D. reads कोटिश्च for कोटी च. १२. A. and I. read स्रवन्ति for वसन्ति, but it does not give any good sense here.

'स्नानं कृत्वाऽऽर्द्रवासास्तु विण्मूत्रं कुरुते यदि ।
प्राणायामत्रयं कृत्वा पुनः स्नानेन शुद्ध्यति' ॥

इति । वस्त्रविषये विशेषमाह भृगुः—

'ब्राह्मणस्य सितं वस्त्रं नृपते रक्तमुल्बणम्* ।
पीतं वैश्यस्य शूद्रस्य नीलं मलवदिष्यते' ॥

इति । प्रजापतिरपि—

'क्षौमं वासः प्रशंसन्ति तर्पणे सदशं तथा ।
काषायं धातुरक्तं वा नोल्बणं तत्र कर्हिचित्' ॥

इति । देवलो ऽपि—

'स्वयं धौतेन कर्त्तव्या क्रिया धर्म्या विपश्चिता ।
न तु नेजकधौतेन† नाहतेन न कुत्रचित्' ॥

इति । नाहतेनेति समस्तं पदम् । अहतलक्षणमाह पुलस्त्यः—

'ईषद्धौतं नवं श्वेतं सदशं यन्न धारितम् ।
अहतं तद्विजानीयात् सर्वकर्मसु पावनम्' ॥

इति । बौधायनो ऽपि—

* उल्बणं विशेषेण रक्तमित्यर्थः । रक्तस्यैव विशेषणमिदम् ।

† नेजको वस्त्रनिर्णेजनकर्ता रजक इत्यर्थः । केरलादयस्तु रजकधौतमेव वस्त्रं शुद्धं मन्यन्ते ।

१. A. reads रक्तमम्बरं. It seems more correct. २. D. reads विशदं, but this is quite incorrect. ३. B. C. and F. read कषायं. ४. A. reads धातुवस्त्रं च. ५. I. reads सोल्बणं for नोल्बणं. ६. This is omitted by A. ७. I. reads सेवक- for नेजक-, and A. B. C. E. F. G. and H. read रंजक- for the same. This is grammatically correct but incorrect as regards prosody. ८. A. G. and H. substitute च for न. ९. I. reads आहत- for अहत.- १०. I. reads सदृशं for सदशं. ११. E. reads धावितं for धारितम्. १२. Except A. D. G. and I. all others read बोधायनः for बौधायनोऽपि.

'कर्त्तव्यमुत्तरं वासः पञ्चस्वेतेषु कर्मसु ।
स्वाध्यायोत्सर्ग[1]-दानेषु भुक्त्याचमनयोस्तथा[2]' ॥

इति । एतत् सर्वकर्मोपलक्षणार्थम्[3] । अनुत्तरीयस्य कर्ममात्रनिषेधात् । तथा च भृगुणोक्तम्—

'विकच्छोऽनुत्तरीयश्च नग्नश्चाऽवस्त्र एव च[4] ।
श्रौतं स्मार्त्तं तथा कर्म न नग्नश्चिन्तयेदपि[5] ॥
नग्नो मलिनवस्त्रः स्यान्नग्नश्चार्द्रपटः स्मृतः ।
नग्नस्तु दग्धवस्त्रः स्यान्नग्नः स्यूतपटस्तथा' ॥

इति । विष्णुपुराणेऽपि—

'होम-देवार्चनाद्यासु क्रियासु पठने तथा ।
नैकवस्त्रः प्रवर्त्तेत द्विजो नाऽऽचमने जपे[6]' ॥

(वि. पु. ३. १२. २०)

इति[7] । गोभिलोऽपि—

'एकवस्त्रो न भुञ्जीत न कुर्याद्देवताऽर्चनम्' ।

इति ।अत्रानुकल्पमाह योगियाज्ञवल्क्यः—

'अलाभे धौतवस्त्रस्य[9] शाण-क्षौमाविकानि च ।
कुतुपं योगपट्टं[8] च विवासास्तु[10] न वै भवेत्' ॥

---

१. I. only reads -होम- for -उत्सर्ग-. २. A. and I. read भक्ताचमनयोः; while D. and G. read भुक्त्वाचमनयोः, but the latter seems incorrect. ३. D. reads -लक्षणार्थे. ४. D. has वा for च. ५. A. reads -चिन्तयानिति. ६. The text of Vishṇu Purâṇa reads द्विजवाचनके for द्विजो नाऽऽचमने. The commentator Śridhar uses this word in the sense of Puṇyâhavâchana. ७. All others except A. and I. omit this word. ८. All others except A. and I. read योग-. ९. D. reads -वस्त्राणां. १०. B. C. F. G. and H. read विवास- for विवासा-.

इति । कुतपं[1]* योगपट्टं च धारयेदिति शेषः ।

॥ इति वस्त्रधारणप्रकरणम् ॥

अथ ऊर्ध्वपुण्ड्रविधिः[2] । स च ब्रह्माण्डपुराणे[3] दर्शितः—

'पर्वताग्रे नदीतीरे मम[4] क्षेत्रे विशेषतः ।
सिन्धुतीरे च वल्मीके तुलसीमूलमाश्रिते[5] ॥
मृद एतास्तु सम्पाद्याः[6] वर्जयेत्त्वन्यमृत्तिकाम्[7] ।
श्यामं शान्तिकरं प्रोक्तं रक्तं वश्यकरं भवेत् ॥
श्रीकरं पीतमित्याहुर्वैष्णवं श्वेतमुच्यते ।
अङ्गुष्ठः पुष्टिदः प्रोक्तो मध्यमाऽऽयुष्करी भवेत् ॥
अनामिकाऽन्नदा नित्यं मुक्तिदा च प्रदेशिनी ।
एतैरङ्गुलिभेदैस्तु कारयेन्न नखं[8] स्पृशेत् ॥
वर्त्तिदीपाकृतिं वाऽपि वेणुपत्राकृतिं[9] तथा ।
पद्मस्य मुकुलाकारं तथैव कुमुदस्य च ॥

---

* कुतपः छागस्य ऊर्णया घटितः कम्बलविशेषः । तथा च मेदिनी— कुतपोऽस्त्रियां दौहित्रे वाद्ये छागलकम्बले' । ( २१. १९ ) इति । स च 'नेपालकम्बल' इति प्रसिद्धः । योगपट्टस्तु प्रसिद्ध एव ।

---

१. All manuscripts read कुतुपं instead of कुतपं, which is the proper word here. कुतुप is a different word meaning a leather vessel in which oil or ghee is kept. It has not the sense of कुतप meaning a blanket. २. A. reads त्रिपुण्ड्रविधिः. ३. All others except A. and I. read ब्रह्मपुराणे. We cannot positively say whether this quotation is from Bramhanda Purâṇa or from Bruhma Purâṇa. ४. D. reads समक्षेत्रे; while I. reads धर्मक्षेत्रे. ५. I. reads तुलसीमूलमृत्तिकाम्, but the next line does not keep the necessity of this reading. ६. A. and I. read संग्राह्याः for सम्पाद्याः; while D. reads सु for तु. ७. Except A. H. and I. all others read -मृत्तिकाः. ८. A. and I. read नखैः for नखं. ९. D. reads पात्राकृतिं.

मत्स्य-कूर्माकृतिं वाऽपि शङ्खाकारमतःपरम् ।
दशाङ्गुलप्रमाणं तु उत्तमोत्तममुच्यते ॥
नवाङ्गुलं मध्यमं स्यादष्टाङ्गुलमतः परम् ।
सप्त-षट्-पञ्चभिः पुण्ड्रं मध्यमं त्रिविधं स्मृतम् ॥
चतुस्त्रिद्व्यङ्गुलैः पुण्ड्रं कनिष्ठं त्रिविधं भवेत् ।
ललाटे केशवं विद्यान्नारायणमथोदरे ॥
माधवं हृदि विन्यस्य गोविन्दं स्कन्धमूलके[१] ।
उदरे दक्षिणे पार्श्वे विष्णुरित्यभिधीयते ॥
तत्पार्श्वे बाहुमध्ये तु मधुसूदनमुत्स्मरेत्[२] ।
त्रिविक्रमं कण्ठदेशे वामकुक्षौ[३] तु वामनम् ॥
श्रीधरं बाहुके वामे हृषीकेशं तु कर्णके ।
पृष्ठे[४] च पद्मनाभं तु ककुद्दामोदरं स्मरेत् ॥
द्वादशैतानि नामानि वासुदेवेति मूर्द्धनि ।
पूजाकाले च होमे च सायं[५] प्रातः समाहितः ॥
नामान्युच्चार्य विधिना धारयेदूर्ध्वपुण्ड्रकम्' ।

इति । सत्यव्रतोऽपि—

१. All others except A. and I. read कण्ठकूपके for स्कन्धमूलके. २. Except A. all others read मधुसूदनमनुस्मरेत्; while I. omits तु. ३. Except A. and I. all others read वामे कुक्षौ for वामकुक्षौ. ४. I. reads this line first, instead of the former line. ५. B. C. D. E. F. and H. read सायंकाले, and G. सायंकालः for सायं प्रातः.

'ऊ[1]र्ध्वपुण्ड्रं[2] मृदा शुभ्रं ललाटे यस्य दृश्यते ।
स चाण्डालो[3] ऽपि शुद्धात्मा पूज्य एव न संशयः' ॥

इति ।

॥ इति ऊर्ध्वपुण्ड्रप्र[4]करणम् ॥

अ[5]थ प्रातःस्नानप्रसङ्गेन स्नानान्तराण्युच्यन्ते । तत्र शङ्खः—

'स्नानं तु द्विविधं प्रोक्तं गौणमुख्यप्रभेदतः ।
तयोस्तु वारुणं मुख्यं तत्पुनः षड्विधं भवेत्' ॥

इ[6]ति । तत्र मुख्यस्नानस्य षट्प्रकारता आग्नेयपुराणे दर्शिता—

'नित्यं नैमित्तिकं काम्यं क्रियाऽङ्गं मलकर्षणम् ।
क्रियास्नानं तथा षष्ठं षोढा स्नानं प्रकीर्त्तितम्' ॥
(अ. पु. १५५. ३–४)

इति । ए[7]तेषां लक्षणमाह शङ्खः—

'अस्नातश्च पुमान्नार्हो जपाग्निहवनादिषु ।
प्रातःस्नानं तदर्थं तु नित्यस्नानं प्रकीर्त्तितम् ॥
चण्डाल-शव-यूपांश्च* स्पृष्ट्वा ऽस्नातां रजस्वलाम् ।
स्नानार्हस्तु य[8]दा स्नाति स्नानं नैमित्तिकं हि तत् ॥

---

*यूपस्पर्शनिषेधस्तु कर्मसमाप्त्यनन्तरं ऋत्विजेतरेषामिति बोध्यम् । गोभिलेन तत्र होमादिकमप्युक्तम् (गो. गृ. सू. ३. ३. ३४) ।

---

१. I. has the following verse before this:—

'मन्त्राक्तो धारयेन्नित्यं ऊर्ध्वपुण्ड्रं विना तु तत् ।
यत्कर्म कारयेन्नित्यं तत्सर्वं निष्फलं भवेत्' ॥

We do not see any necessity of it in this place. २. I. reads -पुण्ड्रं मृदा शुभ्रं. ३. A. D. and G. read चण्डालो ऽपि विशुद्धात्मा. ४. D. and G. read -विधिः for -प्रकरणम्. ५. अथ is omitted by all others except A. ६. D. omits इति. ७. This line and the verse following it is omitted by G. ८. A. and I. read यदाप्नोति for यदा स्नाति.

पुष्य[1]स्नानादिकं* यत्तु दैवज्ञविधिचोदितम्[2] ।
तद्धि काम्यं समुद्दिष्टं नाकामै[3]स्तत् प्रयोजयेत् ॥
जन्तुकामः पवित्राणि अर्चिष्यन्[4] देवताः पितॄन् ।
स्नानं समाचरेद्यस्तु[5] क्रियाऽङ्गं तत्प्रकीर्त्तितम् ॥
मलापकर्षणं नाम स्नानमभ्यङ्गपूर्वकम्† ।
मलापकर्षणार्थाय प्रवृत्तिस्तस्य नान्यथा[6] ॥
सरःसु देवखातेषु तीर्थेषु च नदीषु च ।
क्रियास्नानं समुद्दिष्टं स्नानं तत्र मता क्रिया'॥

यद्यपि मध्याह्नस्नानस्य नेदानीमवसरस्तथापि प्रातःस्नानवत्तस्य नित्यत्वात् प्रसङ्गेनाभिधीयते । तस्य नित्यत्वं च व्याघ्रपादेनोक्तम्—

'प्रातःस्नायी भवेन्नित्यं मध्यस्नायी भवेदिति' ।

इति । कूर्मपुराणे—

'ततो मध्याह्नसमये स्नानार्थं मृदमाहरेत् ।
पुष्पाक्षतान् कुश-तिलान् गोमयं[7] शुद्धमेव च ॥

* पुष्यनक्षत्रे कर्तव्यं स्नानं ज्योतिःशास्त्रे प्रसिद्धम् । तत्तु तत्रैव द्रष्टव्यम् ।

† अभ्यङ्गः तैलमर्दनम् । आयुर्वेदे तु—'मूर्ध्नि दत्तं यदा तैलं भवेत् सर्वाङ्गसङ्गतम् । स्रोतोभिस्तर्पयेत् बाहू अभ्यङ्गः स उदाहृतः' इति अभ्यङ्गलक्षणमुक्तम् । तथापि उक्तलक्षणोऽभ्यङ्गः दाक्षिणात्यानामेव ।

१. I. reads पुण्य- for पुष्य-, but our reading is more correct. २. A. reads -नोदितम् for -चोदितम्. ३. A. reads सकामः for नाकामः. ४. D. reads वाऽर्च्चिष्यन्. ५. H. reads यत्तु for यस्तु. ६. A. and I. read कीर्त्तिता for नान्यथा. ७. The text of the Kûrmapurâṇa reads गोशकृत् for गोमयं.

नदीषु देवखातेषु तडागेषु सरःसु च ।
स्नान समाचरन्नित्य गर्त्त-प्रस्रवणेषु च ॥
परकीयनिपानेषु[1] न स्नायाद्वै कदाचन ।
पञ्च पिण्डान् समुद्धृत्य स्नायाद्वा ऽसम्भवे पुनः' ॥
(कू. पु. १. २. १८. ५८-६०)

इति । तत्राधिकार्यनधिकारिणौ व्यासो[2] विभजते—
'स्नानं मध्यन्दिने कुर्यात् सुजीर्णेऽन्ने निरामयः ।
न भुक्त्वा ऽलङ्कृतो रोगी[3] नाज्ञाते ऽम्भसि नाकुलः' ॥

इति । आश्रमभेदेन स्नानव्यवस्थामाह दक्षः[4]—
'प्रातर्मध्याह्नयोः स्नानं वानप्रस्थ-गृहस्थयोः ।
यतेस्त्रिषवणं प्रोक्तं[5] सकृत्तु ब्रह्मचारिणः' ॥

इति । अन्वय-व्यतिरेकाभ्यां स्नानस्य समन्त्रतामाह व्यासः—
'मन्त्रपूतं[6] जले स्नानं प्राहुः स्नानफलप्रदम् ।
न वृथा वारिमग्नानां यादसामिव तत् फलम्' ॥

इति[7] । योगियाज्ञवल्क्यः—

१. D. and G. read -निखातेषु for -निपानेषु. २. A. omits व्यासो, and D. I. read अधिकार्यनधिकारिणौ. ३. A. and G. read योगी, and D. भोगी for रोगी. ४. D. reads दत्तः for दक्षः; while G. omits the portion from दक्षः to समन्त्रतामाह, both the words inclusive. ५. A. substitutes स्नानं in the place of प्रोक्तं, but it is of no use here. ६. D. reads the first line of this verse as मन्त्रपूतैर्जलैर्यत्तत्प्रातःस्नानं फलप्रदम्, B. C. F. read the second line as न वृथा वारिणा स्नानं यादसामिव तत्फलम्, and G. न वृथाचारिणः स्नानं यादसामिव तत्फलम्. ७. All omit this except A.

'मत्स्य-कच्छप-मण्डूकास्तोये मग्ना दिवानिशम् ।
वसन्ति चैव ते स्नानान्नाप्नुवन्ति फलं* क्वचित्' ॥

इति । समन्त्रत्वं द्विजातिविषयम् । यदाह विष्णुः–

'ब्रह्म-क्षत्र-विशां चैव मन्त्रवत् स्नानमिष्यते ।
तूष्णीमेव हि शूद्रस्य स्त्रीणां च कुरुनन्दन' ॥

इति । 'स्नानार्थं मृदमाहरेत्'– इति यदुक्तं तत्र विशेषमाह शातातपः–

'शुचिदेशात्तु संग्राह्या शर्कराश्मादिवर्जिता ।
रक्ता गौरा तथा श्वेता मृत्तिका त्रिविधा स्मृता ॥
कर्दमाऽऽखूत्कराह्लेपाद् जलाच्च पथ-वृक्षयोः ।
कृतशौचाऽवशेषाच्च न ग्राह्याः सप्त मृत्तिकाः ॥
मृत्तिकां गोमयं वाऽपि न निशायां समाहरेत् ।
न गोमूत्र-पुरीषे तु गृह्णीयाद्बुद्धिमान्नरः' ॥

इति । योगियाज्ञवल्क्यो ऽपि–

---

* यस्मात् जले वसतामपि मत्स्यादीनां न स्नानफलं लक्ष्यते तस्मात् अस्ति किंचिदधिकं तत्र । तच्च समन्त्रकत्वमेवेति ध्येयम् ।

१. A. reads -कूर्मक-. २. B. C. and F. read स्नानं for स्नानात्. ३. This word is omitted by D. ४. B. C. F. and G. read तदाह. ५. D. reads स्नानार्थं. ६. A. reads शुचौ देशे तु. ७. G. reads संग्राह्या, and all other adjectives qualifying मृत्तिका in plural. ८. All others except D. and H. read मृत्तिका-; while H. reads वल्मीका-. ९. A. and I. read बिलाच्च वरि-वृक्षयोः, but the word वरि does not give any good meaning. १०. I. reads कृतशौचावशिष्टा च.

'[1]गन्धोदकान्तं विविधन स्थापयेत्तत् पृथक् क्षितौ ।
त्रिधा कृत्वा मृदं तां तु गोमयं तद्विचक्षणः ॥
अधमोत्तम-मध्यानामङ्गानां क्षालनं तु तैः[2] ।
भागैः पृथक् पृथक् कुर्यात् क्षालने मृदसङ्करः[3]' ॥

इति । शौनकोऽपि-

'प्रयत्नो मृदमादाय दूर्वा-ऽपामार्ग-गोमयम् ।
एकदेशे पृथक् कुर्यात् क्षालने मृदसङ्करः' ॥

इति । वसिष्ठः-

'मृदैकया शिरः क्षाल्यं[5] द्वाभ्यां नाभेस्तथोपरि ।
अधश्च[6] तिमृभिः कार्यं षड्भिः पादौ तथैव च ॥
प्रक्षाल्य सर्वकायं तु द्विराचम्य यथाविधि' ।

(कू. पु. १. २. १८. ६१.)

इति । कायप्रक्षालनानन्तरभाविकर्त्तव्यमाह[7] शौनकः-

'गायत्र्या आदित्यो देवता ख्याता 'ऽतो देवा[*][8]

* 'अतो देवा' इत्ययं मन्त्रः ऋक्संहितायां (१. २२. १६) सामसंहितायां उत्तरार्चिके (८. २. ५. ६) च प्रसिद्धः । 'यत इन्द्र' इति मन्त्रस्तु ऋक्संहितायां (८. ६१. १३), सामसंहितायां छन्दस्यार्चिके (३. ३. ४. २), तत्रैवोत्तरार्चिके (५. २. १५. १), तैत्तिरीयारण्यके (१०. १.) च प्रसिद्धः । 'स्वस्तिदाविशस्पतिः' इति च ऋक्संहितायां (१०. १५. २. २), तैत्तिरीयारण्यके च (१०. ५५), अथर्वसंहितायां चापि (८. ६. २२.) प्रसिद्धः । 'तत्र तु विशाम्पतिः' इति पाठः ।

१. D. E. G. and H. read गन्धोदकान्तं. २. D. and G. read वै for तै. ३. A. reads तालने मृदसङ्करम्. ४. All others except A. omit this quarter of the verse and read only 3 quarters. ५. G. reads क्षाल्य द्वाभ्यां नाभिस्तथोपरि: while D. reads -क्षाल्यं. ६. A. reads अधश्चतसृभि. ७. A. reads कृत्यमाह. ८. B. C. and F. read गायत्र्या आदित्या अवहिख्यता अतो देवा इति. E. गायत्र्या आदित्या अवहिख्याता अतो देवा इति. D. गायत्र्या आदित्या अवहिता ऽतो देवा इति. G. गायत्र्या आदित्यो अवहिता ऽतो देवा इति and H. गायत्र्या आदित्या अवहिख्याता ततो देवा इति.

इति मृदमाभिमन्त्रयेत् । ततो 'यत
इन्द्र', 'स्वस्तिदा विशस्पतिर्विरक्षो विमृध',
'इदं सुमेर्जरित'[1] इति मृदं संगृह्य[2] प्रतिमन्त्रं
प्रतिदिशं क्षिपेत् पूर्वादिक्रमेण ।
ततः सम्मार्जनं कुर्यात् मृदा पूर्वं तु मन्त्रवत्' ।

'अश्वक्रान्ते' (म. ना. उ. ४. ४.) इत्यादयो मृद्ग्रहणमन्त्रा यजुर्वेदे प्रसिद्धाः ।

'पुनश्च गोमयेनैवमग्रमग्रमिति ब्रुवन् ।
अग्रमग्रं चरन्तीनामोषधीनां वने[3] वने ॥
तासामृषभपत्नीनां पवित्रं कायशोधनम्[4] ।
त्वं मे रोगांश्च शोकांश्च पापं च नुद[5] गोमय' ॥
( आ. ३. ६ )

इति गोमयमन्त्रैः[6] । दूर्वाग्रहणे[7] –
'काण्डात् काण्डादिति द्वाभ्यामङ्गमङ्गमुपस्पृशेत्' ।

इति । दूर्वाद्वयेन[8] इति शेषः[9] ।
'अपाप[10]मपकिल्विषमपकृत्यामपोरपः[11] ।

१. B. C. E. F. and H. read इदं सुमेजनित for इदं सुमेजरित. २. All others except A. and I. omit संगृह्य. ३. B. C. E. F. and H. read रसं वने for वने वने. ४. A. and I. read सुरभीणां शरीरतः and add extra line उत्पन्नं लोकसौख्यार्थं पवित्रं कायशोधनम्, but we do not find this in any other manuscript. For the same B. C. E. F. and H. read पावनं कायशोधनम्. ५. I. reads हर for नुद. ६. I. omits the words गोमयमन्त्रः. ७. All others except A. and H. omit this. ८. D. reads दूर्वया and all others except A. and I. read अर्चयेत् for दूर्वाद्वयेन. ९. G. reads विशेषः. १०. B. C. E. F. and H, read अपाघ-; while G. reads अपाद्य- for अपाप-. ११. I. reads -मपोरप, and B. C. F. -मयोरसः for -मपोरपः.

अपामार्ग त्वमस्माकमपदुष्टभयं नुद– ॥
स्वाहेत्य[१]थापामार्गेण अङ्गमङ्गमुपस्पृशेत्[२] ।

अथ हिरण्यशृङ्गमापो देवीरप्स्वन्तरित्यप उपस्थाय 'सुमित्रिया न' इत्यपः स्पृष्ट्वा 'दुर्मित्रिया न' इति बहिः क्षिपेत् । ततः–

इन्द्रः शुद्ध इत्यृचापः प्रविश्य मनसा जपेत् ।
तत्र गायेत सामानि[३] अपि वा व्याहृतीर्जपेत् ।
'शिवेन मे' जपित्वेदमाप इत्यप आप्लवेत्' ॥

इति । वसिष्ठः–

'ये ते शतमिति द्वाभ्यां तीर्थान्यावाहयेद्बुधः ।
कुरुक्षेत्रं गयां गंगां प्रभासं नैमिषं तथा[४]' ॥

इति । शङ्खः–

'प्रपद्ये* वरुणं देवमम्भसां पतिमीश्वरम् ।
याचितं देहि मे तीर्थं सर्वपापापनुत्तये ॥ (५)

---

* एते मन्त्रास्तु महानारायणोपनिषदि चतुर्थखण्डे चतुर्थमन्त्रादितो द्रष्टव्याः ।

---

१. B. C. E. and F. read त्वमस्मदपदुःस्वप्नं सुवः स्वाहा. G. त्वमस्मदपदुःस्वप्न्यं सुवः स्वाहा, H. त्वमस्मदीयदुःस्वप्नं सुवः स्वाहा and I. त्वमस्माकं दुष्टं भयं नुद स्वाहा. २. D. reads इत्यङ्गमङ्गमपामार्गेणोपस्पृशेत. B. C. E. F. G. H. and I. omit अथ and read स्वाहेत्यपामार्गेण अङ्गमङ्गमुपस्पृशेत. ३. All others except A. and I. read गायेत्सामानि for गायेत सामानि. ४. I. reads जपेत् for तथा. ५. The text of the Sankha Smriti reads as follows :—

प्रपद्य वरुणं देवमम्भसां पतिमर्चितम् ।
याचेत देहि मे तीर्थं सर्वपापापनुत्तये ॥.

तीर्थमावाहयिष्यामि सर्वाघौघनिषूदनम्।
सान्निध्यमस्मिंस्तोये च क्रियतां मदनुग्रहात् ॥(४)
रुद्रान् प्रपद्ये वरदान् सर्वानप्सुषदस्तथा। (५)
आपः पुण्याः पवित्राश्च प्रपद्ये वरुणं तथा। (६)
शमयन्त्वाशु मे पापं रक्षन्तु च सदैव माम्' ॥ (७)

(शां. स्मृ. ८. ३–७)

इति। वसिष्ठः—

'आपोहिष्ठेदमापश्च द्रुपदादिव इत्यपि।
तथा हिरण्यवर्णाभिः पावमानीभिरन्ततः॥
ततोऽर्कमीक्ष्य चोङ्कारं निमज्ज्यान्तर्जले बुधः।
प्राणायामांश्च कुर्वीत गायत्रीं चाघमर्षणम्' ॥

इति। विष्णुरपि—

'ततोऽप्सु निमग्नस्त्रिरघमर्षणं जपेत्।
तद्विष्णोः परमं पदमिति वा द्रुपदां सावित्रीं वा।

१. D. and F. G. read सर्वपापैः प्रमुच्यते. २. B. C. and F. read सान्निध्यमस्मिंश्चत्तोये स्थीयतां, D. and G. -चेत्तोये स्थीयतां. E. and H. सान्निध्यमस्मिन्स्वत्तोये स्थीयतां and I. सान्निध्यमस्मिंश्चित्तोये क्रियतां. ३. D. and I. read अपः. ४. The text of the Śaṅkha Smriti reads शरणं for वरुणं. ५. The text of the Śaṅkha Smriti read मां च रक्षन्तु सर्वशः. ६. B. C. D. E. F. and G. read ततोऽप्सु मानस्त्रि-, but it seems to be a mistake of the writer. H. reads for the same ततोऽप्सु मज्जमानस्त्रि-. ७. All others except A. and I. omit जपेत्. ८. वा द्रुपदां is omitted by all except A. and I.

युञ्जते नम—इत्यनुवाकं वा । पुरुषसूक्तं वा । स्ना-
तश्चार्द्रवासा देवर्षि-पितृतर्पणमम्भस्थ एव कुर्यात्' ॥

(वि. स्मृ. ६४. १९-२४)

इति । मेधातिथिरपि—

'ततोऽम्भसि निमग्नस्तु त्रिः पठेदघमर्षणम्' ।
प्रदद्यान्मूर्धनि तथा महाव्याहृतिभिर्जलम्' ॥

इति। वसिष्ठः—

'स्नात्वा संगृह्य वासो ऽन्यदूरू संशोधयेन्मृदा ।
अपवित्रीकृतौ तौ तु कौपीनास्नाववारिणा ॥
यो ऽनेन विधिना स्नाति यत्रतत्राम्भसि द्विजः ।
स तीर्थफलमाप्नोति तीर्थे तु द्विगुणं फलम्' ॥

इति । तत्रानुकल्पमाह योगियाज्ञवल्क्यः—

'य एष विस्तृतः प्रोक्तः स्नानस्य विधिरुत्तमः ।
असामर्थ्यान्न कुर्याच्चेत्तत्रायं विधिरुच्यते' ॥
स्नानमन्तर्जले चैव मार्जनाचमने तथा ॥
जलाभिमन्त्रणं चैव तीर्थस्य परिकल्पनम् ।
अघमर्षणसूक्तेन त्रिरावृत्तेन नित्यशः ।
स्नानाचरणमित्येतदुपदिष्टं महात्मभिः' ॥

इति ।

॥ इति माध्याह्निकस्नानम् ॥

१. All others except A. and I. आर्द्रवाससा देवर्षिपितृतर्पणमंतस्थ एव कुर्यात्. २. All others except A. and I. read अपवित्रीकृते ते तु. ३. A. reads -कुत्राम्भसि. ४. D. and G. read तीर्थेषु. ५. A. reads भवेत्. ६. D. omits योगि- and reads याज्ञवल्क्यः. E. and H. read योग्ययाज्ञवल्क्यः. ७. All others except A. and I. read मध्याह्नस्नानम्.

अथ नैमित्तिकस्नानम्। तत्र मनुः—

'दिवा[1]कीर्त्तिमुदक्यां च पतितं सूतिकां तथा।
शवं तत्स्पृष्टिनं चैव स्पृष्ट्वा स्नानेन शुध्यति'॥

(म. स्मृ. ५. ८५)

इति। दिवा[2]कीर्त्तिश्चाण्डालः। अङ्गिराः—

'शवस्पृशमथोदक्यां सूतिकां पतितं तथा।
स्पृष्ट्वा स्नानेन शु[3]द्धः स्यात् सचैलेन न संशयः'॥

इति। गौतमोऽपि—

'पतित-चाण्डाल-सूतिकोदक्या-श[4]वस्पृक्-तत्स्पृष्टिस्पर्शने सचैल उदकोपस्पर्शनात् शुध्येत्'॥

(गौ. स्मृ. ७. १६)

इति। पतितादिस्पृष्टिनं समारभ्य तृतीयस्य सचैलं स्नानम्। च[5]तुर्थस्य तु उदकोपस्पर्शनाच्छुद्धिः। तथा च मरीचिः—

'उपस्पृशेच्चतुर्थस्तु तदूर्ध्वं प्रोक्षणं स्मृतम्'।

इ[6]ति। यत्तु संवर्त्तेन द्वयोरेव स्नानमुक्तम्—

---

१. B. C. E. F. G. and H. read दिवाकीर्त्यं for दिवाकीर्त्ति, but this form is not found in Lexicographical works. २. B. C. E. F. G. and H. read दिवाकीर्त्यश्चांडालः. ३. All others except A. and I. read शुद्धिः. ४. Here our reading follows: A. I. and the text of Gautam, but B. C. E. F. and H. read शवस्पृशितत्स्पृष्टद्युपस्पर्शने; while D. reads शवस्पृशिनं स्पृष्ट्वा तत्स्पृष्टद्युपस्पर्शने, and G. शवस्पृशि तत्स्पृष्टद्युपस्पार्शीनि for शवस्पृक्-तत्स्पृष्टिस्पर्शने. ५. B. C. E. F. G. and H. read न चतुर्थस्य। तस्य तु उदकोपस्पर्शनाच्छुद्धिः. ६. This is omitted by all others except D. and I.

'तत्स्पृष्टिनं स्पृशेद्यस्तु स्नानं तस्य विधीयते ।
ऊर्ध्वमाचनं प्रोक्तं द्रव्याणां प्रोक्षणं तथा' ॥

इति । तद्बुद्धिपूर्वस्पर्शविषयम् । तथा च संग्रहकारः—

'अबुद्धिपूर्वकस्पर्शे द्वयोः स्नानं विधीयते ।
त्रयाणां बुद्धिपूर्वे तु तत्स्पृष्टिन्यायकल्पना' ॥

इति । कूर्मपुराणे—

'चाण्डाल-सूतिक-शवैः संस्पृष्टं संस्पृशेद्यदि ।
प्रमादात्तत आचम्य जपं कुर्यात् समाहितः ॥
तत्स्पृष्टिस्पृष्टिनं स्पृष्ट्वा बुद्धिपूर्वं द्विजोत्तमः ।
आचमेत विशुद्ध्यर्थं प्राह देवः पितामहः' ॥

(कू. पु. १. २. २३. ६९-७० )

इति । याज्ञवल्क्योऽपि—

'उदक्या सूतिभिः स्नायात् संस्पृष्टस्तैरुपस्पृशेत् ।
अब्लिङ्गानि जपेच्चैव गायत्रीं मनसा सकृत्' ॥

( या. स्मृ. ३. ३० )

इति । एतद्दण्डाद्यन्तरितस्पर्शविषयम् । अन्यथा द्वयोः स्नानमित्यनेन विरोधः प्रसज्ज्येत । वस्त्रान्तरितस्पर्शने तु दण्डान्तरितन्यायप्राप्तावाह प्रचेताः—

---

१. A. substitutes यथा for तथा. २. I. reads -स्पर्शन-. ३. D. reads न बुद्धिसंस्पर्शे. ४. I. reads कूर्मपुराणम्. ५. The text of Kûrma Purâṇa reads ततः स्नात्वाथ आचम्य. ६. The text of the Kûrma Purâṇa reads -स्पृष्टस्पर्शिनं for स्पृष्टिस्पृष्टिनं. ७. D. reads सूतक्यां सूतिभिः स्नायात्, and A. उदक्या ऽशुचिभिः. ८. D. reads प्रसज्ज्यते. ९. A. D. and G. read यत्र वस्त्रान्तरितस्पर्शनं न तत्र दण्डान्तरितन्यायः । तदाह प्रचेताः

'वस्त्रान्तरितसंस्पर्शः[1] साक्षात्स्पर्शोऽभिधीयते[2] ।
साक्षात्स्पर्शे तु यत् प्रोक्तं तद्वस्त्रान्तरितेऽपि च' ॥

इति । चतुर्विंशतिमते स्नानस्य निमित्तान्तरमप्युक्तम्[3]—

'बौद्धान् पाशुपतान् जैनान् लोकायतिक-कापिलान्* ।
विकर्मस्थान् द्विजान् स्पृष्ट्वा सचैलो जलमाविशेत् ।
कापालिकांस्तु[4] संस्पृश्य प्राणायामोऽधिको मतः' ॥

इति । चाण्डालादिस्पर्शनिमित्तस्नाने[5] विशेषमाह विष्णुः—

'स्नानार्हो यो निमित्तेन कृत्वा तोयावगाहनम्† ।
आचम्य प्रयतः पश्चात् स्नानं विधिवदाचरेत्' ॥

इति । योगियाज्ञवल्क्योऽपि—

'तूष्णीमेवावगाहेत यदा स्यादशुचिर्नरः ।
आचम्य प्रयतः पश्चात् स्नानं विधिवदाचरेत्' ॥

इति । गार्ग्योऽपि—

'कुर्यान्नैमित्तिकं स्नानं शीताद्भिः काम्यमेव च ।
नित्यं यादृच्छिकं चैव यथारुचि समाचरेत्' ॥

इति ।

---

* अत्र कापिलशब्देन साङ्ख्यानां ग्रहणम् । ते च निरीश्वरा एव । निरीश्वरवादित्वात् तेषां स्पर्शस्य निषेधः। सेश्वराणां तु न कुत्रापि निषेधः।

† प्रथमं अधिकारसिद्ध्यर्थं तूष्णीं तोयावगाहनं कृत्वा अनन्तरं यथाविधि स्नानं कुर्यात् । अन्यथा मन्त्रपठने नाधिकारः ।

---

१. D. reads वस्त्रान्तरितकः स्पर्शः, and G. वस्त्रान्तरितसंस्पर्शे. २. B. C. D. F. and G. read विधीयेते for अभिधीयते. ३. All others except A. omit अपि. ४. D. and G. read कपालिकान् for कापालिकान्. ५. This line and the following two lines are omitted by D. and H. but they appear as marginal correction in H.

## ॥ इति नैमित्तिकस्नानप्रकरणम् ॥

अथ काम्यस्नानम् । तत्र पुलस्त्यः—

‘पुष्ये च जन्मनक्षत्रे व्यतीपाते च वैधृतौ ।
अमावास्यां नदीस्नानं पुनात्यासप्तमं कुलम्[1] ॥
चैत्रकृष्णचतुर्द्दश्यां[4] यः स्नायाच्छिवसन्निधौ ।
न प्रेतत्वमवाप्नोति[2] गङ्गायां च विशेषतः ॥
शिवलिङ्गसमीपे तु यत्तोयं पुरतः स्थितम् ।
शिवगङ्गेति विज्ञेयं[3] तत्र स्नात्वा दिवं व्रजेत्’ ॥

इति । यमो ऽपि—

‘कार्त्तिक्यां पुष्करे स्नातः सर्वपापैः प्रमुच्यते ।
माघ्यां स्नातः प्रयागे तु मुच्यते सर्वकिल्विषैः ॥
ज्येष्ठे मासि सिते पक्षे दशम्यां हस्तसंयुते ।
दशजन्माघहा गङ्गा तेन पापहरा स्मृता’ ॥

इति । विष्णुः—

‘सूर्यग्रहणतुल्या तु शुक्ला माघस्य सप्तमी ।
अरुणोदयवेलायां तस्यां स्नानं महाफलम् ॥
पुनर्वसु- बुधोपेता चैत्रे[5] मासि सिता ऽष्टमी ।
स्रोतस्सु विधिवत् स्नात्वा वाजपेयफलं लभेत्’ ॥

इति । आदित्यपुराणे[6] ऽपि—

१. B. has कुले for कुलम्. २. A. reads न स प्रेतत्वमाप्नोति. ३. A. reads -तीर्थमिति ख्यातं. ४. A. reads द्वादश्यां. ५. G. reads चैत्रमासि सिताष्टमी, and B. C. D. E. F. and H. चैत्रमासिसिताष्टमी. ६. E. H. and I. read आदित्यपुराणे. and all others except A. and D. omit ऽपि.

'कार्त्तिकं सकलं मासं नित्यस्नायी जितेन्द्रियः।
जपन् हविष्यभुक् दान्तः सर्वपापैः प्रमुच्यते ॥
तुला-मकर-मेषेषु प्रातःस्नायी सदा भवेत्।
हविष्यं ब्रह्मचर्यं च महापातकनाशनम्' ॥

इति। मत्स्यपुराणेऽपि—

'आषाढादि*चतुर्मासं प्रातःस्नायी भवेन्नरः।
विप्रेभ्यो भोजनं दत्त्वा कार्त्तिक्यां गोप्रदो भवेत् ॥
स वैष्णवपदं याति विष्णुव्रतमिदं स्मृतम्'।

इति। मार्कण्डेयोऽपि—

'सर्वकालं तिलैः स्नानं पुण्यं व्यासोऽब्रवीन्मुनिः।
तुष्यत्यामलकैर्विष्णुरेकादश्यां विशेषतः ॥
श्रीकामः सर्वदा स्नानं कुर्वीतामलकैर्नरः।
सप्तमीं नवमीं चैव पर्वकालं च वर्जयेत्' ॥

इति। विष्णुः—

'बालाश्च तरुणा वृद्धा नर-नारी-नपुंसकाः।
स्नात्वा माघे शुभे तीर्थे प्राप्नुवन्तीप्सितं फलम् ॥
माघे मास्युषसि स्नात्वा विष्णुलोकं स गच्छति'।

इति।

## ॥ इति काम्यस्नानम् ॥

* एतच्च आषाढशुक्लदशमीमारभ्य कार्तिकशुक्लद्वादशीपर्यंतमिति बोद्ध्यम्।

१. B. C. and F. read प्रातः, D. E. G. H. स्नातः, and I. क्रान्तः for दान्तः. २. D. reads only मात्स्ये for मत्स्यपुराणेऽपि; while A. E. G. H. and I. omit अपि. ३. D. and G. omit इति. ४. D. reads माघमास्युषसि स्नानं, B. C. F. माघमास्युषसि स्नातो, and E. G. H. माघमास्युषसि स्नात्वा.

अथ मलापकर्षणस्नानम् । तत्र वामनपुराणम्–

'नाभ्यङ्गमर्के न च भूमिपुत्रे
क्षौरं च शुक्रे रविजे[1] च मांसम् ॥ (४९)
बुधे च[2] योषित् परिवर्जनीया
शेषेषु सर्वाणि[3] सदैव कुर्यात्' ।

( वा. पु. १४. ४९-५० )

इति । ज्योतिःशास्त्रे ऽपि[4]–

'सन्तापः[5] कान्तिरल्पायुर्धनं निर्धनता[6] तथा ।
अनारोग्यं सर्वकामा अभ्यङ्गाद्भास्करादिषु' ॥

इति । मनुरपि–

'पक्षादौ च रवौ षष्ठ्यां रिक्तायां च तथा तिथौ ।
तैलेनाभ्यज्यमानस्तु धनायुर्भ्यां विहीयते' ॥

इति । गर्गो ऽपि–

'पञ्चदश्यां चतुर्दश्यामष्टम्यां रविसंक्रमे ।
द्वादश्यां सप्तमी-षष्ठ्योस्तैलस्पर्शं विवर्जयेत्' ॥

इति । बौधायनो[7] ऽपि–

---

१. We follow here A. and the text of Vâman Purâṇa, but all other read च कुजे for रविजे. २. G. reads बुधेषु, and the text of Vâman Purâṇa read बुधेषु योषिन्न समाचरेत. ३. Except A. and the text of Vâman Purâṇa all others read सर्वेषु for सर्वाणि. ४. I. omits अपि. ५. A. reads संतापशांति. ६. D. reads निर्धनमेव च, and G. निर्धनतां तथा. ७. A. reads यमोऽपि for बौधायनो ऽपि.

'अष्टम्यां च चतुर्दश्यां नवम्यां च विशेषतः ।
शिरोऽभ्यङ्गं वर्जयेत्तु पर्वसन्धौ तथैव च' ॥

इति । गर्गो ऽपि—

'न च कुर्यात् तृतीयायां त्रयोदश्यां तिथौ तथा ।
शाश्वतीं भूतिमन्विच्छन् दशम्यामपि पण्डितः' ॥

इति । एवं सर्वास्वपि तिथिष्वभ्यङ्गस्य निषेधे प्राप्ते तैलविशेषेणाभ्यनुजानाति प्रचेताः—

'सार्षपं गन्धतैलं च यत्तैलं पुष्पवासितम् ।
अन्यद्रव्ययुतं तैलं न दुष्यति कदाचन' ॥

इति । यमो ऽपि—

'घृतं च सार्षपं तैलं यत्तैलं पुष्पवासितम् ।
न दोषः पक्वतैलेषु स्नानाभ्यङ्गेषु नित्यशः' ॥

इति ।

॥ इत्यभ्यङ्गस्नानम् ॥

क्रियाऽङ्गस्नानं[1]* तु नित्यस्नानवदनुष्ठेयम् ।

'प्रातः शुक्लतिलैः स्नात्वा मध्याह्ने पूजयेत् सुधीः' ।

इत्यादिकं क्रियाऽङ्गस्नानं द्रष्टव्यम् । तस्य क्रियाऽङ्गत्वं पुराणे स्पष्टीकृतम्[2]—

* क्रियायाः करिष्यमाणस्य कर्मणः अङ्गभूतं स्नानं क्रियाङ्गम् । यथा व्रतादिग्रहणादौ पूर्वं स्नात्वा सङ्कल्पादिकं कर्तव्यमित्यभिहितं तत्र पूर्वं कर्तव्यस्य स्नानस्य क्रियाङ्गत्वम् । नतु पुत्रजन्मादौ कर्तव्यमपि क्रियाङ्गमिति शङ्कनीयम् । तस्य निमित्तप्रयुक्तत्वात् नैमित्तिकत्वं स्पष्टम् ।

१. D. reads क्रियास्नानं तु for क्रियाङ्गस्नानं तु. २. This word is omitted by all except A. and I.

'धर्मक्रियां कर्तुमनाः पूर्वं स्नानं समाचरेत् ।
क्रियाऽङ्गं तत्समुद्दिष्टं स्नानं वेदपरैर्द्विजैः' ॥

इति

॥ इति क्रियाङ्गस्नानम् ॥

अथ क्रियास्नानम् । तत्र शङ्खः—

'क्रियास्नानं प्रवक्ष्यामि यथावद्विधिपूर्वकम् ।
मृद्भिरद्भिश्च कर्त्तव्यं शौचमादौ यथाविधि ॥
जले निमग्नस्तून्मज्य चोपस्पृश्य यथाविधि ।
तीर्थस्यावाहनं कुर्यात् तत्प्रवक्ष्याम्यतः परम् ॥
प्रपद्ये वरुणं देवमम्भसां पतिमूर्जितम् ।
याचितं देहि मे तीर्थं सर्वपापापनुत्तये ॥
तीर्थमावाहयिष्यामि सर्वाघविनिषूदनम् ।
सांन्निध्यमस्मिंस्तोये च क्रियतां मदनुग्रहात्' ॥

इति । षट्स्वपि स्नानेषु मुख्यानुकल्पाभ्यां जलविशेषो विष्णुपुराणे निरूपितः—

---

१. A. reads देवमयैर्द्विजैः; while I. reads वेदमयैर्द्विजैः. २. A. reads निमग्नस्त्रिर्मृज्य, and the text of Śankha read निमज्य उन्मज्य for निमग्नस्तून्मज्य. ३. All others except A. I. and the text read तीर्थमावाहनं for तीर्थस्यावाहनं. ४. I. reads पतिमीश्वरम्, D. परमर्जितम्, and the text reads the whole verse as follows :—

प्रपद्य वरुणं देवमम्भसां पतिमर्चितम् ।
याचेत देहि मे तीर्थं सर्वपापापनुत्तये ॥.

५. D. reads सर्वाघौघविनिषूदनम्. ६. All except A. are mistaken here. B. C. E. F. G. and H. read सान्निध्यमस्मिंश्चित्तोये स्थीयतां, and I. सान्निध्यमस्मिंश्चित्तोये क्रियतां. ७. B. C. D. and F. read स्थानेषु for स्नानेषु. ८. D. reads दर्शितः.

'नदी-नद-तडागेषु देवखात[1]जलेषु च।
नि[2]त्यं क्रियाऽर्थं स्नायीत गिरिप्रस्रवणेषु च ॥
कू[3]पेषूद्धृततोयेन स्नानं कुर्वीत वा भुवि'।
(वि. पु. ३. ११. २४-२५)

इति। मार्कण्डेयो[4] ऽपि—

'पुराणानां नरेन्द्राणामृषीणां च महात्मनाम्।
स्नानं कूप-तडागेषु देवतानां समाचरेत् ॥
भूमिष्ठमुद्धृतात्पुण्यं ततः प्रस्रवणोदकम्।
ततो ऽपि सारसं पुण्यं तस्मान्नादेयमुच्यते ॥
तीर्थतोयं ततः पुण्यं ततो गाङ्[5]गं तु सर्वतः'।

इति। मरीचिः—

'भूमिष्ठमुद्धृतं वाऽपि शीतमुष्णमथापि वा।
गाङ्गं पयः पुनात्याशु पापमामरणान्तिकम्' ॥

इ[6]ति। नि[7]षिद्धं जलमाह व्यासः—

'अनुत्सृष्टेषु* न स्नायात्तथैवाऽसंस्कृ[8]तेषु च।

* अनुत्सृष्टेषु अकृतोत्सर्गेषु। असंस्कृतेषु अकृतसंस्कारेषु। हवनादिपूर्वको जलसंस्कारः प्रयोगग्रन्थेभ्यो ऽवगन्तव्यः।

१. I. reads -बिलेषु. २. D. G. H. and I. read नित्यक्रियार्थं. ३. I. कूपे वोद्धृत-. ४. D. reads मार्कण्डेये ऽपि. ५. B. C. D. and F. read ततो गङ्गा तु सर्वतः. ६. D. omits this word. ७. D. and I. read निषिद्धजलं. ८. I. reads ऽसंस्तुतेषु.

आत्मीयेष्वपि न स्नायात्तथैवाल्पजलेष्वपि[1] ॥
नद्या[2] यच्च परिभ्रष्टं नद्या यच्च विनिःसृतम् ।
गतप्रत्यागतं[3] यच्च तत्तोयं परिवर्जयेत्' ॥

इति । शातातपो ऽपि–

'अन्यैरपि कृते कूपे सेतौ[4]* वाप्यादिके तथा ।
तत्र स्नात्वा च पीत्वा च प्रायश्चित्तं समाचरेत्' ॥

इति । प्रतिप्रसवमाह मनुः–

'अलाभे देवखातानां सरसां सरितां तथा ।
उद्धृत्य† चतुरः पिण्डान् पारक्ये स्नानमाचरेत्' ॥

इति । उष्णोदकं[5] निषेधति[6] शङ्खः–

'स्नातस्य वह्नितप्तेन तथैव परवारिणा ।
शरीरशुद्धिर्विज्ञेया न तु स्नानफलं भवेत्[7]' ॥

इति[8] । याज्ञवल्क्यः–

* सेतौ 'घाट' इति भाषायां प्रसिद्धे ।

† विष्णुना तु– 'परनिपानेषु न स्नानमाचरेत् । आचरेत्पञ्चपिण्डानुद्धृत्यापस्तथापदि' (वि. स्मृ. ६४.१-२) इति पञ्चपिण्डोद्धारः कथितः । बौधायनादिभिरप्येवमेव ।

१. All others except D. add इति । व्यासो ऽपि after this verse of which there is no necessity as the next verse is a quotation from the special author; and for व्यासोऽपि A. substitutes पुण्डरीकोऽपि, but we do not find the name of पुण्डरीक in the list of Dharmaśâstrakâras nor in that of Purâṇakâras or Rishis. This name appears in the Paṇḍhari Mâhâtmya which is a small modern mythological work. २. I. reads नद्यां यच्च. ३. I. reads गतं प्रत्यागतं यच्च. ४. I. reads सरो वाप्यादिके, but the next quotation from Manu shows that this is a mistake. ५. A. reads उष्णोदकस्नानं. ६. I. reads निषेधयति. ७. I. reads लभेत. ८. D. omits इति.

'वृथा तूष्णोदकस्नानं वृथा जप्[1]यमवैदिकम्।
वृथा त्वश्रोत्रिये दानं वृथा भुक्तमसाक्षिकम्' ॥

इति। यत्तूष्णोदक[2]विधानम्—

'आप एव सदा पूतास्तासां वह्निर्विशोधकः।
ततः सर्वेषु कालेषु उष्णाम्भः पावनं स्मृतम्' ॥

इति—यच्च[3] षट्त्रिंशन्मतेऽपि—

'आपः स्वभावतो मेध्याः किं पुनर्वह्निसंयुताः।
तेन सन्तः प्रशंसन्ति स्नानमुष्णेन वारिणा' ॥

इति—त[4]दातुरस्नानविषयम्। तथा च यमः—

'आदित्यकिरणैः पूतं पुनः पूतं च वह्निना।
आम्नातमातुरस्नाने प्रशस्तं [5]स्यात् शृतोदकम्' ॥

इति। यदा तु नद्याद्यसम्भवस्तदा अनातुरस्याप्युष्णोदकस्नानमनिषिद्धमित्याह यमः—

'नित्यं नैमित्तिकं चैव क्रियाङ्गं मलकर्षणम्।
तीर्थाभावे तु कर्त्तव्यमुष्णोदकपरोदकैः' ॥

[6]इति। यदपि वृद्धमनुनोक्तम्—

१. D. and H. read जाप्यम् for जप्यम्. २. A. and I. add -स्नान- after उष्णोदक-. ३. यच्च is omitted by all others except A. ४. A. reads तदातुरविषयं for तदातुरस्नानविषयम्. ५. B. C. E. F. G. and H. read न शुभोदकं; while D. reads न शृतोदकं for स्यात् शृतोदकम्. Both the readings do not give any good sense. We prefer न हिमोदकम् to either of these which is found in the marginal correction of A. ६. इति is omitted by D. and G.

'मृते जन्मनि संक्रान्तौ श्राद्धे जन्मदिने तथा ।
[1]अस्पृश्यस्पर्शने चैव न स्नायादुष्णवारिणा ॥
संक्रान्त्यां भानुवारे च सप्तम्यां राहुदर्शने ।
आरोग्य-पुत्र-मित्रार्थी न स्नायादुष्णवारिणा ॥
पौर्णमास्यां तथा दर्शे यः स्नायादुष्णवारिणा ।
स गोहत्याकृतं पापं प्राप्नोतीह न संशयः' ॥

इति । तत्र उक्तेषु मरणादिषु नोष्णोदकैः स्नायात् अपि तु परकीयैरुद्धृतोदकैर्वेत्युक्तमिति[2] न विरोधः । उष्णोदक-स्नाने विशेषमाह व्यासः—

'शीतास्वप्सु निषिच्योष्णा मन्त्रसम्भारसम्भृताः ।
गेहेऽपि शस्यते स्नानं नदीफलसमं विदुः' ॥

इति । गौणं तु स्नानमुत्तरत्र स्वयमेव वक्ष्यति ।

## ॥ इति क्रियास्नानम् ॥

अथ सन्ध्याविधिः । तत्र सन्ध्यास्वरूपं दक्षो दर्शयति—

'अहोरात्रस्य यः सन्धिः सूर्यनक्षत्रवर्जितः ।
सा तु सन्ध्या समाख्याता मुनिभिस्तत्त्वदर्शिभिः' ॥

इति । यद्यपि कालवाचकत्वेनात्र सन्ध्याशब्दः प्रतीयते तथापि तस्मिन् काले उपास्या देवता सन्ध्याशब्देनोपलक्ष्यते[4] ।

---

१. D. reads this line as follows :—

आस्पृश्यस्पर्शने चैव स्नायादुष्णेन वारिणा ।,

but this appears to be a mistake of the writer. २. D. reads नोद्धृतोदकैर्वा. ३. B. C. and F. read तद्धीनमफलं च हि, and D. E. G. H. तद्धीनमफलं वाहिः. These two readings are correct and give different sense. ४. D. reads नोपलभ्यते.

तथा[1] च देवताया उपासनमुपलक्ष्य मूलवचने कर्मपरत्वेन सन्ध्याशब्दः प्रयुक्तः। अथवा सन्धौ भवा क्रिया सन्ध्या। अत एव व्यासः—

'उपास्ते[2] सन्धिवेलायां निशाया[3] दिवसस्य च।
तामेव सन्ध्यां तस्मात्तु[4] प्रवदन्ति मनीषिणः'॥

इति। तामेव[5] क्रियां विदधाति योगियाज्ञवल्क्यः—

'सन्धौ सन्ध्यामुपासीत नास्तगे नोद्गते रवौ'।

इति। सा च सन्ध्या त्रिविधा। तदुक्तमत्रिणा—

'सन्ध्यात्रयं तु कर्त्तव्यं द्विजेनात्मविदा सदा'।

इति। तत्र कालभेदेन देवताया नामभेदमाह[6] व्यासः—

'गायत्री नाम पूर्वाह्णे सावित्री मध्यमे दिने।
सरस्वती च सायाह्ने सैव सन्ध्या त्रिधा[7] स्मृता[8]॥
प्रतिग्रहादन्नदोषात्[9] पातकादुपपातकात्।
गायत्री प्रोच्यते तस्माद्गायन्तं त्रायते यतः॥
सवितृद्योतनात् सैव[10] सावित्री परिकीर्तिता।
जगतः प्रसवित्री वा वाग्रूपत्वात्[11] सरस्वती'॥

---

१. I. reads तथा देवतया उपलक्षणमुपलक्ष्य for तथा च देवताया उपासनमुपलक्ष्य. २. D. has उपास्तिः for उपास्ते. ३. B. C. E. F. and G. read निशायां for निशायाः. ४. Except A. and I. all others read तस्मात् तत्. ५. B. C. and F. read तत्क्रियाम्, and एव is omitted by all others except A. ६. All others except A. read नामादिभेदम् for नामभेदम्. ७. All others except A. and I. read त्रिषु. ८. After this word B. C. and F. add इति, but it is useless here. ९. B. C. and F. read प्रतिग्रहान्नदोषाच्च, and E. G. H. प्रतिग्रहान्नदोषात्तु for प्रतिग्रहादन्नदोषात्. १०. A. reads चैव ११. D. reads त्वग्रूपत्वात्, which is probably a mistake.

इति । वर्णभेदः स्मृत्यन्तरे[1]ऽभिहितः—

'गायत्री तु भवेद्रक्ता सावित्री शुक्लवर्णिका ।
सरस्वती तथा कृष्णा उपास्या वर्णभेदतः ॥
गायत्री ब्रह्मरूपा तु सावित्री रुद्ररूपिणी ।
सरस्वती विष्णुरूपा उपास्या रूपभेदतः' ॥

इति । उपासनमभि[2]ध्यानम् । अत एव तैत्तिरीयब्राह्मणम्—

'उद्यन्तमस्तं यन्तमादित्यमभिध्यायन् कु[3]र्वन्
ब्राह्मणो विद्वान् सकलं भद्रमश्नुते ऽसावादित्यो
ब्रह्मेति । ब्रह्मैव सन् ब्रह्माप्येति य एवं वेद' ।

इति । अयमर्थः - वक्ष्यमाणप्रकारेण प्राणायामादिकं कर्म कुर्वन् यथोक्तं ना[4]म-वर्ण-रूपोपेतं सन्ध्याशब्दवाच्यमादित्यं ब्रह्मेति ध्यायन्नैहिकमामुष्मिकं च सकलं भद्रमश्नुते । य[5] एव-मुक्तध्यानेन शु[6]द्धान्तःकरणो ब्रह्म साक्षात् कुरुते स पूर्व-मपि ब्रह्मैव सन्नज्ञानात् जीवत्वं प्रा[7]प्तो यथोक्तज्ञानेन तदज्ञानाप-गमे ब्रह्मैव प्राप्नोति—इति । व्यासोऽपि एतदेवाभिप्रेत्याह—

'न भिन्नां प्रतिपद्येत गायत्रीं* ब्रह्मणा सह ।
सो[8]ऽहमस्मीत्युपासीत विधिना येन केन चित्' ॥

* ब्रह्मणा आत्मना सह । सोहमस्मीति विधिना 'देवो भूत्वा देवं यजेत् नादेवो देवमर्चयेत्' इति तान्त्रिकैः 'ब्रह्मैवाहमस्मीत्यभिध्यायेत्' इति औपनिषदैश्चोक्तेन प्रकारेणेत्यर्थः ।

---

१. B. C. E. F. G. and H. read विहितः for ऽभिहितः. २. D. reads अभि-धानम्. ३. G. omits कुर्वन्. ४. A. reads यथोक्तनामाभिध्येयरूपोप-हितम्, while H. and I. read यथोक्तनामरूपोपेतं. ५. D. omits य and reads एवमुक्त-. ६. D. has सिद्धान्तःकरणो. ७. I. reads प्राप्नोति, which is a mistake. ८. H. reads साऽहमस्मि.

इति। तत्र प्रातःसन्ध्यायाः कालपरिमाणमाह दक्षः—

'राज्यन्त्ययामनाडी द्वे सन्ध्यादिः[1] काल उच्यते।
दर्शनाद्रविरेखायास्तदन्तो मुनिभिः स्मृतः' ॥

इति। आ सङ्गवं प्रातःसन्ध्याया गौणः कालः। आ प्रदोषावसानं च सायंसन्ध्यायाः। तदाह बृहन्मनुः[2]—

'न प्रातर्न प्रदोषश्च सन्ध्याकालोऽतिपत्यते[3]।
मुख्यकल्पो[4]ऽनुकल्पश्च सर्वस्मिन् कर्मणि स्मृतः' ॥

इति। कूर्मपुराणे सन्ध्योपास्तिप्रकारो दर्शितः—

'प्रागग्रेषु[5] ततः स्थित्वा दर्भेषु सुसमाहितः[6]।
प्राणायामत्रयं कृत्वा ध्यायेत् सन्ध्यामिति श्रुतिः[7]' ॥

इति। याज्ञवल्क्योऽपि—

'प्राणानायम्य संप्रोक्ष्य तृचेनाब्दैवतेन तु' ॥

इति। बृहस्पतिः— (या. स्मृ. १. २४)

'बद्ध्वाऽऽसनं नियम्यासून् स्मृत्वा चर्य्यादिकं[8] तथा।
सन्निमीलितदृङ्मौनी प्राणायामं समभ्यसेत्' ॥

इति। प्राणायामलक्षणं मनुराह—

---

१. D. drops the visarga. २. All others except A. and I. read वृद्धमनुः for बृहन्मनुः. ३. D. reads पठ्यते; while B. C. E. F. G. and H. read -पद्यते for -पत्यते. ४. G. reads मुख्यः कालोऽनुकल्पश्च; while all others except A. and I. read मुख्यकालो ऽनुकल्पश्च. ५. All others except A. read प्राक्कूलेषु. ६. I. substitutes च in the place of सु-. ७. D. has सन्ध्यामुपासनं for सन्ध्यामिति श्रुतिः. ८. B. C. and F. read चार्षादिकं, H. वर्षादिकं, and I. चार्यादिकं for चर्य्यादिकं. D. reads the whole line as follows :—

'बद्ध्वासनं नियम्याशु स्मृत्वा चर्यादिकं तथा'।

'संव्याहृतिं सप्रणवां गायत्रीं शिरसा सह ।
त्रिः पठेदायतप्राणः प्राणायामः स उच्यते' ॥

(म. स्मृ. ५५. ९)

इति । याज्ञवल्क्यः—

'गायत्रीं शिरसा सार्द्धं जपेद्व्याहृतिपूर्विकाम् ।
प्रतिप्रणवसंयुक्तां त्रिरयं प्राणसंयमः' ॥

(या. स्मृ. १. २३)

इति । योगियाज्ञवल्क्यो ऽपि—

'भूर्भुवः स्वर्महर्जनस्तपः सत्यं तथैव च ।
प्रत्योङ्कारसमायुक्तस्तथा 'तत्सवितुः' परम् ॥
'ॐ आपोज्योति' रित्येतच्छिरः पश्चात्प्रयोजयेत् ।
त्रिरावर्त्तनयोगात्तु प्राणायामः प्रकीर्तितः' ॥

इति । स च प्राणायामः पूरक-कुम्भक-रेचकभेदेन त्रिविधो ज्ञेयः । तथा च योगियाज्ञवल्क्यः—

'पूरकः कुम्भको रेच्यः प्राणायामस्त्रिलक्षणः ।
नासिकाऽऽकृष्ट उच्छ्वासो ध्मातः पूरक उच्यते ॥

---

१. This verse appears in the Vishṇu Smṛiti. The text of the said Smṛiti and all other manuscripts except A. and I. read सव्याहृतिकां. २. I. reads वशप्रणवसंयुक्तां, but the commentator Vijñānesvara does not take this reading. ३. D. omits this. B. C. and F. read वृद्धयाज्ञवल्क्यो ऽपि; while G. and H. read simply याज्ञवल्क्यो ऽपि. but we don't find the following quotation in the text of yajñavalkya, and we are unable to say whether yogiyajñavalkya or the vriddhayajñavalkya this versecontairns. ४. H. read प्राणायामः सुशक्तितः. B. C. E. F. and G., प्राणायामस्तु शक्तितः, D. प्राणायामास्तु शक्तितः. ५. D. and G. have -कृत.

कुम्भको निश्चलः श्वासो रेच्यमानस्तु रेचकः'* ॥

इति। मार्जनमाह व्यासः—

'आपोहिष्ठेत्यृचैः कुर्यान्मार्जनं तु कुशोदकैः।

प्रणवेन तु संयुक्तं क्षिपेद्वारि पदे पदे ॥

विप्रुषोऽष्टौ क्षिपेदूर्ध्वमधो 'यस्य क्षयाय' च।

रजस्तमो मोहजातान् जाग्रत्-स्वप्न-सुषुप्तिजान् ॥

वाङ्-मनः-कायजान् दोषान् नवैतान् नवभिर्दहेत्'।

इति। प्रजापतिरपि—

'ऋगन्ते मार्जनं कुर्यात् पादान्ते वा समाहितः।

अर्द्धर्चान्तेऽथवा कुर्याच्छिष्टानां मतमीदृशम्' ॥

इति। मार्जने तीर्थविशेषमाह हारीतः—

'मार्जनार्चन-बलिकर्म-भोजनानि देवतीर्थेन कुर्यात्'।

तच्च मार्जनं न धाराच्युतौ कार्यम्। तथा च ब्रह्मा—

'धाराच्युतेन तोयेन सन्ध्योपास्तिर्विगर्हिता।

पितरो न प्रशंसन्ति न प्रशंसन्ति देवताः' ॥

---

* अयमर्थः— ओंकारसहितव्याहृतिचतुष्टयसहितां सशिरस्कां गायत्रीं जपन् दक्षिणनासापुटेन वायुं ऊर्ध्वमाकर्षयेत् एष पूरकः। तथैव तावत्कालमेव वायुं धारयेत् एष कुम्भकः। तथैव रेचयेत् एष रेचकः। एतत्त्रयात्मकः प्राणायाम इत्युच्यते।

---

१. All others except I. read रिच्यमान-for रेच्यमान-. २. A. reads -त्यृचा. ३. I. reads वपुष्यष्टौ. ४. All others except A. D. and I. read यस्य क्षयाय जित्, which seems to be a mistake, and D. substitutes तु for च. ५. C. omits रजः through mistake, E. and G. read रक्षस्तमोमोहजातान्, which does not give good sense. A. and I. read रजस्तमो-मोहमयान्. ६. A. and I. read शातातपः for प्रजापतिरपि. ७. A. reads the whole line as follows:—

ऋगन्ते वाऽथ पादान्ते मार्जनं तु समाहितः।.

८. All others except D. read हारीतोऽपि for मार्जने तीर्थविशेषमाह हारीतः. ९. D. substitutes तत्र for तच्च. १०. च is omitted by I.

इति। कथं तर्हि मार्जनमिति तत्राह स एव—

'नद्यां तीर्थे ह्रदे[1] वाऽपि भाजने मृण्मये ऽपि वा।
औदुम्बरे ऽथ सौवर्णे राजते दारुसम्भवे ॥
कृत्वा तु वामहस्ते वा सन्ध्योपास्तिं समाचरेत्'।

इति। कृत्वा उदकमिति शेषः। मृण्मयादिपात्रसद्भावे तु वामहस्तस्य प्रतिषेधः।

'वामहस्ते जलं कृत्वा ये तु सन्ध्यामुपासते।
सा सन्ध्या वृषली ज्ञेया असुरास्तैस्तु[2] तर्पिताः'।

इति स्मरणात्। मृण्मयाद्यभावे तु—'कृत्वा तु वामहस्ते वा' इत्यनेन[3] वामहस्तविधानात्। एवमुक्तविधिना मार्जयित्वा 'सूर्यश्चे'त्यपः पिबेत्। तदाह बौधायनः—

'अथातः सन्ध्योपासनविधिं व्याख्यास्यामः (१)।
तीर्थं गत्वा[4] प्रयतोऽभिषिक्तः प्रक्षालितपाणि-
पादो विधिनाऽऽचम्य[5] 'अग्निश्च* मामन्युश्चेति'
सायमपः पीत्वा 'सूर्यश्च मामन्युश्चेति' प्रातः।

* 'अग्निश्च मामन्युश्च' 'सूर्यश्च मामन्युश्च' इत्येतौ मन्त्रौ महानारायणोपनिषदि (१४.९-६) द्रष्टव्यौ।

१. I. reads तटे for ह्रदे; while A. reads संध्यां तीर्थे तटे. २. I. reads तेषु for तैस्तु. ३. I. reads इत्यनेनैव विधानात् for इत्यनेन वामहस्तविधानात्. ४. Here the text of Baudhâyana (edited by E. Hultzsch, Vienna) is throughout mistaken. It reads as follows:—गत्वा प्रयतोऽभिषिक्तः प्रयतो वाऽनभिषिक्तः प्रक्षालितपादपाणिरप आचम्य सुरभिमत्याब्लिङ्गाभिः for गत्वा प्रयतोऽभिषिक्तः प्रक्षालितपाणिपादो विधिनाऽऽचम्य 'अग्निश्च मामन्युश्चेति' सायमपः पीत्वा 'सूर्यश्च मामन्युश्चेति' प्रातः सपवित्रेण पाणिना वसुमत्या अब्लिङ्गाभिः. ५. All others except A. and I. read ऽप आचम्य for विधिनाऽऽचम्य.

सपवित्रेण[1] पाणिना वसुमत्या[2] अब्लिङ्गाभिर्वारु[3]-
णीभिः हिरण्यवर्णाभिः पावमानीभिर्व्याहृतिभिः
अन्यैश्च पवित्रैरात्मानं प्रोक्ष्य प्रयतो भवति'।

(बौ. स्मृ. २. ४. १-२)

इति। भारद्वाजः[4]-

'सायमग्निश्च मेत्युक्त्वा प्रातः सूर्येत्यपः पिबेत्।
आपः पुनन्तु* मध्याह्ने ततश्चाऽऽचमनं चरेत्'॥

इति। कात्यायनोऽपि-

'शिरसो मार्जनं कुर्यात् कुशैः सोदकबिन्दुभिः।
प्रणवो भूर्भुवःस्वर्द्वौ[5] गायत्री च तृतीयिका॥
अब्दैवत[6]ऋचश्चैव चतुर्थमिति मार्जनम्'।

(का. स्मृ. २. १०. ४-५)

इति। मार्जनानन्तरं प्रजापतिः-

'जलपूर्णं तथा हस्तं नासिकाऽग्रे समर्पयेत्।
ऋतं चेति पठित्वा च तज्जलं तु क्षितौ क्षिपेत्'॥

इति। ततः सूर्यायार्घ्यं दद्यात्। तथा च व्यासः-

१. All others except D. read सावित्रेण for सपवित्रेण, and omit पाणिना. २. A. and D. read सुरभिमत्या for वसुमत्या; while B. C. and F. read वा सुवसुरभिसत्या, but this reading does not give any sense. ३. D. omits the portion from this word to तु मध्याह्ने &c., &c., in the next quotation. ४. B. C. E. F. and H. read भरद्वाजः. ५. A. D. and I. read प्रणवो भूर्भुवः स्वश्च, E. G. and H. read प्रणवो भूर्भुवः स्वरो for प्रणवो भूर्भुवः स्वर्द्वौ. ६. D. reads अब्दैवतमृचं चैव, G. अब्दैवतमृचश्चैव and I. अब्दैवत्यमृचं चैव.

'कराभ्यां तोयमादाय गायत्र्या चाभिमन्त्रितम् ।
आदित्याभिमुखस्तिष्ठन् त्रिरूर्ध्वं[1] सन्ध्ययोः क्षिपेत्' ॥

इति ।

'उत्थायार्कं[2] प्रति प्रोहेत् त्रिकेणाञ्जलिमम्भसाम्' ।
(का. स्मृ. २.११.१०)

इत्येतत् कात्यायनवचनं[3] मध्याह्नसन्ध्यापरम् । हारीतोऽपि–

'सावित्र्याऽभिमन्त्रितमुदकं पुष्पमिश्रमञ्जलिना क्षिपेत्' ।

इति । अर्घ्यदाने मन्त्रान्तरमुक्तं विष्णुना–

'कराभ्यामञ्जलिं कृत्वा जलपूर्णं[4] समाहितः ।
उदुत्यमिति मन्त्रेण तत्तोयं प्रक्षिपेद्भुवि[5]' ॥

इति । ततः[6] प्रदक्षिणं कृत्वा उदकं स्पृशेत् । तदुक्तं वराहपुराणे[7]–

'सायं[8] मन्त्रवदाचम्य प्रोक्ष्य सूर्यस्य चाञ्जलिम् ।
दत्वा प्रदक्षिणं कृत्वा जलं स्पृष्ट्वा विशुद्ध्यति' ॥

इति । श्रुतिरपि–

'यत् प्रदक्षिणं प्रक्रमन्ति तेन पाप्मानमवधुन्वन्ति' ।

इति । कूर्मपुराणम्–

---

१. B. C. F. and G. read -र्ध्वमथवा क्षिपेत्; while A. and I. read -र्ध्वमथवोत्क्षिपेत्. २. The portion from उत्थायार्क- to मध्याह्नसन्ध्यापरम् is omitted by all others except D. E. G. and H. ३. D. and G. insert कात्यायनोऽपि before उत्थाय-, omit वचनम्, and read एतन्मध्याह्नपरम्. ४. All others except A. and I. read करपूर्णं for जलपूर्णं. ५. A. reads च क्षितौ क्षिपेत्; while all others except D. and I. read च क्षिपेद्भुवि. ६. A. reads ततः प्रदक्षिणं कृत्वा उदकं च स्पृशेत् पुनः and adds इति in the former line after this. ७. B. C. E. F. G. and H. read only पुराणे; while D. reads ब्रह्माण्डपुराणे. ८. A. reads this line as follows :—

सायं सन्ध्यामुपासीत दत्वा सूर्याय चाञ्जलिम् ।

'अथोपतिष्ठेदादित्यमुदयन्तं समाहितः।
मन्त्रैस्तु विविधैः सौरैः ऋग्यजुः-सामसम्भवैः'॥

इति[1]। उपस्थानं तु स्वशाखोक्तमन्त्रैः कार्यम्।

'उपस्थानं स्वकैर्मन्त्रैरादित्यस्य तु कारयेत्'।

इति वसिष्ठस्मरणात्। कूर्मपुराणे 'उपस्थानं तु सूक्तैः'[2] इत्यादिना प्रपञ्चितम्।

'प्राक्कूलेषु'[3] इत्यारभ्य आदित्योपस्थानपर्यंतं प्रातः-सन्ध्यायां यदुपवर्णितं तदितरयोरुभयोरपि सन्ध्ययोः समानम्। तत्र मध्याह्नसन्ध्यायां विशेषो नारायणेनाभिहितः—

'आपः पुनन्तु मन्त्रेण आपोहिष्ठेति मार्जनम्।
प्रक्षिप्य चाञ्जलिं सम्यगुदुत्यं चित्रमित्यपि॥
तच्चक्षुर्देव इति च हंसः शुचिषदित्यपि।
एतत् जपेदूर्ध्वबाहुः सूर्यं पश्यन् समाहितः॥
गायत्र्या तु यथाशक्ति उपस्थाय दिवाकरम्'।

इति। कालविशेषस्तु शङ्खेन दर्शितः—

'प्रातःसन्ध्यां सनक्षत्रां मध्यमां स्नानकर्मणि।
सादित्यां पश्चिमां सन्ध्यामुपासीत यथाविधि'॥

इति। स्नानकर्मणीति माध्याह्निकस्नानानन्तरमित्यर्थः। माध्याह्निकसन्ध्याया[4] गौणकालमाह दक्षः—

'अध्यर्द्धयामादासायं सन्ध्यामाध्याह्निकीष्यते'।

इति। सन्ध्यात्रयस्य[5] तारतम्येन देशविशेषमाह व्यासः—

---

१. D. omits इति. २. D. E. G. and H. read शुक्लैरित्यादिना. ३. All others except A. and I. read प्राक्कूलेष्वित्याद्यादित्योपस्थानपर्यन्तं प्रातःसन्ध्यायामुपवर्णितं तदितरयोः सन्ध्ययोः समानम्, but H. omits सन्ध्ययोः. ४. I. reads -सन्ध्यायां. ५. I. reads -त्रये.

'गृहे त्वेकगुणा सन्ध्या गोष्ठे दशगुणा स्मृता ।
शतसाहस्रिका नद्यामनन्ता विष्णुसन्निधौ ॥
बहिःसन्ध्या दशगुणा गर्त्त-प्रस्रवणेषु च ।
ख्याता तीर्थे शतगुणा साहस्रा जाह्नवीतटे' ॥[1]

इति । शातातपोऽपि—

'अनृतं मद्यगन्धं च दिवामैथुनमेव च[2] ।
पुनाति वृषलस्यान्नं सन्ध्या बहिरुपासिता'[3] ॥

इति । बहिःसन्ध्यायामुपासितायां[4] यदा विहरणाद्यङ्ग-लोपस्तदा गृह एव सन्ध्यात्रयं कर्त्तव्यमित्याहाऽत्रिः—

'सन्ध्यात्रयं तु कर्त्तव्यं द्विजेनात्मविदा सदा ।
उभे सन्ध्ये तु कर्त्तव्ये ब्राह्मणैश्च गृहेष्वपि' ॥

इति । यद्यपि प्रशस्तत्वाद्बहिरेव सन्ध्यात्रयं कर्त्तव्यत्वेन प्राप्तं तथापि श्रौतत्वेन[5] विहरणस्य प्राबल्यात् तदनुरोधेन सायं-प्रातःसन्ध्ये गृहेऽभ्यनुज्ञायेते । सायंसन्ध्यायामुपस्थाने मन्त्र-विशेषमाह नारायणः—

'वारुणीभिस्तथादित्यमुपस्थाय प्रदक्षिणम् ।
कुर्वन् दिशो नमस्कुर्याद्दिगीशांश्च पृथक् पृथक्' ॥

इति । वारुण्यश्च —'इमं मे वरुण' (ऋ. सं. १. ६. १.) —इत्याद्याः । यद्यपि वारुणीभिर्वरुणस्योपस्थानं लिङ्गबलात् प्राप्तं

---

१. After the end of this verse I. has इति । महाभारते. २. D. and H. read दिवास्वापं च मैथुनम् for दिवामैथुनमेव च. ३. B. C. and F. read बहिःसन्ध्या उपासिता; while D. E. G. and H. read बहिःसन्ध्यामुपासिता. ४. All others except A. and I. omit बहिःसन्ध्यायामुपासितायां. ५. D. reads तथा श्रोत्रियत्वेन for तथापि श्रौतत्वेन.

तथापि श्रुतेः प्राबल्यात् तया लिङ्गं बाधित्वा आदित्योपस्थाने एवं[1] विनियुज्यन्ते। एतच्च तृतीयाध्याये* विचारितम्।

तथा हि। 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते[2]' इति श्रूयते। इन्द्रो देवतात्वेन यस्यामृचि मन्त्रलिङ्गात् प्रकाश्यते सेयमृगैन्द्री। 'कदाचन स्तरीरसि नेन्द्र सश्चसि[3]' इत्यादिका। तत्र लिङ्गादिन्द्रोपस्थाने मन्त्रस्य विनियोगः प्रतीयते। गार्हपत्यमिति द्वितीयया श्रुत्या तु गार्हपत्योपस्थाने। तत्र संशयः। किमुभयं समुच्चित्योपस्थेयं? उतैक एव? तत्रापि किं यः कश्चिदैच्छिकः? किं वेन्द्र एव? उत गार्हपत्य एव? इति। तत्र श्रुति-लिङ्गयोः समबलप्रमाणत्वात् विरोधानुपलम्भाच्च समुच्चयः-इत्येकः पक्षः। एकोपस्थाने मन्त्रस्य निराकाङ्क्षत्वात् नैराकाङ्क्ष्यलक्षणविरोधादनन्तरनियामकादर्शनाच्चैच्छिकः—इति द्वितीयः पक्षः। श्रुतेः शब्दात्मिकायाः अर्थसामर्थ्यानुसारित्वात् सामर्थ्यस्य चोपजीव्यत्वेन प्राबल्यादिन्द्र एवोपस्थेयः—इति तृतीयः पक्षः। मन्त्रगतो हीन्द्रशब्दो रूढ्या शक्रमभिधत्ते। 'इदि परमैश्वर्ये'—इत्यस्माद्धातोरुत्पन्नत्वात् स्वकार्यविषयपरमैश्वर्योपेतं गार्हपत्यमभिधत्ते। 'गुणाद्वाप्यभिधानं स्यात्'-इति न्यायेनोभयसाधारणत्वेन लिङ्गस्य सन्देहापादकत्वम्। अथोच्येत

---

* पूर्वमीमांसायां तृतीयाध्यायस्य तृतीये पादे सप्तमे अधिकरणे 'श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्' (३. ३. ४) इत्यस्मिन् सूत्रे शबरभाष्ये वार्तिके च द्रष्टव्यमिदम्।

---

१. Except A. and I. other manuscripts omit एवं and insert मन्त्राः.
२. I. reads उपातिष्ठत्. ३. D. reads नश्चसि.

'रूढिर्योगमपहरति'–इति न्यायेन शीघ्रबुद्ध्युत्पादिकाया: रूढेः प्राबल्याच्छक्र एवोपस्थेयः–इति। एवं तर्हि लिङ्गादपि शीघ्रबुद्ध्युत्पादकत्वेन श्रुतिरेवात्र विनियोजिका। तथा ह्याचार्यैरुक्तम्–

'मन्त्रार्थं मन्त्रतो बुद्ध्वा पश्चाच्छक्तिं निरूप्य च।
मन्त्राकाङ्क्षाबलेनेन्द्रशेषत्वश्रुतिकल्पनम्॥
श्रुत्या प्रत्यक्षया पूर्वं गार्हपत्याङ्गतां गते।
निराकाङ्क्षीकृते मन्त्रे निर्मूला श्रुतिकल्पना॥
तेन शीघ्रप्रवृत्तित्वाच्छ्रुत्या लिङ्गस्य बाधनम्'॥

तस्माद्गार्हपत्य एवोपस्थेयः इति सिद्धम्। सन्ध्यां प्रशंसति यमः–

'सन्ध्यामुपासते ये तु सततं शंसितव्रताः।
विधूतपापास्ते यान्ति ब्रह्मलोकं सनातनम्॥
यदह्ना कुरुते पापं कर्मणा मनसा गिरा।
आसीनः पश्चिमां सन्ध्यां प्राणायामैस्तु[1] हन्ति तत्॥
यद्रात्र्या कुरुते पापं कर्मणा मनसा गिरा।
पूर्वसन्ध्यामुपासीनः प्राणायामैर्व्यपोहति॥
ऋषयो दीर्घसन्ध्यत्वाद्दीर्घमायुरवाप्नुयुः[2]।
प्रज्ञां यशश्च कीर्तिं च ब्रह्मवर्चसमेव च'॥

इति। अकरणे प्रत्यवायो दर्शितो दक्षेण–

'सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु।
यदन्यत् कुरुते कर्म न तस्य फलभाग्भवेत्'॥

(द. स्मृ. २. २०)

१. D. reads प्राणायामः. २. A. reads उपाययुः for अवाप्नुयुः.

इति। गोभिलो ऽपि—

'सन्ध्या येन न विज्ञाता सन्ध्या येनाऽनुपासिता।
जीवमानो भवेच्छूद्रो मृतः श्वा चोपजायते'॥

इति। विष्णुपुराणे ऽपि—

'उपतिष्ठन्ति वै[१] सन्ध्यां ये न पूर्वां न पश्चिमाम्।
व्रजन्ति ते दुरात्मानस्तामिस्रं नरकं नृप'॥

(वि. पु. ३. ११. १००.)

इति। कूर्मपुराणे ऽपि[२]—

'यो ऽन्यत्र कुरुते यत्नं धर्मकार्ये द्विजोत्तमः।
विहाय सन्ध्याप्रणतिं स याति नरकायुतम्'॥

(कू. पु. १. २.१८.३१)

इति। एतत्सर्वमनार्त्तविषयम्। तथा च याज्ञवल्क्यः—

'अनार्त्तश्चोत्सृजेद्यस्तु स विप्रः शूद्रसम्मितः।
प्रायश्चित्ती भवेच्चैव लोके भवति निन्दितः'॥

इति। अत्रिरपि—

'नोपतिष्ठन्ति ये सन्ध्यां स्वस्थावस्थासु वै द्विजाः।
हिंसन्ति वै सदा पापा भगवन्तं दिवाकरम्'॥

इति। विष्णुपुराणे ऽपि—

---

१. B. C. E. F. G. and H. substitute ये in the place of वै; while D. and the text of the Vishṇu Purâṇa read उपतिष्ठन्ति ये सन्ध्यां न पूर्वां न च पश्चिमाम्. २. D. omits अपि. ३. D. reads यो बाल्यात्कुरुते यत्नं; while B. C. E. F. G. and H. read योऽन्यत्र कुरुते कर्म. ४. There is no trace of this Śloka in the yajnawalkya smṛity. ५. D. reads विष्णुरपि for विष्णुपुराणेऽपि, but it is evidently a mistake.

'सर्वकालमुपस्थानं सन्ध्ययो[१]ः पार्थिवेष्यते ।
अन्यत्र सूतका-ऽशौच-विभ्रमा-ऽतुरभीतितः[२]' ॥
(वि. पु. ३.११.९७)

इति । सूतकादौ तु[३] सत्यपि सामर्थ्ये सन्ध्योपासनं न कार्य-मित्याह मरीचिः—

'सूतके कर्मणां त्यागः सन्ध्यादीनां विधीयते' ।

इति । यदपि पुलस्त्येनोक्तम्[४]—

'सन्ध्यामिष्टिं[५] च होमं च यावज्जीवं समाचरेत् ।
न त्यजेत् सूतके वाऽपि त्यजन् गच्छत्यधोगतिम्' ॥

इति—तन्मानसिकसन्ध्याऽभिप्रायम् । यतस्तेनैवोक्तम्—

'सूतके मृतके चैव सन्ध्याकर्म न सन्त्यजेत्[६] ।
मनसोच्चारयेन्मन्त्रान् प्राणायाममृते द्विजाः ॥
एतद्विदित्वा* यः सन्ध्यामुपास्ते संशितव्रतः[७] ।
दीर्घमायुः स विन्देत सर्वपापैः प्रमुच्यते' ॥

इति ।

॥ इति[८] सन्ध्याविधिः ॥

---

* प्रयोगपारिजाते भरद्वाजस्त्वेवमाह—
'सूतके मृतके कुर्यात् प्राणायामममन्त्रकम् ।
तथा मार्जनमन्त्रांस्तु मनसोच्चार्य मार्जयेत् ॥
गायत्रीं सम्यगुच्चार्य सूर्यायार्घ्यं निवेदयेत् ।
मार्जनं तु न वा कार्यमुपस्थानं नचैव हि' ॥ इति ।

---

१. B. C. E. F. H. and I. read सन्ध्यायाः. २. All others except A. D. I. and the text of the Vishṇu Purâṇa read -जीविनः for -भीतितः. ३. Except A. all others omit तु. ४. I. reads पुनस्तेनोक्तम् for पुलस्त्ये-नोक्तम्. ५. A. and G. read सन्ध्यामिष्टिं चरुं होमं. ६. I. reads न तु त्यजेत्. ७. Here all other manuscripts except A. and I. read शंसित- for संशित, but both the readings are correct and give good sense. ८. This is omitted by all others except A. and I.

अथ सन्ध्याङ्गजपविधिः । तत्र मनुः—

'आचम्य प्रयतो नित्यमुभे सन्ध्ये समाहितः ।
शुचौ देशे जपन् जप्यमुपासीत यथाविधि ' ॥

इति । कथमित्यपेक्षिते आह शङ्खः—

'कुशबृ[1]स्यां समासीनः कुशोत्तरीयां[2] वा कुशपवित्रपाणिः उदङ्मुखः[3] सूर्याभिमुखो वा ऽक्षमालामादाय देवतां ध्यायन् जपं कुर्यात्' ।

इति । व्यासो ऽपि—

'प्रणव-व्याहृतियुतां[4] गायत्रीं च जपेत्ततः' ।

इति । योगियाज्ञवल्क्यस्तु अन्ते ऽपि प्रणवयोगार्थमाह—

'ॐकारं पूर्वमुच्चार्य भूर्भुवः-स्वस्तथैव च ।
गायत्रीं प्रणवं चान्ते जप एवमुदाहृतः' ॥

इति । बौधायनो ऽपि—

'उभयतः प्रणवां सव्याहृतिकां जपेत्' ।

इति । नृसिंहपुराणे[5] जपयज्ञस्य भेदो ऽभिहितः—

'त्रिविधो जपयज्ञः स्यात्तस्य भेदं निबोधत ।
वाचिकश्च उपांशुश्च मानसस्त्रिविधः[6] स्मृतः ॥

---

१. B. C. F. and I. read -वृष्यां; while D. E. G. and H. बृस्यां. २. I. reads कुशोत्तरायाम्. ३. All others except A. and D. omit उदङ्मुखः, but the next वा shows its necessity here. ४. D. reads युगां. ५. D. reads नृसिंहपुराणेऽपि जपहोमभेदो विहितः. ६. In the Narsinha Purâṇa the portion from Adhyâya 57, verse 7, to Adhyaya 61, verse 14, treats of the conversation between Hârîta and several other Rishis. We have got a manuscript called the Laghu Hârîta Smriti which corresponds to the said conversation. The Laghu Hârîta Smriti reads तत्त्वं for भेदं and reads मानसश्च त्रिधा कृतिः। त्रयाणामपि यज्ञानां श्रेष्ठः स्यादुत्तरोत्तरः.

त्रयाणां जपयज्ञानां श्रेयान् स्यादुत्तरोत्तरः' ॥
(नृ.पु. ५८.७८-७९; ल. हा. स्मृ. ४.४०-४१.)

इति। वाचिकोपांशुत्वयोर्लक्षणं पुराणे ऽभिहितम्—

'यदुच्चनीचोच्चरितैः शब्दैः स्पष्टपदाक्षरैः।[2]
मन्त्रमुच्चारयेद्वाचा वाचिको ऽयं जपः स्मृतः ॥[3]
शनैरुच्चारयेन्मन्त्रमीषदोष्ठौ प्रचालयन्।[4][5]
अपरैरश्रुतः किञ्चित् स उपांशुजपः स्मृतः' ॥
(नृ. पु. ५८.८०-८१; ल. हा. स्मृ. ४.४२-४३)

इति। विश्वामित्रेण मानसस्य लक्षणमुक्तम्—

'धिया यदक्षरश्रेण्या वर्णाद्वर्णं पदात्पदम्।[6]
शब्दार्थचिन्तनं भूयः कथ्यते मानसो जपः' ॥
(नृ. पु. ५८.८२; ल. हा. स्मृ. ४.४४.)

इति। त्रयाणां तारतम्यं च[7] तेनैवोक्तम्—

१. I. reads श्रेयः स्यात् for श्रेयान् स्यात्. २. Here all manuscripts except A. read -स्वरितैः, which is the proper word. ३. The Nrisinha Purâṇa reads शब्दमुच्चारयेद्वाचा जपयज्ञः स वाचिकः, and the Laghu Hârîta मन्त्रमुच्चारयन् वाचा जपयज्ञस्तु वाचिकः. ४. The Laghu Hârîta reads किञ्चिदोष्ठौ प्रचालयेत् and किञ्चिच्छ्रवणयोग्यः स्यात् स उपांशुर्जपः स्मृतः, and the Nrisinha Purâṇa reads किञ्चिन्मन्त्रं स्वयं विद्यात् उपांशुः स जपः स्मृतः. ५. G. reads प्रचालयेत्. ६. D. reads धियायदक्षरं; while I. reads ध्यायेत् यदक्षर-. We find this verse in the Narsinha Purâṇa. It reads—

धिया यदक्षरश्रेण्यो वर्णाद्वर्णं पदात् पदम्।
शब्दार्थचिंतनं ध्यानं तदुक्तं मानसं जपः ॥

and Laghu Hârîta reads—

धिया पदाक्षरश्रेण्या अवर्णमपदाक्षरम्।
शब्दार्थचिंतनाभ्यां तु स उक्तो मानसो जपः ॥

७. D. omits च.

'उत्तमं मानसं जप्यमु[1]पांशु[2] मध्यमं स्मृतम् ।
अधमं वाचिकं प्राहुः सर्वमन्त्रेषु वै द्विजाः ॥
वाचिकस्यैकमेकं स्यादुपांशु शतमुच्यते ।
सहस्रं[3] मानसः प्रोक्तो मन्वत्रि-भृगु-नारदैः' ॥

इति । जपनियममाह शौनकः—

'कृत्वोत्तानौ करौ प्रातः सायं चा[4]धोमुखौ तथा[5] ।
मध्ये स्कन्ध[6]-कराभ्यां तु जप एवमुदाहृतः ॥
मनःसन्तोषणं शौचं मौनं मन्त्रार्थचिन्तनम् ।
अव्यग्रत्वमनिर्वेदो जपसम्पत्तिहेतवः' ॥

इति । मनुरपि—

'पूर्वां सन्ध्यां जपंस्तिष्ठेत् सावित्रीमार्कदर्शनात् ।
पश्चिमां तु समासीनः सम्य[7]गृक्षविभावनात्' ॥
(म. स्मृ. २. १०१)

इति । मध्याह्ने[8] जपस्य नियमः वा[9]युपुराणे दर्शितः—

'तथा म[10]ध्याह्नसन्ध्यायामासीनः प्राङ्मुखो जपेत्' ॥

इति । वर्ज्यानाह व्यासः—

---

१. D. reads उपांशुर्मध्यमः स्मृतः. and for the same I. reads उपांशुं मध्यमं स्मृतम् which seems to be incorrect. २. I. reads उपांशुः. ३. I. reads साहस्रो मानसः. ४. F. and G. substitute वा for चा. ५. All others except A. and I. substitute ततः for तथा. ६. I. reads through mistake स्तम्ब-कराभ्यां. ७. B. C. E. F. and G. read सम्यगार्क्षविभावनात्, and H. सम्यगर्क्षविभावनात्. ८. B. C. D. E. F. and G. read मध्याह्न-जपस्य. ९. All others except A. and I. omit वायु-, and read only पुराणे for वायुपुराणे. १०. B. C. E. F. and H. read तथा च मध्यसन्ध्यायाम्; while G. reads तथा मध्यमसन्ध्यायाम्.

'न संक्रामिन्[1] न च हसन् न पार्श्वमवलोकयन् ।
नापाश्रितो[2] न जल्पंश्च न प्रावृतशिरास्तथा ॥
न पदा पादमाक्रम्य न चैव हि तथा करौ ।
न चासमाहितमना न च संश्रावयन् जपेत्' ॥

इति । बौधायनो ऽपि–

'नाभेरधः संस्पर्शं[3] कर्मसंयुक्तो[4] वर्जयेत्' ।
( बौ. स्मृ. १. ५, १८ )

इति । व्यासो[5] ऽपि–

'जपकाले न भाषेत व्रत-होमादिकेषु च ।
एतेष्वेवावसक्तस्तु यद्यागच्छेत्[6] द्विजोत्तमः ॥
अभिवाद्य ततो विप्रं[7] योगक्षेमं च कीर्त्तयेत्' ।

इति । योगियाज्ञवल्क्यो ऽपि–

'यदि वाग्यमलोपः स्याज्जपादिषु कदाचन ।
व्याहरेद्वैष्णवं मन्त्रं स्मरेद्वा विष्णुमव्ययम्' ॥

इति । संवर्त्तो ऽपि–

'लोकवार्त्ताऽऽदिकं श्रुत्वा दृष्ट्वा[8] स्पृष्ट्वा प्रभाषितम् ।
संख्यां विना च यज्जप्तं[9] तत्सर्वं निष्फलं भवेत्' ॥

इति । प्रभाषितं बहुभाषिणं[10] पुरुषमित्यर्थः । गौतमो[11] ऽपि–

१. D. reads न संक्रमन्, and G. चङ्क्रमन् for न सङ्क्रामन्. २. A. and I. read नायासितो, and G. नापश्रितो. ३. I. reads संस्पर्शनं. ४. D. reads कर्मयुक्तो विवर्जयेत, and G. कर्मदुक्तो हि वर्जयेत्. ५. A. omits व्यासो ऽपि. ६. B. C. F. and G. read यथागच्छन्, E. and H. पथा ऽऽगच्छन्. ७. D. reads विप्राः. ८. H. reads स्पृष्ट्वा दृष्ट्वा. ९. B. C. E. F. and H. read जप्यं. १०. B. C. D. and F. read बहुभाषणं; while G. reads बहुभाषित, and all except A. omit -अर्थः. ११. गौतमो ऽपि is omitted by D.

'गच्छतस्तिष्ठतो वाऽपि स्वेच्छया कर्म कुर्वतः ।
अशुचेर्वा विना संख्यां तत्सर्वं निष्फलं भवेत् ॥
क्रोधं[1] लोभं तथा निद्रां निष्ठीवन-विजृम्भणे[2] ।
दर्शनं[3] च श्व-नीचानां वर्जयेज्जपकर्मणि ॥
आचामेत्[4]संभवे चैषां स्मरेद्विष्णुं सुरार्चितम् ।
ज्योतींषि च प्रशंसेद्वा कुर्याद्वा प्राणसंयमम् ॥
ज्वलनं गाश्च विप्रांश्च यतीन्वाऽपि विशुद्धये' ।

इति । देशनियमस्तु याज्ञवल्क्येनोक्तः—

'अग्न्यागारे जलान्ते वा जपेद्देवालये ऽपि वा ।
पुण्यतीर्थे गवां गोष्टे द्विजक्षेत्रे ऽथ वा गृहे' ॥

इति । शङ्खो ऽपि—

'गृहे त्वेकगुणं जप्यं नद्यादौ द्विगुणं स्मृतम् ।
गवां गोष्ठे दशगुणमग्न्यागारे शताधिकम् ॥
सिद्ध[5]क्षेत्रेषु तीर्थेषु देवतायाश्च सन्निधौ ।
सहस्र-शत-कोटीनामनन्तं विष्णुसन्निधौ' ॥

इति । कूर्मपुराणे ऽपि—

'गुह्यका राक्षसाः सिद्धा हरन्ति प्रसभं यतः ।
एकान्ते तु शुभे देशे तस्माज्जप्यं सदा[6]चरेत्' ॥
(कू. पु. १. २. १८–८२)

इति । जपसंख्यामाह योगियाज्ञवल्क्यः—

१. A. reads क्रोधं मांद्यं क्षुतं for क्रोधं लोभं तथा. २. E. reads विधर्मणम्. ३. A. reads दर्शनं श्वादिनीचानां. ४. D. reads आचमेत्. ५. E. G. and H. read सिद्धतीर्थेषु क्षेत्रेषु. ६. B. C. F. and the text of Kûrma Purâṇa read समाचरेत्.

'ब्रह्मचार्याहिताग्निश्च शतमष्टोत्तरं जपेत्[1]।
वानप्रस्थो यतिश्चैव सहस्रादधिकं जपेत्' ॥

इति । [2]स्मृत्यन्तरे—

'दर्शे श्राद्धे प्रदोषे च गायत्रीं दश संख्यया ।
अष्टाविंशत्यनध्याये सुदिने तु यथाक्रमम्' ॥

इति । यमो ऽपि—

'सहस्रपरमां देवीं शतमध्यां दशावराम् ।
गायत्रीं तु जपेन्नित्यं सर्वपापप्र[3]णाशिनीम्' ॥
(नृ.पु.५८.८६.ल.हा.स्मृ.४.४८; ल.अ.स्मृ.२.१२.)

इति । आपस्तम्बो ऽपि—

'दर्भेष्वासीनो दर्भान् धारयमाणः सोद-
केन पाणिना प्राङ्मुखः सावित्रीं सहस्रकृत्व
आवर्त्तयेच्छतकृत्वो ऽपरिमितकृत्वो वा' ॥

इति ।

॥ इति जपविधिः ॥

जपाङ्गभूतामक्ष[4]मालामाह हारीतः—

'शङ्खरूप्यमयी माला काञ्चनीभिरथोत्पलैः[5] ।
पद्माक्षकैश्च[6] रुद्राक्षैर्विद्रुमैर्मणि-मौक्तिकैः ॥

---

१. The portion after the end of this line to यमो ऽपि. is omitted by D. २. The portion from स्मृत्यन्तरे to यमोऽपि is omitted by all others except A. and I. ३. G. and I. read -प्रणाशनीम्. ४. A. omits अक्ष- and reads only मालाम्. ५. B. C. and F. read कांचनी स्फटिकोपलैः, D. कांतिनी निंबजोत्पलैः, E. कांचिनी वनजोत्पलैः, G. कांचनी वनजोत्पलैः and H., कांचनी निंबजोत्पलैः for कांचनीभिरथोत्पलैः. ६. D. reads पद्माक्षजैः.

रा[1]जतेन्द्राक्षकैर्माला तथैवाङ्गुलिपर्वभिः ।
पुत्रजीवमयी माला शस्ता वै जपकर्मणि' ॥

इति । गौतमोऽपि—

'अङ्गुल्या जपसंख्यानमेकमेकमुदाहृतम् ।
रेखयाऽष्टगुणं पुत्रजीवैर्दशगुणाधिकम् ॥
शतं स्याच्छङ्खमणिभिः प्रवालैश्च सहस्रकम् ।
स्फटिकैर्दशसाहस्रं मौक्तिकैर्लक्षमुच्यते ॥
पद्माक्षैर्दशलक्षं तु सौवर्णैः कोटिरुच्यते ।
कुशग्रन्थ्या च रुद्राक्षैरनन्तफलमुच्यते' ॥

इति । अथाक्षमालामणिसंख्यामाह प्रजापतिः—

'अ[2]ष्टोत्तरशतां कुर्याच्चतुःपञ्चाशिकां तथा ।
स[3]प्तविंशतिका कार्या त[4]तो न्यूना न च स्मृता ॥
अष्टोत्तरशता माला उत्तमा सा प्रकीर्तिता ।
च[5]तुःपंचाशिका या तु मध्यमा सा प्रकीर्तिता ॥
अधमा प्रोच्यते नित्यं सप्तविंशतिसंख्यका' ॥

इति । गौतमोऽपि—

'अङ्गुष्ठं मोक्षदं विद्यात्तर्जनी शत्रुनाशिनी ।
मध्यमा धनकामायाऽनामिका पौष्टिकी त[6]था ॥

---

१. B. C. E. F. G. and H. read रजतैन्द्राक्षकैः, and I. तथा चैन्द्राक्षकैः.
२. D. G. and I. read अष्टोत्तरशतं. ३. A. and I. read सप्तविंशतिकां वाथ.
४. All others except A. read ततो नैवाधिका हिता, which contradicts the statement in the following lines. ५. All others except A. and I. read चतुःपंचाशका वत्स. As we have not got this स्मृति we do not know whether this reading is correct. ६. D. substitutes मता for तथा.

कनिष्ठा रक्षणी प्रोक्ता जपकर्माणि शोभना ।
अङ्गुष्ठेन जपे[1]ज्जप्यमन्यैरङ्गु[2]लिभिः सह ॥
अङ्गुष्ठेन विना जप्यं कृतं तदफलं भवेत्' ।

इति । गायत्रीजपं प्रशंसति व्यासः—

'दशकृत्वः प्रजप्ता सा [3]त्र्यहाद्यच्च कृतं खलु ।
तत् पापं प्रणुदत्याशु नात्र कार्या विचारणा ॥
[4]शतजप्ता तु सा देवी पापौ[5]घशमनी स्मृता ।
सहस्रजप्ता सा देवी उपपातकना[6]शिनी ॥
[7]लक्षजाप्येन च तथा महापातकनाशिनी ।
कोटिजाप्येन राजेन्द्र यदिच्छति तदाप्नुयात्' ॥

इति । यमो[8]ऽपि—

'गायत्र्या न परं ज[9]प्यं गायत्र्या न परं तपः ।
गायत्र्या न परं ध्यानं गायत्र्या न परं हुतम्' ॥

इति । मनुरपि—

'योऽधीतेऽहन्यहन्येतां त्रीणि वर्षाण्य[10]तन्द्रितः ।
स ब्रह्म परमभ्येति वायुभूतश्च मूर्तिमान्' ॥

(म. स्मृ. २. ८२)

इति । गौतमोऽपि—

---

१. I. reads जपं, and all others except A. and D. read जपन्. २. D. omits अन्यैरंगुलिभिः सह ॥ अंगुष्ठेन विना जप्यं and reads अंगुष्ठेन जपेज्जप्यं कृतं तद्फलं भवेत्. ३. G. reads अहाद्यच्च; while D. reads त्र्यहाद्यत्र, and I. is mistaken throughout. ४. D. reads शतं जप्ता. ५. D. E. G. and H. read पापौघशमना. ६. H. reads -नाशना, and D. E. and G. नाशनी. ७. D. reads लक्षजाप्ये तथा देवी. ८. D. omits अपि and the first line of the next verse. ९. G. reads जाप्यं. १०. All others except C. D. and G. read अतींद्रियः; while I. reads अतंत्रितः.

'अनेन विधिना नित्यं जपं कुर्यात् प्रयत्नतः।
प्रसन्नो विपुलान् भोगान् भुंक्ति[1] मुक्तिं च विन्दति'॥

इति[2]।

॥ इति सन्ध्या-जपयोः प्रकरणम् ॥

अथ होमविधिः। तत्र कूर्मपुराणे—

'अथागम्य गृहं विप्रः समाचम्य यथाविधि।
प्रज्वाल्य वह्निं विधिवज्जुहुयाज्जातवेदसम्'॥

(कू.पु.१.२.१८.९०)

इति। दक्षो ऽपि—

'सन्ध्याकर्मावसाने तु स्वयं होमो विधीयते।
स्वयं होमे फलं यत्स्यात्तदन्येन न लभ्यते॥
होमे यत् फलमुद्दिष्टं जुह्वतः स्वयमेव तु।
हूयमाने तदन्येन फलमर्धं प्रपद्यते॥
ऋत्विक् पुत्रो गुरुर्भ्राता भागिनेयो ऽथ विट्पतिः।
एतैरपि हुतं यत्स्यात्तद्धुतं स्वयमेव हि[3]'॥

इति। विट्पतिर्जामाता। स्वयं होम एव मुख्यः। तदभावे ऋत्विगादिहोमः। तत्र विशेषः कूर्मपुराणे दर्शितः—

'ऋत्विक् पुत्रो ऽथ वा पत्नी शिष्यो वा ऽपि सहोदरः।
प्राप्यानुज्ञां विशेषेण जुहुयुर्वा[4] यथाविधि'॥

(कू.पु.१.२.१८.९१)

इति। होतृतारतम्यं दर्शयति श्रुतिः—

१. A. reads परां for भुंक्ति. २. D. omits इति. ३. All others except A. and I. substitute तु for हि. ४. All others except A. and the text of Kûrma Purâṇa read जुहुयाद्वा.

'अन्यैः शतहुताद्धोमादेकः शिष्यहुतो वरः।
शिष्यैः शतहुताद्धोमादेकः पुत्रहुतो वरः॥
पुत्रैः शतहुताद्धोमादेको ह्यात्महुतो वरः'।

इति। ऋत्विगादिहोमे ऽपि यजमानसन्निधानेन भवितव्यम्। तदुक्तं कात्यायनेन—

'असमक्षं तु दम्पत्योर्होतव्यं नर्त्विगादिना।
द्वयोरप्यसमक्षं तु भवेद्धुतमनर्थकम्'॥
(का. स्मृ. ३.२०.१)

इति। उभयोः सन्निधानं मुख्यम्। तदभावे त्वेकतरसन्निधानेनापि होतुं शक्यम्। तथा च स एवाह—

'निक्षिप्याग्निं स्वदारेषु परिकल्प्यार्त्विजं तथा।
प्रवसेत् कार्यवान् विप्रो वृथैव न चिरं वसेत्'॥
(का. स्मृ. २.११.१)

इति। होमकालो ऽपि तेनैव दर्शितः—

'यावत्सम्यङ् न भाव्यन्ते नभस्यृक्षाणि सर्वतः।
लोहितत्वं च नापैति तावत् सायं तु हूयते'॥
(का. स्मृ. १.९.३)

---

१. All others except A. and I. omit the first line of this verse, and read as follows:—

अन्यैः शतहुताद्धोमादेकः पुत्रहुतो वरम्।
पुत्रैः शतहुताद्धोमादेको ह्यात्महुतो वरम्॥

But D. substitutes शिष्यहुतो वरम् for पुत्रहुतो वरम्, and the omitted line appears in the marginal correction of H. २. D. reads यदुक्तं for तदुक्तं. ३. A. omits उभयोः सन्निधानं मुख्यं, तदभावे त्वेकतरसन्निधानेनापि होतुं शक्यम्। तथाच स एवाह and reads प्रवासे विशेषमाह स्मृतिः in its stead. ४. D. omits च. ५. A. and I. read विभाव्यन्ते for न भाव्यन्ते. ६. The text of Kâtyâyana reads नच लौहित्यमापैति. ७. G. reads जुहूयते, which is incorrect.

इति । आपस्तम्बो ऽपि–

'समुद्रो वा एष [1]यदहोरात्रः तस्यैते गाधतीर्थे यत्सन्धी तस्मात् सन्धौ होतव्यम्–इति [2]शैलालिब्राह्मणं भवति । नक्षत्र दृष्ट्वा प्रदोषे निशायां [3]वा सायम्' ।

इति । समुद्रत्वेन निरूपितस्याहोरात्रस्य सन्धिद्वयं [4]सुप्रवेशं तीर्थं तस्मात् सन्धिर्होमकालः–इति मुख्यः कल्पः । नक्षत्रदर्शनादयस्त्रयः कालाः सायंहोमे ऽनुकल्पाः । एकनक्षत्रोदयो नक्षत्रदर्शनं, सर्वनक्षत्रोदयः प्रदोषः, निद्रावेला निशा । प्रातर्होमकालो ऽपि चतुर्विधस्तेनैव दर्शितः–

'उपस्युषोदयं समयाध्युषिते प्रातः' ।

इति । मनुस्तु प्रथम-द्वितीयावेकीकृत्य कालत्रयमाह–

'उदते ऽनुदिते चैव समयाध्युषिते तथा ।
सर्वथा वर्त्तते यज्ञ इतीयं वैदिकी श्रुतिः' ॥
(म. स्मृ. २.१५)

इति । एतेषां लक्षणमाह [5]व्यासः–

'[6]रात्र्यास्तु षोडशे भागे ग्रह-नक्षत्रभूषिते ।
[7]काले त्वनुदितं प्राहुर्होमं कुर्याद्विचक्षणः ॥

१. B. C. E. F. G. and H. read य अहोरात्रस्तस्यैते गाधे तीर्थे यत्सन्धी; while D omits य and reads अहोरात्रस्तस्यै ते तीर्थे यत्सन्निधिः. २. I. reads कात्यायन- for शैलालि.– ३. D. substitutes च for वा. ४. D. reads सुप्रदेशं. ५. All the manuscripts show that the following quotation is from Vyâsa, but elsewhere it is said to be a quotation from Kâtyâyana (see Râmchandra's Commentary on Manu, 2. 15). ६. All manuscripts except A. read रात्रेः षोडशमे, which is incorrect. ७. A. reads काले त्वनुदिते प्रातः, I. reads कालं त्वनुदितं प्राहुः, and elsewhere the reading is कालं चानुदितं ज्ञात्वा.

त[1]था प्रभातसमये नष्टे नक्षत्रमण्डले ।
र[2]विर्यावन्नदृश्येत स[3]मयाध्युषितं च तत् ॥
रेखामा[4]त्रस्तु दृश्येत रश्मिभिस्तु समन्वितः ।
उदितं तं विजानीयात् तत्र होमं प्रकल्पयेत्' ॥

इति । आश्वलायनस्तु अनुकल्पान्तरमाह—

'आ[5]सङ्गवान्तः प्रातः' ।

इति । होमकालः—इत्यनुवर्त्तते । अथवा सर्व एवैते कालविशेषा य[6]थाशाखं मुख्यतयैव व्यवतिष्ठन्ते । उदितानुदितहोमवत् । यदा तु कथञ्चिन्मुख्यकालातिक्रमः तदा गोभिलोक्तं द्रष्टव्यम्—

'अथ यदि गृह्येऽग्नौ सायंप्रातर्होमयोर्दर्शपौर्णमासयोर्वा[7] हव्यं होतारं वा[8] नाधिगच्छेत् कथंकुर्यादिति । आसायमाहुतेः प्रातराहुतिर्नात्येत्याप्रातराहुतेः सायमाहुतिः अमावास्यायाः पौर्णमासी नात्येत्यापौर्णमास्यमावास्या' ।

इति । बौधायनोऽपि—

'आ[9] सायं कर्मणः प्रातरा प्रातः सायकर्मणः ।
आहुतिर्नातिपद्येत पार्वणं पार्वणान्तरात्' ॥

इति । आपन्नस्तु पक्षहोमं कुर्यात् । तथा च मरीचिः—

---

१. A. reads तथा च प्रातःसमये, and G. ततः प्रभातसमये. २. D. reads रविर्यावन्नु दृश्येत, which seems incorrect. ३. All others except A. and D. read समयाध्युषितस्तु सः. ४. A. reads रेखामात्रश्च. ५. D. G. and H. read सङ्गवान्तः for आसङ्गवान्तः, and the same I. reads आसङ्गवान्तं. ६. All others except A. and I. read यथासुखं. ७. D. E. G. and H. omit वा. ८. B. C. and F. read हव्यं वा होतारं, वा, D. E. G. and H. हव्यं होतारं नाधिगच्छेत्. ९. All others except A. D. and I. read असायकर्मणः for आ सायं कर्मणः.

'शरीरापद्भवेद् यत्र भयाद्वाऽऽर्त्तिः प्रजायते।
तथाऽन्यास्वपि चापत्सु पक्षहोमो विधीयते'॥

इति। पक्षहोमिनः तत्पक्षमध्ये आपन्निवृत्तौ तदाप्रभृति पुनर्होमः कर्त्तव्यः। तदाह मरीचिः—

'पक्षहोमानथो कृत्वा गत्वा तस्मात् निवर्त्तितः।
होमं पुनः प्रकुर्यात्तु न चासौ दोषभाग्भवेत्'॥

इति। एवं होममनुतिष्ठतापि[1] सीमोल्लङ्घने कृते पुनराधानं कर्त्तव्यम्। तदाह कात्यायनः—

'विहायाग्निं सभार्यश्चेत् सीमामुल्लंघ्य गच्छति।
होमकालात्यये तस्य पुनराधानमिष्यते'॥

(का. स्मृ. ३.२०.२.)

इति। होमकालानत्यये तु[2] नास्ति पुनराधानम्। तदाह शौनकः—

'प्रोषिते तु यदा पत्नी यदि[3] ग्रामान्तरं व्रजेत्।
होमकाले यदि प्राप्ता न सा दोषेण युज्यते'॥

इति। होमद्रव्यमाह स एव—

'कृतमोदनसक्त्वादि तण्डुलादि कृताकृतम्।
व्रीह्यादि चाकृतं[4] प्रोक्तमिति हव्यं त्रिधा बुधैः॥
हविष्येषु यवा मुख्यास्तदनु व्रीहयः स्मृताः।
अभावे व्रीहि-यवयोर्दध्ना वा पयसाऽपि वा॥

---

१. I. reads होमानुष्ठितावपि, while all others except A. omit अपि. २. D. omits the portion from तु नास्ति to -सक्त्वादि, and reads होमकालानित्यादि तण्डुलादि कृताकृतम्. ३. A. reads पुनः for यदि. ४. All others except A. and I. substitute तु for च.

तदभावे यवाग्वा वा जुहुयादुदकेन वा ।
यथोक्तवस्त्वसंप्राप्तौ ग्राह्यं तदनुकारि[1] यत् ॥
यवानामिव गोधूमा व्रीहीणामिव शालयः ।
आज्यं हव्यमनादेशे आहुतीषु[2] विधीयते ॥
मन्त्रस्य देवतायास्तु प्रजापतिरिति स्थितिः ।

इति । आहुतिपरिमाणमाह बृहस्पतिः[3]—

'प्रस्थधान्यं चतुःषष्टिराहुतेः[4] परिकीर्त्तितम् ।
तिलानां तु तदर्द्धं स्यात् तदर्द्धं स्याद् घृतस्य तु'[5] ॥

इति । बौधायनोऽपि—

'व्रीहीणां वा यवानां वा शतमाहुतिरिष्यते' ।

इति । होमप्रकारः स्वगृह्योक्तविधिना द्रष्टव्यः । तदुक्तं गृह्यपरिशिष्टे—

'स्वगृह्योक्तेन विधिना होमं कुर्याद्यथाविधि' ॥

इति । विष्णुरपि[6]—

'बहुशुष्केन्धने चाग्नौ सुसमिद्धे हुताशने ।
विधूमे लेलिहाने च होतव्यं कर्मसिद्धये ॥
यो ऽनर्चिषि जुहोत्यग्नौ व्यङ्गारे[7] चैव मानवः ।
मन्दाग्निरामयावी च दरिद्रश्चोपजायते' ॥

(का. स्मृ. १.९.१२)

इति । एतच्च ज्ञात्वैवानुष्ठेयम् । अन्यथा दोषश्रवणात् । तदाहाङ्गिराः—

१. All others except A. and I. read तदनुसारि च. २. Except A. and G. all others read जुहोतिषु, which is grammatically incorrect. ३. A. and I. read वृद्धबृहस्पतिः. ४. D. reads चतुःषष्ठेराहुतेः. ५. D. reads घृतस्य तु तदर्धकम्. ६. A. omits विष्णुरपि. ७. D. reads ऽव्यंगारे.

'स्वाभिप्रायकृतं कर्म यत्किञ्चित् ज्ञानवर्जितम्।
क्रीडाकर्मैव[१] बालानां तत्सर्वं निष्प्रयोजनम्' ॥

इति। चतुर्विंशतिमते—

'हतं ज्ञानं क्रियाहीनं हतास्त्वज्ञानिनः[२] क्रियाः।
अपश्यन्नन्धको दग्धः पश्यन्नपि च पङ्गुलः[३]' ॥

इति। श्रौत[४]-स्मार्त्तयोरग्निव्यवस्थामाह याज्ञवल्क्यः—

'कर्म स्मार्त्तं विवाहाग्नौ कुर्वीत प्रत्यहं गृही।
दायकालाहृते वाऽपि श्रौतं वैतानिकाग्निषु' ॥
(या. स्मृ. १.९७)

इति। वैतानिका गार्हपत्यादयः। यस्य पुनःश्रौत-स्मार्त्ताग्निद्वयं तस्यानुष्ठानप्रकार[५]माह भरद्वाजः—

'होमं वैतानिकं कृत्वा स्मार्त्तं कुर्याद्विचक्षणः।
स्मृतीनां वेदमूलत्वात् स्मार्त्तं केचित् पुरा विदुः' ॥

इति। शातातपोऽपि—

'श्रौतं यत्[६] तत् स्वयं कुर्यादन्योऽपि स्मार्त्तमाचरेत्।
अशक्तौ श्रौतमप्यन्यः कुर्यादाचारमन्ततः' ॥

इति। उक्तस्याग्नेर्नित्यतामाह गर्गः—

'कृतदारो नैवं[७] तिष्ठेत् क्षणमप्यग्निना विना।
तिष्ठेत चेद्द्विजो व्रात्यस्तथा च पतितो भवेत्' ॥

---

१. A. reads -कर्म च. २. I. reads अज्ञानतः. ३. I. reads पङ्गुकः. ४. A. and I. read श्रौत-स्मार्तयोरपि for श्रौत-स्मार्तयोरग्नि-, and E. omits the portion from श्रौत-स्मार्त-........ to स्मार्ताग्निद्वयं and D. is mistaken throughout. ५. A. reads -व्यवस्था- for -प्रकार-. ६. All others except A. and I. read श्रौतं यत् स्यात्. ७. All others except A. and I. read न वै for नैव.

'यथा स्नानं यथा भार्या वेदस्याध्ययनं यथा ।
तथैवोपासनं दृष्टं नोऽऽतिष्ठेत्तद्वियोगतः' ॥

इति । सत्यां वैदिकानुष्ठानशक्तौ न स्मार्त्तमात्रेण परितुष्येत् । तदाह स एव—

'यो वैदिकमनादृत्य कर्म स्मार्त्तैतिहासिकम् ।
मोहात् समाचरेद्विप्रो न स पुण्येन युज्यते ॥
प्रधानं वैदिकं कर्म गुणभूतं तथेतरत् ।
गुणनिष्ठः प्रधानं तु हित्वा गच्छत्यधोगतिम्' ॥

इति । अशक्तं प्रति व्यास आह—

'श्रौतं कर्तुं न चेच्छक्तः कर्म स्मार्त्तं समाचरेत् ।
तत्राप्यशक्तः करणे सदाचारं लभेद्बुधः' ॥

इति । होमं प्रशंसत्यङ्गिराः—

'यो दद्यात् काञ्चनं मेरुं पृथिवीं च ससागराम् ।
तत् सायं प्रातर्होमस्य तुल्यं भवति वा न वा' ॥

इति । होमान्ते भस्म धार्यम् । तदाह बृहस्पतिः—

'नर्यं भस्माग्निहोत्रान्ते धार्यमेवाग्निहोत्रिभिः ।
अनाहिताग्नेर्ब्रह्माख्यमौपासनसमुद्भवम्' ॥

इति । 'हुत्वा चैव तु भस्मना' इत्यादि स्मृत्यन्तरं च ।

## ॥ इति होमप्रकरणम् ॥

१. All others except A. and D. read न तिष्ठेत्तद्योगतः. २. I. reads सत्यामपि. ३. I. reads परितुष्येत. ४. All others except A. and I. read स्मार्तेतिहासिकम्. ५. I. reads श्रोतुं कर्तुं न चेच्छक्तः कर्म. ६. All others except A. and I. read अत्राप्यशक्तः. ७. A. and I. read सायंप्रातर्होमस्य. The metre of the verse according to our reading is not observed, but it is not of much importance. ८. The portion from होमान्ते to स्मृत्यन्तरं च is omitted by all others except A. and I.

तदेवं 'सन्ध्या स्नानं जपो होमः'– इत्यस्मिन्मूलवचने होमान्तानि कर्माणि निरूपितानि । तान्येतान्यष्टधा विभक्तस्य दिनस्य[1] प्रथमभागे समापनीयानि । यद्यपि मध्याह्नस्नानादीनि निरूपितानि तथापि तेषां प्रातःस्नानादिप्रसङ्गेन निरूपितत्वात्[2] आद्यभागे न कर्त्तव्यता । दिवसस्याष्टधा विभागं तत्र कर्त्तव्यविशेषं च दक्षो[3] दर्शयति–

'दिवसस्याद्यभागे[4] तु कृत्यं तस्योपदिश्यते ।
द्वितीये च तृतीये च चतुर्थे पञ्चमे तथा ॥
षष्ठे च सप्तमे चैव अष्टमे च पृथक् पृथक् ।
विभागेष्वेषु[5] यत् कर्म तत् प्रवक्ष्याम्यशेषतः' ॥

(द. स्मृ. २. ३–४)

इत्यादिना ।

अथ मूलवचनानुसारेण देवतापूजनं वक्तव्यम्[6] । तच्च पूजनं प्रातर्होमानन्तरम्–इति केचित् । तदाह[7] मरीचिः–

'विधाय देवतापूजां प्रातर्होमादनन्तरम्'।

इति ।

---

१. D. omits दिनस्य. २. A. reads -नाभिहितत्वात्; while all others ept D. read निरूपितानां. ३. All others except A. D. and H. omit दक्षः, but the following quotation we find in the Daksha Smriti. If the word दक्ष is omitted, the two verses in the quotation would appear to have been from the Parâshar Smriti, but we do not find the same in that Smriti. ४. B. C. E. G. and H. read दिवसस्याष्टभागे, but it seems incorrect. ५. All others except A. and I. read विभागेष्वेव for विभागेष्वेषु. ६. D. and I. read कर्तव्यम्, which is quite useless. ७. I. reads तथा च for तदाह; while D. omits the following—केचित् तदाह मरीचिः—

'विधाय देवतापूजां प्रातर्होमादनन्तरम् । इति.'

ब्रह्मयज्ञजपानन्तरम्—इत्यन्ये । तथा च हारीतः—

'कुर्वीत देवतापूजां जपयज्ञादनन्तरम्' ।

इति । कूर्मपुराणे ऽपि—

'निष्पीड्य स्नानवस्त्रं वै समाचम्य च वाग्यतः ।
स्वैर्मन्त्रैरर्चयेद्देवान् पत्रैः पुष्पैस्तथाऽम्बुभिः' ॥[1]

(कू. पु. १.२.१८.९०)

इति । तत्र[2] वयं जपयज्ञानन्तरं देवपूजां निरूपयिष्यामः । प्रातर्होमादनन्तरभावीनि[3] ब्रह्मयज्ञान्तानि मूलवचनानुक्तान्यप्याह्निककर्मप्राप्तत्वात्तान्युच्यन्ते[4] । होमानन्तरकृत्यमाह दक्षः—

'देवकार्यं ततः कृत्वा गुरु-मङ्गलवीक्षणम्' ॥

(द. स्मृ. २. २३)

इति । मङ्गलमादर्शादि । तदुक्तं मत्स्यपुराणे[5]—

'रोचनां[6] चन्दनं हेम मृदङ्गं दर्पणं मणिम् ।
गुरुमग्निं च सूर्यं च प्रातः पश्येत् सदा बुधः' ॥

इति । विष्णुपुराणे ऽपि—

'स्वाचान्तश्च[7] ततः कुर्यात् पुमान् केशप्रसाधनम् ।
आदर्शाञ्जन-माङ्गल्य-दूर्वाद्यालम्भनानि च' ॥[8][9]

(वि. पु. ३.११.२१)

---

१. D. reahs

निष्पीड्य स्नानवस्त्राणि समाचम्य च वाग्यतः ।
देवतां पूजयेद्भूपैर्मन्त्रैः पुष्पैस्तथाम्बुभिः ॥

२. I. reads ततः for तत्र, and B. C. F. and I. omit वयं. ३. D. and I. read होमानन्तरभाविनि. ४. D. reads आह्निककर्मत्वेन प्राप्तत्वात्. ५. C. and F. read कूर्मपुराणे; while B. D. E. G. and H. read only पुराणे. ६. B. C. and F. read रोचना; while I. reads रोचनं. ७. The text of Vishṇu Purâṇa reads आचांतश्च. ८. B. C. and F. read आदर्शाजिन-. ९. C. D. and G. read -पूर्वाद्या-, which appears probably to be a mistake.

इति। ब्रह्मपुराणे[1] अपि—

'स्वमात्मानं तु[2] घृते पश्येद्यदीच्छेच्चिरजीवितम्'।

इति। नारदो अपि—

'लोके ऽस्मिन्मङ्गलान्यष्टौ ब्राह्मणो गौर्हुताशनः।
हिरण्यं सर्पिरादित्य आपो राजा तथाऽष्टमः॥
एतानि सततं पश्येत् नमस्येदर्चयेच्च[3] यः।
प्रदक्षिणं च कुर्वीत तथा ह्यायुर्न[4] हीयते'॥
(ना. स्मृ. १७.५४-५५)

इति। मनुरपि—

'अग्निचित् कपिला सत्री राजा भिक्षुर्महोदधिः।
दृष्टमात्राः पुनन्त्येते तस्मात् पश्येत नित्यशः'।

इति। वामनपुराणे अपि—

'होमं च कृत्वाऽऽलभनं शुभानां
ततो[5] बहिर्निर्गमनं प्रशस्तम्।
दूर्वां[6] च सर्पिर्दधि सोदकुम्भम्
धेनुं सवत्सां वृषभं सुवर्णम्॥
मृद्गोमयं स्वस्तिकमक्षतांश्च
तैलं[7] मधु ब्राह्मणकन्यकां[8] च।

१. H. and I. omits अपि. २. H. reads स्वात्मानं च, and G. स्वात्मानं तु. ३. The text of Nârada reads -दर्चयेत्स्वयम्. ४. B. C. and F. read तस्य ह्यायुर्न हीयते; while the text of Nârada reads यथा ऽस्यायुः प्रवर्धते, and D. reads तथा ह्यायुर्हि वर्धते. ५. The text of the Vâman Purâṇa reads कृत्वा for ततः, and A. तथा for the same. ६. D. substitutes दुग्धं for दूर्वां, and the text of Vâman Purâṇa दूर्वां दधि सर्पिरथोदकुंभम्, and B. C. E. F. G. दूर्वां च सर्पिर्दधि चोदकुंभम्. ७. B. C. E. F. G. and H. read चैलं. ८. D. reads ब्राह्मणकंचुकां च

श्वेतानि पुष्पाणि तथा शमीं च
हुताशनं चन्दनमर्कबिम्बम् ।
अश्वत्थवृक्षं च समालभेत
ततश्च कुर्यान्निजजातिधर्मम्' ॥

( वा. पु. १४. ३५-३६ )

इति । भरद्वाजोऽपि—

'कण्डूय पृष्ठतो[1] गां तु कृत्वा चाश्वत्थवन्दनम् ।
उपगम्य गुरून् सर्वान् विप्रांश्चैवाभिवादयेत्' ॥

इति । ब्राह्मणसमवाये प्रथमं कस्याभिवादनमित्याकाङ्क्षायामाह मनुः—

'लौकिकं वैदिकं वाऽपि तथाऽऽध्यात्मिकमेव च[2] ।
आददीत यतो ज्ञानं तं पूर्वमभिवादयेत्' ॥

( म. स्मृ. २. ११७)

इति । अभिवादनकाले स्वं नाम कीर्त्तयेदित्याह स एव—

'अभिवादात् परं[3] विप्रो ज्यायांसमभिवादयन् ।
असौ नामाऽहमस्मीति स्वं नाम परिकीर्त्तयेत् ॥
भोःशब्दं[4] कीर्त्तयेदन्ते स्वस्य[5] नाम्नोऽभिवादने' ।

( म. स्मृ. २. १२२–२४ )

---

१. A. reads पृष्ठगां गां तु; while B. C. F. substitute तु in the place of च.
२. D. E. G. H. and I. substitute वा for च. ३. D. reads—

अभिवादन् पुरो विप्रं ज्यायांसमभिवादयेत्.

४. All others except A. omit Visarga and read भोशब्दं. ५. I. reads स्वस्वनाम्नाभिवादनम्; while all others except A. and the text of Manu read स्वस्व for स्वस्य.

इति। 'अभिवादात् परं' इति अभिवादये—इति शब्दमुच्चार्य पश्चादेतन्नामाऽहं भोः— इति शब्दमुच्चारयेदित्यर्थः । अभिवादनप्रकारमाहापस्तम्बः—

'दक्षिणं बाहुं श्रोत्रसमं प्रसार्य ब्राह्मणो
ऽभिवादयीत[1] । उरःसमं राजन्यो मध्यसमं
वैश्यः नीचैः शूद्रः (१६) प्राञ्जलिः' ।

(आ. ध. सू. १. २. ५. १६–१७)

इति । एकहस्तेनाभिवादनं निषेधति विष्णुः—

'जन्मप्रभृति[2] यत्किञ्चिच्चेतसा धर्ममाचरेत् ।
सर्वं तन्निष्फलं याति ह्येकहस्ताभिवादनात्' ॥

(म. स्मृ. २. ११८)

इति । एतच्च प्रत्युत्थाय कर्त्तव्यम् । तदाह मनुः[3]—

'ऊर्ध्वं प्राणाह्युत्क्रामन्ति यूनः स्थविर आगते ।
प्रत्युत्थानाभिवादाभ्यां पुनस्तान् प्रतिपद्यते' ॥

(म. स्मृ. २. १२०)

इति । अभिवादितेन वक्तव्यामाशिषमाह स[4] एव—

१. I. reads अभिवादयेत. २. This verse is found in Manu, but three of the seven commentators on Manu has commented it. ३. Here our reading follows only A.; while all others read आपस्तम्बः for मनुः. We made a search for the verse in the Âpas-tamba Dharma Sûtra and Smriti, but we have not found it therein. ४. Here all others except A. read मनुः for स एव, but if the above quotation from Manu then there is no necessity of the word मनुः here.

'आयुष्मान् भव सौम्येति वाच्यो विप्रो ऽभिवादने ।
अकारश्चास्य नाम्नो ऽन्ते वाच्यः पूर्वाक्षरः प्लुतः' ॥
(म. स्मृ. २. १२५)

इति । पूर्वमक्षरं यस्यासौ पूर्वाक्षरः । पूर्वमक्षरं च सामर्थ्यात् व्यञ्जनम् । स्वराणां स्वरपूर्वकत्वासम्भवात् । ततश्च अभिवादकनामगतो व्यंजननिष्ठो ऽन्तिमस्वरः प्लावनीयः । अकारेणान्तिमस्वरमात्रमुपलक्ष्यते । अशेषनाम्नामकारान्तत्वासम्भवात् । तथा च सति एवं प्रयोगो भवति, आयुष्मान् भव सौम्य देवदत्ता ३-इति । यस्तु प्रत्यभिवादनप्रकारं न जानाति स नाभिवाद्य इत्याह स एव-

'यो न वेत्त्यभिवादस्य विप्रः प्रत्यभिवादनम् ।
नाभिवाद्यः स विदुषा यथा शूद्रस्तथैव सः' ॥
(म. स्मृ. २. १२६)

इति । यस्तु जानन्नपि न प्रत्यभिवादनं करोति तस्य दोषो भविष्यत्पुराणे दर्शितः-

'अभिवादे कृते यस्तु न करोत्यभिवादनम् ।
आशिषं वा कुरुश्रेष्ठ स याति नरकान् बहून्' ॥

इति । यमो ऽपि-

१. All others read आकार- except A. I. and the text of मनु. This reading appears better, but the commentators of Manu do not accept it. २. D. and G. read पूर्वाक्षरप्लुतः. ३. I. reads नामस्थ- for सामर्थ्यात्. ४. All others except A. and I. read आकारेण. ५. The intermediate portion between अशेषनाम्नामका-,and स्थं पश्चाच्चाख्यं कलाभृतां (P. 325, L. 18) appears to be omitted in D. through writer's mistake.

'अभिवादे तु यः पूर्वमाशिषं न प्रयच्छति।
यद्दुष्कृतं भवेदस्य[1] तस्माद्भागं प्रपद्यते॥
तस्मात् पूर्वाभिभाषी[2] स्याच्चण्डालस्यापि धर्मवित्।
सुरां[3] पिबेति वक्तव्यमेवं धर्मो न हीयते॥
स्वस्तीति ब्राह्मणो[4] ब्रूयादायुष्मानिति भूमिपः।
वर्धतामिति वैश्यस्तु शूद्रस्तु स्वागतं वदेत्'॥

इति। मनुरपि—

'ब्राह्मणं कुशलं पृच्छेत् क्षत्रबन्धुमनामयम्।
वैश्यं क्षेमं समागम्य शूद्रमारोग्यमेव च॥ (१२७)
परपत्नी तु या स्त्री स्यादसम्बन्धा च योनितः।
तां ब्रूयाद्भवतीत्येवं सुभगे भगिनीति च'॥ (१२९)
(म. स्मृ. २. १२७-१२९)

इति। 'ज्यायांसमभिवादयेत्' (म. स्मृ. २. १२२) इत्युक्तं तत्र कियता कालेन ज्यायस्त्वमित्यपेक्षिते आह[5] आपस्तम्बः—

'त्रिवर्षपूर्वः श्रोत्रियोऽभिवादनमर्हति'।
(आ. ध. सू. १. ४. १४. १३)

इति। मनुरपि—

'दशाब्दाख्यं पौरसख्यं[6] पञ्चाब्दाख्यं कलाभृताम्।
त्र्यब्दपूर्वं[7] श्रोत्रियाणामल्पेनापि[8] स्वयोनिषु'॥
(म. स्मृ. २.१३५)

---

१. F. reads भवेत्तस्य; while G. reads भवेद्यस्य. २. B. C. and F. read प्रत्यभिभाषी for पूर्वाभिभाषी. ३. E. reads जरां पिबेति. ४. A. reads ब्राह्मणं for ब्राह्मणः, and I. reads the whole verse as follows:—

स्वस्तीति ब्राह्मणे ब्रूयात् आयुष्मानिति राजनि।
धनवानिति वैश्ये तु शूद्रे त्वारोग्यमेव च॥.

५. H. omits this word. ६. G. reads -सखं. ७. E. and G. read अब्दपूर्वं. ८. The text of Manu reads स्वल्पेनापि, and G. H. read मध्येनापि.

इति। समानपुरवासिनां दशभिः वर्षैः पूर्वः सखा भवति। ततो ऽधिको ज्यायान्। कलाभृतां गीतादिविद्यावतां पञ्चाब्द-पूर्वःसखा। श्रोत्रियाणां वेदाध्यायिनां त्र्यब्दपूर्वः सखा भवति। ततो ऽधिको ज्यायान्। स्वयोनिषु भ्रात्रादिषु सर्वेषु स्वल्पेनापि वयसा पूर्वः सखा भवति। ततो ऽधिको ज्यायानित्यर्थः।

ननु—'एते मान्याः' (या. स्मृ. १. ३५) इत्यृत्विगादीनां याज्ञवल्क्येन पूज्यत्वाभिधानाद् यवीयसामपि तेषामभिवादनं प्राप्तं—इति चेत्। तन्न। प्रत्युत्थान-सम्भाषणाभ्यां मान्यत्वसिद्धेः। अत एव तेषामनभिवाद्यत्वमाह गौतमः—

'ऋत्विक्-श्वशुर-पितृव्य-मातुलानां
तु यवीयसां प्रत्युत्थानाभिवादनम्'।
(गौ. स्मृ. ६. ४)

इति। अभिवादनं अभिभाषणम्। यथा च बौधायनः—

'ऋत्विक्-श्वशुर-पितृव्य-मातुलानां तु
यवीयसां प्रत्युत्थानाभिभाषणम्'।
(बौ. स्मृ. १. २. ३. ४५)

१. H. omits कलाभृतां गीतादिविद्यावतां पंचाब्दपूर्वः सखा। श्रोत्रियाणां वेदाध्यायिनां त्र्यब्दपूर्वः सखा भवति। ततो ऽधिको ज्यायान्. This appears to be omitted through writer's mistake. २. I. omits गीतादि-. ३. G. and I. read -मभिवाद्यत्व-for -मनभिवाद्यत्व-. ४. D. and G., omit तु. ५. D. reads प्रत्युत्थानाभिभाषणम्. This reading is better, and if the same is taken there seems no necessity of the author's definition which he further gives of the word अभिवादनं. The text of Gautama reads प्रत्युत्थानमनभिवाद्याः. ६. I. reads तथा and omits च; while all others except A. read तदाह for यथा च. D. omits the whole quotation from तथा च............ to अभिभाषणम्। इति।.

इति । एतच्च ब्राह्मणविषयम् । तथा च शातातपः—

'अभिवाद्यो नमस्कार्यः शिरसा वन्द्य एव च ।
ब्राह्मणः क्षत्रियाद्यैस्तु श्रीकामैः सादरं सदा ॥
नाभिवाद्यास्तु विप्रेण क्षत्रियाद्याः कथञ्चन ।
ज्ञान-कर्म-गुणोपेता यद्यप्येते बहुश्रुताः ॥
अभिवाद्य द्विजः शूद्रं सचैलं स्नानमाचरेत् ।
ब्राह्मणानां शतं सम्यगभिवाद्य विशुद्ध्यति' ॥

इति । विष्णुरपि—

'सभासु चैव सर्वासु[1] यज्ञे राजगृहेषु च ।
नमस्कारं प्रकुर्वीत ब्राह्मणान्नाभिवादयेत्' ॥

इति । गुर्वादौ तूपसंग्रहणमाह[2] गौतमः—

'गुरोः पादोपसंग्रहणं प्रातः' ।

(गौ. स्मृ. १. ११)

इति । गुरुरत्राचार्यः । यतः स एवाह—

' मातृ-पितृ-तद्बन्धूनां पूर्वजानां[3] विद्यागुरूणां तद्गुरूणां च'।

(गौ. स्मृ. १. १९)

इति । उपसङ्ग्रहणलक्षणं मनुराह—

'व्यत्यस्तपाणिना कार्यमुपसंग्रहणं गुरोः ।
सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन च दक्षिणः'॥

(म. स्मृ. २. ७२)

---

१. D. reads सर्वत्र मुदा. २. H. and I. read गुर्वादेरुपसंग्रहणम्. ३. I. reads पूर्वजातानां.

इति । गुरोः सव्य-दक्षिणौ पादौ स्वकीयसव्य-दक्षिणाभ्यां पाणिभ्यां[1] स्प्रष्टव्यौ इत्यर्थः। बौधायनो ऽपि—

'श्रोत्रे[2] संस्पृश्य मनः[3] समाधायाधस्ताज्जान्वोरा पद्भ्याम्[4]' ।

( बौ. स्मृ. १. २. ३. २७ )

इति । उपसंग्रहणं कुर्यादिति शेषः । एतच्च गुरुपत्नीनामपि कार्यम् । तथा च मनुः—

' गुरुवत् प्रतिपूज्याः स्युः सवर्णा गुरुयोषितः ।
असवर्णास्तु सम्पूज्याः प्रत्युत्थानाभिभाषणैः॥ (२१०)
भ्रातृभार्योपसंग्राह्या सवर्णा ऽहन्यहन्यपि ।
विप्रोष्य तूपसंग्राह्या ज्ञाति-सम्बन्धियोषितः ॥(१३२)

( म. स्मृ. २. १३२–२१० )

इति । एवमविशेषेणोपसंग्रहणे प्राप्ते कचिदपवादमाह स एव-

'गुरुपत्नी तु युवतिर्नाभिवाद्येह पादयोः ।
पूर्णविंशतिवर्षेण गुण-दोषौ विजानता । (२१२)
अभ्यञ्जनं स्नापनं च गात्रोद्वर्त्तनमेव[5] च ।
गुरुपत्न्या न कार्याणि केशानां च प्रसाधनम्[6] । (२११)

(म. स्मृ. २. २११–२१२)

इति । किं तर्हि तत्र कर्त्तव्यमित्यपेक्षिते स एवाह—

---

१. पाणिभ्यां is omitted by all others except A. and I. २. D. reads श्रोत्रं for श्रोत्रे. ३. The text of Baudhâyana (edited by E. Hultzsch) reads मनःसमाधानार्थम्, but this is a mistake, neither the commentator on the text does allow this reading nor our manuscripts follow it. ४. B. C. and F. read -रापीड्यम्. Here I. is quite mistaken in adding the word उपसंग्रहणम् to the quotation of Baudhâyana. ५. I. reads गात्रोत्सादन-, but except A. all others read गात्रोद्वाहन-. ६. D. reads प्रकाशनम्.

'कामं तु गुरुपत्नीनां युवतीनां युवा भुवि ।
विधिवद्वन्दनं कुर्यादसावहमिति ब्रुवन् ॥
विप्रोष्य पादग्रहणमन्वहं चाभिवादनम् ।
गुरुदारेषु कुर्वीत सतां धर्ममनुस्मरन्' ॥
(म. स्मृ. २. २१६–२१७)

इति । अभिवादने वर्ज्यानाह आपस्तम्बः—

'न सोपानद्वेष्टितशिरा अनवहितपाणिर्वाऽभिवादयीत'।
(आ. ध. सू. १. ४. १४. २२)

इति । शङ्खोऽपि—

'नोदकुम्भहस्तोऽभिवादयेत् न भैक्ष्यं चरन्न पुष्पान्नहस्तो नाशुचिः न जपन्न देव-पितृ-कार्यं कुर्वन् न शयानः' ।

इति । आपस्तम्बोऽपि—

'तथा विषमगतायाऽगुरवे नाभिवाद्यम् । (१८) तथा अप्रयताय । (१९) अप्रयतश्च न प्रत्यभिवदेत् । (२०) प्रतिवयसः स्त्रियः' । (२१)
(आ. ध. सू. १. ४. १८–२१)

१. G. reads विप्रोऽप्यपादग्रहणम्. २. A. and D. read अवहित-. ३. C. and F. read अभिवादयेत. ४. All others except A. and I. omit न. ५. D. reads रक्तपुष्पां न हस्तेनाशुचिम् for न पुष्पान्नहस्तो नाशुचिः. ६. G. omits through mistake—

'न देव पितृकार्यं कुर्वन् न शयानः'—इति । आपस्तम्बोऽपि—'तथा विषमगताया ऽगुरवे नाभिवाद्यम् । (१८) तथाऽप्रयताय । (१९) अप्रयतश्च न प्रत्यभिवदेत् । (२०) प्रतिवयसः—।.

७. Except all others read विषमगताय गुरवे, but we follow the text of Apastamba Dharma Sûtra. ८. All others except A. D. and the text of Apastamba Dharma Sûtra read प्रत्यभिवादयेत्. ९. D. reads पतिः सवयस स्त्रियः, and the text of Apastamba Dharma Sûtra (edited by G. Buhler) reads पतिवयसः.

इति । तथाऽन्यत्र स एवाह—

'समित्-पुष्प-कुशा-ऽज्याम्बु-मृदन्नाऽक्षतपाणिकः ।
जपं होमं च कुर्वाणो नाभिवाद्यस्तथा द्विजः ॥
पाषण्डं पतितं व्रात्यं महापातकिनं शठम् ।
नास्तिकं च कृतघ्नं च नाभिवादेत् कथञ्चन ॥
धावन्तं च प्रमत्तं च मूत्रोच्चारकृतं तथा ।
भुञ्जानमातुरं नाहं नाभिवादेत् द्विजोत्तमः ॥
वमन्तं जृम्भमाणं च कुर्वतं दन्तधावनम् ।
अभ्यक्तशिरसं चैव स्नास्यन्तं नाभिवादयेत् ॥
स्रुक्-पाणिकमविज्ञातमशक्तं रिपुमातुरम् ।
योगिनं च तपःसक्तं कनिष्ठं नाभिवादयेत्' ॥

इति । शातातपोऽपि—

'उदक्यां सूतिकां नारीं भर्तृघ्नीं गर्भघातिनीम् ।
अभिवाद्य द्विजो मोहादहोरात्रेण शुद्ध्यति' ॥

इति । 'गुरोः पादोपसंग्रहणं' इत्युक्तं तत्र कीदृशो गुरुरित्याशङ्कायामाह मनुः—

१. I. reads -मृदन्वाक्षत-, but it does not give good sense. G. reads -मृदन्नीक्षित- which is quite incorrect. २. All others except A. add इति after द्विजः. ३. E. reads कार्त्यं. ४. D. reads उपपातकिनं तथा for महापातकिनं शठम्, and E. substitutes शवम् for शठम्. ५. I. reads नाभिवाद्यात् which is grammatically incorrect. ६. D. substitutes चापि in the place of नाहं. ७. I. reads नाभिवाद्यात्. ८. B. C. F. G. and H. read उन्मत्तं जृम्भमाणं च; while E. reads उन्मत्तं क्षपणं चैव. ९. B. C. D. E. F. G. and H. read -मनाज्ञातं for -मविज्ञातं. १०. G. reads ब्रह्मघातिनीम्. ११. Here I. only reads त्रिरात्रेण तु शुध्यति for अहोरात्रेण शुध्यति.

'निषेकादीनि कर्माणि यः करोति यथाविधि।
सम्भावयति चान्नेन[1] स विप्रो गुरुरुच्यते'॥

(म. स्मृ. २. १४२)

इति[2]। याज्ञवल्क्योऽपि—

'स गुरुर्यः क्रियाः[3] कृत्वा वेदमस्मै प्रयच्छति'।

(या. स्मृ. १. ३४)

इति। अध्यापनं विप्रविषयम्। निषेकादिकं तु सर्ववर्ण[4]-साधारणम्। पितृव्यतिरिक्तानामौपचारिकं गुरुत्वमाह[5] मनुः—

'अल्पं वा बहु वा यस्य श्रुतस्योपकरोति यः।
तमपीह[6] गुरुं[7] विद्यात् श्रुतोपक्रियया[8] तथा[9]'॥

(म. स्मृ. २. १४९)

इति। हारीतोऽपि—

'उपाध्यायः पिता ज्येष्ठो भ्राता चैव महीपतिः।
मातुलः श्वशुरस्त्राता मातामह-पितामहौ॥
वर्णज्येष्ठः पितृव्यश्च पुंस्येते गुरवः स्मृताः।

---

१. D. reads चान्येन, and H. चानेन for चान्नेन. २. इति is omitted by all others except A. ३. I. reads क्रियां, but the text of Yâjñavalkya does not follow this reading. ४. H. omits -वर्ण-; while I. reads निषकादिकर्तुः सर्वसाधारणं which is a mistake of the Editor. ५. From औपचारिकं गुरु- to -सा मातुलानी (P. 332 L. 9) is omitted by E. ६. From तमपीह to मातामह-पितामहौ in the next quotation is omitted by G. ७. From -रुं to ज्येष्ठो भ्राता in the next quotation is omitted by, F. ८. B. and C. read उतोपक्रियया; while H. reads श्रुतोपक्रियया. ९. B. C D. E. and H. read तथा for तया.

माता मातामही गुर्वी पितुर्मातुश्च सोदराः[१] ॥
श्वश्रूः पितामही[४] ज्येष्ठा धात्री च गुरुवत् स्त्रियः[२]' ।

इति । अत्र पितृ-मातृग्रहणं तद्वदेते ऽपि मान्याः-इत्येतदर्थम् । अत एवाह स एव-

'अनुवर्त्तनमेतेषां[३] मनोवाक्काय-कर्मभिः' ॥

इति । व्यासो ऽपि-

'मातामहो मातुलश्च पितृव्यः श्वशुरो गुरुः ।
पूर्वजः स्नातकश्चर्त्विङ् मान्यास्ते गुरुवत्सदा ॥
मातृष्वसा मातुलानी श्वश्रूर्धात्री पितृष्वसा ।
पितामही[४] पितृव्यस्त्री गुरुस्त्री मातृवच्चरेत्' ॥

इति । मनुरपि[५]-

'पितुर्भगिन्यां मातुश्च ज्यायस्यां च स्वसर्यपि ।
मातृवद्वृत्तिमातिष्ठेन्[६]माता ताभ्यो गरीयसी । (१,३३)
उपाध्यायान् दशाचार्य[७] आचार्याणां शतं पिता ।
सहस्रं तु पितॄन्[८] माता गौरवेणातिरिच्यते[९]' ॥ (१,४९)
(म. स्मृ. २. १३३-१४९)

इति । यत्तु-

---

१. I. reads सहोदराः for च सोदराः. २. B. C. D. F. G. H. and I. read गुरवः स्त्रियाम् ३. The portion from अनुवर्तनमेतेषां to गुरुवत्सदा in the next quotation is omitted by B. C. and F. ४. A. and D. read मातामही for पितामही. ५. D. omits मनुरपि. ६. G. reads वृत्तमातिष्ठन्. ७. B. C. E. F. and H. read उपाध्यायाद्दशाचार्यः; while D. and G. read उपाध्यायाद्दशाचार्याः. ८. Here our reading follows A. and the text of Manu, but all others read पितुर्माता. ९. H. reads गौरवेभ्योऽतिरिच्यते.

'द्वौ गुरू पुरुषस्येह पिता माता च धर्मतः।
[1]पिता गुरुतरा तावन्माता गुरुतरा ततः॥
तयोरपि पिता श्रेयान् बीजप्राधान्यदर्शनात्।
अभावे बीजिनो माता तदभावे तु पूर्वजः'॥

इति पुराणवचनं तन्निषेकादिसम[2]स्तसंस्कारपूर्वकाध्यापकपितृविषयम्। अन्यथा 'मातैव गरीयसी' इति वचनं विरुध्येत्। तस्या गरीयस्त्वमुपपादयति व्यासः—

'मासान् दशोदरस्थं [3]यो धृत्वा शूलैः समाकुला।
[4]वेदनाविविधैर्दुःखैः प्रसूयेत विमूर्च्छिता।
प्राणैरपि प्रियान् पुत्रान् मन्यते सुतवत्सला।
कस्तस्यानिष्कृतिं कर्तुं शक्तो वर्षशतैरपि'॥

इति। 'उपाध्यायान् दशाचार्यः'—इति यदुक्तं तत्रोपाध्यायाचार्ययोर्लक्षणमाह मनुः—

'एकदेशं तु वेदस्य वेदाङ्गान्यथ[5] वा पुनः।
यो ऽध्यापयति वृत्त्यर्थमुपाध्यायः स उच्यते॥(१४१)
उपनीय तु[6] यः शिष्यं वेदमध्यापयेद्द्विजः।
सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते'॥ (१४०)
(म. स्मृ. २. १४१–१४०)

इति। आचार्यो ऽपि पितृ-मात्राद्यपेक्षया गरीयानेव। तदाह स एव—

---

१. I. reads पिता गुरुतरस्तद्वन्माता गुरुतरा तथा, and D. omits the whole line. २. D. omits -समस्त-. ३. B. C. and F. substitute सा for या. ४. I. reads ततोऽपि for वेदना. ५. The text of Manu substitutes अपि for अथ, and D. reads वेदाङ्गस्यापि for वेदाङ्गान्यथ. ६. B. C. E. F. G. and H. substitute च for तु.

'उत्पादक-ब्रह्मदात्रोर्गरीयान् ब्रह्मदः पिता ।
ब्रह्मजन्म हि विप्रस्य[1] प्रेत्य चेह च शाश्वतम्'॥
(म. स्मृ. २. १४६; वि. स्मृ. ३०. ४४)

इति । यस्तु बालो ऽपि वृद्धमध्यापयति सो ऽपि तस्य गरीयानिति स एवाह—

'बालो ऽपि विप्रो वृद्धस्य पिता भवति मन्त्रदः। (१५०)
अध्यापयामास पितॄन् शिशुराङ्गिरसः[2] कविः ।
पुत्रका इति होवाच ज्ञानेन परिगृह्य तान् ॥ (१५१)
ते तमर्थमपृच्छन्त देवानागतमन्यवः ।
देवाश्चैतान्[3] समेत्योचुर्न्याय्यं वः शिशुरुक्तवान्॥(१५२)
अज्ञो भवति वै बालः पिता भवति मन्त्रदः ।
अज्ञं[4] हि बालमित्याहुः पितेत्येव च मन्त्रदम्॥(१५३)
न हायनैर्न पलितैर्न वित्तेन[5] न बन्धुभिः ।
ऋषयश्चक्रिरे धर्मं[6] यो ऽनूचानः स नो महान्'॥(१५४)
(म. स्मृ. २. १५०–१५४)

इति । तथा च विष्णुः—

'बाले[7] समानवयसि अध्यापके गुरुवद्वर्तेत[8]' ।
(वि. स्मृ. २८. ३१)

---

१. D. reads विप्रेभ्यः. २. D. reads अचिराङ्गिरसः, but the text of Manu does not follow this reading. ३. B. C. D. E. F. and G. read चैनं for चैतान्. ४. B. C. D. E. F. G. and H. read अज्ञो हि बाल इत्याहुः पितेत्येव च मन्त्रदः. ५. B. C. D. E. F. and G. read वित्तैः; while I. reads वृत्तेन. ६. From धर्मं to गुरुवद्वर्तितव्यमित्यभिहितं पुराणसारे is omitted by E. ७. The text of Vishṇu Smriti reads बाले समानवयसि वाध्यापके गुरुपुत्रे गुरुवद्वर्तेत. ८. D. reads गुरुवद्वृत्तिः; while I. reads गुरुवद्वर्तितव्यम.

इति । ज्येष्ठभ्रातर्यपि[1] गुरुवद्वर्त्तितव्यमित्यभिहितं पुराणसारे—

'ज्येष्ठो भ्राता पितृसमो मृते पितरि भूसुराः ।
कनिष्ठास्तं नमस्येरन् सर्वे छन्दोनुवर्त्तिनः[2] ॥
तमेव चोपजीवेरन्[3] यथैव पितरं तथा' ।

इति । मनुरपि—

'पितृवत् पालयेत् पुत्रान् ज्येष्ठो भ्राता यवीयसः ।
पुत्रवच्चापि वर्त्तेरन् यथैव पितरं तथा' ॥

इति । परमगुरावपि तथैवे[4]त्याह स एव—

'गुरोर्गुरौ सन्निहिते गुरुवद्वृत्तिमाचरेत्' ।
( म.स्मृ. २. २०५ )

इति । आचार्यानुज्ञामन्तरेण मातुलादीन् असमावृत्तो नाभिवादयेदित्याह स एव—

'न[5] चानिसृष्टो गुरुणा स्वान् गुरूनभिवादयेत्' ।
( म. स्मृ. २. २०५ )

इति । समावृत्तस्य तु नानुज्ञाऽपेक्षा । तदाहापस्तम्बः—

'समावृत्तेन सर्वे गुरव उपसंग्राह्याः प्रोष्य च[6] समागमे[7] ।'
( आ. ध. सू. १. ४. १४. ७-८ )

१. B. C. and F. read ज्येष्ठत्वात्; while G. reads श्रेष्ठत्वात् for ज्येष्ठ-. २. I. reads छन्दानुवर्तिनः which seems to be incorrect. ३. G. reads जीव्येरन्, but this form is not correct. ४. एव is omitted by all others except A. ५. G. reads तथाऽविसृष्टो; while all others except A. I. and the text of Manu read न चाविसृष्टो. ६. All others except A. D. I. and the text of Âpastamba Dharma Sútra omit च. ७. B. C. E. F. G. and H. read समागते for समागमे.

'आचार्य-प्राचार्यसन्निपाते प्राचार्यमुपसं-
गृह्याचार्यमुपजिघृक्षेत्' ।

(आ. ध. सू. १. २. ८. ११)

इति । अभिवादनं प्रशंसति स एव—

'अभिवादनशीलस्य नित्यं वृद्धोपसेविनः ।
चत्वारि तस्य वर्द्धन्ते ह्यायुः प्रज्ञा यशो बलम्' ।

इति । (म. स्मृ. २. १२१)

॥ इत्यभिवादनप्रकरणम् ॥

अथ द्वितीयभागकृत्यमुच्यते । तत्र दक्षः—

'द्वितीये च तथा भागे वेदाभ्यासो विधीयते' ।

(द. स्मृ. २. २६)

इति । कूर्मपुराणे—

'वेदाभ्यासं ततः कुर्यात् प्रयत्नाच्छक्तितो द्विजः।(५५)
जपेदध्यापयेच्छिष्यान् धारयेद्वै विचारयेत् ।
अवेक्षेत च शास्त्राणि धर्मादीनि द्विजोत्तमाः' ॥

(कू. पु. १. २. १८. ५५-५६)

१. D. and the text of Âpastamba Dharma Sûtra read उपसंजिघृक्षेदा-चार्यम्, and B. C. E. F. H. and I. read आचार्यमुपजिघृक्षेत्; while G. omits -प्राचार्य- and reads the whole sentence as follows:—आचार्यसन्निपाते आचार्यायोपसंगृह्य आचार्यन्तु यं यं जिघृक्षेत्. २. The author appears to quote this verse from the Âpastamba, but we do not find it in that work. The sentence 'अभिवादनं प्रशंसति स एव' which is the ground for us to think that the next verse is from the Âpastamba is omitted by G. ३. A. has before this word वेदाभ्यासकालनिर्णयमुखेन. ४. I. reads कूर्मपुराणम्. ५. The text of the Kûrma Purâṇa reads अवेक्षेताय. ६. All others except A. and the text of the Kûrma Purâṇa read द्विजो-त्तमः, but the use of the word in the plural is more correct.

इति । वेदाभ्यासं प्रशंसति मनुः—

'वेदमेव [1]सदाभ्यस्येत् [2]तपस्तप्स्यन्द्विजोत्तमः ।
वेदाभ्यासो हि विप्रस्य तपः परमिहोच्यते ॥(१६६)
[3]ऋषि-देव-मनुष्याणां वेदश्चक्षुः सनातनम्' ।
(म. स्मृ. २. १६६-१६७)

इति । व्यासो ऽपि—

'[4]नान्यतो ज्ञायते धर्मो वेदादेवैष निर्बभौ ।
तस्मात् सर्वप्रयत्नेन धर्मार्थं वेदमाश्रयेत्' ॥

इति । याज्ञवल्क्यो ऽपि—

'यज्ञानां तपसां चैव शुभानां चैव कर्मणाम् ।
वेद एव द्विजातीनां निश्रेयसकरः परः' ॥
(या. स्मृ. १. ४०)

इति । तथा वेदविहीनस्य सर्वक्रियावैफल्यं मनुर्दर्शयति—

'यथा षण्ढो ऽफलः स्त्रीषु यथा गौर्गवि चाफला ।
यथा [5]चाज्ञे ऽफलं दानं तथा विप्रो ऽनृचो ऽफलः' ॥
(म. स्मृ. २. १५८)

इति । [6]एतस्मिन्नेव भागे कृत्यान्तरमाह [7]दक्षः—

'समित्-पुष्प-कुशादीनां स कालः समुदाहृतः' ।

इति ।    (द. स्मृ. २.२८)

॥ इति द्वितीयभागकृत्यम् ॥

---

१. I. reads समभ्यस्येत्. २. D. E. G. H. and I. read तपस्तप्त्वा. ३. D. omits the portion from ऋषि. to शुभानां चैव (in line 10). ४ I. reads नान्यो ज्ञापयते धर्मं वेदादिव स निर्बभौ. ५. B. C. E. F. and H. read राज्ञे for चाज्ञे; while G. reads राज्ञा. ६. I. reads अस्मिन्. ७. I. substitutes गर्गः for दक्षः, but it seems to be a mistake.

अथ[१] तृतीयभागकर्त्तव्यम् । तत्र दक्षः—

'तृतीये च तथा भागे पोष्यवर्गार्थसाधनम्' ।

(द. स्मृ. २. २९)

इति । कूर्मपुराणे[२]ऽपि—

'उपेयादीश्वरं चाथ योगे[३]-क्षेमप्रसिद्धये ।
साधयेद्विविधानर्थान् कुटुम्बार्थं ततो[४] द्विजः' ॥

(कू. पु. १. २. १८. ९७; या. स्मृ. १. १०८)

इति । पोष्यवर्गश्च[५] दक्षेण दर्शितः—

'माता पिता गुरुर्भार्या प्रजा दीनः[६] समाश्रितः ।
अभ्यागतोऽतिथिश्चाग्निः[७] पोष्यवर्ग उदाहृतः' ॥

(द. स्मृ. २. २९)

इति । यात्रार्थं[८] धनसाधनं यथावृत्ति कार्यम् । तथाऽऽह मनुः—

'यात्रामात्रप्रसिद्ध्यर्थं स्वैः कर्मभिरगर्हितैः ।
अक्लेशेन शरीरस्य कुर्वीत धनसञ्चयम्' ॥

(म. स्मृ. ४. ३)

इति । अगर्हितानि कर्माणि अध्यापनादीनि । तानि[९] च

---

१. A. has धनार्जनप्रकरणम् before this word. २. F. omits कूर्मपुराणेऽपि; while I. reads कूर्मपुराणम्. ३. G. and I. read योग-क्षेमार्थसिद्धये. ४. The text of the Kûrma Purâṇa reads द्विजोत्तमः for ततो द्विजः. ५. Except A. and I. all others omit च. ६. B. C. E. F. G. and H. read हीनः for दीनः; while the text of Daksha reads दीनाः समाश्रिताः. ७. The text of Daksha substitutes अन्यः for अग्निः. ८. D. I. and the correction in H. read एतच्च for यात्रार्थं; while E. and G. substitute only पात्र- for the same. ९. Except A. D. and I. all others omit च निरूपितानि, but the words निरूपितानि appear in the marginal correction in H.

निरूपितानि। ननु—ब्राह्मणस्यैवैतानि कर्माणि न क्षत्रिय-विशोः। तदाह मनुः—

'त्रयो धर्म्मा निवर्त्तेरन्[1] ब्राह्मणात् क्षत्रियं प्रति।
अध्यापनं याजनं च तृतीयश्च प्रतिग्रहः॥(७७)
वैश्यं प्रति तथैवैते निवर्त्तेरन्निति स्थितिः'।

(म. स्मृ. १०. ७७-७८)

इति। अतो न तयोरध्यापनादिरर्जनोपायः। बाढम्। अत एवोपायान्तरं तेनैवोक्तम्—

'शस्त्रास्त्रभृत्त्वं क्षत्रस्य वणिक्-पशु-कृषिर्[2]विशः'॥

(म. स्मृ. १०. ७९.)

इति। वणिक् वाणिज्यम्। पशुः पशुपालनम्। याज्ञवल्क्यो ऽपि—

'प्रधानं क्षत्रिये कर्म प्रजानां परिपालनम्।
कुसीद-कृषि-वाणिज्यं पाशुपाल्यं[3] विशः स्मृतम्'॥

(या. स्मृ. १. ११९)

इति। उपायान्तराण्याह मनुः—

'सप्त वित्तागमा धर्म्या दायो लाभः क्रयो जयः।
प्रयोगः कर्मयोगश्च[4] सत्प्रतिग्रह एव च'॥

(म. स्मृ. १०. ११५)

---

१. A. निवर्त्तन्ते. २. B. C. E. F. G. and H. read पशुकृषी. ३. G. and H. read पशुपाल्यं, which is incorrect. ४. B. C. and F. read -योगाश्च.

इति। दायो ऽन्वयागतं[1] धनम्। लाभो निधिदर्शनम्[2]। दाय-लाभ-क्रयान्वयागमाश्चतुर्णां वर्णानाम्[3]। जयः क्षत्रियस्यैव। प्रयोगो वृद्ध्यर्थं धनप्रदानम्। कर्मयोगः कृषि-वाणिज्यम्। प्रयोग-कर्मयोगौ वैश्यस्यैव। सत्प्रतिग्रहो विप्रस्यैव। कूर्मपुराणे ऽपि—

'द्विविधस्तु गृही ज्ञेयः साधकश्चाप्यसाधकः।
अध्यापनं याजनं च पूर्वस्याहुः प्रतिग्रहम्॥ (९)
शिलोञ्छं[4] वाप्याददीत गृहस्थः साधकः पुनः। (१०)
असाधकस्तु यः प्रोक्तो गृहस्थाश्रमसंस्थितः।
शिलोञ्छे तस्य कथिते द्वे वृत्ती परमर्षिभिः। (११)
अमृतेनाथ[5] वा जीवेत् मृतेनाप्यथ वापदि।
अयाचितं स्यादमृतं मृतं भैक्षं तु याचितम्'॥ (१२)
(कू. पु. १. २. २६. ९-१२)

इति। मनुरपि—

'ऋता-ऽमृताभ्यां जीवेत[6] मृतेन प्रमृतेन वा।
सत्यानृताभ्यामपि वा न श्ववृत्त्या कथञ्चन॥

---

१. B. C. F. and H. read न्यायागतं; while D. reads स्वयमागतम्. २. G. omits निधि-. ३. I. omits वर्णानाम्. ४. Except A. and the text of Kûrma Purâṇa others read शिलोञ्छेनाप्युपाददयात् गृहस्थः साधकः स्मृतः, but it seems incorrect. ५. Here we follow A. and the text of Kûrma Purâṇa; while others read अमृतेनापि जीवेत मृतेन प्रमृतेन वा, but as प्रमृत is not explained in the next line in which मृत and अमृत are explained, it seems that the latter reading is not thought proper by the author. ६. The text of Manu reads जीवेत्तु.

ऋतमुञ्छशिलं ज्ञेयम्[1]मृतं[2] स्यादयाचितम् ।
मृतं तु याचितं भैक्ष्यं[3] प्रमृतं कर्षणं स्मृतम् ॥
सत्यानृतं तु वाणिज्यं तेन चैवापि जीव्यते ।
सेवा श्ववृत्तिराख्याता[4] तस्मात्तां परिवर्जयेत्' ॥

(म. स्मृ. ४. ४-६)

इति । पतित[5]परित्यक्तैककणोपादानमुञ्छः । शाल्यादेर्निपतितपरित्यक्तवल्वरीग्रहणं शिलम् । याज्ञवल्क्यो ऽपि—

'कुशूल-कुम्भीधान्यो वा त्र्याह्निको[6]ऽश्वस्तनो ऽपि वा ।
जीवेद्वा ऽपि शिलोञ्छेन श्रेयानेषां परः परः' ॥

इति । कुशूलं[7] कोष्ठकं तद्भरितधान्यसञ्चेता कुशूलधान्यः । त्र्यहपर्याप्तधान्यसञ्चेता त्र्याह्निकः । न श्वस्तनचिन्ताऽप्यस्तीत्यश्वस्तनः सद्यःसम्पादक इत्यर्थः । एतेषां अश्वस्तनान्तानां वृत्तयो मनुनोक्ता वेदितव्याः । तथा ऽह—

'षट्कर्मैको भवत्येषां त्रिभिरन्यः प्रवर्त्तते ।
द्वाभ्यामेकश्चतुर्थस्तु ब्रह्मसत्रेण जीव्यते' ॥

(म. स्मृ. ४. ९)

---

१. B. C. D. E. F. G. and H. substitute प्रोक्तं for ज्ञेयं. २. E. G. and H. omit अमृतं स्यादयाचितम् । मृतं तु याचितं भैक्ष्यम्, and read ऋतमुञ्छशिलं ज्ञेयं प्रमृतं कर्षणं स्मृतम्. The omitted portion appears, however, in the marginal correction of H. ३. D. and I. read प्रोक्तं for भैक्ष्यं. ४. H. and I. read-र्विख्याता; while others except A. D. and the text of Manu read -र्व्याख्याता. ५. पतितपरित्यक्तैककणोपादानमुञ्छः । शाल्यादेर्निपतितपरित्यक्तवल्वरीग्रहणं शिलम् is found only in A. and I., but it is not found in any other manuscript. ६. B. C. and F. read आह्निको, and D. E. G. H. read द्व्याह्निको. ७. The portion from कुशूल- to जीव्यते इत्यर्थः (p. 342, l. 4) is omitted by all others except A. and I.

इति । अयमर्थः—एकः कुशूलधान्यो याजनादिषट्कर्मा भवेत्। अन्यो द्वितीयः कुम्भीधान्यो याजनाध्यापन-प्रतिग्रहै-र्वर्त्तेत। एकस्तृतीयस्त्र्याहिकः प्रतिग्रहेतराभ्याम्। चतुर्थस्त्वश्वस्तनो ब्रह्मसत्रेणाध्यापनेन जीव्यते इत्यर्थः* । शूद्रवृत्तिस्तूशनसा दर्शिता—

'शूद्रस्य द्विजशुश्रूषा सर्वशिल्पानि वा ऽप्यथ[1] ।
विक्रयः सर्वपण्यानां[2] शूद्रकर्मेत्युदाहृतम्[3]' ॥

इति । याज्ञवल्क्योऽपि—

'शूद्रस्य द्विजशुश्रूषा तया ऽजीवन् वणिग्भवेत् ।
शिल्पैर्वा विविधैर्जीवेद् द्विजातिहितमाचरन्[4]' ॥

(या. स्मृ. १. २०)

* अत्र मेधातिथिरेवं व्याचख्यौ—एषां कुशूलधान्यकादीनां मध्यात् एकः कुशूलधान्यकः प्रकृतैरुञ्छ-शिलायाचित-कृषि-वाणिज्यैः षट्कर्मा भवति षड्भिर्जीवति । अन्यो द्वितीयः कुम्भीधान्यकः कृषि-वाणिज्ययोर्निन्दितत्वात् । तत्त्यागे उञ्छ-शिल- याचितायाचितानां मध्यादिच्छात-स्त्रिभिर्वर्तेत । एकस्त्र्याहिको ऽयाचितलाभं विहाय उञ्छ-शिलायाचितानां मध्यादिच्छया द्वाभ्यां वर्तेत । चतुर्थः पुनरश्वस्तनिको ब्रह्मसत्रेण जीवति । ब्रह्मसत्रं शिलोञ्छयोरन्यतरा वृत्तिः । ब्रह्मणो ब्राह्मणस्य सततभवत्वात्सत्रमित्याह । कुल्लूकभट्टस्तु—एषां गृहस्थानां मध्ये कश्चिद्गृहस्थो यो बहुपोष्यवर्गः स प्रकृतैर्ऋतायाचित-भैक्ष-कृषि-वाणिज्यैः पञ्चभिस्तेन चैवेत्यनेनैव चशब्दसमुच्चितेन कुसीदेनेत्येवं षड्भिः कर्मभिः षट्कर्मा भवति षड्भिरेतैर्जीवति—इति व्याचकार ।

१. I. reads वापि च. २. D. reads -वर्णानां; while I. reads -वस्तूनां. ३. B. C. F. G. and H. read -कर्माद्युदाहृतम्; while D. and E. read -कर्म उदाहृतम्. ४. D. reads द्विजादि-.

इति। अजीवन्निति छेदः। हारीतोऽपि—

'शूद्रधर्मो[1] द्विजातिशुश्रूषाद्यवर्जनं[2] क-
लत्रादिपोषणं कर्षणं पशुपालनं भारो-
द्वहन-पण्यापण्यव्यवहार[3]-चित्रकर्म-नृ-
त्य-गीत-वेणु-वीणा[4]-मृदङ्गवादनानि'।

इति।

## ॥ इति तृतीयभागकृत्यम् ॥

अथ चतुर्थे भागे कर्त्तव्यमुच्यते। तत्र दक्षः—

'चतुर्थे तु तथा भागे स्नानार्थं मृदमाहरेत्' ॥

(द. स्मृ. २. ३६)

इति। मध्याह्नस्नानविधिस्तु प्रसङ्गात् पूर्वमेव निरूपितः। अथ ब्रह्मयज्ञविधिः। तस्य स्वरूपं तैत्तिरीयब्राह्मणे दर्शितम्।

'यत्[5] स्वाध्यायमधीयीतैका[6]मप्यृचं यजुः[7]
साम वा तत् ब्रह्मयज्ञः सन्तिष्ठते'।

इति। लिङ्गपुराणेऽपि[8]—

'स्वशाखाध्ययनं विप्र ब्रह्मयज्ञ इति स्मृतः'।

(लिं. पु. १. २६. १६)

इति। तस्य कालमाह बृहस्पतिः—

---

१. I. reads शूद्रस्य. २. D. E. and G. read -शुश्रूषापवर्जनं. ३. B. C. F. and I. read -पण्यव्यवहार- for -पण्यापण्यव्यवहार-. ४. D. omits -वीणा-. ५. B. C. F. and G. read यः for यत्. ६. H. reads -मधीतैका-. ७. E. omits यजुः. ८. D. omits अपि.

'स चार्वाक् तर्पणात् कार्यः पश्चाद्वा प्रातराहुतेः ।
वैश्वदेवावसाने वा नान्यदत्ते[1] निमित्ततः' ॥

इति । अत्र वैश्वदेवशब्देन मनुष्ययज्ञान्तं कर्म विवक्ष्यते । यतः कूर्मपुराणेऽभिहितम्—

'यदि स्यात्तर्पणादर्वाक् ब्रह्मयज्ञः कृतो न हि ।
कृत्वा मनुष्ययज्ञं तु ततः स्वाध्यायमारभेत्[2]' ॥

(कू. पु. १. २. १८. १०४)

इति । श्रुतिश्च दिग्देश-कालानाह[3]—

'ब्रह्मयज्ञेन यक्ष्यमाणः प्राच्यां दिशि
ग्रामाद्दक्षिणदिश उदीच्यां प्रागुदीच्या-
मच्छदिदर्शने[4] चोदित आदित्ये' ।

इति । अच्छदिदर्शने[5] इत्यनेन शब्देन देशविशेषो लक्षितः । छदिर्गृहाच्छादनं तृण-कटादि यत्र[6] न दृश्यते तत्रेत्यर्थः । उदिते आदित्ये इत्यनेनोदयात्[7] प्राचीनं कालं निषेधति[8] । न तूदयानन्तर्यं विधीयते । तस्य होमकालत्वात् । मनुरपि देशादीतिकर्त्तव्यतामाह—

'अपां समीपे नियतो नैत्यकं[9] विधिमास्थितः ।
सावित्रीमप्यधीयीत[10] गत्वाऽरण्यं समाहितः' ॥

(म. स्मृ. २. १०४)

---

१. A. B. C. E. and F. read नान्यदन्ते; while I. reads नान्यदा तु. २. G. I. and the text of Kûrma Purâṇa read -माचरेत्. ३. B. C. E. F. read -कालावाह; while H. omits -काल-. ४. H. दच्छदिर्दश उदीच्यां प्रागुदीच्यां वोदित आदित्ये, I. -दच्छदिर्दर्श, &c. ५. D. and I. read अच्छदिर्दर्श-; while H. reads अच्छदिर्दश.- ६. B. C. F. omit यत्र. ७. I. adds सूर्य- before उदयात्. ८. I. reads निषेधयति. ९. I. reads नैत्यिकं through mistake. १०. I. -मप्यधीयीत.

इति । उपवीतादीति कर्त्तव्यतां श्रुतिराह—

'दक्षिणत उपवीयोपविश्य हस्ताववनिज्य

त्रि[1]राचमेत् द्विः[2] परिमृज्य सकृदुपस्पृश्य शि-

रश्चक्षुषी नासिके श्रोत्रे हृदयमालभ्य'।

इति ।

'दर्भाणां महदुपस्तीर्योपस्थं कृत्वा

प्रागासीनः स्वाध्यायमधीयीत'।

इति च ।

दक्षिणोत्तरौ[3] पाणी पादौ कृत्वा

सपवित्रावोमिति प्रतिपद्यते'।

इति च ।

'त्रीनेव प्रायुङ्क्त भूर्भुवः स्वर्'।

इति च ।

'अथ सावित्रीं गायत्रीं त्रिरन्वाह

पच्छो ऽर्द्धर्चशो ऽनवानम्[4]'।

इति च ।

'ग्रामे मनसा स्वाध्यायमधीयीत दिवा नक्तं च[5]'।

इति च ।

'हस्ताशौच आह्नेय उतारण्येवल

उत वाचोदतिष्ठन्नुत व्रजन्नुतासीन

उत शयानो ऽधीयीतैव स्वाध्यायम्'।

---

१. D. G. and I. read आचामेत्. २. G. reads त्रिः for द्विः. ३. D. reads -त्तरेण. ४. B. and C. read सर्वाम्-, while F. सर्वानम्. ५. D. and G. substitute वा for च.

इति च ।

'मध्यन्दिने प्रवल्गमधीयीत' ।

इति च ।

'नमो ब्रह्मणे इति परिधानीयां त्रिरन्वाहा ऽऽप उपस्पृश्य गृहानेति । ततो यत्किञ्चिद्ददाति सा दक्षिणा' ।

इति च ।

दक्षिणतः प्रदक्षिणं कृत्वेत्यर्थः । तथा च योगियाज्ञवल्क्यः—

'प्रदक्षिणं समावृत्य नमस्कृत्योपविश्य च ।
दर्भेषु दर्भपाणिभ्यां संहताभ्यां कृताञ्जलिः ॥
स्वाध्यायं तु यथाशक्ति ब्रह्मयज्ञार्थमाचरेत्' ।

इति । शौनकस्त्वितिकर्त्तव्यान्तरमाह[१]—

'प्राणायामैर्दग्धदोषः शुक्लाम्बरधरः शुचिः ।
यथाविध्यप आचम्य आरोहेद्दर्भसंस्तरम्[२] ॥
पवित्रपाणिः कृत्वा तु उपस्थं दक्षिणोत्तरम्' ।

इति । उदाहृतश्रुतौ सकृदुपस्पृश्येत्यस्यानन्तरं सव्यं पाणिं पादौ प्रोक्षेदित्यध्याहर्त्तव्यम् । उत्तरस्मिन् फलवाक्ये तथा ऽनुक्रमणात् ।

'यत्[३] त्रिराचामति[४] तेन ऋचः प्रीणाति यद् द्विः परिमृजति तेन यजूंषि यत् सकृदुपस्पृशति तेन सामानि यत् सव्यं दक्षिणं[५] पाणिं पादौ प्रोक्षति यच्छिरश्चक्षुषी नासिके श्रोत्रे हृदय-

---

१. D. and G. reads -कर्तव्यतान्तर-. २. D. reads आहरेत्. ३. B. C. F. and G. omit यत्. ४. B. C. E. F. and G. read त्रिराचामयते; while I. त्रिराचामेदिति. ५. All others except B. C. and F. omit दक्षिणं.

मालभते तेनाथर्वाङ्गिरसो ब्राह्मणानीतिहासान् पुराणानि कल्पान् गाथा नाराशंसीः प्रीणाति'।

इति। दर्भाणामित्यादिश्रुत्यर्थः शौनकेन दर्शितः—

'प्राग्वोदग्वा ग्रामान्निष्क्रम्याप आप्लुत्य शुचौ देशे यज्ञोपवीत्याचम्याक्लिन्नवासा दर्भाणां महदुपस्तीर्य प्राक्कूलानां तेषु प्राङ्मुख उपविश्योपस्थं कृत्वा दक्षिणोत्तरौ पाणी पादौ सन्धाय पवित्रवन्तौ द्यावा-पृथिव्योः सन्धिमीक्षमाणः संमील्य वा यथायुक्तमात्मानं मन्येत तथायुक्तो ऽधीयीत स्वाध्यायमोंपूर्वा व्याहृतयः सावित्रीमन्वाह पच्छो ऽर्धर्चशः सर्वामिति तृतीयमिति शौचः।

इति। शौचः शुचेः पुत्रः आह्नेय एवं नामक ऋषिरित्याह। आत्मेति श्रुतेः संबंधः।

'ग्रामे मनसाऽधीयीत उत प्रबलेऽरण्ये।
मनसा ऽधीयीत उत वा दिवा नक्तं वा
तिष्ठन् व्रजन्नासीनः शयानो वा'।

सर्वथा स्वाध्यायमधीयीतैव। न त्वङ्गाशक्त्या प्रधानं परित्याज्यमित्यर्थः। ब्रह्मयज्ञे जप्यं आश्वमेधिके दर्शितम्—

'वेदमादौ समारभ्य तथोपर्युपरि क्रमात्। यदधीतेऽन्वहं शक्त्या तत् स्वाध्यायं प्रचक्षते॥

१. Except A. D. and I. all others omit आदि-. २. G. omits पादौ, and E. adds after पादौ, तत्तप्यते तपो हि स्वाध्यायः. ३. G. adds the portion विज्ञायते ऽपां वा एष ओषधीनां रसो यद्दर्भाः सरसमेव तद्ब्रह्म करोति, after पवित्रवन्तौ. ४. From ओंपूर्वा- to प्रबले ऽरण्ये the intermediate portion is omitted in I. ५. B. C. E. F. and G. read यथो- for तथो-. ६. I. reads यदधीतान्वहं. ७. I. reads स्वाध्यायः.

ऋचं वा ऽथ यजुर्वा ऽपि सामगाथामथापि वा[1] ।
इतिहास-पुराणानि यथाशक्ति न हापयेत्' ॥
(वृ. गौ. स्मृ. ८. ६६-६७)

इति । याज्ञवल्क्यो ऽपि–
'वेदाथर्व-पुराणानि सेतिहासानि शक्तितः ।
जपयज्ञप्रसिद्ध्यर्थं विद्यामाध्यात्मिकीं जपेत्' ॥
(या. स्मृ. १. १०१)

इति । ग्रहणाध्ययनवत् ब्रह्मयज्ञाध्ययनस्यानध्यायदिनेषु परित्यागप्राप्तौ मनुराह–
'वेदोपकरणे चैव स्वाध्याये चैव नैत्यके[2] ।
नानुरोधो ऽस्त्यनध्याये होममन्त्रेषु चैव हि ॥
नैत्यके[3]* नास्त्यनध्यायो ब्रह्मसत्रं हि तत् स्मृतम् ।
ब्रह्माहुतिहुतं पुण्यमनध्यायवषट्कृतम्' ॥
(म. स्मृ. २. १०५-१०६)

* अत्र मेधातिथिः– 'पूर्वविधिशेषो ऽयमर्थवादः । एतेन हेतुना नैत्यके नास्त्यनध्यायः । यतो ब्रह्मसत्त्रं तत्स्मृतं सततप्रवृत्तं सत्त्रम् । यथा सहस्रसंवत्सरादिसत्त्रं न कदाचित् विच्छिद्यत इत्यतः सत्त्रमेवमिदमपि ब्रह्माध्ययननिर्वर्त्यं ब्रह्मसत्त्रत्वाच्च न कदाचिद्विच्छेत्तव्यम् । विच्छेदे हि सत्त्रत्वं न स्यात् । सत्त्रत्वमिदानीं रूपकभङ्‌ग्या योजयति । ब्रह्माध्ययनाहुतिहुतम् । अन्यत्सत्त्रं सोमाहुत्या हूयते । जुहोतिरनिवृत्तौ वर्तते । अनेकार्थत्वाद्धातूनां ब्रह्मशब्देन तद्विषया ऽध्ययनक्रिया लक्ष्यते । ब्रह्माध्ययनमाहुतिरिव इति ' उपमितं व्याघ्रादिभिः (पा. सू. २. १. ५६) इति समासः । अनध्याये यदध्ययनं तेन वषट्कृतं यथा याज्यान्त अविच्छेदो वषट्कारेण क्रियत एवं चतुर्दश्याद्यनध्यायाध्ययनं वषट्कारस्थानीयम् । वषट्शब्देन वौषट्शब्दो लक्ष्यते' इति । नन्दनस्तु–'अधीयत इत्यध्यायो याज्यापुरो ऽनुवाक्यादिः वषट्कृतं वषट्कारः ताभ्यां रहितं अनध्यायवषट्कृतं[4]' इत्याह । कदाचिदत्र लेखकप्रमादो ऽपि सम्भवति ।

१. I. reads सामायर्वमथापि. २. I. reads नैत्यिके through mistake. ३. I. reads नैत्यिके through mistake. ४. G. reads पुत्रं-.

इति। ब्रह्मैवाहुतिर्द्रव्यं[1] तेन हुतम्। अधीयते इत्यध्यायो याज्यादिमन्त्रसमूहः। तेन वषट्कारेण च सहितं[2] हुतम्। यतो नास्त्यनध्यायः। अत एव श्रुतिरनध्यायविशेषाननूद्य तेषु[3] जपं प्रशंसति[4]—

'य एवं विद्वान्मेघे वर्षति विद्योतमाने स्तनयत्यवस्फूर्जति पवमाने वायाव[6]मावास्यायां स्वाध्यायमधीते तप एव तत् तप्यते तपो हि स्वाध्यायः'।

इति। तेष्वनध्यायेष्वल्पमेव पठनीयम्। तदाहापस्तम्बः—

'अथ यदि वातो वायात् स्तनयेद्वा विद्योतेत[7] वा ऽव[8]स्फूर्जेद्वैकां वर्चमेकं वा यजुरेकं वा सामा[9]भिव्याहरेत्'।

(आ. ध. सू. १. ४. १२. ५)

इति। आत्म-देशयोरशुचित्वे ब्रह्मयज्ञो वर्जनीयः तथा च[5] श्रुतिः—

'तस्य वा एतस्य यज्ञस्य द्वावनध्यायौ यदात्मा ऽशुचिर्यद्देशः'। इति। ब्रह्मयज्ञं प्रशंसति श्रुतिः—

---

१. G. reads -संख्येन हुतम् for -द्रव्यं तेन हुतम्. २. All others except A. and I. read रहितं for सहितं. The commentator Nandana on Manu follows this reading. ३. B. C. and F. add अपि after तेषु. ४. I. reads प्रशशंस. ५. D. reads स for च. ६. B. C. F. and H. omit वाया.- ७. B. C. E. F. G. H. and I. read विद्योतते. ८. I. adds तथा before अवस्फूर्ज्जेत्; while B. C. E. F. G. and H. read स्फूर्ज्जेदेकामृचम् for ऽवस्फूर्ज्जेद्वैकां वर्चम्, and I. -देकामृचम्. and D. स्फूर्ज्जेदेकां वर्चम्. ९. D. reads सामाऽधि.-

'उत्तमं नाकमधिरोहति[1][2] उत्तमः समानानां
भवति यावन्तं ह वा इमां वित्तस्य पूर्णां
ददत् स्वर्गं लोकं[3] जयति'[4] ।
तावन्तं लोकं जयति । भूयांसं चाक्षय्यं चाप-
मृत्युं[5] जयति । ब्रह्मणः सायुज्यं गच्छति' ।

इति । याज्ञवल्क्यो ऽपि—

'यं यं क्रतुमधीयीत तस्य तस्याप्नुयात् फलम् ।
त्रिर्वित्तपूर्णपृथिवीदानस्य[6] फलमश्नुते' ॥
(या. स्मृ. १. ४७-४८)

इति ।

## ॥ इति ब्रह्मयज्ञप्रकरणम् ॥

अथ तर्पणविधिः । तत्र वसिष्ठः—

'ऋक्-सामाथर्ववेदोक्तान् जप्यमन्त्रान् यजूंषि च ।
जप्त्वा[7] चैवं ततः कुर्याद्देवर्षि-पितृतर्पणम्' ॥

इति । बृहस्पतिरपि—

'ब्रह्मयज्ञप्रसिद्ध्यर्थं विद्यां चाध्यात्मिकीं जपेत् ।
जप्त्वा ऽथ प्रणवं वा[8]ऽपि ततस्तर्पणमाचरेत्' ॥

इति । विष्णुपुराणे[9] ऽपि—

---

१. D. omits अधि-. २. B. C. E. F. G. and H. add इति after अधिरोहति. ३. D. and I. read स्वर्गलोकं. ४. D. omits the following—जयति । तावन्तं लोकं जयति । भूयांसं चाक्षय्यं चापमृत्युं जयति. । ५. B. C. F. G. and I. add पुनर् before मृत्युम्; while E. reads वा पाप्मानं मृत्युं for चापमृत्युं. ६. I. omits त्रिर् through mistake. ७. A. and D. read जपित्वैवं. ८. A. B. C. E. F. G. read चापि for वाऽपि. ९ B. C. and F. omit विष्णुपुराणे ऽपि.

‘शुचिवस्त्रधरः स्नातो देवर्षि-पितृतर्पणम्।
तेषामेव हि तीर्थेन कुर्वीत सुसमाहितः॥
त्रिरपः प्रीणनार्थाय देवानामपवर्जयेत्।
[1]तैथर्षीणां यथान्यायं सकृच्चापि [2]प्रजापतेः॥
पितॄणां प्रीणनार्थाय त्रिरपः पृथिवीपते’।

(वि. पु. ३. ११. २६-२८)

इति। व्यासः—

‘एकैकमञ्जलिं देवा द्वौ द्वौ तु सनकादयः।
[3]अर्हन्ति पितरस्त्रींस्त्रीन् स्त्रियश्चैकैकमञ्जलिम्’॥

इति। आग्नेयपुरा—

‘प्रागग्रेषु सुरांस्तर्पेन्मनुष्यांश्चैव मध्यतः।
पितॄंस्तु[4] दक्षिणाग्रेषु चैक[5]-द्वि-त्रिजलाञ्जलीन्’॥

इति। अत्र अञ्जलिसङ्ख्या यथाशाखं व्यवतिष्ठते। यत्र शाखायां न सङ्ख्यानियमः श्रुतः तत्र विकल्पः। तत्रैव ब्रह्मसूत्रविन्यासविशेषो दर्शितः—

‘सव्येन देवकार्याणि वामेन पितृतर्पणम्।
निवीतेन मनुष्याणां तर्पणं संविधीयते’॥

इति। सव्येनोपवीतेन [6]वामेन प्राचीनावीतेन इत्यर्थः।

तथा च शङ्ख-लिखितौ—

---

१. I. reads अथर्षीणां; while G. and H. तद्दृषीणां. २. G. and H. read प्रजायते. possibly this is a mistake of the writer. ३. A. and D. read अर्भान्त for अर्हन्ति. ४. D. substitutes च for तु. ५. Except A. D. and I. all others read दद्यात् द्विस्त्रिर्जलाञ्जलीन् for चैक-द्वि-त्रिजलाञ्जलीन्. ६. H. omits वामेन प्राचीनावीतेन.

'उभाभ्यामपि हस्ताभ्यां प्राङ्मुखो यज्ञोपवीती
प्रागग्रैः कुशैर्देवतातर्पणं देवतीर्थेन कुर्यात्' ।

इति । विष्णुरपि—

'ततः कृत्वा निवीतं तु यज्ञसूत्रमतन्द्रितः ।
प्राजापत्येन तीर्थेन मनुष्यांस्तर्पयेत् पृथक्' ॥

इति । बौधायनः—

'अथ दक्षिणतः प्राचीनावीती पितॄन्स्वधानमस्तर्पयामि' ।

(बौ. स्मृ. २. ५. १०. १)

इत्यादि । यत्तु—

'उभाभ्यामपि हस्ताभ्यामुदकं यः प्रयच्छति ।
स मूढो नरकं याति कालसूत्रमवाक्शिराः' ॥

इति व्याघ्रपादवचनं तच्छ्राद्धादिविषयम् । अत एव कार्ष्णाजिनिः—

'श्राद्धे विवाहकाले च पाणिनैकेन दीयते ।
तर्पणे तूभयेनैव विधिरेष पुरातनः' ॥

इति । एतच्च तर्पणं स्थलस्थो न जले कुर्यात् । तथा च गोभिलः—

'नोदकेषु न पात्रेषु न क्रुद्धो नैकपाणिना ।
नोपतिष्ठति तत्तोयं यन्न भूमौ प्रदीयते' ॥

१. The text of Baudhâyan omits दक्षिणतः. २. D. reads पितृभ्यः for पितॄन्. ३. All others except A. and I. read व्याघ्रपाद्वचनं. ४. D. reads उदाहृतः. ५. B. C. F. and H. read स्थलस्थो नो जले कुर्यात्; while D. स्थलस्थेनोदकैः कुर्यात्, and I. स्थलस्थेन नोदके कर्तव्यम् for स्थलस्थो न जले कुर्यात्.

अथ[1] स्थलस्थो भूमावेव तर्पणं कुर्वीत न जलादाविति । तथा च विष्णुः—

‘स्थले स्थित्वा जले यस्तु प्रयच्छेदुदकं नरः ।
नोपतिष्ठति तद्वारि पितृणां तन्निरर्थकम्’ ॥

इति । अत्र विशेषमाह हारीतः—

‘वसित्वा वसनं[2] शुष्कं स्थले विस्तीर्ण[3]बर्हिषि ।
[4]विधिज्ञस्तर्पणं कुर्यान्नै[5]कपात्रे कदाचन ॥
पात्राद्वा जलमादाय शुभे पात्रान्तरे[6] क्षिपेत् ।
जलपूर्णेऽथ वा गर्त्ते न स्थले तु[7] विबर्हिषि ॥
केश-भस्म-तुषाङ्गार-कण्टका[8]स्थिसमाकुलम् ।
भवेन्महीतलं यस्माद्बर्हिषाऽऽस्तरणं ततः’ ॥

इति । यत्तु कार्ष्णाजिनिनोक्तम्—

‘देवतानां पितृणां च जले दद्याज्जलाञ्जलिम्’ ।

इति तदशुचिस्थलविषयम् । तदाह विष्णुः—

‘यत्राशुचि स्थलं वा स्यादुदके देवता[9]-पितॄन् ।
तर्पयेत्तु यथाकाममप्सु सर्वं प्रतिष्ठितम्’ ॥

इति । पात्रविशेषमाह पितामहः—

---

१. I. reads अतः. २. E. and G. read ऽऽवसथं. ३. D. reads निस्तीर्ण. ४. B. C. E. F. and G. omit the following three lines :—

विधिज्ञस्तर्पणं कुर्यान्नैकपात्रे कदाचन ॥
पात्राद्वा जलमादाय शुभे पात्रान्तरे क्षिपेत् ।
जलपूर्णेऽथ वा गर्त्ते न स्थले तु विबर्हिषि ॥

H. also omits these lines, but we find them in the marginal correction of it. ५. D. and I. न पात्रेषु. ६. D. reads पात्रेऽथ वा. ७. D. substitutes न for तु; while H. reads भुवि बर्हिषि. ८. D. reads -कटका-. ९. D. and G. read देवताः.

'हेम-रूप्यमयं पात्रं ताम्र-कांस्यसमुद्भवम् ।
पितॄणां तर्पणे पात्रं मृण्मयं तु परित्यजेत्' ॥

इति[१] । मरीचिः—

'सौवर्णेन च पात्रेण ताम्र-रूप्यमयेन च[२] ।
औदुम्बरेण खड्गेन[३] पितॄणां दत्तमक्षयम्' ॥

इति । रिक्तहस्तेन न कुर्यादित्याह स एव—

'विना रूप्य-सुवर्णेन विना ताम्र-तिलैस्तथा[४] ।
विना मन्त्रैश्च दर्भैश्च पितॄणां नोपतिष्ठते' ॥

इति । स्मृत्यन्तरे च—

'खड्ग-मौक्तिकहस्तेन कर्त्तव्यं पितृतर्पणम् ।
मणि-काञ्चन-दर्भैर्वा न शून्येन[५] कदाचन ॥

इति । न चात्र समुच्चयो नापि समविकल्प इत्यभिप्रेत्य मरीचिराह—

'तिलानामप्यभावे तु सुवर्ण-रजतान्वितम् ।
तदभावे निषिञ्चेत्तु दर्भैर्मन्त्रेण वा पुनः' ॥

इति । तिलग्रहणे तु विशेषमाह योगियाज्ञवल्क्यः—

'यद्युद्धृतं निषिञ्चेत्तु तिलान् सम्मिश्रयेज्जले ।
अतो[६]ऽन्यथा तु सव्येन तिला ग्राह्या विचक्षणैः' ॥

इति । एतद्[७]लोमकप्रदेशाभिप्रायम् । तथा च देवलः—

---

१. G. and H. omit इति. २. A. and F. reads ताम्र-कांस्यमयेन वा; while B. C. E. and G. substitute वा for च. ३. I. reads बिल्वेन. ४. I. reads ताम्रमयैस्तथा. ५. A. reads शुष्केण; while G. शुद्धेन. ६. B. C. E. and F. read अतो नान्यत्र हस्तेन for अतोऽन्यथा तु सव्येन. ७. B. reads -हस्तोमक-.

'रोमसंस्थान्[1] तिलान् कृत्वा यस्तु तर्पयते पितॄन्।
पितरस्तर्पितास्तेन रुधिरेण मलेन वा'[2] ॥

इति। वर्णभेदेन तिलानां विनियोगविशेषं[3] दर्शयति स एव-

'शुक्लैस्तु तर्पयेद्देवान् मनुष्यान् शबलैस्तिलैः।
पितॄन् सन्तर्पयेत् कृष्णैस्तर्पयन् सर्वतो द्विजः'[4] ॥

इति। कूर्मपुराणेऽपि देवर्षि-पितृतर्पणे विशेषो दर्शितः-

'देवान् ब्रह्मऋषींश्चैव तर्पयेदक्षतोदकैः।
पितॄन्[5] भक्त्या[6] तिलैः कृष्णैः स्वसूत्रोक्तविधानतः' ॥
(कू. पु. १. २. १८.८८)

इति। तिथ्यादिविशेषेण तिलतर्पणं निषेधति[7] व्यासः-

'सप्तम्यां रविवारे च गृहे[8] जन्मदिने[9] तथा।
भृत्य[10]-पुत्र-कलत्रार्थी न कुर्यात्तिलतर्पणम्' ॥

इति। पुराणे[11] अपि-

'पक्षयोरुभयो राजन् सप्तम्यां निशि सन्ध्ययोः।
वित्त[12]-पुत्र-कलत्रार्थी तिलान् पञ्चसु वर्जयेत्' ॥

इति। बौधायनो अपि-

'न जीवत्पितृकः कृष्णैस्तिलैस्तर्पणमाचरेत्।
सप्तम्यां रविवारे च जन्मर्क्षदिवसेषु[13] च ॥

१. B. reads सोमसंस्थान्. २. Except A. G. and H. others substitute च for वा. ३. H. omits -विशेषं, and reads विनियोगं. ४. I. reads तर्पयेत् सर्वथा द्विज. ५. The text of Kûrma Purâṇa reads this line तिलोदकैः पितॄन् भक्त्या स्वगृह्योक्तविधानतः. ६. B. C. and F. read शक्त्या. ७. I. reads निषेधयाति. ८. This is omitted by all others except A. ९. D. reads च विपिने for जन्मदिने. १०. A. and D. read पुत्र-मित्र-; while B. C. E. and F. read पुत्र-भृत्य.- ११. D. omits पुराणेऽपि. १२. All others except A. and I. read विद्या-पुत्र.- १३. D. reads जन्मर्क्षे विपिनेषु च.

गृहे निषिद्धं सतिलं तर्पणं तद्बहिर्भवेत् ।
विवाहे चोपनयने चौले सति यथाक्रमम् ॥
वर्षमर्द्धं तदर्द्धं च नेत्येके[1] तिलतर्पणम् ।
तिथि-तीर्थ-विशेषेषु कार्यं प्रेतेषु सर्वदा ' ॥

इति । तर्पणीयान् दर्शयति सत्यव्रतः–

'कृतोपवीती[2] देवेभ्यो निवीती च भवेत्ततः ।
मनुष्यांस्तर्पयेद्भक्त्या ब्रह्मपुत्रानृषींस्तथा[3] ॥
अपसव्यं ततः कृत्वा सव्यं जान्वाच्य भूतले ।
दर्भपाणिस्तु [4] विधिना प्रेतान् सन्तर्पयेत्ततः' ॥

इति[5] । योगियाज्ञवल्क्यो ऽपि[6]–

' ब्रह्माणं तर्पयेत् पूर्वं विष्णुं रुद्रं प्रजापतिम् ।
वेदान् छन्दांसि देवांश्च ऋषींश्चैव तपोधनान् ॥
आचार्यांश्चैव गन्धर्वानाचार्यतनयांस्तथा ।
संवत्सरं सावयवं देवीरप्सरसस्तथा ॥
तथा देवान् नगान्नागान् सागरान् पर्वतानपि ।
सरितो ऽथ मनुष्यांश्च यक्षान् रक्षांसि चैव हि ॥
पिशाचांश्च सुपर्णांश्च भूतान्यथ पशूंस्तथा ।
वनस्पतीनोषधींश्च भूतग्रामांश्चतुर्विधान् ॥
सव्यं जानुं ततोऽन्वाच्य पाणिभ्यां दक्षिणामुखः ।
तल्लिङ्गैस्तर्पयेन्मन्त्रैः सर्वान् पितृगणांस्तथा ॥

१. I. reads वर्जयेत्. २. I. reads कृत्वोपवीती, H. कृतोपवीतो and B. C. E. F. कृतोपनीतो. ३. D. reads पुत्रम् for पुत्रान्. ४. From विधि- to -ष्णुम् the intermediate portion -ना प्रेतान् संतर्पयेत्ततः'। इति । योगियाज्ञवल्क्योऽपि–' ब्रह्माणं तर्पयेत् पूर्वं वि– is omitted by F, this is a writer's mistake. ५. Except A. all omit this word. ६. I. omits अपि.

मातामहांश्च सततं श्रद्धया[1] तर्पयेत् द्विजः'।

इति। शौनकोऽपि—

'अग्निर्विष्णुः प्रजापतिः'।

इत्यादि[2]। यजुःशाखिनां तु काण्डर्षितर्पणमुक्तम्[3]—

'अथ काण्डऋषीनेतानुदकाञ्जलिभिः शुचिः।
अव्यग्रस्तर्पयेन्नित्यं मन्त्रेणैवाष्टनामभिः'॥

इति[4]। पितृतर्पणं प्रकृत्य पैठीनसिः—

'अपसव्यं ततः कृत्वा स्थित्वा च पितृदिङ्मुखः।
पितॄन् दिव्यानदिव्यांश्च पितृतीर्थेन तर्पयेत्'॥

इति। दिव्याः वसु-रुद्रादित्याः[5]। अदिव्याः पित्रादयः। योगियाज्ञवल्क्यः—

'वसून् रुद्रांस्तथाऽऽदित्यान् नमस्कारसमन्वितान्'।

इति। तर्पयेदिति शेषः। वस्वादीनां नामानि पैठीनसिना दर्शितानि—

'ध्रुवो धर्मश्च सोमश्च आपश्चैवाऽनिलोऽनलः।
प्रत्यूषश्च प्रभातश्च[6] वसवोऽष्टौ प्रकीर्तिताः॥
अजैकपादहिर्बुध्न्यो[7] विरूपाक्षोऽथ रैवतः।
हरश्च बहुरूपश्च त्र्यम्बकश्च सुरेश्वरः॥

---

१. D. reads गृद्धया, but it seems to be a mistake. २. G. reads इत्याह. ३. B. C. E. F. G. and H. omit काण्ड- and read simply ऋषितर्पणमुक्तम्. ४. Except A. all omit this word. ५. A. reads -रुद्रादयः. ६. All others except A. and I. read प्रभासश्च. ७. I. reads -रहिर्ब्रध्नो through mistake.

सावित्रश्च जयन्तश्च पिनाकी चाऽपराजितः ।
एते रुद्राः समाख्याता एकादश सुरोत्तमाः ॥
इन्द्रो धाता भगः पूषा मित्रो ऽथ वरुणो ऽर्यमा ।
अर्चिर्विवस्वान् त्वष्टा च सविता विष्णुरेव च ॥
एते वै द्वादशा ऽऽदित्या देवानां प्रवरा मताः[२] ।
एते च दिव्याः पितरः पूज्याः सर्वैः[३] प्रयत्नतः' ॥

इति[४] । ततः स्वपित्रादींस्तर्पयेत् । तत्र प्रकारमाह पैठीनसिः—

'स्वनाम-गोत्रग्रहणं पुरुषम्पुरुषम्प्रति ।
तिलोदकाञ्जलींस्त्रींस्त्रीनुच्चैरुच्चैर्विनिक्षिपेत्[५]' ॥

इति[६] । योगियाज्ञवल्क्यो ऽपि—

'सवर्णेभ्यो जलं[७] देयं नाऽसवर्णेभ्य एव च ।
गोत्र-नाम-स्वधाकारैस्तर्पयेदनुपूर्वशः' ॥

इति । नामग्रहणे ऽपि विशेषमाह आश्वलायनः[८]—

'शर्मान्तं ब्राह्मणस्योक्तं वर्मान्तं क्षत्रियस्य च ।
गुप्तान्तं चैव वैश्यस्य दासान्तं शूद्रजन्मनः ॥
चतुर्णामपि वर्णानां पितॄणां पितृगोत्रतः ।
पितृगोत्रं कुमारीणां ऊढानां भर्तृगोत्रतः' ॥

इति । पितृतर्पणक्रम[९]माह सत्यव्रतः—

---

१. D. reads अश्विर्; while I. अहिर्. २. D. reads तथा for मताः. ३. Except A. all others read सर्वे for सर्वैः. ४. Except A. all omit this word. ५. सूनुरुच्चैरुच्चैर्. ६. This word is omitted in all others except A. ७. A. reads सवर्णेभ्यो ऽञ्जलिर्देयः. ८. A. and D. substitute बौधायनः for आश्वलायनः, but the following verses are not found in Baudhâyan. ९. I. reads तर्पणे क्रम-; while D. omits -क्रम-.

'पितृभ्यः प्रत्यहं दद्यात्ततो मातृभ्य एव च।
ततो मातामहानां च पितृव्य[1]स्य सुतस्य च' ॥

इति। विष्णुपुराणेऽपि–

'दद्यात् पैत्रेण तीर्थेन काम्या[2]नन्यान् शृणुष्व मे ॥
मात्रे प्रमात्रे तन्मात्रे गुरुपत्न्यै तथा नृप।
गुरवे मातुलादीनां स्निग्धमित्राय भूभु[3]जे ॥
(वि. पु. ३. ११. २९–३०)

इति। हारीतोऽपि–

'पित्रादीन् मात्रा[4]दीन् माता[5]महादीन् पितृव्यां-
स्तत्पत्नी[6]र्ज्येष्ठभ्रातृंस्तत्पत्नीः मा[7]तुलांस्तत्पत्नीः
गुर्वाचार्योपा[8]ध्यायान् सुहृत्-सम्बन्धि-बान्धवान्
द्रव्यान्नदातृ-पोषक[9]-रिक्थिनस्तत्पत्नीश्च तर्पयेत्'।
(हा. स्मृ. १२. ४)

इति। जीवत्पितृकतर्पणे विशेषमाह योगियाज्ञवल्क्यः–

'क[10]व्यवाडनलः सोमो यमश्चैवाऽर्यमा तथा।
अग्निष्वात्ताः सोमपाश्च तथा बर्हिषदोऽपि च ॥
यदि स्याज्जीवत्पितृकस्तान् विद्याच्च तथा पितॄन्।
येभ्यो वाऽपि पिता दद्यात्तेभ्यो वाऽपि प्रदीयते ॥

---

१. D. reads पितृव्यस्यानुजस्य च. २. The text of Vishṇu Purâṇa reads काम्यं चान्यत् for काम्यानन्यान्; while I. reads through mistake कामानन्यान्. ३. I. reads भूभुज. ४. B. C. D. and F. omit मात्रादीन्. ५. मातामहादीन् is omitted by G. ६. D. reads -पत्नीं, and omits ज्येष्ठभ्रातृंस्तत्पत्नीः. ७. I. reads मातुलादीन्; while D. मातुलं तत्पत्नीं. ८. I. reads -ध्यायादीन्. ९. I. reads -पोषकारिणः, but probably this is a mistake. १०. B. C. and F. read कव्यवाडोऽनलः and D. काव्यवारुनलः, but it seems to be a mistake.

एतांश्चैव प्रमीतांश्चा ऽप्रमीतपितृको द्विजः[1] ।

इति । तर्पयेदिति शेषः । अवसानाञ्जलिमाह कात्यायनः—

'पितृवंश्या मातृवंश्या[2] ये चान्ये मत्त उदक-

मर्हन्ति तांस्तर्पयामीत्ययमवसानाञ्जलिः' ।

(का. स्मृ. २. १२. २)

इति । आदित्यपुराणे ऽपि—

'यत्र[3] क्वचनसंस्थानां क्षुत्तृषोपहतात्मनाम्[4] ।

तेषां हि दत्तमक्षय्यमिदमस्तु तिलोदकम् ॥

ये मे कुले[5] लुप्तपिण्डाः पुत्र-दार[6]विवर्जिताः ।

तेषां तु दत्तमक्षय्यमिदमस्तु तिलोदकम्' ॥

इति । मत्स्यपुराणे ऽपि—

'ये ऽबान्धवा बान्धवा वा ये ऽन्यजन्मनि बान्धवाः ।

ते तृप्तिमखिला यान्तु यश्चास्मत्तो[7]ऽम्बु वाञ्छति' ॥

(वि. पु. ३. ११. ३९)

इति । विस्तरेण कर्तुमसमर्थस्य संक्षेपेण तर्पणमुक्तं वि-

ष्णुपुराणे—

१. Except A. B. C. and F. all others read प्रमीतांश्च प्रमीत-, but this is a mistake. २. The text of Kâtyâyana reads पितृवंश-मातृवंशौ; while I. reads through mistake as follows—

पितृवंश्या मातृवंश्या ये चान्ये पितरो जनाः ।
मत्तस्तूदकमर्हन्ति ये तांस्तांस्तर्पयाम्यहम् ॥

इत्यवसानाञ्जलिरिति; but this is not found in the text of Kâtyâyana. ३. G. reads अत्र for यत्र. ४. All others except A. G. and H. -तृष्णोप- for -तृषोप-. ५. Except A. D. H. and I. all others एतत्कुले. ६. I. substitutes -पौत्र- for -दार-. ७. B. C. and F. read यश्चास्मत्तोऽभिवाञ्छति, D. यश्च मत्तोम्बु वाञ्छति, I. reads through mistake ये वा मत्तोऽम्बुवाञ्छिताः, and the text of Vishṇu Purâṇa reads the whole line as—

ते सर्वे तृप्तिमायान्तु ये चास्मत्तोयकांक्षिणः ।

'आब्रह्मस्तम्बपर्यन्तं जगत्तृप्यत्विति ब्रुवन्।
क्षिपेत् पयोऽञ्जलींस्त्रींस्तु कुर्यात् संक्षेपतर्पणम्' ॥

इति। यमतर्पणं तु वृद्धमनुनोक्तम्—

'दीपोत्सव*[1]चतुर्दश्यां कार्यं तु यमतर्पणम्।
कृष्णाङ्गारचतुर्दश्यामपि कार्यं सदैव वा ॥
यमाय धर्मराजाय मृत्यवे चान्तकाय च।
वैवस्वताय कालाय सर्वभूतक्षयाय च ॥
औदुम्बराय दध्नाय नीलाय परमेष्ठिने।
वृकोदराय चित्राय चित्रगुप्ताय ते नमः' ॥

इति। नियमस्तु स्कन्दपुराणे निरूपितः—

'दक्षिणाभिमुखो भूत्वा तिलैः सव्यं समाहितः।
दैवतीर्थेन देवत्वात्, तिलैः† प्रेताधिपो यतः[2] ॥

इति। एवं कुर्वतः फलमाह यमः—

'यत्र क्वचन नद्यां हि स्नात्वा कृष्णचतुर्दशीम्।
सन्तर्प्य धर्मराजानं मुच्यते सर्वकिल्बिषैः' ॥

इति। माघशुक्लाष्टम्यां भीष्मतर्पणं कुर्यात्। तदाह व्यासः—

---

* दीपोत्सवचतुर्दशी आश्विनकृष्णचतुर्दशी नरकचतुर्दशीति प्रसिद्धा। महाराष्ट्रेषु दीपावलीति च प्रसिद्धा।

† यमस्य देवेष्वेवान्तर्भावात् देवतीर्थेन तर्पणं कर्तव्यम्। एवं सति देवकार्ये यवानामेव ग्राह्यत्वात् तिलग्रहणं किमर्थमिति चेत्तत्र हेतुमाह। यतः स प्रेताधिपः अतस्तिलैरेव तर्पणं कार्यमित्यर्थः।

---

१. I. reads प्रेतोत्सव-, but this is a mistake. २. D. E. and H. read प्रेताधिपो यमः; while I. reads प्रेताधिपाय च.

'शुक्लाष्टम्यां तु माघस्य दद्याद्भीष्माय यो जलम् ।
संवत्सरकृतं पापं तत्क्षणादेव नश्यति ॥
वैयाघ्रपादगोत्राय[1] सांकृत्यप्रवराय च ।
गङ्गापुत्राय भीष्माय प्रदास्ये ऽहं तिलोदकम् ।
अपुत्राय ददाम्येतत् जलं[2] भीष्माय वर्मणे' ॥

इति । तर्पणप्रशंसा पुराणसारे दर्शिता—

'एवं यः सर्वभूतानि तर्पयेदन्वहं द्विजः ।
स गच्छेत् परमं स्थानं तेजोमूर्त्तिमनामयम्' ॥

इति । अकरणे प्रत्यवायः पुराणे दर्शितः—

'देवताश्च पितृंश्चैव मुनीन्[3] यो वै न तर्पयेत् ।
देवादीनामृणी भूत्वा नरकं स व्रजत्यधः' ॥

इति । योगियाज्ञवल्क्यो[4] ऽपि—

'नास्तिक्यभावाद्यस्तांस्तु न तर्पयति वै पितृन् ।
पिबन्ति देहनिःस्रावं पितरो ऽस्य जलार्थिनः' ॥

इति । हारीतो ऽपि—

'देवाश्च पितरश्चैव काङ्क्षन्ति सतिलाञ्जलिम्[5] ।
अदत्ते तु निराशास्ते प्रतियान्ति यथागतम्' ॥
(हा. स्मृ. १४. ७.)

इति । कात्यायनो ऽपि—

---

१. I. reads वैयाघ्रपद्यगोत्राय साङ्कृतिप्रवराय च. २. I. reads सलिलं भीष्मवर्मणे. ३. D. reads मानवान् यो for मुनीन् यो वै. ४. I. reads याज्ञवल्क्योऽपि, but we do not find this verse in the text of Yâdnyavalkya. ५. B. C. and D. read सलिलाञ्जलिम्; while E. G. and H. read सरितां जलम्.

'छायां यथेच्छेच्छरदातपार्त्तः[१]
पयः पिपासुः क्षुधितोऽन्नमन्नम् ।
बालो जनित्रीं जननी च बालं
योषित् पुमांसं पुरुषश्च योषाम् ॥
तथा सर्वाणि भूतानि स्थावराणि चराणि च ।
विप्रादुदकमिच्छन्ति सर्वे[२]ऽप्युदककाङ्क्षिणः ॥
तस्मात् सदैव कर्त्तव्यमकुर्वन्महतैनसा ।
युज्यते ब्राह्मणः कुर्वन् विश्वमेतद्बिभर्त्ति हि' ॥
( का. स्मृ. २. १२. ३-५ )

इति । अत्र[३] पितृगाथाः—

'अपि नः स कुले भूयाद्यो नो दद्याज्जलाञ्जलिम् ।
नदीषु बहु[४]तोयासु शीतलासु विशेषतः' ॥

इति । तर्पणानन्तरं वस्त्रनिष्पीडनं कर्त्तव्यम् । तदाह योगियाज्ञवल्क्यः—

' यावद्देवानृषींश्चैव पितॄं[५]श्चापि न तर्पयेत् ।
तावन्न पीडयेद्वस्त्रं यो हि स्नातो भवेद् द्विजः ॥
निष्पीडयति यो विप्रः स्नान[६]वस्त्रमतर्प्य च ।
निराशाः पितरो यान्ति शापं दत्वा सुदारुणम् ' ॥

इति । निष्पीडनं तु स्थले कार्यम् । तदुक्तं स्मृत्यन्तरे—

---

१. The text of Kâtyâyana reads -पान्तः परः for -पार्त्तः पयः, but this is a mistake. २. The text of Kâtyâyana reads सर्वाम्बुरु. यकाङ्क्षि सः; while all others except A. and I. substitute हि for अपि. ३. G. substitutes अथ for अत्र. ४. A. reads पुण्यतोयासु. ५. H. reads पितॄन्नैव प्रतर्पयेत्. ६. B. reads मानवस्तमतर्पिताः, C. and F. read मानवस्त्रमनर्पिताः, and D. E. G. H. अतर्पिते for अतर्प्य च.

'वस्त्रनिष्पीडितं* तोयं श्राद्धे चोच्छिष्टभोजिनाम्[1] ।
भागधेयं श्रुतिः प्राह तस्मान्निष्पीडयेत् स्थले' ॥

इति । विष्णुपुराणे—

'आचम्य च ततो दद्यात् सूर्याय सलिलाञ्जलिम् ।
नमो विवस्वते ब्रह्मन् भास्वते विष्णुतेजसे[2] ।
जगत्सवित्रे शुचये सवित्रे कर्मदायिने' ॥

(वि. पु. ३. ११. ३७–३८)

इति ।

## ॥ इति तर्पणप्रकरणम् ॥

अथ देवार्चनम् । इत्थं मूलवचनानुक्तानि तर्पणान्तानि कर्माणि निरूपितानि । अथ मूलवचनोक्तं क्रमप्राप्तं देवतार्चनं निरूप्यते । तथा च नृसिंहपुराणम्—

'जलदेवान्[3] नमस्कृत्य ततो गच्छेद् गृहं बुधः ।
पौरुषेण तु[4] सूक्तेन ततो विष्णुं समर्चयेत्' ॥

(नृ. पु. ५८. ९२–९३)

---

*श्राद्धे विप्राणामुच्छिष्टं 'यजमानकुले जाता दासा दास्यो ऽन्नकाङ्क्षिण' इत्यादिना देयं तस्य ये दासादयो ऽधिकारिणः त एव हि वस्त्रनिष्पीडनोदकस्याधिकारिण इत्यर्थः ।

---

१. D. reads भोजनम्. २. B. C. E. and F. read ऽमिततेजसे.
३. The text of Nrisinha Purâṇa reads these two lines as follows:—

जले देवं नमस्कृत्य ततो गृहगतः पुनः ।
विधिना पुरुषसूक्तेन तत्र विष्णुं समर्चयेत् ॥.

४. All others except A. and I. substitute च for तु.

इति । आग्नेयपुराणे ऽपि[1]—

'मन्त्रैर्वैष्णव-रौद्रैस्तु सावित्रैः शाक्तिकैस्तथा ।
विष्णुं प्रजापतिं वाऽपि शिवं वा भास्करं तथा ॥
तल्लिङ्गैरर्चयेन्मन्त्रैः सर्वदेवान् समाहितः' ॥

इति । कूर्मपुराणे ऽपि—

'ब्रह्माणं शङ्करं सूर्यं तथैव मधुसूदनम् ।
अन्यांश्चाभिमतान् देवान् भक्त्या चाऽक्रोधनो नरः[2] ॥
स्वैर्मन्त्रैरर्चयेन्नित्यं पत्रैः पुष्पैस्तथाऽम्बुभिः[3]' ।

( कू. पु. १. २. १८. १०–११ )

इति । स्मृत्यन्तरे[4]—

'आदित्यमम्बिकां विष्णुं गणनाथं महेश्वरम् ' ।

इत्यादि । यद्यपि पूर्वं[5] मूलवचनव्याख्याने पूजनीयो देव एक एव—इति महता प्रबन्धेन प्रपञ्चितं तथापि दर्शनभेदमाश्रित्य विष्णु-शङ्करादिभेदोपन्यासो न विरुद्ध्यते दर्शनभेदश्च पुराणसारे वर्णितः—

'शैवं[6] च वैष्णवं शाक्तं सौरं वैनायकं तथा ।
स्कान्दं च भक्तिमार्गस्य दर्शनानि षडेव हि' ॥

---

१. H. and I. omit अपि. २. I. reads ऽत्वर॰. ३. The text of Kûrma Purâṇa reads -स्थाम्बुभिः. ४. All others except A. and I. omit the following portion—

स्मृत्यन्तरे—

' आदित्यमम्बिकां विष्णुं गणनाथं महेश्वरम् '　इत्यादि ।.

५. Except A. and I. all others read पूर्ववचन- for पूर्वं मूलवचन-. ६. B. C. and F. read this verse as follows:—

शैवं पाशुपतं शाक्तं सौरं वैनायकं तथा ।
वैष्णवं च तथा षष्ठं दर्शनानि षडेव हि ॥.

E. follows this reading, but differs in reading वैष्णवं चेति ज्ञेयानि for वैष्णवं च तथा षष्ठं. D. also follows this reading, but only in the first line.

इति । तत्र वैष्णवदर्शनानुसारी[1] पूजाक्रम आश्वमेधिके निरूपितः—

'शृणु पाण्डव तत्सर्वमर्चन[2]क्रममात्मनः[3] ।
स्थण्डिले पद्मकं कृत्वा चाष्टपत्रं सकर्णिकम् ॥
अष्टाक्षरविधानेन अथवा द्वादशाक्षरैः ।
वैदिकैरथ वा मन्त्रैर्मम सूक्तेन[4] वा पुनः ॥
स्थापितं मां ततस्तस्मिन्नर्चयीत[5] विचक्षणः ।
पुरुषं च ततः सत्यमच्युतं च युधिष्ठिर ॥
अनिरुद्धं च मां प्राहुर्वैखानसविदो जनाः ।
अन्ये त्वेवं विजानन्ति मां राजन् पाञ्चरात्रिकाः ॥
वासुदेवं च राजेन्द्र सङ्कर्षणमथापि वा ।
प्रद्युम्नं चानिरुद्धं च चतुर्मूर्तिं प्रचक्षते ॥
एताश्चान्याश्च राजेन्द्र संज्ञाभेदेन मूर्त्तयः ।
विद्ध्यध्यात्मपरा[6] एव मामेवं चार्चयेद्बुधः'॥

(वृ. गौ. स्मृ. ८. ८६-९१)

इति । आग्नेये ऽपि—

१. B. C. D. E. F. and G. read -कारी. २. D. and G. read अर्चना-, and the text of Vriddha Gautama अर्चनाक्रममुत्तमम्. ३. The text of V. G. reads स्वकं हितम्. ४. D. reads मन्त्रेण for सूक्तेन. ५. The text of V. G. reads उद्धरीत. ६. Except A. all other manuscripts are mistaken here. B. reads विद्ध्यनर्थांतिरा एव, C. F. G. H. and I. read विद्ध्यनर्थान्तरा एव, E. reads विद्ध्यन्वर्थान्तरा एव, D. विद्ध्यनर्थंतराद्देव, and the text of V. G. read विद्ध्यनर्थान्तरायैव.

अर्चनं सम्प्रवक्ष्यामि विष्णोरमिततेजसः।
यत्कृत्वा मुनयः सर्वे परं निर्गुणमाप्नुयुः[1]॥
अप्स्वग्नौ हृदये सूर्ये स्थण्डिले प्रतिमासु च।
षट्स्वेतेषु हरेः सम्यगर्चनं मुनिभिः स्मृतम्॥
अग्नौ क्रियावतां देवो [2]दिवि देवो मनीषिणाम्।
प्रतिमास्वल्पबुद्धीनां योगिनां हृदये हरिः॥
तस्य सर्वगतत्वाच्च स्थण्डिले भावितात्मनाम्।
[3]ऋग्वेदे पौरुषं सूक्तमार्चितं गुह्यमुत्तमम्॥
आनुष्टुभस्य सूक्तस्य त्रैष्टुभं[4] तस्य देवता।
पुरुषो यो जगद्बीजमृषिर्नारायणः स्मृतः॥
प्रथमां विन्यसेद्वामे द्वितीयां दक्षिणे करे।
तृतीयां वामपादे तु चतुर्थीं दक्षिणे न्यसेत्॥
पञ्चमीं वामजानौ तु षष्ठीं वै दक्षिणे न्यसेत्।
सप्तमीं वामकट्यां तु अष्टमीं दक्षिणे तथा॥
नवमीं नाभिमध्ये तु दशमीं हृदये तथा।
एकादशीं कण्ठमध्ये[5] द्वादशीं वामबाहुके॥
त्रयोदशीं दक्षिणे तु तथाऽऽस्ये तु चतुर्दशीम्।
अक्ष्णोः पञ्चदशीं चैव विन्यसेन्मूर्ध्नि षोडशीम्॥
यथा देहे तथा देवे न्यासं कृत्वा विधानतः।

---

१. I. reads निर्वाणमाप्नुयुः. २. I. reads दिवि for रवौ. This is correct, but all other manuscripts do not follow it. ३. This line is omitted in all others except A. and I. ४. Except A. and I. all others read त्रिष्टुबं; while D. त्रिष्टुभं, but probably this is a mistake. ५. D. and G read कण्ठदेशे.

न्यासेन तु भवेत् सो ऽपि स्वयमेव जनार्दनः ॥
एवं न्यासविधिं कृत्वा पश्चाद्यागं समाचरेत् ।
पूर्वया[1]ऽऽवाहयेद्देवमासनं तु द्वितीयया ॥
पाद्यं तृतीयया चैव चतुर्थ्याऽर्घ्यं प्रदापयेत् ।
पञ्चम्याऽऽचमनं दद्यात् षष्ठ्या स्नानं समाचरेत् ॥
सप्तम्या तु ततो वासो ह्यष्टम्या चोपवीतकम् ।
नवम्या ग[2]न्धलेपं तु दशम्या पुष्पकं तथा ॥
एकादश्या तथा धूपं द्वादश्या दीपमेव च[3] ।
नैवेद्यं तु त्रयोदश्या नमस्कारे चतुर्दशी ॥
प्रदक्षिणे पञ्चदशी न[4]मने षोडशी तथा ।
स्नाने वस्त्रे च नैवेद्ये दद्यादाचमनं तथा ॥
हुत्वा षोडशभिर्मन्त्रैः षोडशान्नस्य चाहुतीः ।
पुनः षोडशभिर्मन्त्रैर्दद्यात् पुष्पाणि षोडश ॥
तच्च सर्वं जपेद्भूयः पौरुषं सूक्तमुत्तमम् ।
[5]षण्मासात् सिद्धिमाप्नोति ह्येवमेव समर्चयन्[6] ॥
ध्येयः सदासवितृमण्डलमध्यवर्त्ती
नारायणः सरसिजासनसन्निविष्टः ।

---

१. B. C. D. F. and G. read पूर्वमावाहयेत्, but पूर्वया is more correct. २. All others except A. and I. read गन्धमेवं for गन्धलेपं; while E. reads गन्धमाल्ये, but this is a mistake. ३. All others except A. and I. substitute हि for च. ४. B. C. D. E. F. and G. read वर्जने; while H. व्रजने, I. व्यजने and in the marginal correction of D. it reads शयने. ५. I. reads अचिरात्. ६. D. and G. read समर्चयेत्, and I. समाचरन्.

केयूरवान् मक[1]रकुण्डलवान् किरीटी
हारी हिरण्मयवपुर्धृतशङ्खचक्रः' ॥

इति। बौधायनोऽपि—

'अथातो महापुरुषस्याहरहः परिचर्याविधिं व्याख्यास्यामः। स्नात्वा शुचिः शुचौ देशे गोमयेनोपलिप्य प्रतिकृतिं कृत्वा [2]अक्षत-पुष्पैर्यथालाभमर्चयेत्। सह पुष्पोदकेन महापुरुषमावाहयेत्। ॐ भूः पुरुषमावाहयामि ॐ भुवः पुरुषमावाहयामि ॐ सुवः पुरुषमावाहयामि ॐ भूर्भुवःसुवः [3]पुरुषमावाहयामीत्यावाह्य आयातु भगवान् महापुरुष [4]इति। अथ स्वागतेनाभिनन्दति, [5]स्वागतमधुना भगवतो महापुरुषस्य। भगवते महापुरुषाय एतदासनमु[6]पक्लृप्तमत्रास्यतां भगवान् महापुरुष [7]इति कूर्चं ददाति। भगवतोऽयं कूर्चो दर्भमयस्त्रिवृद्धरितसुवर्णस्तं जुषस्वेति। अत्राधः स्थानानि कल्पयति, अग्रतः शङ्खाय कल्पयामि। परतश्चक्राय कल्पयामि। दक्षिणतो गदायै कल्पयामि। वामतो वनमालायै कल्पयामि। पश्चिमतः श्रीवत्साय कल्पयामि, गरुत्मते कल्पयामि।

---

१. I. reads कनक-. २. I. reads फल-पुष्पैः. ३. I. alone adds महा- before ...ुष-. ४. I. reads इत्येतेन. ५. B. C. D. E. and F. read स्वागतमधुना स्वागतं भगवते, and G. and H. स्वागतमनुस्वागतं भगवते. ६. B. C. and F. read -मुपक्लृप्तमत्रावास्यतां, E. -मुपक्लृप्तमत्रास्यतां, D. -मुपकल्प्यात्रास्यतां and G. and H.- मुपक्लृप्तमन्वास्यतां. ७. All others except A. and I. read इत्यत्र.

उत्तरतः श्रियै कल्पयामि, सरस्वत्यै कल्पयामि, पुष्ट्यै कल्पयामि, तुष्ट्यै कल्पयामि। अथ सावित्र्या, पात्रमभिमन्त्र्य, प्रक्षाल्य, त्रिरपः[1] परिषिच्य, अप आनीय, सह पवित्रेणादित्यं दर्शयेत् ओमिति। ऋतमिति स्नाप्स्यन्, 'त्रीणि पदा विचक्रम' इति पाद्यं दद्यात्। प्रणवेनार्घ्यम्। अथ व्याहृतिभिर्निर्माल्यं व्यपोह्योत्तरतो विष्वक्सेनाय नम इति। अथैनं स्नापयति 'आपोहिष्ठामयो भुवः' इति तिसृभिः[2] 'ब्रह्मजज्ञानं' वामदेव्यर्चा यजुः पवित्रेणेत्येताभिः षड्भिः स्नापयित्वा अथाद्भिस्तर्पयति। केशवं नारायणं माधवं गोविन्दं विष्णुं मधुसूदनं त्रिविक्रमं वामनं श्रीधरं हृषीकेशं पद्मनाभं दामोदरं तर्पयित्वा, अथैतानि वस्त्र-यज्ञोपवीताचमनीयान्युदकेन व्याहृतिभिर्दत्वा व्याहृतिभिः प्रदक्षिणमुदकं परिषिच्य 'इदं विष्णुर्विचक्रम' इति गन्धं दद्यात्। 'तद्विष्णोः परमं पदम्' इति पुष्पम्, 'इरावती' इत्यक्षतान्, सावित्र्या धूपम्, 'उद्दीप्यस्व' इति दीपम, 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां भगवते महापुरुषाय जुष्टं चरुं निवेदयामीति नैवेद्यम्। अथ केशवादिनामभिर्द्वादश पुष्पाणि

---

१. I. omits त्रिरपः. २. तिसृभिः is omitted in all others except A. D. and I., but D. omits the following portion -ब्रह्मजज्ञानं वामदेव्यर्चा यजुः पवित्रेणेत्येताभिः.

दद्यात्। शङ्खाय नमः, चक्राय नमः, वनमालायै नमः, श्रीवत्साय नमः, गरुत्मते नमः, श्रियै नमः, सरस्वत्यै नमः, पुष्ट्यै नमः, तुष्ट्यै नमः इति। अवशिष्टैर्गन्धमाल्यैर्ब्राह्मणानलङ्कृत्य[1] अथैनं ऋग्यजुःसामाथर्वभिः[2] स्तुवन् ध्रुवसूक्तं जपित्वा पुरुषसूक्तं वाऽन्यांश्च वैष्णवान्मन्त्रानित्येके। ॐ भूर्भुवः सुवरोम् भगवते महापुरुषाय चरुमुद्वासयामीति चरुमुद्वास्य। उद्वासनकाले ॐ भूः पुरुषमुद्वासयामि, ॐ भुवः पुरुषमुद्वासयामि, ॐ सुवः पुरुषमुद्वासयामि, ॐ भूर्भुवः सुवः पुरु[3]षमुद्वासयामीत्युद्वास्य। प्रयातु भगवान् महापुरुषोऽनेन हविषा तृप्तो हरिः पुनरागमनाय पुनः सन्दर्शनाय चेति। प्रतिमास्थानेष्वप्स्व[4]ग्नावावाहन-विसर्जनवर्जं सर्वं समानम्। महत्स्वस्त्ययनमित्याचक्षते महत्स्वस्त्ययनमित्याह भगवान् बौधायनः'।

इति। कूर्मपुराणेऽपि—

'न विष्णवाराधनात् पुण्यं विद्यते कर्म वैदिकम्।
तस्मादिनादौ मध्याह्ने नित्यमाराधयेद्धरिम्॥

---

१. D. inserts अथ शिष्टैर्माल्यैरात्मानमलंकृत्य. २. H. and I. omit अथर्वभिः. ३. I. only adds महा- before पुरुष-. ४. D. omits अप्सु; while G. reads प्रतिमास्थाने च स्नानावाहन- etc.

तद्विष्णोरिति मन्त्रेण सूक्तेन पुरुषेण च[1] ।
नैताभ्यां[2] सदृशो मन्त्रो वेदेषूक्तश्चतुर्ष्वपि[3]' ॥
( कू. पु. १. २. १८. ९४–९९ )

इति । एवं[4] वैष्णवदर्शनानुसारिपूजा ज्ञातव्या ।

' अथवा देवमीशानं भगवन्तं सनातनम् ।
आराधयेन्महादेवं भावपूतो[5] महेश्वरम् ॥
मन्त्रेण रुद्रगायत्र्या प्रणवेनाथ वा पुनः ।
ईशानेनाथ वा रुद्रैस्त्र्यम्बकेन[6] समाहितः ॥
पुष्पैः पत्रैरथाद्भिर्वा चन्दनाद्यैर्महेश्वरम् ।
तथोन्नमः शिवायेति मन्त्रेणानेन वा यजेत् ॥
नमस्कुर्यान्महादेवमृतं सत्यमितीश्वरम् ।
निवेदयीत चात्मानं यो ब्रह्माणमितीश्वरम् ॥
प्रदक्षिणं द्विजः कुर्यात् पञ्च ब्रह्माणि[7] वा जपेत् ।
ध्यायीत देवमीशानं व्योममध्यगतं शिवम्' ॥
( कू. पु. १. २. १८. ९७–१०१ )

इति । बौधायनो ऽपि[8]–

'अथातो महादेवस्याहरहः परिचर्याविधिं व्याख्यास्यामः । स्नात्वा शुचौ देशे गोमयेनोपलिप्य प्रतिकृतिं कृत्वा ऽक्षतपुष्पैर्यथालाभमर्चयेत् । सह पुष्पोदकेन महादेवमावाहयेत् ।

---

१. All others except I. substitute तु for च. २. The text of Kûrmā-purâṇa reads न ताभ्यां. ३. B. C. E. and F. read च त्रिष्वपि for चतुर्ष्वपि. ४. This line is omitted in all manuscripts except A. and I. ५. D. and G. read भावपूतं. ६. I. reads रौद्रैः. ७. I. reads ब्रह्माणि through mistake. ८. D. omits ऽपि.

ॐ भूर्महादेवमावाहयामि, ॐ भुवो महादेवमावाहयामि, ॐ सुवः महादेवमावाहयामि, ॐ भूर्भुवः सुवः महादेवमावाहयामि-इत्यावाह्य आयातु भगवान्महादेव इति।अथ स्वागतेनाभिनन्दति स्वागतमनुस्वागतं[१] भगवते महादेवाय स्वासनमुपक्लृप्तमत्रास्यतां[२][३] भगवान् महादेव इति। अत्र कूर्चं ददाति, भगवतो ऽयं कूर्चो दर्भमयस्त्रिवृद्धरितसुवर्णस्तं जुषस्वेति। अत्र स्थानानि कल्पयति[४]। अग्रतो विष्णवे[५] कल्पयामि, ब्रह्मणे कल्पयामि। दक्षिणतः स्कन्दाय कल्पयामि, विनायकाय कल्पयामि। पश्चिमतः शूलाय कल्पयामि, महाकालाय कल्पयामि। उत्तरतः उमायै[६] कल्पयामि, नन्दिकेश्वराय कल्पयामि। इति कल्पयित्वा ऽथ सावित्र्या पात्रमभिमन्त्र्य प्रक्षाल्य त्रिरपः परिषिच्य[७] पवित्रमप आनीय सह पवित्रेणादित्यं दर्शयेदोमिति। ऋतमिति[८] स्नाप्स्यन् त्वरितरुद्रेण पाद्यं दद्यात्। प्रणवे-

१. I. reads स्वागतमधुना, but repetition shows more respect. २. I. does not prefix सु to आसन. ३. All others except A. and I. read आस्तां भगवान् for अत्रास्यतां भगवान्; while I. reads भगवन्. ४. D. reads कल्पयामि. ५. B. C. and F. read ब्रह्मणे कल्पयामि first, and E. G. H. omit विष्णवे कल्पयामि, and D. omits अग्रतः and ब्रह्मणे कल्पयामि. ६. D. reads दुर्गायै, and omits नन्दिकेश्वराय कल्पयामि. ७. Except A. B. C. and F. others read त्रिरपः पवित्रं for त्रिरपः परिषिच्य. ८. Through mistake I. reads here स्नानं पठिति रुद्रेण for ऋतमिति स्नाप्स्यन् त्वरितरुद्रेण.

नार्घ्यम् । अथ व्याहृतिभिर्निर्माल्यं व्यपोह्यो-
त्तरतश्[1]चण्डेशाय नम इति । अथैनं स्नापयित्वा
'आपोहिष्ठा मयोभुव' इति तिसृभिः, 'हिरण्यव-
र्णाः शुचयः पावका' इति चतसृभिः, 'पवमानः
सुवर्चन' इत्यनुवाकेन स्नापयित्वा अद्भिस्तर्प-
यति । [2]भवं देवं तर्पयामि, शर्वं देवं तर्पयामि,
ईशानं देवं तर्पयामि, पशुपतिं देवं तर्पयामि,
रुद्रं देवं तर्पयामि, उग्रं देवं तर्पयामि, [3]भीमं देवं
तर्पयामि, महान्तं देवं तर्पयामि—इति तर्पयित्वा
ऽथैतानि वस्त्र-यज्ञोपवीताचमनीयान्युदकेन व्या-
हृतिभिर्दत्वा, व्याहृतिभिः प्रदक्षिणमुदकं परि-
षिच्य 'नमस्ते रुद्र मन्यव' इति गन्धं दद्यात् ।
'सहस्राणि सहस्रशः' इति पुष्पं दद्यात् । 'ईशानं
त्वां भुवनानामधिश्रियं' इत्यक्षतान् दद्यात् ।
सावित्र्या धूपम् । 'उद्दीप्यस्व' इति दीपम् । देवस्य
त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ता-
भ्यां भगवते महादेवाय जुष्टं चरुं निवेदया-
मीति नैवेद्यम् । अथाष्टभिर्नामधेयैरष्टौ पुष्पाणि
दद्यात् । भवाय देवाय नमः, शर्वाय देवाय
नमः, ईशानाय देवाय नमः, पशुपतये देवाय
नमः, रुद्राय देवाय नमः, उग्राय देवाय नमः,

---

१. All others except A. and I. read चण्डाय. २. I. reads महादेवं तर्पयामि. ३. B. C. E. F. and G. omit भीमं देवं तर्पयामि through mistake.

भीमाय देवाय नमः, महते देवाय नमः। विष्णवे नमः, ब्रह्मणे नमः, स्कन्दाय नमः, विनायकाय नमः, शूलाय नमः, महाकालाय नमः, उमायै नमः, नन्दिकेश्वराय नम इति। चरुशेषेणाष्टभिर्नामधेयैरष्टाहुतीर्जुहोति। भवाय देवाय स्वाहेत्यादिभिर्हुत्वाऽवशिष्टैर्गन्धमाल्यैर्ब्राह्मणानलंकृत्य अथैनं ऋग्यजुःसामभिः स्तुवन्ति। 'सहस्राणि सहस्रश' इत्यनुवाकं जपित्वाऽन्यांश्च रौद्रान्मन्त्रान्यथाशक्ति[1] जपित्वा ॐ भूर्भुवः सुवरोमिति[2] महादेवाय चरुमुद्वासयामीत्यादिभिरुद्वास्य[3]। उद्वासनकाले ॐ भूः महादेवमुद्वासयामीति प्रतिमन्त्रं[4] रुद्रमुद्वास्य।

प्रयातु भगवानीशः सर्वलोकनमस्कृतः।
अनेन हविषा तृप्तः पुनरागमनाय च॥

पुनः सन्दर्शनाय वेति। प्रतिमास्थानेष्वप्स्वग्नावावाहन-विसर्जनवर्जं सर्वं समानम्। महत्स्वस्त्ययनमित्याचक्षत इत्याह भगवान् बौधायनः'।

इति। शिवार्चनं प्रशंसति नन्दिकेश्वरः—

---

१. B. C. F. insert एकैकम् after यथाशक्ति. २ B. C. and F. read स्वर्महरोम्. ३. In the marginal correction of H. appears the following portion—चरुमुद्वासयामीति चरुमुद्वास्य अमृतापिधानमसीति प्रतिपदं कृत्वा त्र्यम्बकमित्याचमनीयं दद्यात्. I. omits उद्वासयामीति. ४. B. C. and F. give detail and read ॐ भूर्महादेवमुद्वासयामि, ॐ भुवर्महादेवमुद्वासयामि, ॐ स्वर्महादेवमुद्वासयामि, ॐ भूर्भुवःस्वर्महादेवमुद्वासयामि.

'य[1]ः प्रदद्यात् गवां लक्षं दोग्ध्रीणां वेदपारगे ।
एकाहमर्च्चयेल्लिङ्गं तस्य पुण्यं ततो ऽधिकम् ॥
सकृत् पूजयते यस्तु भगवन्तमुमापतिम् ।
त[2]स्याऽश्वमेधादधिकं फलं भवति भूसुराः' ॥

इति । [3]निर्माल्यगन्धो ऽपि धार्यः । 'देवानभ्यर्च्य गन्धेन' इत्यादि स्मृतिविधानात् । देवार्चनाकरणे दोषः कूर्मपुराणे ऽभिहितः—

'यो मोहादथवाऽऽलस्यादकृत्वा देवताऽर्चनम् ।
भुङ्क्ते स याति नरकं सूकरे[4]ष्वभिजायते' ॥

इति । ( कू. पु. १. २. १८. १२१ )

॥ इति देवतापूजाप्रकरणम् ॥

अथ गुरुपूजाप्रकरणम् । इ[5]त्थं मूलव[6]चनोक्तं देवतापूजनं निरूपितम् । 'देवतानां च'— इति चकारेण गुरुं समुच्चिनोति । गुरोरपि दे[7]वतावत् पूजनीयत्वात् । अत एव श्रुतिः—

' यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
त[8]स्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः' ॥
(श्वे. उ. ६. २३)

इति । शैवपुराणे [9]अपि—

---

१. D. reads संप्रदद्यात्. २. B. C. D. E. F. H. and I. read अस्याश्व-; while G. read अश्वमेधादप्यधिकं. ३. Except A. and I. all others omit the following portion-निर्माल्यगन्धोऽपि धार्यः। 'देवानभ्यर्च्य गन्धेन' इत्यादिस्मृतिविधानात्. ४. I. reads -ष्वपि. ५. I. reads एवम्. ६. I. reads -वचनोक्तदेवतापूजनम्. ७. G. and H. read देववत्. ८. This latter half is omitted in all others except A. and I. ९. ऽपि is omitted in I.

'यो गुरुः स शिवः प्रोक्तो यो मन्त्रः स च शङ्करः।
शिव-विद्या*-गुरूणां च भेदो नास्ति कथञ्चन ॥
शिवे मन्त्रे गुरौ यस्य भावना सदृशी भवेत्।
भोगो मोक्षश्च सिद्धिश्च शीघ्रं तस्य भवेद्ध्रुवम् ॥
वस्त्राभरण-माल्यानि शयनान्यासनानि च।
प्रियाणि चात्मनो यानि तानि देयानि वै गुरोः।
तोषयेत्तं प्रयत्नेन मनसा कर्मणा गिरा' ॥
(शि. पु. ९. १. ११६–२०)

इति। मनुरपि–

'इमं लोकं मातृभक्त्या पितृभक्त्या तु मध्यमम्।
गुरुशुश्रूषया चैवं ब्रह्मलोकं समश्नुते ॥
सर्वे तस्यादृता धर्मा यस्यैते त्रय आदृताः।
अनादृतास्त्वे यस्यैते सर्वास्तस्याफलाः क्रियाः ॥
यावत् त्रयस्ते जीवेयुस्तावन्नान्यं समाचरेत्।
तेष्वेव नित्यं शुश्रूषां कुर्यात् प्रियहिते रतः' ॥

इति। (म. स्मृ. २. २३३–२३५)

## ॥ इति गुरुपूजाप्रकरणम् ॥

* विद्याशब्देनात्र मन्त्रो ग्राह्यः। अग्रेऽपि तथैवोक्तत्वात्।

---

१. Except A. B. C. and F. others read यः शिवः for यो मन्त्रः, but the form reading is a mistake. २. The text of Manu substitutes तु for च. ३. The text of Manu substitutes तु for च.

अथ वैश्वदेवप्रकरणम् । तत्र पञ्चमभागकृत्यमाह दक्षः—

'पञ्चमे च तथा भागे संविभागो यथार्हतः ।
पितृ-देव-मनुष्याणां कीटानां चोपदिश्यते' ॥
(द. स्मृ. २. ४२)

इति । यद्यपि 'आतिथ्यं वैश्वदेवं च'— इत्यातिथ्यस्य पूर्वभावित्वं मूलवचनोक्तं तथापि वैश्वदेवस्य देवपूजाऽनन्तरभावित्वं नृसिंहपुराणे ऽभिहितम्—

'पौरुषेण[१] च सूक्तेन ततो विष्णुं समर्चयेत् ।
वैश्वदेवं ततः कुर्याद्बलिकर्म तथैव[२] च' ॥
(नृ. पु. ५८. ९३)

इति । तत्र—'ततः'—इति पञ्चमीश्रुत्या क्रमः प्रतीयते । मूलवचने तु पाठमात्रेण । पाठात्तत्[३]सन्निधिरूपाच्छ्रुतिर्बलीयसी[४] —इति श्रुतिलिङ्गसूत्रे (पू. मी. ३. ३. १४) व्यवस्थापितम् । तस्माद्वैश्वदेवः प्रथमं कर्त्तव्यः । एवं च सति वेदपाठो ऽप्यनुग्रहीतो भवति ।

'देवयज्ञः पितृयज्ञो भूतयज्ञो मनुष्ययज्ञो ब्रह्मयज्ञः' ।
( आ. गृ. सू. ३. १. २ )

इति—स्मार्त्ताच्च पाठाद्वैदिकः पाठो बलीयानिति विरोधाधिकरण- (पू. मी. १. ३. २) न्यायेनावगम्यते । तस्मादपि वैश्वदेवस्य प्राथम्यम् । तत्र वैश्वदेवं विधत्ते व्यासः—

१. The text of Nṛisinha Purâṇa reads this as follows:—
विधिना पुरुषसूक्तेन तत्र विष्णुं समर्चयेत् ।.

२. The text of Nṛisinha Purâṇa reads यथाविधि for तथैव च. ३. तत् is omitted in all others except A. and I. ४. A. reads पाठान्तरनिरूपिका श्रुतिर्बलीयसी.

'वैश्वदेवं प्रकुर्वीत स्वशाखाविहितं ततः।
संस्कृतान्नैर्हि विविधैर्[1] विष्यं-व्यञ्जनान्वितैः॥
तैरेवाऽन्नैर्बलिं दद्याच्छेषमाप्लाव्य वारिणा।
[2]कृताऽपसव्यः स्वधया [3]कव्यं दक्षिणतो हरेत्'॥

इति। ततो देवार्चनानन्तरमित्यर्थः। नारायणोऽपि—

'सभार्यस्तु शुचिः स्नातो विधिना ऽचम्य वाग्यतः।
प्रविश्य* सुसमिद्धेऽग्नौ वैश्वदेवं समाचरेत्'॥

इति। कूर्मपुराणेऽपि—

'शालाग्नौ लौकिके वाऽथ जले भूम्यामथापि वा।
वैश्वदेवस्तु कर्त्तव्यो देवयज्ञः स वै स्मृतः॥
यदि स्याल्लौकिके [4]पाकस्ततो[5]ऽन्नं तत्र हूयते।
शालाग्नौ तु पचेदन्नं [6]विधिरेष सनातनः'॥
(कू. पु. १.२.१८.१०६-१०७)

इति। अङ्गिरा[7]ऽपि—

'शालाग्नौ वा पचेदन्नं लौकिके वा ऽपि नित्यशः।
यस्मिन्नग्नौ पचेदन्नं तस्मिन् होमो विधीयते'॥

इति। शातातपोऽपि[8]—

'लौकिके वैदिके वाऽपि [9]हुतोत्सृष्टे जले क्षितौ।
वैश्वदेवस्तु कर्त्तव्यः पञ्चसूना ऽपनुत्तये'।

---

* 'प्रविश्य' गृहमग्न्यागारं वेत्यर्थः।

---

१. D. हविर्भिर्व्यञ्जनान्वितैः. २. I. reads कृत्वाऽपसव्यं. ३. All others except A. B. C. and F. read सर्वं दक्षिणतः while I. सर्वदक्षिणतो. ४. The text of Kûrma Purâṇa reads पक्वं for पाकः. ५. The text of Kûrma Purâṇa reads तत्र देवान्नं, B. C. E. F. and G. read तत्पचेदन्नम्, H. तत्र चेदन्नम् and D. न त्यजेदन्नं. ६. D. omits the following -विधिरेष सनातनः' ॥ इति। अङ्गिरा अपि—'शालाग्नौ वा पचेदन्नं लौकिके वाऽपि नित्यश.। यस्मिन्नग्नौ पचेदन्नं. ७. अपि is omitted by A. ८. शातातपो ऽपि is omitted by D. ९. D. reads हुतौ सृष्टे.

इति । सूनाः पञ्च दर्शयति यमः—

'पञ्च सूना गृहस्थस्य वर्त्तन्तेऽहरहः सदा ॥
कण्डनी पेषणी चुल्ली जलकुम्भ उपस्करः ॥
एतानि वाहयन् विप्रो बध्यते वै मुहुर्मुहुः ।
एतासां पावनार्थाय पञ्चयज्ञाः प्रकल्पिताः' ॥

इति । सूना हिंसास्थानानि । कण्डनी मुसलोलूखलादिः । पेषणी दृषदुपलादिः । चुल्ली पाकस्थानम् । जलकुम्भः उदकस्थानम् । उपस्करः शूर्पादिः । अवस्करः— इति पाठे मार्जन्यादिर्द्रष्टव्यः । एताः सूनाः स्वस्वकार्यं प्रापयन् पापेन युज्यते इत्यर्थः। तत्र कालद्वयेऽपि वैश्वदेवःकर्त्तव्य इत्याह कात्यायनः—

'सायं-प्रातर्वैश्वदेवः कर्त्तव्यो बलिकर्म च ।
अनश्नताऽपि सततमन्यथा किल्बिषी भवेत्' ॥

(का. स्मृ. २. १३. १०)

इति । होमप्रकारमाह आश्वलायनः—

'अथ सायं प्रातः सिद्धस्य हविष्यस्य जुहुयात् । (१) अग्निहोत्रदेवताभ्यः सोमाय वनस्पतये अग्नी-षोमाभ्यामिन्द्राग्निभ्यां द्यावा-पृथिवीभ्यां धन्वन्तरय इन्द्राय विश्वेभ्यो देवेभ्यो ब्रह्मणे (२) स्वाहा' ।

(आ. गृ. सू. १.२. १. ३)

इति । हविष्यस्येति हविर्योग्यस्येत्यर्थः । अग्निहोत्रदेवताभ्यः सूर्याग्नि-प्रजापतिभ्य इत्यर्थः । आपस्तम्बोऽपि—

---

१. A. D. E. and G. read खण्डनी. २. B. C. D. and G. read बध्यते. ३. B. C. and F. read एतेषां, but it seems to be incorrect. ४. I. reads प्रकीर्तिताः. ५. A. B. C. D. E. F. and G. read खण्डनी. ६ D. reads तस्य; while I. reads तच.

'औपासने पचने वा षड्भिराद्यैः प्रतिमन्त्रं
हस्तेन जुहुयात् । (१६) उभयतः परिषेचनं
यथा पुरस्तात्' ।

(आ. ध. सू. २.२. ३. १६.-१७)

इति । आद्यैरनुवाकादावुक्तैः 'अग्नये स्वाहा' इत्यादिभिः स्विष्टकृदन्तैः । उभयतः कर्मादावन्ते चेत्यर्थः । पारस्करोऽपि—

'वैश्वदेवादन्नात् पर्युक्ष्य स्वाहाकारैर्जुहुयात् ।
ब्रह्मणे प्रजापतये गृह्याभ्यः कश्यपायानुमतये' ।

( पा. गृ. सू. २. ९. २ )

इति । अत्र यथास्वशाखं व्यवस्था । होतव्यान्नसंस्कारमाह व्यासः—

'जुहुयात् सर्पिषाऽभ्यक्तं तैल-क्षारविवर्जितम् ।
दध्यक्तं पयसाऽक्तं वा तदभावेऽम्बुनाऽपि वा' ॥

इति । द्रव्यानुकल्पश्चतुर्विंशतिमते दर्शितः—

'अलाभे येन केनापि फल-शाकोदकादिभिः ॥
पयो-दधि-घृतैः कुर्याद्वैश्वदेवं स्रुवेण तु ।
हस्तेनान्नादिभिः कुर्यादद्भिरञ्जलिना जले' ॥

इति । यदद्यते तेनैव होतव्यम् । तदुक्तं गृह्यपरिशिष्टे—

---

१. Except A. and I. all others read उपासने, but it is incorrect. २. B. C. E. F. and G. read अग्नौ अनुवाकादावुक्तैरग्नये स्वाहेत्यादिभिः, D. reads अग्नौ अनुवाकानुक्तैरग्नये स्वाहेत्यादिभिः; while H. reads आद्यैरनुवाकादावुक्तैरग्नये स्वाहेत्यादिभिः, all these for आद्यैरनुवाकादावुक्तैरग्नये स्वाहा इत्यादिभिः स्विष्टकृदन्तैः । उभयतः कर्मादावन्ते चेत्यर्थः । पारस्करोऽपि. ३. B. C. D. E. F. G. and I. read कात्यायनो. H. also reads the same, but there is a marginal correction. ४. I. reads वैश्वदेवादन्नात् through mistake. ५. D. E. and G. read गृहेभ्यः, and H. I. read गृह्येभ्यः. ६ I. reads काश्यपाया-.

'शाकं वा यदि वा पत्रं मूलं वा यदि वा फलम् ।
सङ्कल्पयेद् यदाहारस्तेनैव जुहुयादपि' ॥

इति । क्षार-लवणा-ऽवरान्नसंसृष्टेना ऽहविष्येण होमो ऽग्नौ न कार्यः । किन्तूष्णं भस्माग्न्यायतनादुत्तरतो ऽपोह्य तस्मिन् होतव्यम् । तदाहाऽऽपस्तम्बः—

'न क्षार-लवणहोमो विद्यते । तथा ऽवरान्न-[1]
संसृष्टस्य च । अहविष्यस्य[2] होम उदीचीन-
मुष्णं भस्मा ऽपोह्य तस्मिन् जुहुयात्तद्धुतम-
हुतं चाग्नौ भवति' ।
(आ. ध. सू. २ ६. १५. १६–१७)

इति । परिशिष्टे ऽपि—

'उत्तानेन तु हस्तेन ह्यङ्गुष्ठाग्रेण पीडितम् ।
संहताङ्गुलिपाणिस्तु वाग्यतो जुहुयाद्धविः' ॥

इति । अनग्निकस्य वैश्वदेवे विशेषमाह वृद्धवसिष्ठः—

'अनग्निकस्तु यो विप्रः सो ऽन्नं व्याहृतिभिः स्वयम् ।
हुत्वा शाकलमन्त्रैश्च शिष्टं काकबलिं हरेत्' ॥

इति । 'देवकृतस्यैनस'[3] इत्याद्याः शाकलमन्त्राः । विष्णुरपि—

'अन्नं व्याहृतिभिर्हुत्वा हुत्वा[4] मन्त्रैश्च शाकलैः ।
प्रजापतेर्हविर्हुत्वा पूजयेदतिथिं ततः' ॥

इति । भूतयज्ञः कूर्मपुराणे दर्शितः—

---

१. B. C. D. E. F. G. H. and I. read परान्नसंसृष्टस्य. २. I. reads हविष्यस्य होमः, but this is a mistake. ३. All others except A. and I. omit 'देवकृतस्यैनस' इत्याद्याः शाकलमन्त्राः. ४. D. substitutes स्वयं for हुत्वा.

'देवेभ्यस्तु[1] हुतादन्नाच्छेषाद्भूतबलिं हरेत् ।
भूतयज्ञः स[2] वै प्रोक्तो भूतिदः सर्वदेहिनाम्' ॥
( कू. पु. १. २. १८. १०८ )

इति । हारीतोऽपि—

'वास्तुपाल-भूतेभ्यो बलिहरणं भूतयज्ञः' ।
( हा. स्मृ. १५. ३ )

इति । कात्यायनोऽपि—

'[3]उद्धृत्य हविरासिच्य हविष्येण घृतादिना ।
स्वशाखाविधिना हुत्वा तच्छेषेण बलिं हरेत्' ॥
( का. स्मृ. २. १३. ७ )

इति । शौणकर्तृनाहात्रिः—

'पुत्रो भ्राताऽथ वा ऋत्विक् शिष्य-श्वशुर-मातुलाः ।
पत्नी-श्रो[4]त्रिय-याज्याश्च दृष्टास्तु बलिकर्मणि' ॥

इति । गृहे कर्त्रन्तराभावे प्रवसता स्वयमेव कर्त्तव्यमित्याह बौ[5]धायनः—

'प्रवासं गच्छतो यस्य गृहे कर्त्ता न विद्यते ।
पञ्चानां महतामेषां स यज्ञैः सह गच्छति' ॥

इति । बलिहरणप्रकारमाहाऽऽश्व[6]लायनः—

१. The text of Kûrma Purâṇa substitutes च for तु. २. The text of Kûrma Purâṇa reads स विज्ञेयो. ३. This verse is not found in a printed copy of Kâtyâyana-Smṛiti, but it is found in our Telgu manuscript. ४. D. reads -श्रात्रीय-. ५. B. C. and F. read दक्षः; H. also reads the same, but the marginal correction is शौनकः. ६. D. and I. read शौनकः for आश्वलायनः.

'अथ बलिहरणम् ।(३) एताभ्यश्चैव देवताभ्यो ऽद्भ्य ओषधि-वनस्पतिभ्यो गृहाय गृहदेवताभ्यो वास्तुदेवताभ्यः ।(४) इन्द्रायेन्द्रपुरुषेभ्यो यमाय यमपुरुषेभ्यो वरुणाय वरुणपुरुषेभ्यः सोमाय सोमपुरुषेभ्यः-इति प्रतिदिशम् ।(५) ब्रह्मणे ब्रह्मपुरुषेभ्यः—इति मध्ये । (६) विश्वेभ्यो देवेभ्यः । (७) सर्वेभ्यो भूतेभ्यो दिवाचारिभ्य-इति दिवा । (८) नक्तंचारिभ्य—इति नक्तम् । (९) रक्षोभ्य—इति उत्तरतः । (१०) स्वधा पितृभ्यः—इति प्राचीनावीती शेषं दक्षिणा[1] निनयेत्' ।

( आ. गृ. सू. १. २. ३—११)

इति । आपस्तम्बो ऽपि—

'अपरेणाग्निं सप्तमाष्टमाभ्यामुदगपवर्गम्[2] । (२०) उदधानसन्निधौ नवमेन । (२१) मध्ये ऽगारस्य दशमैकादशाभ्यां प्रागपवर्गम् । (२२) उत्तरपूर्वदेशे ऽगारस्योत्तरैश्चतुर्भिः। (२३।३) शय्यादेशे कामलिङ्गेन । (१) देहल्यामन्तरिक्षलिङ्गेन । (२) उत्तरेणापिधान्याम् । (३) उत्तरैर्ब्रह्मसदने[3] । (४) दक्षिणतः पितृलिङ्गेन[4] प्राचीनावीती । अवाचीनपाणिः कुर्यात् । (५)

---

१. A. reads दक्षिणायां. २. उदगपवर्गम् is omitted by all others except A. I. and the text of Âpastamba. ३. -लिङ्गे ऽग्न्युत्तरापिधान्यामुत्तरब्रह्मसदने is the reading of B. C. F. E., and G. उत्तर ब्रह्मसदने. ४. D omits the portion देहल्यामन्तरिक्षलिङ्गेन । उत्तरेणापिधान्याम् । उत्तरैर्ब्रह्मसदने । दक्षिणतः पितृलिङ्गेन.

रौद्र उत्तरतो[1] यथा देवताभ्यः। (६) तयोर्नाना परिषेचनं धर्मभेदात्[2]। (७) नक्तमेवोत्तरेण[3] वैहायसम्'। (८)

(आ. ध. सू. २. २. ३-४. २०-,८)

इति। मार्कण्डेयपुराणे[4]ऽपि—

'एवं गृहबलिं कृत्वा गृहे गृहपतिः शुचिः॥
आप्यायनाय भूतानां कुर्यादुत्सर्गमादरात्'।

(मा. पु. २९. २२-२३)

इति। कूर्मपुराणे च—

'श्वभ्यश्च श्वपचेभ्यश्च पतितेभ्यस्तथैव[5] च।
दद्याद्भूमौ बहिश्चान्नं पक्षिभ्योऽथ द्विजोत्तमाः[6]॥

(कू. पु. १. २. १८. १०९)

इति। मनुरपि—

'शुनां च पतितानां च श्वपचां पापरोगिणाम्।
वायसानां कृमीणां च शनकैर्निर्वपेद्भुवि॥

(म. स्मृ. ३. ९२)

इति। अन्नमिति शेषः। अन्नोत्सर्गमन्त्रो विष्णुपुराणे दर्शितः[7]—

१. The text of Âpastamba reads उत्तरो. २. I. adds तयोः before धर्म-. ३. The text reads -मेवोत्तमेन. ४. B. C. E. and F. read मार्कण्डेयेऽपि, H. and I. मार्कण्डेयोऽपि. ५. The text of Kûrma Purâṇa reads पतितादिभ्य एव च. ६. The text of Kûrma Purâṇa reads पक्षिभ्यो द्विजसत्तमाः; while G. and H. द्विजोत्तमः. ७. D. reads ऽभिहितः

'देवा मनुष्याः पशवो वयांसि
सिद्धाः सयक्षोरग-दैत्यसङ्घाः[1] ।
प्रेताः पिशाचास्तरवः समस्ता
ये चाऽन्नमिच्छन्ति मयाऽत्रं[2] दत्तम् ॥
पिपीलिकाः कीट-पतङ्गकाद्या
बुभुक्षिताः कर्मनिबन्धबद्धाः ।
प्रयान्तु ते तृप्तिमिदं मया ऽन्नं
तेभ्यो विसृष्टं[3] सुखिनो भवन्तु ॥
येषां न माता न पिता न बन्धुर्
नैवान्नसिद्धिर्न तथाऽन्नमस्ति ।
तत्तृप्तये ऽन्नं भुवि दत्तमेतत्
प्रयान्तु[4] तृप्तिं मुदिता भवन्तु ॥
भूतानि सर्वाणि तथा ऽन्नमेतत्
अहं च विष्णुर्न ततो[5] ऽन्यदस्ति ।
तस्मादिदं भूतहिताय[6] भूमौ
अन्नं प्रयच्छामि भवाय[7] तेषाम् ॥
चतुर्दशो लोकगणो य एष
तत्र स्थिता ये किल भूतसङ्घाः ।

१. D. substitutes च for स-. २. I. reads प्रदत्तम्. the text of Vishṇu Purâṇa follows the same reading. ३. The text of Vishṇu Purâṇa reads निसृष्टं. ४. B. C. and F. read ते यान्तु. ५. The text of Vishṇu Purâṇa reads यतो. ६. The text of Vishṇu Purâṇa reads -निकायभूतं for -हिताय भूमौ, and all others except D. substitute भूतम् for भूमौ. ७. G. reads -म्यभवाय; while D. हिताय.

तृप्त्यर्थमन्नं हि मया विसृष्टं
तेषामिदं ते मुदिता भवन्तु ॥
इत्युच्चार्य नरो दद्यादन्नं श्रद्धासमन्वितः।
भुवि भूतोपकाराय गृही सर्वाश्रयो यतः' ॥
(वि. पु. ३. ११. ४७–५३)

इति। पितृयज्ञः श्रुत्या दर्शितः–

'यत् पितृभ्यः स्वधाकरोत्यप्यप-
स्तत् पितृयज्ञः सन्तिष्ठते'।

इति। कात्यायनो ऽपि–

'अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम्।
होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम् ॥
श्राद्धं वा पितृयज्ञः स्यात् पित्र्यो बलिरथापि वा'।
(का. स्मृ. २. १३. ३–४)

इति। अत्र यथास्वशाखं व्यवस्था। श्राद्धं चात्र नित्यश्राद्धम्। तथा च कूर्मपुराणम्–

'एकं तु भोजयेद्विप्रं पितॄनुद्दिश्य सत्तम।
नित्यश्राद्धं तदुद्दिष्टं पितृयज्ञो गतिप्रदः' ॥
(कू. पु. १. २. १८. १११)

इति। मार्कण्डेयेऽपि–

---

१. B. C. and F. read स्वधां for स्वधा-. २. I. reads पित्रो. ३. I. omits च. ४. The text of Kûrma Purâṇa reads सत्तमम्. ५. Except A. and D. all others read मार्कण्डेयोऽपि.

'कुर्यादहरहः श्राद्धमन्नाद्येनोदकेन वा ।
पितॄनुद्दिश्य विप्रांस्तु भोजयेद्विप्रमेव वा' ॥
(मा. पु. २९. ३३)

इति । नित्यश्राद्धप्रकारो मत्स्यपुराणे दर्शितः—

'नित्यं तावत् प्रवक्ष्यामि अर्घ्यावाहनवर्जितम् ।
अदैवं तद्विजानीयात् पार्वणं पर्वसु स्मृतम्' ॥
(म. पु. १६. ५—६.)

इति । प्रचेताः—

'नावाहनाग्नौकरणं न पिण्डो न विसर्जनम्' ।

इति । व्यासोऽपि—

'नित्यश्राद्धे ऽर्घ्य-गन्धाद्यैर्द्विजानभ्यर्च्य शक्तितः ।
सर्वान् पितृगणान् सम्यक् सहैवोद्दिश्य भोजयेत् ॥
आवाहन-स्वधाकार-पिण्डाग्नौकरणादिकम् ।
ब्रह्मचर्यादिनियमो विश्वेदेवास्तथैव च ॥
नित्यश्राद्धे त्यजेदेतान् भोज्यमन्नं प्रकल्पयेत् ।
दत्त्वा तु दक्षिणां शक्त्या नमस्कारैर्विसर्जयेत् ।
एकमप्याशयेन्नित्यं षण्णामप्यन्वहं गृही' ॥

इति । कात्यायनस्तु तत्रानुकल्पमाह—

'एकमप्याशयेद्विप्रं पितृयज्ञार्थसिद्धये ।
अदैवं नास्ति चेदन्यो भोक्ता भोज्यमथापि वा ॥

---

१. Here all others except A. and the text of Matsya Purâṇa have made a mistake. B. C. E. F. G. H. and I. read पार्वणं तद्धि कीर्तितम्; while D. reads पार्वणे न हि कीर्तितम्. २. I. reads पिण्डं. ३. D. and G. read सर्वान्सितगुणान्. ४. I. omits तु, an G. H. read अत्र for तत्र. ५. All others except A. read नित्यं for विप्रं.

अभ्युद्धृत्य यथाशक्ति किञ्चिदन्नं यथाविधि।
पितृभ्यो ऽथ मनुष्येभ्यो दद्यादहरहर्द्विजे॥
पितृभ्य इदमित्युक्त्वा स्वधाकारमुदाहरेत्।
हन्तकारं मनुष्येभ्यस्तदर्द्धं निनयेदपः॥

(का. स्मृ. २. १३. ६८)

इति। उद्धृतमन्नं ब्राह्मणाय दद्यात्। तदुक्तं कूर्मपुराणे–

'उद्धृत्य वा यथाशक्ति किञ्चिदन्नं समाहितः।
वेदतत्त्वार्थविदुषे द्विजायैवोपपादयेत्'॥

(कू. पु. १. २. १८. ११२)

इति। त एते देवयज्ञ-भूतयज्ञ-पितृयज्ञास्त्रयोऽपि वैश्वदेवशब्देनोच्यन्ते। यत्र विश्वेदेवा इज्यन्ते तद्वैश्वदेविकं कर्म। देवयज्ञे च–

'विश्वेभ्यो देवेभ्यः स्वाहा'।

(आ. गृ. सू. १. २. २–३.)

इति पठितत्वात् तत्रैतन्नाम मुख्यम्। येषां तु शाखायां भूतयज्ञे ऽप्ययं मन्त्रो ऽस्ति तेषां तत्राप्येतन्मुख्यम्। पितृयज्ञे

१. B. C. D. E. F. and G. read अभ्युद्धृत्य, also the text of Kâtyâyana reads the same. २. Except A. and the text of Kâtyâyana all others omit this line. ३. The text reads उदीरयेत् for उदाहरेत्. ४. This line is omitted by all except A. D. and the text of Kâtyâyana. ५. After this line D. adds—

तच्चास्मै ब्राह्मणायेति दत्त्वा भुञ्जीत वाग्यतः।

६. After this word I. adds—

'दद्यादहरहः श्राद्धमन्नाद्येनोदकेन वा।
पयो-मूल-फलैर्वाऽपि पितृभ्यः प्रीतिमावहन्'॥

This is a repetition of a verse of Mârkaṇḍeya Purâṇa.

तु छत्रिन्यायेन तन्नामप्रवृत्तिः । अथवा मूलवचने 'वैश्वदेवं च'—इति चकारेण पितृयज्ञादिकमनुक्तं समुच्चीयते । यद्यपि—

'सायं प्रातःसिद्धस्य हविष्यस्य जुहुयात्' ।

( आ. गृ. सू. १. २. १ )

इति वचनेन वैश्वदेवस्यान्नसंस्कारता प्रतीयते तथापि पुरुषार्थत्वमेवाभ्युपेयम् ।

'तानेतान्यज्ञानहरहःकुर्वीत' ।

( आ. गृ. सू. ३. १. ४ )

इति वाक्यशेषे तदवगमात् । न चोभयार्थत्वं शङ्कनीयम् । परस्परविरोधात् । अन्नसंस्कारत्वे ह्यन्नस्य प्राधान्यम् । वैश्वदेवस्य गुणता । पुरुषार्थत्वे तु तद्विपर्ययः । तथा च सति, एकस्यैव युगपत् प्राधान्यं गुणत्वं च विरुद्ध्येयाताम् । तर्ह्यस्त्वन्नसंस्कारतैव । मा भूत् पुरुषार्थत्वं—इति चेत् । तन्न ।

'महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः'।

(म. स्मृ. २. २८)

इति मनुना पुरुषार्थत्वस्मरणात् । यत्तु—

'सिद्धस्य हविष्यस्य जुहुयात्' ।

(आ. गृ. सू. १. २. १ )

इत्युदाहृतं तदन्यथाप्युपपद्यते । तत्र जुहुयादित्युत्पत्तिविधिः । सिद्धस्य हविष्यस्येति विनियोगः । तानेतानहरहः कुर्वीतेत्यधिकारः । किञ्च अन्नसंस्कारपक्षे प्रतिपाकमावृत्तिः प्रसज्येत ।

१. D. reads छत्रिन्यायेन. २. H. omits च. ३. D. reads कुरुते. ४. I. reads विनियोगविधिः.

'प्रतिप्रधानं गुणावृत्तिः'।

इति न्यायात्। तस्मात् पुरुषार्थत्वमेव न्याय्यम्। अत एव गृह्यपरिशिष्टे ऽभिहितम्—

'प्रोषितो ऽप्यात्मसंस्कारं कुर्यादेवाऽविचारयन्'।

इति। गोभिलो ऽपि—

'यद्येकस्मिन् काले व्रीहि-यवौ पच्येयातां अन्यतरस्य हुत्वा कृतं मन्येत। यद्येकस्मिन् काले पुनः पुनरन्नं पच्येत सकृदेव बलिं कुर्वीत। यद्येकस्मिन् काले बहुधाऽन्नं पच्येत गृहपतिमहानसादेवैकं बलिं कुर्वीत'।

इति। अयमर्थः — नानाद्रव्यकान्नपाके पुनः पुनरन्नपाके ऽपि बहूनामविभक्तानां भ्रात्रादीनां पृथक् पृथक् पाके ऽपि एकस्मादेव द्रव्यात् सकृदेव गृहपतिपाकादेव होतव्यमिति।

॥ इति वैश्वदेवप्रकरणम् ॥

अथातिथ्यापरनामको मनुष्ययज्ञो निरूप्यते। आतिथ्यस्य मनुष्ययज्ञत्वं कात्यायनेनोक्तम्—

'अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम्।
होमो दैवो बलिर्भौतो नृयज्ञो ऽतिथिपूजनम्'।

(का. स्मृ. २. १३. ३)

इति। श्रुतिरपि—

'यद्ब्राह्मणेभ्योऽन्नं ददाति तन्मनुष्ययज्ञः सन्तिष्ठते'।

इति। बौधायनोऽपि—

---

१. All others except A. and I. read सकृदेकं. २. D. reads बहुविधाऽन्नं.
३. I. reads -देवैतं. ४. Except A. and I. all others add ऽपि after -पाके.
५. All others except A. and the text of Kâtyâyana read बलिर्भूतो.

'अहरहर्ब्राह्मणेभ्योऽन्नं दद्यादा मूल-फलशा-
केभ्यस्तथैतं मनुष्ययज्ञं समाप्नोति'।

(बौ. स्मृ. २.५. ११. ५)

इति। कार्ष्णाजिनिरपि–

'भिक्षां वा पुष्कलां[१] वाऽपि हन्तकारमथापि वा।
असम्भवे तथा[२] दद्यादुदपात्रमथापि[३] वा'॥

इति। कूर्मपुराणे ऽपि–

'हन्तकारमथाग्रं वा भिक्षां वा शक्तितो द्विजः।
दद्यादतिथये नित्यं बुद्ध्येत परमेश्वरम्'॥

(कू. पु. १. २. १८. १४४)

इति। भिक्षादिलक्षणं मनुराह[४]–

'ग्रासमात्रं भवेद्भिक्षा अग्रं ग्रासचतुष्टयम्।
अग्रं चतुर्गुणीकृत्य हन्तकारो विधीयते'॥

(मा. पु. २९. ९३.)

इति। अतिथिनिरीक्षणाय गृहांगणे कंचित्कालं तिष्ठे-
दित्युक्तं मार्कण्डेयपुराणे–

---

१. All others except A. and H. read पुष्कलं, but it does not give any meaning. २. A. and D. read सदा for तथा; while B. C E. F. and G. read असम्भवेन वा for असम्भवे तथा. ३ D. reads उपपात्रं for उदपात्रं. ४. All manuscripts read मनुराह; but the following quotation does not appear in the text of Manu. It is found in Mârkandeya Purâṇa and also in Kûrma Purâṇa. The latter reads as follows:—

'भिक्षामाहुर्ग्रासमात्रामग्रं तत्स्याच्चतुर्गुणम्।
पुष्कलं हन्तकारं तु तच्चतुर्गुणमिष्यते'॥.

५. D. omits the following portion—

आचम्य च ततः कुर्यात् प्राज्ञो द्वारावलोकनम्।
मुहूर्तस्याष्टमं भागमुद्वीक्ष्यो ह्यतिथिर्भवेत्॥

इति। विष्णुपुराणे.

'आचम्य च ततः कुर्यात् प्राज्ञो द्वारावलोकनम् ॥
मुहूर्त्तस्याष्टमं भागमुदीक्ष्यो ह्यतिथिर्भवेत्' ।

( मा. पु. २९. २४–२५ )

इति । विष्णुपुराणे ऽपि–

'ततो गोदोहमात्रं वै कालं तिष्ठेद् गृहाङ्गणे ।
अतिथिग्रहणार्थाय तदर्धं वा यथेच्छया' ॥

( वि. पु. ३. ११. ५५ )

इति ।

## ॥ इति मनुष्ययज्ञः ॥

तदेवं 'सन्ध्या स्नानम्'– इत्यस्मिन् मूलवचने स्नानादीन्यातिथ्यान्तानि षट् कर्माणि निरूपितानि ।

न चात्र सप्तत्वप्रतिभानात् षट्त्वं विरुद्धमिति शङ्कनीयम् । सम्मार्गन्यायेनोद्देश्यगतायाः संख्याया अविवक्षितत्वात् । यानि कर्माणि उद्देश्यगतानि तानि दिनेदिने कर्त्तव्यानीति तेषां नित्यत्वविधानात् । सम्मार्गन्यायश्च तृतीयाध्याये प्रतिपादितः ।

ज्योतिष्टोमे– 'दशापवित्रेण ग्रहं सम्मार्ष्टि'– इति श्रूयते । तत्र संशयः–किमेकस्य सम्मार्गः किंवा सर्वेषां? इति । तदर्थं चिन्ता– किमत्रोद्देश्यगता संख्या विवक्षिता उताऽविवक्षिता? इति । यथा–'पशुना यजेत'– इत्यत्र एकवचनश्रुतिबलादुपादे-

---

१. I. reads here and in some of the following lines सन्मार्ग instead of सम्मार्ग–, but it is a mistake. २. All others except A. and I. read यानि कर्माणीत्युद्दिश्य तानि दिनेदिने, but it seems to be incorrect. ३. D. reads निरूपितः. ४. B. C. and F. read दशपवित्रेण. ५. All others except A. and I. read तदर्थं किमुद्देश्यगता संख्या विवक्षिता नेति for तदर्थं चिन्ता किमत्रोद्देश्यगता संख्या विवक्षिता उताऽविवक्षितेति.

यपशुगता संख्या विवक्षिता । तथैव ग्रहमित्येकवचनश्रुतिबलादुद्देश्यगता ऽपि संख्या विवक्षिता भवितुमर्हति । तस्मादेकस्यैव ग्रहस्य[1] सम्मार्गे प्राप्ते ब्रूमः। पशोरनेनैव वचनेन यागसम्बन्धावगमात् यागंप्रति पशोर्गुणीभूतत्वात्[2] यावद्गुणं प्रधानावृत्त्यभावात् कियता पशुनेत्यवच्छेदकाकाङ्क्षायां[3] तदवच्छेदकत्वेनैकत्वसंख्या सम्बद्ध्यते– इत्युपादेयगतायाः संख्यायाः विवक्षितत्वं युक्तम् । ग्रहाणां तु वाक्यान्तरेण यागसम्बन्धावगमात् सम्मार्गवाक्ये द्वितीयाश्रुत्या सम्मार्गंप्रति ग्रहस्य प्राधान्यावगमात् प्रतिप्रधानं गुणस्य सम्मार्गस्यावर्त्तनीयत्वात् कियन्तो ग्रहाः सम्मार्जनीया-इत्याकाङ्क्षाया अनुदयात् उद्देश्यग्रहगता संख्या न विवक्षिता । तस्मात् सर्वे ग्रहाः सम्मार्जनीयाः । प्रकृतेऽप्युद्देश्यसन्ध्यादिगता षट्त्वसंख्या न विवक्षिता ।

अथोच्येत–अस्यां पराशरस्मृतौ वाक्यान्तरेण सन्ध्यादीनां निरूढ्यभावादनेनैव[4] वाक्येन नित्यत्वविशिष्टानां तेषामुत्पादनादुपादेयगतत्वेन पश्वेकत्ववद्विवक्षितत्वमेव संख्याया युक्तं–इति । एवं तर्हि सन्ध्यासहितं स्नानं सन्ध्यास्नानमिति समासे सति अङ्गेन स्नानेन सहिताया अङ्गीभूतायाः सन्ध्याया एकत्वेन परिगणनान्नात्र षट्संख्या विरुध्यते–इति गमयितव्यम् ।

सन्ध्यादीनां नित्यत्वं चाग्निहोत्रादिवत् यावज्जीवकर्त्तव्यतया ऽवगम्यते । जीवनवदधिकारित्वं[5] च ‘दिने दिने’ – इति वी-

१. D. reads तद्ग्रहस्य. २. All others except A. I. read -गुणभूतत्वात्. ३. H. reads पशुनेति परिच्छेदकाकाङ्क्षायाः तत्परिच्छेदकत्वेनैकत्वसंख्या; while all others except A. and I. read -त्यवच्छेदाकाङ्क्षायां. ४. B. C. and F. read निरूढभावात्; while D. reads निरूप्याभावात्. ५ I. reads -रित्वं.

प्सया ऽवगम्यते । यथा—'वसन्ते वसन्ते ज्योतिषा यजेत'—इत्यत्र वीप्सया तदवगमस्तद्वत् ॥ ३९ ॥

'आतिथ्यं वैश्वदेवं च' इत्युक्तं तत्र कीदृशो ऽतिथिरित्याकाङ्क्षायामाह—

इष्टो[1] वा यदि वा द्वेष्यो मूर्खः पण्डित एव वा ।
सम्प्राप्तो वैश्वदेवान्ते[2] सोऽतिथिः स्वर्गसङ्क्रमः[3] ॥ ४० ॥

इष्टः सख्यादिः । तस्य च भोजनीयत्वं याज्ञवल्क्येनोक्तम्—

'भोजयेच्चागतान् काले सखि-सम्बन्धि-बान्धवान्' ।
( या. स्मृ. १. १०८ )

इति । द्वेष्यस्य भोजनीयत्वं मनुना निन्दितम्—

'[4]काममभ्यर्चयेन्मित्रं नाभिरूपमपि त्वरिम् ।
द्विषता हि हविर्भुक्तं भवति प्रेत्य निष्फलम्' ॥
(म. स्मृ. ३. १४४)

इति । एवं सत्यरि-मित्रविवेको यथा क्रियते तथैवाऽतिथावपि तत्प्रसक्तौ तन्निराकरणाय 'इष्टो वा यदि वा द्वेष्यः'—इत्युक्तम् । मूर्खस्य भोजनीयत्वं स्मृत्यन्तरे निषिद्धम्—

'नष्टशौचे व्रतभ्रष्टे विप्रे वेदविवर्जिते ।
दीयमानं[5] रुदत्यन्नं किं मया दुष्कृतं कृतम्' ॥
( व्या. स्मृ. ४. ६२ )

इति । पण्डितस्य भोजनीयत्वं मनुना प्रशंसितम्[6]—

---

* धरणीधरस्तु—'सर्वसङ्गमः' अमुमेव पाठमाश्रित्य 'सर्वे सङ्गमाः सत्सङ्गादयो यस्मात्' इति व्याचख्यौ ।

---

१. M. reads प्रियो for इष्टो. २. J. K. L. and M. read वैश्वदेवे तु सम्प्राप्तः. ३. K. and L. read सर्वसङ्गमः. ४. The text of Manu reads कामं श्राद्धेऽर्चयेन्मित्रं; while all others except A. and I. substitute the word नित्यं for मित्रं. ५. G. reads जीवमानं. ६. H. and I. read दर्शितम् for प्रशंसितम्.

'श्रोत्रियायैव देयानि हव्य-कव्यानि दातृभिः ।
अर्हत्तमाय विप्राय तस्मै दत्तं महाफलम्' ॥

(म. स्मृ. ३. १२८)

इति । एवं सति श्राद्धादाविव वैश्वदेवान्तेऽपि पण्डित-मूर्खविवेकप्रसक्तौ तन्निराकरणायोक्तं 'मूर्खः पण्डित एव वा'-इति । वैश्वदेवान्तशब्देन देवयज्ञ-भूतयज्ञ-पितृ[1]यज्ञानामुपरि घटिका-पादमात्रपरिमितः कालो विवक्षितः । तथा च[2] मार्कण्डेयपुरा[3]णवचनमुदाहृतम्—

'मुहूर्त्तस्याऽष्टमं भागम्' ।

(मा. पु. २९. २९)

इति । अत[4] एव तस्मिन् काले समागमनमेवातिथिलक्षणं नेतरद्विद्या[5]दि । संक्रम्यतेऽनेनेति संक्रमः स्वर्गस्य संक्रमः स्वर्गसंक्रमः स्वर्गप्राप्तिहेतुरिति यावत् । तथा चाऽऽश्वमेधिके—

'क्षुत्पिपासाश्रमार्त्ताय देश-का[6]लागताय च ।
सत्कृत्यान्नं प्रदातव्यं यज्ञस्य फलमिच्छता' ॥

(वृ. गौ. स्मृ. ३. ७६)

इति ॥ ४० ॥

तमेवातिथिं विशिनष्टि—

**दूरा[7]ध्वोपगतं श्रान्तं वैश्वदेव उपस्थितम् ।**
**अतिथिं तं विजानीयान्ना[8]तिथिः पूर्वमागतः ॥४१॥**

---

१. I. omits -पितृयज्ञ-, and reads भूतयज्ञादानामुपरि. २. D. omits च. ३. B. C. and F. read -पुराणे. ४. B. C. E. F. and G. read अत एतस्मिन् काले. ५. B. C. and F. read विप्रत्वादि. ६. The text of Vriddha Gautama reads -कालगताय. ७. D. G. and H. read दूराच्चोपगतं; while M. reads दूराध्वानं पथि श्रान्तं. ८. B. C. and F. read नातिथिं पूर्वमागतम्.

दूराध्वोपगतं[1] ग्रामान्तरादागतम्। श्रान्तं क्षुत्-तृष्णापरिपीडितम्। अत एव व्यासः—

'अतिदूरागतः[2] श्रान्तः क्षुत्-तृष्णा-श्रमकर्शितः।
यः पूज्यते[3]ऽतिथिः सम्यगपूर्वः[4] क्रतुरेव सः' ॥

इति। 'नातिथिः पूर्वमागत' इति तस्मिन्नेव दिनेऽतिथिर्नोत्तरे द्युरित्यर्थः। तथा च मनुः—

'एकरात्रं हि[5] निवसन्नतिथिर्ब्राह्मणः स्मृतः'।
(म. स्मृ. ३. १०२)

इति। 'वैश्वदेव उपस्थितम्'— इति दिवसाभिप्रायम्। सायं तु[6] वैश्वदेवकाले कालान्तरे वा प्राप्तोऽतिथिरेव। तथा च मनुः—

'अप्रणोद्योऽतिथिः सायं सूर्योढो[7] गृहमेधिना[8]।
काले प्राप्तस्त्वकाले वा नास्यानश्नन् गृहे वसेत्[9]' ॥
(म. स्मृ. ३. १०५)

इति। सूर्योढ इति अस्तं गच्छता सूर्येण देशान्तरगमनाशक्तिमुत्पाद्य गृहं प्रापित इत्यर्थः। याज्ञवल्क्योऽपि—

'अप्रणोद्योऽतिथिः सायमपि वाग्-भू-तृणोदकैः'।
(या. स्मृ. १. १०७)

इति। प्रचेता अपि—

१. D. G. and H. here also read दूराद्योपगतं. २. Except A. all others read आदूरादाश्रमं प्राप्तः or आदूरादाश्रमप्राप्तः. ३. A. reads यः पूज्यश्चातिथिः, ४. A. reads अयूपः; while D. reads अपशुः. Both are correct. ५. The text of Manu substitutes तु for हि. ६. D. omits सायं तु. ७. I. reads सूर्योढो, but it is incorrect. सूर्योढो is the correct form. ८. I. reads गृहमेधिनाम्. ९. The text of Manu reads वसन्, but the commentators do not follow the reading.

'यः सायं वैश्वदेवान्ते सायं वा गृहमागतः ।
देववत् पूजनीयो ऽसौ सूर्योढः सोऽतिथिः स्मृतः'[1] ॥

इति ॥ ४१ ॥

दूराध्वपदव्यावर्त्त्यमाह—

**नैकग्रामीणमतिथिं संगृह्णीत[2] कदाचन ।**
**अनित्यमागतो यस्मात्तस्मादतिथिरुच्यते ॥ ४२ ॥**

न विद्यते तिथिर्यस्यासावतिथिः । तथा च यमः—

'तिथि-पर्वोत्सवाः सर्वे त्यक्ता येन महात्मना[3] ।
सो ऽतिथिः सर्वभूतानां शेषानभ्यागतान् विदुः' ॥

इति । मन्वादि-युगादिप्रभृतिषु तिथिविशेषेषु द्रव्यलाभमुद्दिश्य येऽभ्यागच्छन्ति तेऽभ्यागताः । तादृशं तिथिविशेषमनपेक्ष्य यदाकदाचित् क्षुत्तृष्णादिपीडया वा समागतो ऽतिथिः । एवं च सति एकग्रामीणः प्रतिनियतेषु तिथिविशेषेषु च समागच्छति नासावतिथिः । यस्तु ग्रामान्तरादकस्मादसङ्केतितो[4] बुभुक्षुः सन्नागच्छति सो ऽनित्यमागतः । तमेवातिथित्वेन संगृह्णीत नेतरम्[5] । तथा च विष्णुपुराणम्—

'अज्ञातकुल-नामानमन्यतः समुपागतम्[6] ।
पूजयेदतिथिं सम्यक् नैकग्रामनिवासिनम् ॥
अकिञ्चनमसम्बन्ध[7]मन्यदेशादुपागतम्' ।
(वि. पु. ३. ११. ६८–६९)

१. I. reads सूर्योटः. २. I. reads न गृण्हीत for संगृण्हीत. ३. D. reads महात्मनः. ४. B. C. and F. read आपतितो for असङ्केतितो. ५. I. स एवातिथित्वेन संगृह्यते नेतरः for तमेवातिथित्वेन संगृण्हीत नेतरम्. ६. A. reads समुपस्थितम्. ७. The text of Vishṇu Purâṇa reads -संबद्ध- instead of -संबन्ध-.

इति । मार्कण्डेयो ऽपि—

'न मित्रमतिथिं कुर्यान्नैकग्रामनिवासिनम् ।
अज्ञातकुल-नामानं तत्काले समुपस्थितम् ॥
बुभुक्षुमागतं श्रान्तं याचमानमकिञ्चनम् ।
ब्राह्मणं प्राहुरतिथिं स[1] पूज्यः शक्तितो बुधैः' ॥

(मा. पु. २९. २६–२७)

इति । मनुरपि—

'नैकग्रामीणमतिथिं विप्रं साङ्गतिकं तथा ।
उपस्थितं गृहे विद्याद्भार्या यत्राऽग्नयो ऽपि वा' ॥

(म. स्मृ. ३. १०३)

इति । एकग्रामवासी अतिथिधर्मेणागतो ऽप्यतिथिर्न भवति । तथा साङ्गतिकः सङ्गतेन चरः सङ्गतपूर्वो दृष्टपूर्वः—इति यावत् । नापि यत्र क्वचन देशे अतिथिधर्मेणागतो ऽतिथिः । किन्तु यस्मिन् स्वकीये परकीये वा देशे भार्याऽग्नयो वा भवन्ति तत्रैवोपस्थितो ऽतिथिर्भवति ॥ ४२ ॥

अतिथेः स्वरूपं निरूप्य तस्मिन्नागते सति यत्कर्तव्यं तदाह—

**अतिथिं तत्र सम्प्राप्तं पूजयेत् स्वागतादिना ।**
**अर्घ्यासनप्रदानेन पादप्रक्षालनेन च ॥ ४३ ॥**

१. D. reads संपूज्यं; while B. C. E. and F. read संपूज्यः. २. D. omits अतिथिधर्मेणागतोऽपि. ३. I. omits वा. ४. M. omits this verse. ५. All others except A. and I. read. तथाऽऽसनप्रदानेन.

[1]श्रद्धया चान्नदानेन प्रियप्रश्नोत्तरेण च ।
[2]गच्छन्तं चानुयानेन प्रीतिमुत्पादयेत् गृही ॥ ४४ ॥

निगद[3]व्याख्यातमेतच्छ्लोकद्वयम् । तदेतत् ब्राह्मणविषयम् ।

'यद्ब्राह्मणेभ्योऽन्नं ददाति' ।

[4]इति ।

'अहरहर्ब्राह्मणेभ्योऽन्नं द[5]द्यात् ।

(बौ. स्मृ. २. ५. १०. ५)

इति श्रुति-[6]स्मृतिभ्यामुदाहृतत्वात् । क्षत्रियादयस्तु न ब्राह्मणगृहे ऽतिथिसत्कारमर्हन्ति । किन्तु भोजनमात्रम् । तथा च मनुः—

'[7]न ब्राह्मणस्य त्वतिथिर्गृहे राजन्य उच्यते ।
वैश्य-शूद्रौ सखा चैव ज्ञातयो गुरुरेव च ॥
यदि त्वतिथिधर्मेण क्षत्रियो गृहमाव्रजेत् ।
भुक्तवत्सु[8] च विप्रेषु कामं तमपि भोजयेत् ॥
वैश्य-शूद्रावपि प्राप्तौ कुटुम्बेऽतिथिधर्मिणौ ।
भोजयेत् सह भृत्यैस्तावा[9]नृशंस्यं प्रकल्प[10]यन् ॥

---

१. J. K. L. and M. omit this verse. २. B. C. D. and F. read गच्छन्तश्चानुपातेन; while G. and H. read चानुयानेन. ३. D. E. G. and H. read व्याख्यानं. ४. D. and G. omit इति. ५. I. reads ददाति. ६. B. C. E. F. G. and H. read स्मृत्योः. ७. All others except A. read ब्राह्मणस्य त्वनतिथिः. ८. The text of Manu (Bombay Edition, 1887) read भुक्तवत्सूक्तविप्रेषु, but the commentators do not follow this. ९. B. C. and F. read -ना- for -वा-. १०. I. reads प्रकल्पयेत्; while the text of Manu reads प्रयोजयन्.

इतरानपि सख्यादीन् सम्प्रीत्या गृहमागतान्।
प्रकृत्यान्नं* यथाशक्ति भोजयेत् सह भार्यया॥
(म. स्मृ. ३. ११०-११३)

इति। आसनादिदाने विशेषमाह स एव-

'आसनावसथौ शय्यामनुव्रज्यामुपासनम्।
उत्तमेषूत्तमं कुर्याद्धीने हीनं समे समम्'॥
(म. स्मृ. ३. १०७)

इति॥ ४३-४४॥

अतिथिसत्कारकरणे प्रत्यवायमाह-

अतिथिर्यस्य भग्नाशो गृहात् प्रतिनिवर्त्तते।
पितरस्तस्य नाश्नन्ति दश वर्षाणि पञ्च च॥४५॥

---

* 'प्रकृत्य प्रकर्षेण अन्नं कृत्वा संस्कृत्य'-इति मेधातिथिः। 'प्रकृत्य संपाद्य'-इति राघवानन्दः। 'प्रकृत्य प्राधान्यं प्रकाश्य इति यावत्'-इति नन्दनः। 'प्रकृत्यान्नं प्रकर्षेणान्नं कृत्वा'-इति रामचन्द्रः। 'प्रकृष्टमन्नं कृत्वा'-इति कुल्लूकभट्टः। सर्वज्ञनारायण-गोविन्दराजौ तु 'संस्कृत्य' इति पाठमाश्रितवन्तौ।

१. B. C. F. and I. read सत्कृत्यान्नं. २. Except A. and the text of Manu all others read आसनावसथे. ३. The text of Manu reads उपासनाम्. ४. This verse is found in J. K. and L., the texts of Parâśara. The commentators Nandapaṇḍita and Dharaṇîdhara have made commentaries on it; but Madhavâchârya quotes this verse from Manu, and it appears in the same. ५. These two verses appear in J. K. and L. as the 55th and 58th Ṣlokas, but M. omits the whole of the first of these.

काष्ठभारसहस्रेण घृतकुम्भशतेन च ।
अतिथिर्यस्य भग्नाशस्तस्य होमो निरर्थकः ॥ ४६ ॥

अहमस्य गृहे भोक्ष्ये— इत्याशया समागतोऽतिथिर्यदि भोजनमप्राप्य तद्गृहान्निवर्त्तेत तदा गृहिणा क्रियमाणं पैतृकं निष्फलं स्यात् । तथा दैविकमपि विहितद्रव्याद्यङ्गसम्पन्नमपि निष्फलं भवेत् । तथा च मनुः—

'शिलतोऽप्युञ्छतो नित्यं पञ्चाग्नीनपि जुह्वतः ।
सर्वं सुकृतमादत्ते ब्राह्मणोऽनर्चितो वसन्' ॥
(म. स्मृ. ३. १००)

इति । आश्वमेधिके ऽपि—

'साङ्गोपाङ्गांस्तथा वेदान् पठतीह दिने दिने ।
न चाऽतिथिं पूजयति वृथा स पठति द्विजः ॥
पाकयज्ञैर्महायज्ञैः सोमसंस्थाभिरेव च ।
ये यजन्ति न चार्चन्ति गृहेष्वतिथिमागतम् ॥
तेषां यशोऽभिकामानां दत्तमिष्टं च यद्भवेत् ।
वृथा भवति तत्सर्वमाशया हतया हतम्' ॥
(वृ. गौ. स्मृ. ६. ६७-६९)

इति । अत्र सुकृतहान्यभिधानं दुष्कृतप्राप्तेरप्युपलक्षणम् । तथा च विष्णुः—

---

१. I. reads वैदिकोऽपि. २. D. reads शिलानप्युञ्छिनो, and G. H. and the text of Manu read शिलानप्युञ्छतः; while I. शिलोञ्छौ चरतः. ३. The text of Vriddha Gautama reads -स्तु यो वेदान्. ४. The text of Vriddha Gautama reads नित्यमग्नौ पाकयज्ञैः for पाकयज्ञैर्महायज्ञैः. ५. The text of Vriddha Gautama reads चाऽश्नन्ति. ६. The text of Vriddha Gautama reads ऽयतया.

'अतिथिर्यस्य भग्नाशो गृहस्थस्य तु गच्छति ।
तस्मात् सुकृतमादाय दुष्कृतं तु प्रयच्छति' ॥

इति । आश्वमेधिके ऽपि–

'वैश्वदेवान्तिके प्राप्तमतिथिं यो न पूजयेत् ।
स चाण्डालत्वमाप्नोति सद्य एव न संशयः ॥
निर्वासयति यो विप्रं देश[1]-कालागतं गृहात् ।
पतितस्तत्क्षणादेव जायते नात्र संशयः' ॥

इति ॥ ४५-४६ ॥

अतिथिसत्कारं प्रशंसति–

सु[2]क्षेत्रे वापयेद्बीजं सुपात्रे निक्षिपेद्धनम् ।
सुक्षेत्रे च सुपात्रे च ह्युप्तं द[3]त्तं न नश्यति ॥ ४७ ॥

यथा सुक्षेत्रोप्तबीजं न विनश्यति किन्तु महते फलाय कल्पते । तथा सुपात्रे ऽतिथौ दत्तमन्नादि[4]कमक्षय्यफलमित्यर्थः। तदाह मनुः–

'नै[5]वं स्वयं तदश्नीयादतिथिं यन्न भोजयेत् ।
धन्यं यशस्यमायुष्यं स्वर्ग्यं चाऽतिथिपूजनम्' ॥
(म. स्मृ. ३. १०६)

---

१. All others except A. and I. read देश-कालातिथिं for देश-कालागतं. २. M. reads the whole verse as follows:–

सुक्षेत्रे वापयेद्बीजं सुपुत्रे दापयेद्धनम् ।
सुक्षेत्रे च सुपुत्रे च यत्क्षिप्तं नैव नश्यति ॥

This verse appears also in J. K. and L. under number 57. ३. Except A. and H. all others read तन्न विनश्यति for दत्तं न नश्यति. ४. Except A. and I. others read -कं महाफलप्रदमित्यर्थः; while H. reads -कं महाफलमित्यर्थः. ५. The text of Manu reads नवै, and substitutes वातिथि- for चातिथि-.

इति । आश्वमेधिके ऽपि—

'पादाभ्यङ्गाम्बुदानैस्तु[1] यो ऽतिथिं पूजयेन्नरः ।
पूजितस्तेन राजेन्द्र भवामीह न संशयः' ॥
(वृ. गौ. स्मृ. ६. ५७)

इति । शातातपो ऽपि—

'स्वाध्यायेनाग्निहोत्रेण यज्ञेन तपसा तथा ।
नाऽवाप्नोति गृही लोकान् यथा त्वतिथिपूजनात्' ॥

इति ॥ ४७ ॥

आतिथ्यकर्तुर्नियममाह—

न पृच्छेद्गोत्र-चरणे[2] न[3] स्वध्यायं श्रुतं तथा ।
हृदये[4] कल्पयेद्देवं सर्वदेवमयो हि सः ॥ ४८ ॥

इति । श्राद्धे ह्यादावेव ब्राह्मणः परीक्षणीय इति मनुना दर्शितम्—

'दूरादेव परीक्षेत ब्राह्मणं वेदपारगम् ।
तीर्थं तद्धव्य-कव्यानां प्रदाने[5] सो ऽतिथिः स्मृतः' ॥
(म. स्मृ. ३. १३०)

इति । यमेनाऽपि—

'पूर्वमेव परीक्षेत ब्राह्मणान् वेदपारगान् ।
शरीरप्रभवैर्दोषैर्विशुद्धांश्चरितव्रतान्' ॥

इति । अतः श्राद्धन्यायेनाऽतिथ्ये ऽपि कर्मणि गोत्रादिपरी-

१. B. C. and F. read पादाभ्यङ्गाम्बु-यानैस्तु, and D. E. G. and H. पादाभ्यङ्गाम्बु- पानैस्तु; while the text of Vriddha Gautama पादाभ्यङ्गोऽन्नपानैस्तु. २. M. reads -चरणं. ३. J K. and L. read स्वाध्यायं च व्रतानि च for न स्वाध्यायं श्रुतं तथा, and for the same M. reads न स्वाध्याय-व्रतानिच. ४. J. K. L. and M. read हृदयं कल्पयेत्तस्मिन् for हृदये कल्पयेद्देवं. ५. B. C. D. E. F. and G. read प्राशने for प्रदाने.

क्षाप्राप्तौ तन्निवार्यते। गोत्रं वंशप्रवर्त्तकमहर्षिसम्बन्धः। चरणमाचारः। शाखाविशेषः स्वाध्यायः। श्रुतं व्याकरण-मीमांसादि। एतद्देश-नामादीनामुपलक्षणम्। अत एव यमः—

'न पृच्छेद्गोत्र-चरणे देशं नाम कुलं श्रुतम्।
अध्वनोऽभ्यागतं विप्रं भोजनार्थमुपस्थितम्'॥

इति। न केवलं गोत्रप्रश्नादिवर्जनं किं तर्हि देवताबुद्धिरपि कर्त्तव्या। तदुक्तं शातातपेन—

'चित्ते विभावयेत्तस्मिन् व्यासः[1] स्वयमुपागतः'।

इति। विष्णुपुराणेऽपि—

'स्वाध्याय-गोत्र-चरणमपृष्ट्वा च[2] तथा कुलम्।
हिरण्यगर्भबुद्ध्या तं मन्येताऽभ्यागतं गृही'॥
(वि. पु. ३. ११. ६०)

इति। देवता-बुद्धिविषयत्वे हेतुः सर्वदेवमयत्वम्। तच्च पुराणसारे दर्शितम्—

'धाता प्रजापतिः शक्रो[3] वह्निर्वसुगणो यमः।
प्रविश्याऽतिथिमेते वै[4] भुञ्जतेऽन्नं द्विजोत्तम'॥

इति। गोत्रादिप्रश्ने[5] बाधो यमेन दर्शितः—

'देशं नाम कुलं विद्यां पृष्ट्वा योऽन्नं प्रयच्छति।
न स तत्फलमाप्नोति दत्त्वा स्वर्गं न गच्छति'॥

इति। यथाऽऽतिथ्यकर्त्ता गोत्रादीन् न पृच्छेत् तथाऽतिथिरपि

---

१. D. and G. read व्यासं स्वयमुपागतम्. २. B. C. D. E. F. G. and H. read अपृष्ट्वाऽपि. ३. All others except A. and I. read शुक्रो for शक्रो, but it seems to be a mistake. ४. A. reads -मेवैते- ५. I. reads गोत्रादिप्रश्ने फलाभावो बौधायनेन दर्शितः, but the following quotation is not found in the text of Baudhâyana.

न ब्रूयात् । तदाह मनुः—

‘न भोजनार्थं स्वे[1] विप्रः कुल-गोत्रे निवेदयेत् ।
भोजनार्थं हि ते शंसन् वान्ताशीत्युच्यते बुधैः’ ॥
(म. स्मृ. ३. १०९)

इति ॥ ४८ ॥

अतिथिदृष्टान्तेन भिक्षुकयोर्यति-ब्रह्मचारिणोः पूज्यतामाह[2]-

**अपूर्वः सुव्रती[3] विप्रो ह्यपूर्वश्चातिथिर्यथा ।**
**वेदाभ्यासरतो नित्यं तावपूर्वौ[4] दिने दिने ॥४९॥**

सुष्ठु व्रतं सुव्रतं मोक्षहेतुर्यतिधर्मः सोऽस्यास्तीति सुव्रती यतिः । वेदाभ्यासरतो ब्रह्मचारी । तदर्थत्वात् तस्याऽऽश्रमस्य[5] । तावुभौ प्रतिदिनमपूर्वातिथिवत्[6] पूज्यावित्यर्थः । तथा च याज्ञवल्क्यः—

‘सत्कृत्य भिक्षवे भिक्षा दातव्या सुव्रताय च’ ।
(या. स्मृ. १.१०८)

इति । नृसिंहपुराणे[7]—

---

१. G. reads यो for स्वे. २. D. reads पूजामाह. ३. M. reads सुव्रतो विप्रो अपूर्वो वाऽतिथिस्तथा; while D. E. G. H. I. J. K. and L. read अपूर्वश्चातिथिस्तथा. ४. D. reads त्रयोऽपूर्वे दिनेदिने, E. G. and H. read त्रयोऽपूर्वे दिनेदिने, I. reads त्रयः पूज्या दिनेदिने and J. K. L. and M. read त्रयोऽपूर्वा दिनेदिने. The commentators follow none of these readings. ५. G. reads श्रमस्य for आश्रमस्य. ६. B. C. D. E. F. G. H. and I. read -मपूर्वा वातिथिवत्. ७. I. adds ऽपि to नृसिंहपुराणे.

'भिक्षां च भिक्षवे[1] दद्यात् परिव्राड्-ब्रह्मचारिणे[2] ।
अकल्पितान्नादुद्धृत्य[4] सर्वव्यञ्जनसंयुताम्[5]' ॥[3]
( नृ. पु. ९८. ९८–९९; ल. हा. स्मृ. ४. ९९ )

इति । मनुरपि–

'भिक्षां च भिक्षवे दद्याद्विधिवद् ब्रह्मचारिणे । (९४)
यत्पुण्यफलमाप्नोति[6] गां दत्वा विधिवद् गुरोः ।
तत्पुण्यफलमाप्नोति भिक्षां दत्त्वा द्विजो गृही' ॥
(म. स्मृ. ३. ९४–९५)

इति । यमः–

'सत्कृत्य भिक्षवे भिक्षां यः प्रयच्छति मानवः ।
गोप्रदानसमं पुण्यं तस्याह भगवान् यमः' ॥

इति । ब्रह्मचारिणं स्वस्तीति वाचयित्वा तद्धस्ते जलं प्रदाय भिक्षाप्रदानं कार्यम् । तदाह गौतमः–

'स्वस्तिवाच्य भिक्षादानमप्पूर्वम्[7]' ।
( गौ. स्मृ. ५. ७ )

इति ॥ ४९ ॥

---

१. I. has made a mistake here. It omits the following :—
'भिक्षां च भिक्षवे दद्यात् परिव्राड्-ब्रह्मचारिणे ।
अकल्पितान्नादुद्धृत्य सर्वव्यञ्जनसंयुताम्' ॥
इति । मनुरपि. २. B. C. and F. read यतिवद् ब्रह्मचारिणे. ३. D. omits this whole line through mistake. ४. The text of Nṛisinha Purâṇa reads आकल्पितान्नादु-; while H. reads कल्पितान्नात्समु- ५. D. substitutes -सत्कृतम् for -संयुताम्, and B. C. H. read सर्वव्यंजनसंयुतम्. ६. D. reads पुण्यं. ७. D. reads भिक्षादानपूर्वम्; while all others, except A. and E. read भिक्षादानमपूर्वम्. We have compared here five different manuscripts of the text of Gautama. Three of them follow our reading.

यति-ब्रह्मचारिणौ यदा वैश्वदेवान्ते समागच्छतस्तदाऽस्त्वेवं यदा तु वैश्वदेवात् पूर्वमागच्छतस्तदा कथमित्यत आह–

वैश्वदेवे तु सम्प्राप्ते भिक्षुके गृहमागते ।
उद्धृत्य वैश्वदेवार्थं भिक्षुकं तु विसर्जयेत् ॥ ५० ॥

सम्प्राप्ते प्रसक्ते अननुष्ठिते सतीति यावत् । तथा च नृसिंहपुराणे–

'अकृते वैश्वदेवे तु भिक्षुके गृहमागते ।
अवश्यमेव दातव्यं स्वर्गसोपानकारकम् ।
उद्धृत्य वैश्वदेवान्नं भिक्षां दत्वा विसर्जयेत्' ॥
( नृ. पु. ५८. १००; ल. हा. स्मृ. ४. ६० )

यावद्वैश्वदेवाद्युपयुक्तमन्नं तावत् पृथक् कृत्वा ऽवशिष्टादन्नाद्भिक्षां दत्वा भिक्षुकं विसर्जयेत् ॥ ५० ॥

अकरणे प्रत्यवायमाह–

यतिश्च ब्रह्मचारी च पक्वान्नस्वामिनावुभौ ।
तयोरन्नमदत्वा तु भुक्त्वा चान्द्रायणं चरेत् ॥५१॥

चान्द्रायणस्य लक्षणं वक्ष्यामः प्रायश्चित्तप्रकरणे । प्राय-

१. Except A. and E. all others read यदि; while H. omits यदा. २. I. reads कथमित्याह. ३. L. reads वैश्वदेवेति for वैश्वदेवे तु. ४. M. reads भिक्षां दत्वा विसर्जयेत्; while J. K. and L. read भिक्षुकं तु विसर्जयेत्. ५. The text of Nṛisinha Purâṇa reads भिक्षौ भिक्षार्थमागते. ६. Except A. and the text of N. P. all others omit this line. ७. I. omits उद्धृत्य वैश्वदेवान्नं through mistake, and B. C. D. E. F. G. and H. read वैश्वदेवार्थं. ८. M. substitutes च, for तु. ९. Except A. and E. all others omit प्रायश्चित्तप्रकरणे.

श्चित्तविधानात् प्रत्यवायो ऽवगम्यते। तयोः पक्वान्नस्वामित्वाद-न्नादाने प्रत्यवाय उपपन्नः। अत एव पुराणे ऽपि—

'अहुत्वाऽग्निमसन्तर्प्य तपस्विनमुपस्थितम्।
अशित्वा तु परे लोके स्वानि मांसानि खादयेत्'॥

इति॥ ५१॥

बहुषु भिक्षुकेषु आगतेष्वशक्तेन किं कर्त्तव्यमित्याशङ्क्याह—

दद्याच्च भिक्षात्रितयं परिव्राड्-ब्रह्मचारिणाम्।
इच्छया च ततो दद्याद्विभवे सत्यवारितम्॥ ५२॥

निगदव्याख्यानमेतत्। यथाविभवं भिक्षादानं कूर्मपुराणे दर्शितम्—

'भिक्षां वै भिक्षवे दद्यात् विधिवद् ब्रह्मचारिणे।
दद्यादन्नं यथाशक्ति ह्यर्थिभ्यो लोभवर्जितः'॥

(कू. पु. १. २. १८. ११७)

इति॥ ५२॥

यतिभिक्षाप्रदाने नियममाह—

यतिहस्ते जलं दद्याद्भैक्ष्यं दद्यात् पुनर्जलम्।
तद्भैक्ष्यं मेरुणा तुल्यं तज्जलं सागरोपमम्॥ ५३॥

---

१. I. reads ऽग्नीन्. २. B. C. D. E. F. and H. read खादति, and G. खादते. ३. M. omits the whole verse. ४. J. K. and L. read -चारिणोः. ५. D. substitutes वा for च. ६. A. reads ततो विद्वान्विभवे for ततो दद्याद्विभवे. ७. H. and I. read -व्याख्यात-. ८. Some manuscripts read भैक्षं. ९. D. omits the following portion:—

तद्भैक्ष्यं मेरुणा तुल्यं तज्जलं सागरोपमम्॥ ५३॥
स्पष्टमेतत्। तच्च भैक्ष्यं सति विभवे बहुलं दातव्यम्।

स्पष्टमेतत् । तच्च भैक्ष्यं सति विभवे बहुलं दातव्यम् । तदुक्तं ब्रह्मपुराणे—

‘ यः पात्रपूरणीं भिक्षां यतिभ्यः सम्प्रयच्छति ।
विमुक्तः सर्वपापेभ्यो नासौ दुर्गतिमाप्नुयात्’ ॥

इति ॥ ५३ ॥

यथा भिक्षुकस्य समागतस्यातिथ्यमवश्यं कर्त्तव्यं तद्वदैश्वर्योपेतस्यापि स्वगृहे समागतस्याऽतिथ्यमभ्युदयकामिना कर्त्तव्यमित्याह—

यस्य[1] छत्रं हयश्चैव कुञ्जरारोहमृद्धिमत् ।
ऐन्द्रं स्थानमुपासीत तस्मात्तं न विचारयेत् ॥ ५४ ॥

यस्य छत्र-हयौ विद्येते तस्यातिथ्यं कुर्वन् ऐन्द्रं पदमवाप्नुयात् । एतस्माद्वचनात् पूर्वोत्तरवचनयोरातिथ्यविषयत्वात् तत्प्रकरणान्तःपातित्वेनास्मिन् वचने ऽनुक्तमपि ‘ आतिथ्यं कुर्वन्’—इति पदद्वयं सन्दंशन्यायेनात्र लभ्यते । कुञ्जरस्यारोहो यस्मिन्नैन्द्रे पदे तत्कुञ्जरारोहम् । ऋद्धिरमृतपानाप्सरःसेवादिरस्मिन्नस्तीत्यृद्धिमत् । छत्रादिमान् क्षत्रियादिरतिथिर्जाति-कुलाचारैर्यद्यपि हीनः तथापि तत्पूजायाः स्वर्गप्राप्तिहेतुत्वात् तमतिथिं हीनत्वबुद्ध्या[2]—पूज्यो ऽयं न वा?— इति न विचारयेत् न सन्दिह्यात् । किन्त्वीश्वरबुद्ध्या तं पूजयेत् ।

यद्यपि भिक्षुकवन्नायमस्मिन् जन्मनि तपस्वी तथाप्यतीते

---

१. This verse is omitted by J. K. L. and M. २. H. reads गृही तत्त्वबुद्ध्या.

जन्मन्यनेन तपो ऽनुष्ठितम् । अन्यथेदृशस्यैश्वर्यस्य प्राप्त्यसम्भवात् । अत एव विभूतिमत ईश्वरांशत्वं भगवता दर्शितम्—

' यद्यद् विभूतिमत्सत्त्वं[१] श्रीमदूर्जितमेव वा ।
तत्तदेवाऽवगच्छ त्वं मम तेजोंऽशसम्भवम् ' ॥
(भ. गी. १०. ४१)

इति । तस्माद्युक्तमैश्वर्योपेतस्यातिथ्यम् ॥ ५४ ॥

यदुक्तं वैश्वदेवात् पूर्वमपि यति-ब्रह्मचारिभ्यां भिक्षा दातव्येति तत्रोपपत्तिमाह—

**वैश्वदेवकृतं पापं शक्तो भिक्षुर्व्यपोहितुम् ।**
**न हि भिक्षुकृतान्दोषान्वैश्वदेवो व्यपोहति ॥५५॥**

वैश्वदेवस्य पश्चात्करणेन प्रसक्तो यो दोषः स भिक्षादानेन निवर्त्तते । भिक्षापरिहारेण तु यो दोषः नासौ पूर्वकृतेनाऽपि वैश्वदेवेन निवर्त्तते । अत्र भिक्षुशब्दो विद्यार्थ्यादीनामुपलक्षकः । तथा च तेषां भिक्षुकत्वं[२] व्यासेनोक्तम्—

'यतिश्च ब्रह्मचारी च विद्यार्थी गुरुपोषकः ।
अध्वगः क्षीणवृत्तिश्च षडेते भिक्षुकाः स्मृताः' ॥

इति । पुराणेऽपि—

' व्याधितस्यार्थहीनस्य कुटुम्बात्[३] प्रच्युतस्य च ।
अध्वानं प्रतिपन्नस्य[४] भिक्षाचर्या विधीयते ' ॥

इति ॥ ५६ ॥

---

१. G. and H. read सर्वं. २. B. C. D. E. and H. read भिक्षुत्वं. ३. D. reads कुलात्स्वात् for कुटुम्बात्. ४. B. C. E. F. G. and H. वा प्रपन्नस्य for प्रतिपन्नस्य.

वैश्वदेवकृतमित्युक्त्वा[1] बुद्धिस्थत्वाद्वैश्वदेवस्याऽकरणे प्रत्यवायमाह—

अकृत्वा[2] वैश्वदेवं तु भुञ्जते ये द्विजाधमाः[3] ।
सर्वे ते निष्फला ज्ञेयाः पतन्ति नरकेऽशुचौ ॥५६॥

निष्फला यथोक्तफलरहिताः । न केवलमिष्टप्राप्त्यभावः किन्त्वनिष्टप्राप्तिरपि दर्शिता 'पतन्ति नरकेऽशुचौ' इति ॥५६॥

वैश्वदेवदृष्टान्तेनातिथ्याकरणेऽपि प्रत्यवायमाह—

वैश्वदेवविहीना[4] ये आतिथ्येन बहिष्कृताः[5] ।
सर्वे ते नरकं यान्ति काकयोनिं व्रजन्ति च[6] ॥५७॥

नरको रौरवादिः । तमनुभूय पश्चात्काकयोनिं व्रजन्ति ॥५७॥

अतिथित्वेन[7] स्तुवन्नन्यानपि भोजनीयानाह—

पापो[8] वा यदि चण्डालो विप्रघ्नः पितृघातकः ।
वैश्वदेवे तु सम्प्राप्तः[9] सोऽतिथिः स्वर्गसङ्क्रमः ॥५८॥

पापो गोवधाद्युपपातकी । एतेषां भोजनीयत्वमेव । न तु अशेषातिथ्यसत्कारार्हत्वम् । एतदेवाभिप्रेत्या[10]ऽऽश्वमेधिके वर्णितम्-

---

१. B. reads वैश्वदेवं कृतमित्युक्त्वा; while A. reads वैश्वदेवं कर्त्तव्यमित्युक्त्वा. २. J, K. and L. omit this verse, ३. M. reads द्विजातयः. ४. M. omits this verse. ५. J. K. and L. read विवर्जिताः. ६. J. K. and L. substitute ते for च. ७ A. reads अतिथित्वेन प्राप्तस्य पापिष्ठस्याऽपि भोजनीयतामाह. ८. K. and L. read this as follows ;—

चौरो वा यदि चण्डालः शत्रुर्वा पितृघातकः ।

९. D. reads सम्प्राप्ते. १०. I. reads तदेवाभिप्रेत्य.

'चण्डालो वा श्वपाको वा काले यः कश्चिदागतः।
अन्नेन पूजनीयश्च परत्र हितमिच्छता' ॥

इति। विष्णुधर्मोत्तरे—

'चण्डालो वाऽथ वा पापः शत्रुर्वा पितृघातकः।
देश-कालाभ्युपगतो भरणीयो मतो मम' ॥

इति। उक्तान् पञ्च महायज्ञान् प्रशंसति हारीतः—

'देवानृषीन् पितृंश्चैव भूतानि ब्राह्मणांस्तथा।
तर्पयन् विधिना विप्रो ब्रह्मभूयाय कल्पते' ॥
(हा. स्मृ. ४. २२)

इति। पुराणे ऽपि—

'यत्फलं सोमयागेन प्राप्नोति धनवान् द्विजः।
सम्यक् पञ्च महायज्ञैर्दरिद्रस्तदवाप्नुयात्' ॥

इति। अकरणे प्रत्यवायमाह व्यासः—

'पञ्चयज्ञांस्तु यो मोहान्न करोति गृहाश्रमी।
तस्य नायं न च परो लोको भवति धर्मतः' ॥

इति ॥ ५८॥

पञ्चमहायज्ञानन्तरं भोजनविधिमभिप्रेत्य तदनुवादेन तत्र वर्जनीयानाह—

**यो वेष्टितशिरा भुङ्क्ते यो भुङ्क्ते दक्षिणामुखः।**
**वामपादे करं न्यस्य तद्वै रक्षांसि भुञ्जते ॥ ५९॥**

---

१. B. C. and F. read भोजनीयश्च. २. B. C. E. F. G. and H. read -कालेऽभ्युपगतो. ३. B. C. E. G. and H. read तर्पयेत्. ४. The text reads ब्रह्मलोकाय. ५ G. reads -पानेन. ६. D. and I. omit -महा-. ७. I. omits -विधि-. ८. B. C. E. F. G. and I. read वामपाद-करः स्थित्वा, D. reads वामपादकरे स्थित्वा, H. वामपादे करं कृत्वा, J. and L. वामपादे करं न्यस्तं and K. वामपादकरं न्यस्तं.

भोजनविधिश्च मनुना दर्शितः–

'भुक्तवत्सु तु विप्रेषु स्वेषु भृत्येषु चैव हि ।
भुञ्जीयातां ततः पश्चादवशिष्टं तु दम्पती' ॥

(म. स्मृ. ३. ११६)

इति । विष्णुपुराणे–

'ततः सुवासिनी-दुःखि-गर्भिणी-वृद्ध-बालकान् ।
भोजयेत् संस्कृतान्नेन प्रथमं तु परं गृही ॥
अभुक्तवत्सु चैतेषु भुञ्जन् भुङ्क्ते सुदुष्कृतम् ।
मृतश्च गत्वा नरकं श्लेष्मभुग् जायते नृप' ॥

(वि. पु. ३. ११. ६८-६९)

इति । मार्कण्डेयपुराणे ऽपि–

'पूजयित्वाऽतिथीनिष्टान् ज्ञातीन् बन्धूंस्तथाऽर्थिनः ।
विकलान् बाल-वृद्धांश्च भोजयेदातुरांस्ततः ॥
वाञ्छेत् क्षुत्तृट्परीतात्मा यैश्चान्योऽन्नमकिञ्चनः' ।

(मा. पु. २९. ३७-३८)

इति । भोजने इतिकर्त्तव्यतामाह बौधायनः–

'उपलिप्ते समे स्थाने शुचौ श्लक्ष्णाऽऽसनान्विते ।
चतुरस्रं त्रिकोणं वा वर्त्तुलं वाऽर्द्धचन्द्रकम् ॥

१. B. C. D. E. F. G. and H. insert इति । before भोजन-. २. The text of Manu reads भुक्तवत्स्वथ, and I. reads भुक्तवत्सु च. ३. The text of Vishṇu Purâṇa reads चरमं for तु परं. ४. The text of Vishṇu Purâṇa reads ऽति- for सु-. ५. The text of V. P. reads नरः for नृप. ६. I. omits ऽपि. ७. B. C. D. E. F. G. H. and I. read ऽतिथीन् निःस्वान्. ८. The text of Mârkaṇḍeya Purâṇa inserts च after भोजयेत्. ९. The text of M. P. वाञ्छते क्षुत्परीतात्मा. १०. All others except A. and the text of M. P. read यच्चान्नं रससंयुतम्. ११. I. reads through mistake श्लक्ष्ण-समन्विते.

कर्त्तव्यमानुपूर्व्येण ब्राह्मणादिषु मण्डलम्'॥
इति । शङ्खो ऽपि–
'आदित्या वसवो रुद्रा ब्रह्मा चैव पितामहः ।
मण्डलान्युपजीवन्ति तस्मात् कुर्वीत मण्डलम्' ॥
( ल. आ. स्मृ. ९. २ )
इति । कूर्मपुराणे ऽपि–
'उपलिप्ते शुचौ देशे पादौ प्रक्षाल्य वै करौ ।
आचम्यार्द्राननो ऽक्रोधः पञ्चार्द्रो भोजनं चरेत्' ॥
( कू. पु. १. २. १९. ४ )
इति । व्यासो ऽपि–
'[2]पञ्चार्द्रो भोजनं कुर्यात् प्राङ्मुखो मौनमास्थितः ।
हस्तौ पादौ तथैवास्यमेषु पञ्चार्द्रता मता' ॥
( ल. व्या. २. ७२ )
इति । आश्वमेधिके ऽपि–
' आर्द्रपादस्तु भुञ्जीयात् प्राङ्मुखश्चासने शुचौ ।
पादाभ्यां धरणीं स्पृष्ट्वा पादेनैकेन वा पुनः' ॥
( वृ. गौ. स्मृ. १३. ४ )
इति । [3]तच्च भोजनं शुद्धपात्रे कर्त्तव्यम् । तदुक्तं कूर्मपुराणे–

१. D. omits इति. २. This verse appears in the text of Laghu Vyâsa Smriti as follows:—

पञ्चार्द्रो भोजनं कुर्यात् भूम्यां पादौ निधाय च ।
उपलिप्ते शुचौ देशे पादौ प्रक्षाल्य वै करौ ॥

३. B. C. D. E. F. G. and H. read तत्र for तच्च.

'[1]प्रशस्त-शुद्धपात्रेषु भुञ्जीताऽ[2]कुपितो द्विजः' ॥

इति । प्रशस्तानि च पात्राणि पैठीनसिना दर्शितानि—

'सौवर्णे राजते [3]ताम्रे पद्मपत्र-पलाशयोः ।
[4]भाजने, भोजने चैवाऽतिरात्रफलमश्नुते ॥
एक एव तु यो भुङ्क्ते विमले कांस्यभाजने ।
चत्वारि तस्य वर्द्धन्ते आयुः प्रज्ञा यशो बलम्' ॥

इति । तत्र [5]पद्मपत्र-पलाशपत्रभोजनं गृहिव्यतिरिक्त-विषयम् ।

'[6]पलाश-पद्मपत्रेषु गृही भुक्त्वैन्दवं चरेत् ।
ब्रह्मचारि-यतीनां च चान्द्रायणफलं [7]लभेत्' ॥
( व्या. स्मृ. ३. ६३ )

इति व्यासस्मरणात् । कांस्यपात्रं तु गृहस्थैकविषयम् । [8]यत्यादीनां तन्निषेधात् । तदाह प्रचेताः—

'ताम्बूलाभ्यञ्जनं चैव कांस्यपात्रे च भोजनम् ।
यतिश्च ब्रह्मचारी च विधवा च विवर्जयेत्' ॥

इति । [9]तच्च पात्रं भूमौ स्थापनीयम् । यदुक्तं कूर्मपुराणे—

---

१. This line is not found in the text of Kûrma Purâṇa. २. I. reads ऽकुत्सितो. ३. A. reads पात्रे ताम्रे पद्म-पलाशयोः; while I. reads ताम्रे यम-पत्र-पलाशयोः for ताम्रे पद्मपत्र-पलाशयोः. ४. H. reads भोजने भाजने; while D. and I. read through mistake भोजने भोजने. ५. I. reads -यम- instead of -पद्म-. ६. The text reads this verse as follows:—

पलाश-पद्मपत्रेषु गृहस्थो भोक्तुमर्हति ।
ब्रह्मचारी यतिश्चैव श्रेयो यद्भोक्तुमर्हति ॥

७. I. reads भवेत्. ८. I. reads यत्यादीनां तु निषेधात्. ९. H. substitutes तत्र for तच्च.

'पञ्चार्द्रो भोजनं कुर्याद्भूमौ पात्रं निधाय तु[1]।
उपवासेन तत्तुल्यं मनुराह प्रजापतिः'॥

(कू. पु. १. २. १८. ३)

इति। तच्च स्थापनं प्राणाहुतिपर्यन्तम्। पश्चात्तु यन्त्रिकामारोप्य भोक्तव्यम्। तदाह व्यासः—

'[2]न्यस्य पात्रं तु भुञ्जीत पञ्च ग्रासान् महामुने।
शेषमुद्धृत्य भोक्तव्यं श्रूयतामत्र कारणम्॥
विप्रुषां [3]पादसंस्पर्शः पाद-चैलरजस्तथा।
[4]सुखेन भुङ्क्ते विप्रो हि पित्रर्थं तु न लुप्यते'॥

इति। पैतृकभोजने भूमिपात्रप्रतिष्ठापनं न लोपनीयमित्यर्थः। उक्तपात्रनिहितमन्नं नमस्कुर्यात् तदुक्तं ब्रह्मपुराणे—

'अन्नं दृष्ट्वा प्रणम्यादौ प्राञ्जलिः कथयेत्ततः।
अस्माकं नित्यमस्त्वेतदिति भक्त्या ऽथ वन्दयेत्'॥

इति। वन्दनानन्तरकृत्यमाह गोभिलः—

'अथातः प्राणाहुतिकल्पो व्याहृतिभिर्गायत्र्याऽभिमन्त्र्य 'ऋतं त्वा सत्येन परिषिञ्चामि' इति सायं, 'सत्यं त्वर्त्तेन परिषिञ्चामि' इति प्रातः।
'अन्तश्[5]चरसि भूतेषु गुहायां [6]विश्वतोमुखः।
त्वं यज्ञस्त्वं वषट्कार आपोज्योतीरसोऽमृतम्'॥

१. The text of K. P. substitutes च for तु. २. B. C. and F. read न्यस्तपात्रे तु, and D. G. H. न्यस्तपात्रं तु. ३. All others except A. and I. read दोषसंस्पर्शः for पादसंस्पर्शः. ४. G. reads सुखेन भुङ्क्ते विप्रोऽपि; while H. reads सुखे भुंक्ते तु विप्रोऽपि. ५. D. and G. read चरति. ६. In the marginal reading of H. there appears विश्वमूर्तिषु for विश्वतोमुखः.

त्वं ब्रह्मा त्वं प्रजापतिः ब्रह्मभूर्भुवः स्वरोममृतोप-
स्तरणमसि'—इत्यपः पीत्वा दश होतारं मनसा-
नुद्रूत्य त्वरन् पञ्च ग्रासान् गृह्णीयात् । प्राणा-
य स्वाहेति गार्हपत्यमेव तेन जुहोति । अपा-
नाय स्वाहेत्यन्वाहार्यपचनमेव तेन जुहोति।
व्यानाय स्वाहेत्याऽऽहवनीयमेव तेन जुहोति ।
उदानाय स्वाहेति सभ्यमेव तेन जुहोति ।
समानाय स्वाहेत्यावसथ्यमेव तेन जुहोति' ।

इति । एते पञ्च मन्त्राः प्रणवाद्याः कर्त्तव्याः । तथा च शौनकः—

'स्वाहाऽन्ताः प्रणवाद्याश्च नाम्ना मन्त्रास्तु वायवाः ।
जिह्वयैव ग्रसेदन्नं दशनैस्तु न संस्पृशेत्' ॥

इति । जिह्वाग्रसने विशेष आश्वमेधिके दर्शितः—

'यथा रसं न जानाति जिह्वा प्राणाहुतौ नृप ।
तथा समाहितः कुर्यात् प्राणाहुतिमतन्द्रितः' ॥
(वृ. गौ. स्मृ. १३. ९–१० )

इति । प्राणाहुतिष्वङ्गुलिनियममाह शौनकः—

'तर्जनी-मध्यमा-ऽङ्गुष्ठलग्ना प्राणाहुतिर्भवेत् ॥
मध्यमा-ऽनामिका-ऽङ्गुष्ठैरपाने जुहुयात्ततः ॥
कनिष्ठा-ऽनामिका-ऽङ्गुष्ठैर्व्याने तु जुहुयाद्धविः ।
तर्जनीं तु बहिः कृत्वा उदाने जुहुयात्ततः ॥
समाने सर्वहस्तेन समुदायाहुतिर्भवेत्' ।

---

१. All others except A. and I. omit त्वं ब्रह्मा. २. I. reads -नुद्धृत्यैव त्वरन्. ३. D. and I. read सत्यमेव. ४. Except A. all others read वायवः. ५. B. C. E. F. G. and H. read व्यानेन for व्याने तु.

इति । परिषेचनानन्तरभाविविशेषो भविष्यपुराणे दर्शितः—

'भोजनात् किञ्चिदन्नाग्रं धर्मराजाय वै बलिम् ।
दत्वा[१]ऽथ चित्रगुप्ताय प्रेतेभ्यश्चेदमुच्चरेत्—॥
'यत्र क्वचन संस्थानां क्षुत्तृषोपहतात्मनाम् ।
प्रे[२]तानां तृप्तयेऽक्षय्यमिदमस्तु य[३]थासुखम्' ॥

इति । कूर्मपुराणेऽपि—

'महाव्याहृतिभिस्त्वन्नं परिधायोदकेन तु ।
अमृतोपस्तरणमसीत्यापो[४]शानक्रियां चरेत्' ॥

(कू. पु. १. ३. १९. २)

इति । बौधायनस्तु स[५]र्वमेतत् संगृह्याह—

'[६]सर्वावश्यकावसानेषु प्रक्षालितपाणि-पादोऽप आचम्य । शुचौ संवृते देशे प्राङ्मुख उपविश्य [७]उद्धृतमाह्रियमाणं भूर्भुवः स्वरोमित्युपस्थाय वाचं यच्छेत् । (२) न्यस्तमन्[८]नं महाव्याहृतिभिः प्रदक्षिणमुदकं परिषिच्य सव्येन पाणिनाऽविमुञ्चन् अमृतोपस्तरणमसि—

---

१. D. reads दत्वा सचित्रगुप्ताय; while G. दत्वा च चित्रगुप्ताय. २. B. C. and F. read मृतानां. ३. H. reads यथामुखम्. ४. B. C. E. F. G. H. and I. read आपोशान-. ५. D. reads सर्वमतात्. ६. The text of Baudhâyana सर्वावश्यकाऽवसाने सम्मृष्टोपलिप्ते देशे for सर्वावश्यकाऽवसानेषु प्रक्षालितपाणि-पादोऽप आचम्य शुचौ संवृते देशे. ७. The text of Baudhâyana reads तद्भूत-माह्रियमाणं. ८. I. reads अन्यत् समानं for न्यस्तमन्नं. B. C. E. F. G. H. and I. drop the word अन्नं here, and insert it before उदकं.

इति पुरस्ता[1]दपः पीत्वा पञ्चा[2]न्नेन प्राणाहुती[3]-
र्जुहोति । श्रद्धायां[4] प्राणे निविष्टो ऽमृतं जुहो-
मि शिवोमा विशाप्रदाहाय प्राणाय स्वाहेति ।
(३)अपाने[5] व्यान उदाने समाने निविष्ट
इत्यादिना यथालिङ्गमनुषङ्गः । एवं पञ्चा-
न्नेन प्राणाहुतीर्हुत्वा[6] तूष्णीं भूयो व्रतयेत्[7] ।
प्रजापतिं मनसा ध्यायन् नान्तरा वाचं
विसृजेत् । (४)

अथाप्युदाहरन्ति-

'आसीनः प्राङ्मुखोऽश्नीयात् वाग्यतोऽन्नमकुत्सयन् ।
अस्कन्दयंस्तन्मनाश्च भुक्त्वा[8]ऽग्निं समुपस्पृशेत्' ॥ (७)

इति । सर्वभक्ष्यापूप-कन्द-मूल-फल-मांसानि[9] द-
न्तैर्नावद्येत् । (८) नातिसुहितः । (९) अमृ-
तापिधानमसि-इत्युपरिष्टादपः पीत्वाऽऽचान्तो
हृदयदेशमभिमृशति । प्राणानां ग्रन्थिरसि
रुद्रो मा विशान्तकस्तेना[10]न्नेनाऽऽप्यायस्वेति ।

---

१. पुरस्तात् is omitted by all except A. and the text of Baudhâyana. २. From स्वरोमित्यु- (P. 419, L. 13) to पञ्चान्नेन the intermediate portion is omitted by E. ३. G. reads प्राणाहुतिभिः. ४. All others except A. and I. omit श्रद्धायां, also the text omits this word. ५. The text omits अपाने व्यान उदाने समाने निविष्ट इत्यादिना यथालिङ्ग-मनुषङ्गः. All the manuscripts show that this line belongs to Baudhâyana, but most probably this line belongs to Madhavâcharya. ६. All others except A. and the text of Baudhâyana omit प्राणाहुतीर्हुत्वा. ७. I. reads वर्त्तयेत्. Probably this is a mistake. ८ D. reads भुक्त्वा स-; while I. भुक्त्वान्नं. ९. B. E. and F. read -मांसानां दन्तैर्न विच्छि-न्द्यात्, D. reads मांसानां दन्तैर्नाद्यात्, E. and H. मांसानां दंतैर्नाऽवच्छेद्यात्, G. मांसानां दन्तैर्नैव छेद्यात् and H. मांसानां दन्तैर्नावर्जयेत्. १०. H. omits अन्नेन.

(१०) पुनराचम्य दक्षिणपादाङ्गुष्ठे पाणिं निःस्रावयति—

‘अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठं च समाश्रितः।
ईशः सर्वस्य जगतः प्रभुः प्रीणाति[1] विश्वभुक्’ ॥(११)

इति। हुतान्नानुमन्त्रणमूर्ध्वहस्तः समाचरेत्। श्रद्धायां प्राणे निविश्यामृतꣳ हुतं प्राणमन्त्रेनाप्यायस्वेति पञ्च[2]। (१२) ब्रह्मणि म आत्माऽमृतत्वायेत्यात्मानमक्षरेण[3] योजयेत्। (१४) सर्वक्रतुयाजिनामात्मयाजी विशिष्यते’। (१५)

(बौ. स्मृ. २. ७. १२. २–१५)

इति। विष्णुपुराणे—

‘अश्नीयात् तन्मना भूत्वा पूर्वं तु मधुरं रसम्।
लवणाम्लौ तथा मध्ये कटु-तिक्तादिकांस्ततः॥
प्राग् द्रवं पुरुषोऽश्नीयान्मध्ये च कठिनाशनः।
अन्ते पुनर्द्रवाशी तु बलारोग्ये[4] न मुञ्चति’॥

(वि. पु. ३. ११. ८३–८४)

इति। भोजने कवलसंख्यामाहाऽऽपस्तम्बः—

‘अष्टौ ग्रासा मुनेर्भक्ष्याः षोडशाऽरण्यवासिनः।

१. G. reads प्रीणातु. २. B. C. E. F. G. and H. omit इति पञ्च, and read प्राणमन्त्रेनाप्यायस्व। श्रद्धायामपाने श्रद्धायां व्याने श्रद्धायामुदाने श्रद्धायां समाने निविश्येत्यादिर्यथालिङ्गमनुषङ्गः; while D. reads श्रद्धायामपाने निविश्यामृतꣳ हुतं अपानमन्त्रेनाप्यायस्व। श्रद्धायां व्याने निविश्यामृतꣳ हुतं व्यानमन्त्रेनाप्यायस्व। श्रद्धायामुदाने निविश्यामृतꣳ हुतं उदानमन्त्रेनाप्यायस्व। श्रद्धायां समाने निविश्यामृतꣳ हुतं समानमन्त्रेनाप्यायस्वेति यथालिङ्गमनुषङ्गः. ३. I. omits अक्षरेण. ४. D. reads बलारोग्यं.

द्वात्रिंशत्तु गृहस्थस्य ह्यमितं ब्रह्मचारिणः' ॥
(आ. ध. सू. २.४.९.१३. बौ. स्मृ. २.७.१३.७.)

इति । आश्वमेधिके ऽपि—

'वक्त्रप्रमाणपिण्डांश्च[2] ग्रसेदेकैकशः पुनः । (१२)
वक्त्राधिकं तु यत्[3] पिण्डमात्मोच्छिष्टं तदुच्यते ।
पिण्डावशिष्टमन्नं[4] च[5] वक्त्रनिःसृतमेव च ॥ (१३)
अभोज्यं तद्विजानीयाद्भुक्त्वा चान्द्रायणं चरेत् । (१४)
सदा चात्यशनं नाद्यात् नातिहीनं च कर्हिचित् ।
यथा ऽन्नेन व्यथा न स्यात् तथा भुञ्जीत नित्यशः' ॥
(वृ. गौ. स्मृ. १३. १२–१६)

इति । वृद्धमनुः—

'पीत्वा[6] ऽपोऽशनमश्नीयात् पात्रदत्तमगर्हितम् ।
भार्या-भृतक-दासेभ्य उच्छिष्टं शेषयेत् द्विजः' ॥

इति । उच्छिष्टशेषणं तु घृतादिव्यतिरिक्तविषयम् ।

तदाह पुलस्त्यः—

'भोजनं तु न निःशेषं कुर्यात् प्राज्ञः कथञ्चन ।
अन्यत्र दधि-सक्त्वाज्य-पललं[7]-क्षीर-मध्वपः' ॥

इति । एतच्च भोजनं सायं प्रातश्च कर्तव्यम् । तदुक्तं मनुना—

---

१. This verse appears both in the text of Âpastamba and Baudhâyana. They read द्वात्रिंशतं गृहस्थस्यापरिमितं ब्रह्मचारिणः. २. The text reads -पिण्डानि ग्रासेनैकेन वा for पिण्डांश्च ग्रसेदेकैकशः. ३. B. C. E. F. G. and H. substitute यः for यत्. ४. The text reads दृष्टा- for पिण्डा-. ५. B. C. E. F. G. and H. read अन्यच्च for अन्नं च. ६. B. C. and F. read पीत्वा वा ऽऽसनमश्नीयात्. ७. I. reads -फलं क्षीरं च.

‘सायं[1] प्रातर्द्विजातीनामशनं श्रुतिचोदितम् ।
नान्तरा भोजनं कुर्यादग्निहोत्रसमो विधिः[2]’ ॥
(म. स्मृ. २.५३. नृ. पु. ५८.१०७)

इति । गौतमः—

‘सायं प्रातस्त्वन्नमभिपूजितमनिन्दन् भुञ्जीत’ ।
(गौ. स्मृ. ९.४)

इति । उदाहृतवचनसमूहेन प्रसिद्धं साङ्गभोजनं मूलवचने ‘यो भुङ्क्ते’—इत्यनूद्य वेष्टितशिरस्त्वादिकं प्रत्यवायाभिधानेन निषेधयति । एतच्च वर्ज्यान्तराणामप्युपलक्षणम् । तानि च ब्रह्मपुराणे दर्शितानि—

‘यस्तु पाणितले भुङ्क्ते यस्तु फूत्कार[3]संयुतम् ।
प्रसृताङ्गुलिभिर्यश्च[4] तस्य गोमांसवच्च तत् ॥
नाजीर्णे भोजनं कुर्यात् कुर्यान्नाति[5]बुभुक्षितः ॥
हस्त्यश्व-रथ-यानोष्ट्रमास्थितो नैव भक्षयेत् ।
श्मशानाभ्यन्तरस्थो वा देवालयगतोऽथ वा ॥
शयनस्थो न भुञ्जीत न पाणिस्थं न चासने ।
नार्द्रवासा नार्द्रशिरा न चाऽयज्ञोपवीतवान् ॥
न प्रसारितपादस्तु पादारोपितपाणिमान् ।
न[6] बाहुसक्थिसंस्थश्च न च पर्यङ्कमास्थितः ॥

१. This verse is inserted between verses 52 and 53 in the commentaries by Râmchandra. The oldest commentator Medhâtithi and others do not make commentaries on this verse. २. The text of Nṛisinha Purâṇa reads -समन्वितः for -समो विधिः. ३. A. reads फुत्कारवायुना; while B. reads फूत्कारसंमितम्. ४. B. C. F. and I. read यश्च. ५. I. reads करवानि for कुर्यान्नाति-. ६. I. reads स्वबाहुसव्यसंस्थश्च through mistake.

न वेष्टितशिराश्चापि नोत्सङ्गकृतभाजनः ।
नैकवस्त्रो दुष्टमध्यो नोपानत्कः सपादुकः[१] ।
न चर्मोपरिसंस्थश्च चर्मावेष्टितपार्श्ववान् ॥
ग्रासशेषं न चाश्नीयात् पीतशेषं पिबेन्न च ।
शाक-मूल-फलेक्षूणां दन्तच्छेदैर्न भक्षयेत् ॥
बहूनां भुञ्जतां मध्ये न चाश्नीयात्त्वराऽन्वितः ।
वृथा न विसृजेदन्नं[२] नोच्छिष्टः[३] कुत्रचिद्व्रजेत्' ॥

इति[४] । बृहस्पतिः—

'न स्पृशेद्वामहस्तेन भुञ्जानोऽन्नं कदाचन ।
न पादौ न शिरो बस्तिं न पदा भाजनं स्पृशेत्' ॥

इति । उशनाः[५]—

' नाऽदत्वा[६] मिष्टमश्नीयाद्[७]बहूनां चैव पश्यताम् ।
नाश्नीयुर्बहवश्चैव तथा नैकस्य[८] पश्यतः' ॥

इति । आदित्यपुराणे—

' नोच्छिष्टो[९] ग्राहयेदाज्यं यज्ञोच्छिष्टं[१०] च सन्त्यजेत् ।
शूद्रभुक्तावशिष्टं तु नाद्याद्भाण्डस्थितं त्वपि' ॥

इति । कूर्मपुराणे ऽपि[११]—

---

१. I. reads दृषन्मध्ये नोपानत्कृतपादकः; while G. and H. read the same, but substitute दुष्टमध्यो for दृषन्मध्ये and D. reads दुष्टमध्यसोपानत्कः सपादुकः. २. B. C. E. F. G. and H. read विकिरेत् for विसृजेत्. ३. I. reads नोच्छिष्टं. ४. I. omits this word. ५. B. C. and F. omit उशनाः. ६. H. reads नोऽदत्वा. ७. A. and D. read मृष्टमश्नीयात्. ८. I. reads through mistake. ऽनैकस्य for नैकस्य. ९. I. reads नोच्छिष्टं. १०. B. C. and F. read यच्च शिष्टं न सन्त्यजेत्, D. reads यथोच्छिष्टं तु न त्यजेत्, E. and I. जग्धशिष्टं च सन्त्यजेत् and H. जग्धशिष्टं न सन्त्यजेत्. ११ I. omits अपि.

'नार्द्धरात्रे न मध्याह्ने नाजीर्णे नार्द्रवस्त्रधृक्।
न भिन्नभाजने चैव न भूम्यां न च पाणिषु॥
नोच्छिष्टो घृतमादद्यान्न मूर्द्धानं स्पृशन्नपि।
न ब्रह्म कीर्त्तयित्वाऽपि न निःशेषं न भार्यया॥
नोऽन्धकारे न सन्ध्यायां न च देवालयादिषु'॥
(कू. पु. १. २. १९. २०–२२)

इति। याज्ञवल्क्योऽपि—
'न भार्यादर्शनेऽश्नीयान्नैकवासा न संस्थितः'॥
(या. स्मृ. १. १३१)

इति। यत्तु—
'ब्राह्मण्या सह योऽश्नीयादुच्छिष्टं वा कदाचन।
न तस्य दोषमिच्छन्ति नित्यमेव मनीषिणः॥
उच्छिष्टमितरस्त्रीणां योऽश्नीयाद् ब्राह्मणः क्वचित्।
प्रायश्चित्ती स विज्ञेयः संकीर्णो मूढचेतनः'॥

इति। न तत्सर्वथा दोषाभावप्रतिपादनपरम्। कदाचनेति वचनात्। अत एवाऽऽदित्यपुराणम्—
'ब्राह्मण्या भार्यया सार्द्धं क्वचिद्भुञ्जीत चाध्वनि।
असवर्णस्त्रिया सार्द्धं भुक्त्वा पतति तत्क्षणात्'॥

इति। वृद्धमनुरपि—

---

१. I. reads चाद्यात्. २. B. C. and H. read कीर्त्तयन्वाऽपि. and the text of K. P. reads कीर्त्तयेद्वाऽपि. ३. B. C. E. F. and H. read नाङ्गारे च न चाऽऽकाशे, D. and G. नाऽगारे च न चाऽऽकाशे and I. reads नाऽन्यागारे न वाऽऽकाशे. ४. D. inserts अपि after मनीषिणः. ५. D. omits न. ६. D. reads प्रतिपादनं and omits परम्. ७. B. C. and F. read आदिपुराणम्. ८. All others except A. D. E. and I. read अधोवर्ण-. ९. A. reads मनुरपि for वृद्धमनुरपि.

'न पिबेन्न च भुञ्जीत द्विजः सव्येन पाणिना ।
नैकहस्तेन च जलं शूद्रेणाऽवर्जितं पिबेत् ॥
पिबतो यत् पतेत्तोयं भाजने मुखनिःसृतम् ।
अभोज्यं तद्भवेदन्नं भोक्ता[१] भुञ्जीत किल्बिषम् ॥
पीतावशेषितं तोयं ब्राह्मणो[२] न पुनः पिबेत् ।
पिबेद्यदि हि तन्मोहात् द्विजश्चान्द्रायणं चरेत्' ॥

इति । अत्रिः—

'तोयं पाणिनखस्पृष्टं[३] ब्राह्मणो न पिबेत् क्वचित् ।
सुरापानेन तत्तुल्यमित्येवं मनुरब्रवीत्' ॥

इति । शातातपः—

'उद्धृत्य वामहस्तेन यत्तोयं पिबति द्विजः ।
सुरापानेन तत्तुल्यं मनुराह प्रजापतिः' ॥

इति । आश्वमेधिकेऽपि—

'पानीयानि पिबेद्येन तत्पात्रं द्विजसत्तमः[४] ।
अनुच्छिष्टं भवेत्तावद्यावद्भूमौ न निःक्षिपेत्' ॥

(वृ. गौ. स्मृ. १३. ११.)

इति । शङ्खः—

'नानियुक्तोऽभ्यासनस्थः प्रथममश्नीयात् ।
नाधिकं दद्यात् । न प्रतिगृह्णीयात्' ।

इति । शातातपोऽपि—

'अभ्यासनोपविष्टस्तु यो भुङ्क्ते प्रथमं द्विजः ।
बहूनां पश्यतां सोऽज्ञः[५] पङ्क्त्या हरति किल्बिषम्' ॥

---

१. Only I. reads भुक्त्वा. २. E. G. and I. read ब्राह्मणः पुनरापिबेत्. ३. B. C. D. E. F. and G. read -नखाग्रेषु; while H. reads -नखाग्रेण. ४. G. and H. read द्विजसत्तम. From this to बहूनां पश्यतां the intermediate portion is omitted by D. ५. D. reads योऽज्ञः, and I. प्राज्ञः.

इति। गोभिलः—

‘एकपङ्क्त्युपविष्टानां विप्राणां सह भोजने।
यद्येकोऽपि त्यजेत् पात्रं नाश्नीयुरितरेऽप्यनु[1]।
मोहात्तु भुङ्क्ते यस्तत्र तत्[2]सान्तपनं चरेत्॥
भुञ्जानेषु तु विप्रेषु यस्तु पात्रं परित्यजेत्।
भोजने विघ्नकर्त्ताऽसौ ब्रह्महाऽपि तथोच्यते’॥

इति। वाग्यमनं प्रक्रम्य पुराणे—

‘स्नास्यतो वरुणः शक्तिं जुह्वतोऽग्निः श्रियं हरेत्।
भुञ्जतो मृत्युरायुष्यं तस्मान्मौनं त्रिषु स्मृतम्’॥

इति। यत्त्वत्रिणोक्तम्—

‘मौनव्रतं महाकष्टं हुंकारेणाऽपि नश्यति।
तथा सति महान् दोषः तस्मात्तन्नियतश्चरेत्’॥

इति। तदेतत् काष्ठ[3]मौनाभिप्राय[4]म्। एतच्च पञ्चग्रासादर्वाग्विषयम्। तथा च वृद्धमनुः—

‘अनिन्दन् भक्षयेन्नित्यं वाग्यतोऽन्नमकुत्सयन्।
पञ्च ग्रासान्महामौनं प्राणाद्याप्यायनं महत्’॥

इति। आश्वमेधिकेऽपि—

‘मौनी वाऽप्यथवाऽमौनी प्रहृष्टः संयतेन्द्रियः।
भुञ्जीत विधिवद्विप्रो न चोच्छिष्टानि चर्वयेत्[5]’॥
(वृ. गौ. स्मृ. १३. ११.)

इति। शातातपोऽपि—

१. I. reads -रितरे पुनः. २. I. reads स सान्तपनमाचरेत्. ३. H. reads काष्ठा- for काष्ठ-. ४. I. reads -प्रायेण. ५. B. C. and F. read वापयेत् for चर्वयेत्; while G. reads चावपेत् for the same.

'हस्तदत्तानि चान्नानि प्रत्यक्षलवणं तथा।
मृत्तिकाभक्षणं चैव गोमांसाशनवत् स्मृतम्' ॥

इति। पैठीनसिरपि–

'लवणं व्यञ्जनं चैव घृतं तैलं तथैव च।
लेह्यं पेयं च विविधं हस्तदत्तं न भक्षयेत्।
दर्व्या[1] देयं घृतान्नं तु समस्तव्यञ्जनानि च ॥
उदकं यच्च पक्वान्नं यो दर्व्या दातुमिच्छति।
स भ्रूणहा सुरापश्च स्तेयी[2] च गुरुतल्पगः' ॥

इति। आश्वमेधिके–

'उदक्यामपि चण्डालं श्वानं कुक्कुटमेव च।
भुञ्जानो यदि पश्येत्तु तदन्नं तु परित्यजेत् ॥
केश[3]-कीटावपन्नं च मुखमारुतवीजितम्।
[4]अभोज्यं तद्विजानीयात् भुक्त्वा चान्द्रायणं चरेत् ॥
(वृ. गौ. स्मृ. १३. १६–१७)

इति। कात्यायनः–

'चण्डाल-पतितोदक्या वाक्यं श्रुत्वा द्विजोत्तमः।
भुञ्जीत ग्रासमात्रं तु दिनमेकमभोजनम्' ॥

इति। गौतमो[5]ऽपि–

---

१. B. C. and F. read दर्व्याऽऽदेयं श्रृतान्नं तु; while D. reads दर्व्या देयं घृतानां तु. २. B. C. D. E. F. G. and H. read स स्तेनो गुरुतल्पगः for स्तेयी च गुरुतल्पगः. ३. G. reads केश-कीटाद्विपेतं च. ४. Except A. and the text all others substitute for this line अन्नं तु राक्षसं विद्यात्तस्मात्तत् परिवर्जयेत्, but in the text this line is the latter half of the 18th verse. All others except A. and G. substitute तत् for तु. ५. D. reads this quotation with गौतमोऽपि after the next quotation from बृहस्पति.

'काहल-भ्रमण-ग्राव्णां चक्रस्योलूखलस्य च।
एतेषां निनदं यावत्तावत्कालमभोजनम्'॥
(श्लो. गौ. स्मृ. ९. ३१)

इति। बृहस्पतिरपि—

'अप्येकपङ्क्त्यां[1] नाश्नीयाद्ब्राह्मणैः स्वजनैरपि।
को हि जानाति किं कस्य प्रच्छन्नं पातकं भवेत्॥
एकपङ्क्त्युपविष्टानां दुष्कृतं यद्दुरात्मनाम्।
सर्वेषां तत्समं तावद्यावत् पङ्क्तिर्न भिद्यते'॥

इति। पङ्क्तिभेदप्रकारमपि[2] स एवाह—

'अग्निना भस्मना चैव स्तम्भेन सलिलेन च।
द्वारेण चैव मार्गेण पङ्क्तिभेदो बुधैः स्मृतः'॥

इति। यमो ऽपि—

'उदकं च तृणं भस्म द्वारं पन्थास्तथैव च।
एभिरन्तरितं कृत्वा पङ्क्तिदोषो न विद्यते'॥

इति। तदेवं मूलवचनोक्तवेष्टितशिरस्त्वादिवर्जनोपलक्षिता[3] नियमविशेषा दर्शिताः। दक्षिणामुखत्वनिषेधो नित्यभोजनविषयः। काम्ये तद्विधानात्। तथा च मनुः—

'आयुष्यं प्राङ्मुखो भुङ्क्ते यशस्यं दक्षिणामुखः।
श्रियं[4] प्रत्यङ्मुखो भुङ्क्ते ऋतं[5] भुङ्क्ते[6] उदङ्मुखः'॥

(म. स्मृ. २. ५२; वृ. अ. ५. २९; अ. पु. १५३. ४१)

---

१. B. C. E. F. and H. read पङ्क्त्या नोऽश्नीयात्; while G. and I. read पङ्क्त्या नाऽश्नीयात्. २. D. reads पङ्क्तिभेदप्रकारमाह बृहस्पतिः. ३. G. reads -लक्षितो नियमविशेषो दर्शितः. ४. The text of Vriddha Atri reads श्रियः. ५. H. reads ऽमृतं. ६. The text of Manu adds हि before उदङ्मुखः.

इति । गोभिलस्तु[१] दक्षिणामुखत्वं प्रतिषेधति[२]–

‘प्राङ्मुखावस्थितो विप्रो प्रतीच्यां वा यथासुखम् ।
उत्तरं पितृकार्ये तु दक्षिणां तु विवर्जयेत्’ ॥

इति । ‘वामपादकरः’ वामपादे करौ यस्यासौ वामपादकरः । यो वामपादकरो भुङ्क्ते यश्च स्थित्वा[३] भुङ्क्ते तैः सर्वैर्यद्भुक्तं तद्रक्षांसि भुञ्जते । न स्वयं प्राणाग्निहोत्रादिफलं प्राप्नोतीत्यर्थः । भुक्तस्य राक्षसगामित्वं कूर्मपुराणे ऽपि दर्शितम्–

‘यो[४] भुङ्क्ते वेष्टितशिरा यश्च भुङ्क्ते विदिङ्मुखः ।
सोपानत्कश्च यो भुङ्क्ते सर्वं विद्यात्तदासुरम्’ ॥
(कू. पु. १.२.१९.१९; ल. व्या. स्मृ. २. ८१)

इति । अभिप्रेतस्य भोजनविधेरुदीच्याङ्गानि उच्छिष्टोदकदानादीनि[५] कर्त्तव्यानि । तत्र देवलः–

‘भुक्त्वोच्छिष्टं समादाय सर्वस्मात् किञ्चिदाचमन्[६] ।
उच्छिष्टभागदेयेभ्यः सोदकं निर्वपेद्भुवि’ ॥

इति । तत्र[७] मन्त्रः–

‘रौरवे पूयनिलये[८] पद्मार्बुदनिवासिनाम् ।
प्राणिनां सर्वभूतानामक्षय्यमुपतिष्ठताम्’ ॥

इति । गव्यव्यासो[९] ऽपि–

---

१. B. C. E. F. G. H. and I. read गोभिलोऽपि. २. I. reads निषेधयति. ३. I. reads स्थितो भुङ्क्ते while D. omits यश्च स्थित्वा भुङ्क्ते. ४. The text of K. P. reads यत् for यो. ५. All others except A. and I. omit उच्छिष्टोदकदानादीनि, but this appears in the marginal reading of H. ६. D. reads -दाचमान्. ७. D. omits तत्र मन्त्रः. ८. B. C. D. F. and I. read पुण्यनिलये, but it is a mistake. ९. D. omits गव्य-.

'ततस्तृप्तः सन्नमृतापिधानमसीत्यपः प्राश्य[1]
तस्माद्देशान्मनागपसृत्य विधिवदाचामेत्' ।

इति । स चाचमनप्रकारो देवलेन दर्शितः—

'भुक्त्वाऽऽचामेद्यथोक्तेन विधानेन समाहितः ।
शोधयेन्मुख-हस्तौ च मृदद्भिर्घर्षणैरपि' ॥

इति । तच्च घर्षणं तर्जन्या न कर्त्तव्यम् । तदाह गौतमः—

'गण्डूषस्याथ समये तर्जन्या वक्त्रशोधनम्[2] ।
कुर्वीत यदि मूढात्मा रौरवे नरके पतेत्[3]' ॥

(श्लो. गौ. स्मृ. ९.२९)

इति । व्यासः—

'हस्तं प्रक्षाल्य गण्डूषं यः पिबेदविचक्षणः ।
स देवांश्च पितॄंश्चैव ह्यात्मानं चैव पातयेत्[4]' ॥
तस्मिन् नाचमनं कुर्यात् यत्र भाण्डेऽथ भुक्तवान् ।
यद्युत्तिष्ठत्यनाचान्तो भुक्तवानासनात्ततः ॥
स्नानं सद्यः प्रकुर्वीत सोऽन्यथाऽप्रयतो भवेत्' ॥

इति । कूर्मपुराणेऽपि—

'अमृतापिधानमसीत्युपरिष्टादपः[5] पिबेत् ।
आचान्तः पुनराचामेदायंगौरिति मन्त्रतः ॥
द्रुपदां वा त्रिरावृत्त्य सर्वपापप्रणाशिनीम् ।
प्राणानां ग्रन्थिरसीत्यालभेत् हृदयं[6] ततः ॥

---

१. H. and I. read पीत्वा for प्राश्य. २. B. C. D. E. F. G. and H. read -चालनम्. ३. A. reads रौरवं नरकं व्रजेत्. ४. All others except A. and I. read घातयेत् for पातयेत्. ५. Except A. and the text of K. P. all others omit उपरिष्टात् and read अमृतापिधानमसीत्यपः पिबेत्, but it is a mistake. ६. The text of K. P. reads उदरं for हृदयं.

आचम्याङ्गुष्ठमात्रेण[१] पादाङ्गुष्ठे तु दक्षिणे ।
निःस्रावयेद्धस्तजलमूर्ध्वहस्तः समाहितः ॥
हुतानुमन्त्रणं कुर्यात् श्रद्धायामिति मन्त्रतः ।
[२]अथाक्षरेण स्वात्मानं योजयेद्ब्रह्मणेति हि ॥
सर्वेषामेव योगानामात्मयागः[३] परः स्मृतः ।
योऽनेन विधिना कुर्यात् स याति ब्रह्मणः पदम्[४]' ॥
(कू. पु. १. २. १९. ९–१३)

इति । अत्रिः–

'[५]आचान्तोऽप्यशुचिस्तावद्यावत् पात्रमनुद्धृतम् ।
उद्धृतेऽप्यशुचिस्तावद्यावन्नोन्मृज्यते[६] मही ॥
भूमावपि हि[७] लिप्तायां तावत् स्यादशुचिः पुमान् ।
आसनादुत्थितस्तस्माद्यावन्न स्पृशते महीम्[८]' ॥
(वृ. अ. स्मृ. ५. १९–२०)

इति । शातातपोऽपि–

'आचम्य पात्रमुत्सृज्य किञ्चिदार्द्रेण पाणिना ।
मुख्यान् प्राणान् समालभ्य नाभिं पाणितलेन च ॥

---

१. All others except A. read अङ्गुष्ठमानीय for अङ्गुष्ठमात्रेण; while A. reads अङ्गुष्ठपानीयं. २. The text of K. P. reads—

अथ मन्त्रेण स्वात्मानं योजयेद् ब्राह्मणेति हि;

while I. reads—

अष्टाक्षरेण ह्यात्मानं योजयेद् ब्रह्मणीति हि ।.

३. The text of K. P. reads योगानामात्मयोगः; while I. reads सर्वेषामेवमङ्गानामात्मयागः. ४. D. reads क्षयम्. ५. This quotation appears in Vriddhâtri, but not in Atri. ६. D. reads नो मृज्यते मही, and I. reads नो लिप्यते मही. For the same the text of Vriddhâtri reads मण्डलशोधनम्. ७. This verse is found neither in the text of Atri nor Vriddhâtri. ८. D. and G. read मही for महीम्.

भुक्त्वा नैवं प्रतिष्ठेत न चाप्यार्द्रेण पाणिना।
पाणिं मूर्ध्नि समाधाय स्पृष्ट्वा चाग्निं समाहितः॥
ज्ञातिश्रैष्ठ्यं समाप्नोति प्रयोगकुशलो नरः' ।

इति। विष्णुपुराणेऽपि—

'स्वस्थः प्रशान्तचित्तस्तु कृतासनपरिग्रहः।
अभीष्टदेवतानां च कुर्वीत स्मरणं नरः॥
अग्निराप्याययत्वन्नं पार्थिवं पवनेरितः।
दत्तावकाशो नभसा जरयेदस्तु मे सुखम्॥
अन्नं बलाय मे भूमेरपामग्न्य-ऽनिलस्य च।
भवत्वेतत् परिणतं ममास्त्वव्याहतं सुखम्॥
प्राणा-ऽपान-समानानामुदान-व्यानयोस्तथा।
अन्नं पुष्टिकरं चास्तु ममास्त्वव्याहतं सुखम्॥
अगस्तिरग्निर्वडवानलश्च
भुक्तं मयाऽन्नं जरयत्वशेषम्।
सुखं ममैतत् परिणामसम्भवं
यच्छत्वरोगो मम चास्तु देहः॥
विष्णुः समस्तेन्द्रिय-देह-देहि-
प्रधानभूतो भगवान् यथैकः।

१. D. and G. read चैव. २. D. reads -परिग्रहम्. ३. E. reads ततः. ४. All others except A. and the text of Vishṇu Purâṇa read आप्याययेज्ञातुं. ५. The text of Vishṇu Purâṇa reads जरयन्तु. ६. B. C. E. and F. read अरोगं मम चास्तु देहः, D. and G. read अरोगं मम चास्तु देहम्. H. and I. read अरोगं मम चास्तु देहे and for the same the text of V. P. reads अरोगी मम चास्तु देहे. ७. D. G. H. and I. read -देही.

सत्येन तेनान्नमशेषमेतत्[1]
आरोग्यदं मे[2] परिणाममेतु ॥
विष्णुरत्ता[3] तथैवान्नं परिणामश्च वै तथा ।
सत्येन तेन मे भुक्तं जीर्यत्वन्नमिदं तथा ॥
इत्युच्चार्य स्वहस्तेन परिमृज्य[4] तथोदरम् ।
अनायासप्रदायीनि कुर्यात् कर्माण्यतन्द्रितः' ॥
(वि. पु. ३, ११, ८७-९४)

इति । मार्कण्डेयो ऽपि—
'भूयोऽप्याचम्य कर्त्तव्यं ततस्ताम्बूलभक्षणम्' ।
( मा. पु. २९. ३९ )

इति । अत्र[5] वसिष्ठः—
'सुपूगं च सुपत्रं च[6] चूर्णेन[7] च समन्वितम्[8] ।
अदत्वा द्विजदेवेभ्यः ताम्बूलं वर्जयेद्बुधः ॥
एकपूगं सुखारोग्यं द्विपूगं निष्फलं भवेत् ।
अतिश्रेष्ठं त्रिपूगं च ह्यधिकं नैव दुष्यति ॥
पर्णमूले भवेद्व्याधिः पर्णाग्रे पापसम्भवः ।
शीर्णपर्णं[9] हरेदायुः शिरा बुद्धिविनाशिनी ॥
तस्मादग्रं च मूलं च शिरां चैव विशेषतः ।
शीर्णपर्णं[10] वर्जयित्वा ताम्बूलं खादयेद्बुधः' ॥

१. B. C. E. F. G. H. and I. read -मशेषमन्नम्; while D. reads -मशेषमन्यम्. २. I. reads स्यात् for मे. ३. A. reads विष्णुरात्मा; while I. reads विष्णुर्यथा. ४. B. C. E. F. and G. read परिमृज्यात. ५. I. reads तत्र. ६. D. reads सपूगं च सपत्रं च; while I. reads सुपूगं च सुपर्णं च. ७. H. and I. read सुचूर्णेन. ८. A. reads सुसंयुतम्. ९. All others except A. substitute चूर्ण- for शीर्ण-. १०. Here also all others except A. and I. read चूर्ण- for शीर्ण; but I. substitutes जीर्ण- for the same.

इति। यदिदं भोजनं निरूपितं तत् ग्रहणकाले प्रतिषिद्धम्। तदाह मनुः—

'चन्द्र-सूर्यग्रहे नाद्यादद्यात् स्नात्वा विमुक्तयोः।
अमुक्तयोरस्तगयोर्दृष्ट्वा स्नात्वा परेऽहनि' ॥

(म. स्मृ. ४. २२४; वृ. अ. स्मृ. ५. ६७)

इति। ग्रहे ग्रहणकाले। स्पर्शमारभ्य मोक्षपर्यन्तो ग्रहकालः। तस्मिन् काले न भुञ्जीत। किन्तु राहुणा चन्द्र-सूर्ययोः मुक्तयोः सतोः पश्चात् स्नात्वा भुञ्जीत। यदा तु ग्रस्तास्तमयस्तदा परेद्युः विमुक्तौ तौ दृष्ट्वा भुञ्जीत। न केवलं ग्रहणकाल एव भोजनाभावः किन्तु ग्रहणात् प्रागपि। तदाह व्यासः—

'नाद्यात् सूर्यग्रहात् पूर्वमह्नि सायं शशिग्रहात्।
ग्रहकाले च नाश्नीयात् स्नात्वाऽश्नीयाच्च मुक्तयोः ॥
मुक्ते शशिनि भुञ्जीत यदि न स्यान्महानिशा।
अमुक्तयोरस्तगयोरथ दृष्ट्वा परेऽहनि' ॥

(ल. व्या. स्मृ. २. ७७–७८)

इति। पूर्वकाले भोजननिषेधे विशेषमाह वृद्धवासिष्ठः—

'ग्रहणं तु भवेदिन्दोः प्रथमादधि यामतः।
भुञ्जीतावर्त्तनात् पूर्वं पश्चिमे प्रथमादधः ॥
रवेस्त्वावर्त्तनादूर्ध्वमर्वागेव निशीथतः।
चतुर्थे प्रहरे चेत् स्यात् चतुर्थप्रहरादधः' ॥

इति। रात्रौ प्रथमात् यामादधि ऊर्ध्वं ग्रहणं चेत् आवर्त्तनान्मध्याह्नात् पूर्वं भुञ्जीत। रात्रिपश्चिमयामे चेत् रात्रि-

१. This verse is found in Râmchandrâ's commentary on Manu between verses No. 223 and 224. All other commentators except Râmchandra do not make remarks on this verse. २. E. G. and H. read प्रथमे प्रथमादधः; while I. reads पश्चिमे प्रहरादधः.

प्रथमयामादर्वाक् भुञ्जीत । अह्नश्चतुर्थप्रहरे रविग्रहश्चेत् रात्रेश्चतुर्थप्रहरादधो भुञ्जीतेत्यर्थः । निशीथो मध्यरात्रिः । मध्याह्नादूर्ध्वं रविग्रहणं चेत् मध्यरात्रादर्वागेव भुञ्जीतेत्यर्थः । शशिग्रहणे यामत्रयेण व्यवधानमपेक्षितम् । सूर्यग्रहे तु यामचतुष्टयेनेति तात्पर्यार्थः । तथा च वृद्धगौतमः—

'सूर्यग्रहे तु नाश्नीयात् पूर्वं यामचतुष्टयम् ।
चन्द्रग्रहे तु यामांस्त्रीन् बाल-वृद्धातुरैर्विना' ॥

इति । बाल-वृद्धातुरविषये विशेषो मत्स्यपुराणे—

'अपराह्णे न मध्याह्ने मध्याह्ने चेन्न सङ्गवे ।
भुञ्जीत सङ्गवे चेत्स्यान्न पूर्वं भोजनं चरेत्' ॥

इति । समर्थस्य तु भोजने प्रायश्चित्तमुक्तं कात्यायनेन—

'चन्द्र-सूर्यग्रहे भुक्त्वा प्राजापत्येन शुद्ध्यति ।
तस्मिन्नेव दिने भुक्त्वा त्रिरात्रेणैव शुद्ध्यति' ॥

इति । शशिग्रहणे यामत्रयस्यापवादमाह वृद्धवसिष्ठः—

'ग्रस्तोदये विधोः पूर्वं नाहर्भोजनमाचरेत्' ॥

इति । ग्रस्तास्तमये विशेषमाह भृगुः—

'ग्रस्तावेवास्तमानं तु रवीन्दू प्राप्नुतो यदि ।
तयोः परेद्युरुदये स्नात्वाऽभ्यवहरेन्नरः' ॥

इति । वृद्धगार्ग्योऽपि—

---

१. All others except A. and I. omit the following portion मध्याह्नादूर्ध्वं रविग्रहणं चेत् मध्यरात्रादर्वागेव भुञ्जीतेत्यर्थः. २. All others except A. and I. omit -पुराणे and read मत्स्यः only. ३. Except A. and I. all others read न तु for चेन्न. ४. I. reads सङ्गवे ग्रहणं for भुञ्जीत सङ्गवे. ५. All others except A. and I. read भुञ्जिमाचरेत्. ६. A. reads याज्ञवल्क्येन; but we find this verse neither in Kâtyâyana nor Yâjnavalkya. ७. D. and G. read शशिग्रहे.

'सन्ध्याकाले यदा राहुर्ग्रसते शशि-भास्करौ।
तदहर्नैव भुञ्जीत रात्रावपि कदाचन' ॥

इति। विष्णुधर्मोत्तरेऽपि—

'अहोरात्रं न भोक्तव्यं चन्द्र-सूर्यग्रहो यदा।
मुक्तिं दृष्ट्वा तु भोक्तव्यं स्नानं कृत्वा ततः परम्' ॥

इति। ननु—मेघाद्यन्तर्धाने चाक्षुषं दर्शनं न सम्भवति—इति चेत्। न। दर्शनशब्देन शास्त्रविज्ञानस्य विवक्षितत्वात्। तदाह वृद्धगौतमः—

'चन्द्र-सूर्यग्रहे नाद्यात् तस्मिन्नहनि पूर्वतः।
राहोर्विमुक्तिं विज्ञाय स्नात्वा कुर्वीत भोजनम्' ॥

इति। एवं तर्हि—परेद्युरुदयात् प्रागपि शास्त्रविज्ञान-सम्भवाद् [1]ग्रस्तास्तमयेऽपि [2]तथैव भोजनं प्रसज्येत। तन्न।

'तयोः परेद्युरुदये स्नात्वाऽभ्यवहरेन्नरः'।
'अहोरात्रं न भोक्तव्यं चन्द्र-सूर्यग्रहो यदा'।

इति। वचनद्वयेन तदप्रसक्तेः। यत्तु स्कन्दपुराणे—

'यदा चन्द्रग्रहस्तात निशीथात् परतो भवेत्।
भोक्तव्यं [3]तत्र पूर्वाह्णे नापराह्णे कथञ्चन ॥
पूर्वं निशीथात् ग्रहणं यदा चन्द्रस्य वै भवेत्।
तदा दिवा न कर्तव्यं भोजनं [4]शिखिवाहन' ॥

इति। तदिदं यामत्रयाभि[5]प्रायम्। चन्द्रग्रहे तु 'यामांस्त्रीन्'—

---

१. All others except A. and I. omit ग्रस्तास्तमये ऽपि. २. B. C. E. F. G. and H. read तदैव; while D. reads तदैवं. ३. B. C. E. F. G. H. and I. read तात for तत्र. ४. D. reads शशिवाहन. ५. I. reads प्रायकम्.

इति विशेषस्य वृद्धगौतमेनाभिधानात् । पापक्षयकामो ग्रहणदिनमुपवसेत् । तदाह दक्षः—

'अयने विषुवे चैव चन्द्र-सूर्यग्रहे तथा ।
अहोरात्रोषितः स्नात्वा सर्वपापैः प्रमुच्यते' ॥

इति । पुत्री तु नोपवसेत् । तदाह नारदः—

'संक्रान्त्यामुपवासं च कृष्णैकादशिवासरे ।
चन्द्र-सूर्यग्रहे चैव न कुर्यात् पुत्रवान् गृही' ॥

इति । ग्रस्तास्तमये तु पुत्रिणोऽप्युपवास एव । 'अहोरात्रं न भोक्तव्यम्'—इति भोजनप्रतिषेधात् । क्वचित्तु ग्रहणविशेषे स्नानादिकं न कर्त्तव्यम् । तदुक्तं षट्त्रिंशन्मते—

'सूर्यग्रहो यदा रात्रौ दिवा चन्द्रग्रहस्तथा ।
तत्र स्नानं न कुर्वीत दद्याद्दानं न च क्वचित्' ॥

इति । एतच्च भूभागविशेषव्यवस्थितानां ग्रास-मोक्षदर्शनयोग्यत्वाभावे द्रष्टव्यम् ।

## ॥ इति भोजनप्रकरणम् ॥

इत्थं निरूपितेन भोजनान्तेन कर्त्तव्यजातेनाह्नः पञ्चमभागमतिवाहयेत् । एतेन भागपञ्चककृत्याभिधानेनावशिष्टदिवसकर्त्तव्यजातमुपलक्षणीयम् । तच्च कर्त्तव्यजातं दक्षेण दर्शितम्—

'भुक्त्वा तु सुखमास्थाय तदन्नं परिणामयेत् ।
इतिहास-पुराणाद्यैः षष्ठ-सप्तमकौ[1] नयेत् ॥
अष्टमे लोकयात्रा तु बहिः सन्ध्या[2] ततः पुनः' ।

( द. स्मृ. २. ५२-५३ )

---

१. The text of Daksha reads षष्ठं च सप्तमं नयेत्. २. I. reads सन्ध्यां.

इति । अत्रिः—

'दिवास्वापं न कुर्वीत स्त्रियं चैव परित्यजेत् ।
आयुः[1]क्षीणा दिवा निद्रा दिवा स्त्री पुण्यनाशिनी ॥
इतिहास-पुराणानि धर्मशास्त्राणि चाऽभ्यसेत् ।
वृथा विवादवाक्यानि परीवादं च वर्जयेत्' ॥

इति । विष्णुपुराणेऽपि—

'अनायासप्रदायीनि कुर्यात् कर्माण्यतन्द्रितः ।
[2]सच्छास्त्रादिविनोदेन [3]सन्मार्गाद्यविरोधिना ॥
दिनं नयेत्ततः सन्ध्यामुपतिष्ठेत् समाहितः' ।
(वि॰ पु॰ ३. ११. ९४-९५)

इति । याज्ञवल्क्योऽपि—

'अहःशेषं समासीत शिष्टैरिष्टैश्च बन्धुभिः ॥ (११३)
उपास्य पश्चिमां सन्ध्यां हुत्वाऽग्नींस्तानुपास्य च ।
भृत्यैः परिवृतो भुक्त्वा नाति[4]तृप्तोऽथ संविशेत्' ॥
(या॰ स्मृ॰ १. ११३-११४)

इति । 'उपास्य च' इति चकारेण वैश्वदेवादिकं समुच्चिनोति । सायंसन्ध्या-होमौ निरूपितौ । वैश्वदेवादौ कश्चिद्विशेषो विष्णुपुराणे दर्शितः—

'पुनः पाकमुपादाय सायमप्यवनीपते ।
वैश्वदेवनिमित्तं वै [5]पत्न्या सार्धं बलिं हरेत् ॥ (१०१)

१. All others except A. and I. read आयुःक्षीणं for आयुःक्षीणा.
२. A. reads this line as follows:—
नाऽसच्छास्त्रविनोदेन सन्मार्गार्थविरोधिना ॥.
३. B. C. F. and I. read सन्मार्गादविरोधिना. ४. The text of Yâjnavalkya reads -तृप्याऽथ for -तृप्तोऽथ. ५. The text of Vishṇu Purâṇa reads पत्न्यमन्त्रं बलिं हरेत्.

तत्रापि श्वपचादिभ्यस्तथैवान्नं विसर्जयेत्[1]।
अतिथिं चागतं तत्र स्वशक्त्या पूजयेद्बुधः॥ (१०३)[2]
दिवा ऽतिथौ[3] तु विमुखे गते यत्पातकं नृप।
तदेवाष्टगुणं पुंसां सूर्योढे[4] विमुखे गते॥ (१०४)
तस्मात् स्वशक्त्या राजेन्द्र सूर्योढमतिथिं[5] नरः।
पूजयेत् पूजिते तस्मिन् पूजिताः सर्वदेवताः॥ (१०५)
कृतपादादिशौचश्च भुक्त्वा सायं ततो गृही।
गच्छेदस्फुटितां शय्यामपि दारुमयीं नृप[6]॥ (१०७)
(वि. पु. ३. ११. १०१–१०७)

इति।

॥ इति अहःशेषादिकृत्यम्॥

अथ शयनप्रकारमाह हारीतः—

'सुप्रक्षालितचरणतलो रक्षां कृत्वा उदकपूर्णघटादिमङ्गलोपेत आत्माभिरुचितामनुपहतां[7] सुत्रामाणमिति पठन्[8] शय्यामधिष्ठाय रात्रिसूक्तं जपित्वा विष्णुं नमस्कृत्य 'सर्पाऽपसर्प भद्रं

---

१. The text of V. P. reads तथैवान्नापवर्जनम्; while B. C. D. E. F. G. and H. read तथैवान्नविसर्जनम्. २. After this verse D. and the text of V. P. add one verse more, which is—

'पादशौचाऽसन-प्रह्व-स्वागतोक्त्या च पूजनम्।
ततश्चान्नप्रदानेन शयनेन च पार्थिव'॥.

३. The text of V. P. reads दिनाऽतिथौ for दिवा ऽतिथौ. ४. I. reads सूर्योटे. ५. I. reads सूर्योटम्. ६. All others except A. and the text of V. P. read as follows:—

गच्छेच्छय्यामस्फुटितां ततो दारुमयीं नृप।.

७. B. C. and F. read आत्माभिरूपां. ८. I. reads through mistake सूत्रामां पठन्.

ते'—इति श्लोकं जपित्वा इष्टदेवतास्मरणं कृत्वा समाधिमास्थाय अन्यांश्च[१] वैदिकान् मंत्रान् सावित्रीं च जपित्वा मङ्गल्यं[२] श्रुतं शङ्खं च गृण्वन् दक्षिणाशिराः स्वपेत्' ।

( हा. स्मृ. ५. ३)

इति । दक्षिणाशिराः—इति प्रदर्शनार्थम् । तथा च विष्णुपुराणम्—

'प्राच्यां दिशि शिरः शस्तं याम्यायामथ वा नृप ।
सदैव स्वपतः पुंसो विपरीतं तु रोगदम्' ॥

( वि. पु. ३. ११. १०९ )

इति । गार्ग्यो ऽपि—

'[३]स्वगृहे प्राक्शिराः शेते ह्यायुष्यं दक्षिणाशिराः ।
प्रत्यक्शिराः प्रवासे च न कदाचिदुदक्शिराः' ॥

इति । पुराणे[४] ऽपि—

'रात्रिसूक्तं जपेत् स्मृत्वा सर्वांश्च सुखशायिनः' ।
नमस्कृत्वाऽव्ययं विष्णुं समाधिस्थः स्वपेन्निशि' ॥

इति । सुखशायिनो ऽपि गोभिलेन[५] दर्शिताः—

'अगस्तिर्माधवश्चैव मुचकुन्दो[६] महामुनिः ।
कपिलो मुनिरास्तीकः पञ्चैते सुखशायिनः' ॥

इति । शयने वर्जनीयानाह मार्कण्डेयः—

---

१. I. reads -श्चैव. २. Except A. and I. all others read मङ्गल्यश्रुतं. ३. H. and I. read this line as follows :—

स्वगेहे प्राक्शिराः शेते श्वायुर्ये दक्षिणाशिराः ।.

D. omits the whole verse. ४. A. reads विष्णुपुराणे ऽपि; but we do not find the following verse in the said Purâṇa; while D. omitting पुराणे- ऽपि, and the preceding verse, shows that the verse belongs to Gârgya. ५. H. and I. read गालवेन. ६. I. reads through mistake मुचुकुन्दो.

‘शून्यालये श्मशाने च एकवृक्षे चतुष्पथे ।
महादेवगृहे वाऽपि मातृवेश्मनि न स्वपेत् ॥
न यक्ष-नागायतने स्कन्दस्यायतने तथा ।
कूलच्छायासु च तथा शर्करा-लोष्ट-पांसुषु ॥
न स्वपेच्च तथा [1]गर्त्ते विना वीक्षां कथञ्चन ।
[2]धान्य-गो-विप्र-देवानां गुरूणां च तथोपरि ॥
न चापि भग्नशयने नाशुचौ नाशुचिः स्वयम् ।
नार्द्रवासा न नग्नश्च नोत्तरा[3]परमस्तकः ॥
नाकाशे सर्वशून्ये च न च चैत्यद्रुमे तथा’ ।

इति । [4]विष्णुरपि—

‘नार्द्र[5]पादः स्वपेत् । नोत्तर[6]ापरा-ऽवाक्शिराः* ।
न नग्नः । नार्द्रवंशे । नाकाशे । न[7] पलाश-
शयने । न पञ्चदारुकृते । न [8]गजभग्नकृते ।

* प्राग्दक्षिणयोरभ्यनुज्ञानमनेन वाक्येन । गजेन भग्नस्य तरोः काष्ठेन कृते । विद्युता दग्धस्य तरोः काष्ठेन कृते । विद्युद्भिन्नेनाऽपि अग्निना दग्धे । घटैः आ सर्वदा सिक्तस्य तरोः काष्ठेन कृते । चपलो दुर्व्यसनी हस्त-पादादिविक्षेप्ता । गवादिशब्देन तच्छाला उच्यन्ते । धान्यवत् साक्षात् तदुपरि शयनासम्भवात् । उच्छिष्ट ऊर्ध्वोऽधरोच्छिष्टवान् । अशुचौ मूत्रविष्ठाद्युपहते देशे । इति व्याचकार नन्दपण्डितः ।

१. A. reads न स्वपेच्च तटाकाऽन्ते. २. D. reads ध्यायन् for धान्य-. ३. D. and I. read -स्थित-. ४. G. omits विष्णुरपि; while D. reads विष्णुपुराणे. ५. B C. D. F. G. H. and I. read नार्द्रवासाः for नार्द्रपादः. the text of Vishṇu Smriti reads सुप्यात् for स्वपेत् and elsewhere स्वप्यात्. ६. The text omits अवाक् and reads नोत्तरापरशिराः, but this is a mistake. B. C. D. E. F. G. H. and I. omit नोत्तरापराऽवाक्शिराः । न नग्नः । नार्द्रवंशे नाकाशे ।. ७. The text reads न पालाशे शयने. ८. I. reads न भग्नशयने in the place of न गजभग्नकृते.

न विद्युद्दग्धकृते[1] । न भिन्ने[2] । नाग्निप्लुष्टे[3] । न घटासिक्तद्रुमजे[4] । न श्मशान-शून्यालय-देवतायतनेषु । न चपलमध्ये[5] । न नारीमध्ये[6] ।
न धान्य-गो-गुरु-हुताशन-सुराणामुपरि[7] ।
नोच्छिष्टो न दिवा सुप्यात् सन्ध्ययोर्न च भस्मनि ।
देशे न चाऽशुचौ नार्द्रे न च पर्वतमस्तके[8] ' ॥

( वि. स्मृ. ७०. १–१७ )

इति । विष्णुपुराणेऽपि—

' नाऽविशालां न वै भग्नां नाऽसमां[9] मलिनां न च ।
न च जन्तुमयीं[10] शय्यामधितिष्ठेदनास्तृताम् ' ॥

( वि. पु. ३. ११. १०८ )

इति । उशनाः—

' न च[11] तैलाभ्यक्तशिराः स्वपेन्नादीक्षितः कृष्णचर्मणि' ।

इति । दक्षः—

---

१. All others except A. and the text omit -कृते and read -दग्धे. २. Except A. and the text all others omit न भिन्ने. ३. In other places the text reads नाग्निच्युष्टे. ४. All others except A. and the text omit न घटासिक्तद्रुमजे । न श्मशान-शून्यालय-देवतायतनेषु. ५. All others except A. and the text read न बालमध्ये; but the commentator does not follow this reading. ६. B. C. D. and F. read नारिमध्ये; while E. G. H. and I. read न चारिमध्ये. ७. B. C. D. and F. omit धान्य-, and read न गोगेहे । न हुताश-, E. and G. read न धान्ये । न गोगेहे । न हुताश- and H. reads न धान्ये । न गो-गुरु-हुताशन-. All these readings are for न धान्य-गो-गुरु-हुताशन-. ८. B. C. D. E. F. G. and H. omit the latter portion of this verse and read नोच्छिष्टो न दिवा इति; while I. reads नोच्छिष्टे न दिवे इति, but this is a mistake. ९. D. and G. read न समां. १०. E. and G. read न वज्रं भ्रमरीं for न च जन्तुमयीं. ११. Except A. and D. all others omit च.

'प्रदोष-पश्चिमौ यामौ वेदाभ्यासरतो नयेत्[1] ।
यामद्वयं शयानस्तु[2] ब्रह्मभूयाय कल्पते' ॥
(द. स्मृ. २.५४)

इति । 'सन्ध्या स्नानम्'—इत्यारभ्य 'यो वेष्टितशिराः'—इत्यन्तेन ग्रन्थसन्दर्भेण श्रुत्युपलक्षणाभ्यामाह्निकं संक्षिप्य निरूपितम् । एतस्य करणे श्रेयः अकरणे तु प्रत्यवायः । तदुक्तं कूर्मपुराणे—

'इत्येतदखिलं[3] प्रोक्तमहन्यहनि वै मया ।
ब्राह्मणानां कृत्यजातमपवर्गफलप्रदम् ॥
नास्तिक्यादथ वाऽऽलस्याद् ब्राह्मणो न करोति यः ।
स याति नरकान् घोरान् काकयोनौ[4] प्रजायते ॥
नान्यो विमुक्तये पन्था मुक्त्वाऽऽश्रमविधिं स्वकम् ।
तस्मात् कर्माणि कुर्वीत तुष्टये परमेष्ठिनः' ॥
(कू. पु. १. २. १९. ३०—३२)

इति ॥ ५९ ॥

इत्थं च[5] 'षट्कर्माभिरतः[6]'—इत्यनेन ब्राह्मणस्याऽसाधारण[7]-धर्मान्निरूप्य तत्रत्याध्ययनादि[8]साधारणधर्मप्रसङ्गागतमाह्निकं परिसमाप्येदानीं प्रकृतानेव क्रमप्राप्तानभिषिक्तस्य क्षत्रियस्या-[9]ऽसाधारणधर्मानाह—

१. The text of Daksha reads वेदाभ्यासेन तौ. २. The text of Daksha reads शयानो हि for शायनस्तु. ३. I. reads इत्थं तदखिलं; while the text of K. P. reads इत्येतदखिलेनोक्तं. ४. E. and G. read कालयोनौ; while B. C. and F. read व्यालयोनौ. ५. B. C. D. E. F. and G. omit च. ६. H. and I. substitute स्वकर्माभिरतः for षट्कर्माभिरतः. ७. I. reads स्य साधारण-. ८. . reads तत्राध्ययनादि-. ९. I. reads क्षत्रियस्य साधारण-.

[1]अव्रता ह्यनधीयाना यत्र भैक्ष्यचरा द्विजाः ।
तं ग्रामं दण्डयेद्राजा चोर-भक्तप्रदो हि सः ॥ ६० ॥
क्षत्रियो हि प्रजा रक्षन् शस्त्रपाणिः [2]प्रदण्डवान् ।
[3]निर्जित्य परसैन्यानि क्षितिं धर्मेण [4]पालयेत् ॥ ६१ ॥
[5]पुष्पं पुष्पं विचिनुयान्मूलच्छेदं न कारयेत् ।
मालाकार [6]इवारामे न यथाऽङ्गारकारकः ॥ ६२ ॥

इति । द्विविधो हि राजधर्मः दुष्टशिक्षा शिष्टपरिपालनं च । तत्राद्येन श्लोकेन दुष्टशिक्षा प्रतिपाद्यते । व्रतशब्देनात्र ब्रह्मचारिकर्तृकं मध्वादिवर्जनमभिप्रेतम् । तथा च याज्ञवल्क्यः 'व्रतमपीडयन्' (या. स्मृ. १. ३) इत्युक्त्वा विवक्षितं तद्व्रतं स्पष्टीचकार—

'मधु-मांसाञ्जनोच्छिष्ट-[7]शुक्त-स्त्री-प्राणिहिंसनम् ।
भास्करालोकनाश्लील-[8]परिवादादि वर्जयेत्' ॥
(या. स्मृ. १. ३३)

इति । यद्वा स्वगृह्यप्रसिद्धानि प्राजापत्यादीनि चत्वार्यत्र व्रतशब्दाभिधेयानि । तदुभयविधव्रतरहिताः स्वाध्यायमप्यनधीयाना ब्रह्मचारिणो यत्र ग्रामे भैक्ष्यमाचरन्ति तं

१. M. reads अनृता. २. M. reads प्रचण्डवत्. ३. M. reads विजित्य. ४. G. H. I. K. and M. read पालयन्. ५. J. and K. read पुष्पं फलं; while I. reads पुष्पमात्रं. ६. M. reads इवोद्याने. ७. B. C. and F. read -शुल्क-; while G. reads -शुक्र-. ८. All others except A. and the text of Yâjnavalkya read -वादांश्च, but the commentator of the text does not follow the reading.

ग्रामं दण्डयेत् । यतः स ग्रामश्चौरसदृशेभ्यो भक्तमन्नं प्रयच्छति । अनेन वचनेन विहितमननुतिष्ठतां प्रतिषिद्ध-मनुतिष्ठतां सर्वेषां राज्ञां दण्डनीयत्वमुपलक्ष्यते । अत एव नारदः—

'यो यो वर्णो ऽपहीयेत यो वै उद्रेकमाप्नुयात् ।
तं तं दृष्ट्वा स्वतो मार्गात् प्रच्युतं स्थापयेत्पथि ॥
अशास्त्रोक्तेषु चान्येषु पापयुक्तेषु कर्मसु ।
प्रसमीक्ष्याऽऽत्मना राजा दण्डं दण्ड्येषु पातयेत्' ॥
(ना. स्मृ. १७. ६७)

इति । याज्ञवल्क्यः—

'कुलानि जातीः श्रेणीश्च गणान् जानपदानपि ।
स्वधर्माच्चलितान् राजा विनीय स्थापयेत्पथि' ॥
(या. स्मृ. १. ३६१)

इति । मनुरपि—

'पिताऽऽचार्यः सुहृन्माता भार्या पुत्रः पुरोहितः ।
नाऽदण्ड्यो नाम राज्ञोऽस्ति यस्त्वधर्मेण तिष्ठति' ॥
(म. भा. शां. रा. १२१. ६०)

इति । याज्ञवल्क्यो ऽपि—

---

१. I. reads ऽवहीयेत. २. All others except A. and the text of Nârada read यश्चोद्रेकमनुव्रजेत्. ३. I. inserts this verse in the quotation from Yâjnavalkya, but it is a mistake. ४. D. reads चरितान्, and I. reads चकितान्. ५. B. C. F. and G. read यः स्वधर्मेण while D. omits the following—

..........यस्त्वधर्मेण तिष्ठति' ॥

इति । याज्ञवल्क्योऽपि—

'अपि भ्राता सुतोऽर्घ्यो वा श्वशुरो मातुलोऽपि वा ।
नादण्ड्यो नाम राज्ञोऽस्ति........................ ॥

'अपि भ्राता सुतोऽर्घ्यो वा श्वशुरो मातुलोऽपि वा।
नाऽदण्ड्यो नाम राज्ञोऽस्ति धर्माद्विचलितः स्वकात्'॥
(या. स्मृ. १. ३५८)

इति। दण्ड्यदण्डनं प्रशंसति याज्ञवल्क्यः—

'यो दण्ड्यान् दण्डयेद्राजा सम्यग्वध्यांश्च घातयेत्।
इष्टं स्यात् क्रतुभिस्तेन समाप्तवरदक्षिणैः'॥
(या. स्मृ. १. ३५९)

इति। [2]अदण्ड्यदण्डनं निषेधयति मनुः—

'अदण्ड्यान् दण्डयन् राजा दण्ड्यांश्चैवाप्यदण्डयन्।
अयशो महदाप्नोति नरकं चैव गच्छति'॥
(म. स्मृ. ८. १२८)

इति। दण्डश्च द्विविधः शारीरोऽर्थदण्डश्चेति। यथाऽऽह नारदः-

'[3]शारीरश्चार्थदण्डश्च दण्डश्च द्विविधः स्मृतः। (५३)
[4]शारीरस्ताडनादिस्तु मरणान्तः प्रकीर्त्तितः॥ (५४)
[5]काकिण्यादिस्त्वर्थदण्डः सर्वस्वान्तस्तथैव च'॥
(ना. स्मृ. २१. ५३-५५)

इति। राज्ञो दण्डयितृत्वं महता प्रबन्धेन सम्भावयति मनुः—

'अराजके हि लोकेऽस्मिन् सर्वतो विद्रुते भयात्।
रक्षार्थमस्य सर्वस्य[6] राजानमसृजत्प्रभुः॥
इन्द्रा-ऽनिल-यमा-ऽर्काणामग्नेश्च वरुणस्य च।
चन्द्र-वित्तेशयोश्चैव मात्रा निर्हृत्य शाश्वतीः॥

१. I. reads भार्या for अर्घ्यो वा. २. G. reads अदण्ड्यान् दण्डयन्तं निषेधति. ३. I. reads शारीर आर्थिकश्चेति, while all others except B. C. and F. omit इति. ४. The text reads—शारीरः सन्निरोधादिर्जीवितान्तस्तथैव च. ५. A. reads कणादिस्त्वर्थदण्डस्तु. ६. A. reads लोकस्य.

यस्मादेषां सुरेन्द्राणां मात्राभ्यो निर्मितो नृपः ।
तस्मादभिभवत्येष सर्वभूतानि तेजसा ॥
तपत्यादित्यवच्चैव चक्षूंषि च मनांसि च ।
न चैनं[1] भुवि शक्नोति कश्चिदप्यभिवीक्षितुम् ॥
सो ऽग्निर्भवति वायुश्च सो ऽर्कः सोमः स धर्मराट् ।
स कुबेरः स वरुणः स महेन्द्रः प्रभावतः ॥
बालो ऽपि नावमन्तव्यो मनुष्य इति भूमिपः ।
महती देवता ह्येषा नररूपेण तिष्ठति ॥
एकमेव दहत्यग्निर्नरं[2] दुरुपसर्पिणम् ।
कुलं दहति राजाग्निः सपशु-द्रव्यसञ्चयम् ॥
कार्यं सोऽवेक्ष्य शक्तिं च देश-कालौ च तत्त्वतः ।
कुरुते धर्मसिद्ध्यर्थं विश्वरूपं पुनःपुनः ॥
यस्य[3] प्रसादे पद्मा ऽऽस्ते विजयश्च पराक्रमे ।
मृत्युश्च वसति क्रोधे सर्वतेजोमयो हि सः ॥
यस्तु[4] तं द्वेष्टि सम्मोहात् स विनश्यत्यसंशयम् ।
तस्य ह्याशु विनाशाय राजा प्रकुरुते मनः ॥
तस्माद्धर्मं[5] यमिष्टेषु स[6] व्यवस्येन्नराधिपः ।
अनिष्टं चाप्यनिष्टेषु तं[7] धर्मं न विचालयेत् ॥

---

१. D. reads चैवं; while A. reads च तं. २. G. reads नरेन्दुरुपसर्पिणम्. ३. All others except A. and I. read यस्य प्रसादे पद्मा श्रीः; while G. reads तस्य प्रसादे पद्माऽऽस्ते. ४. The text of Manu reads तं यस्तु. ५. B. C. E. F. H. and I. read तस्माद्धर्ममभीष्टेषु; while G. reads तस्माद्धर्मपर्थाष्टेषु. ६ I. reads सत्यं पश्येत् through mistake. ७. I. reads तद्धर्मं.

तस्यार्थे सर्वभूतानां गोप्तारं धर्ममात्मजम् ।[१][२]
ब्रह्मतेजोमयं दण्डमसृजत् पूर्वमीश्वरः ॥ (१४)
तं राजा प्रणयन्सम्यक् त्रिवर्गेणाभिवर्द्धते'[३][४] । (२७)
(म. स्मृ. ७. ३-२७)

इति । महाभारते-

'परोक्षा देवताः सर्वा राजा प्रत्यक्षदेवता ।
प्रसादश्च प्रकोपश्च प्रत्यक्षो यस्य दृश्यते ॥[५]
राजा माता पिता चैव राजा कुलवतां कुलम् ।
राजा सत्यं च धर्मश्च राजा हितकरो नृणाम् ॥
कालो वा कारणं राज्ञो राजा वा कालकारणम् ।
इति ते संशयो माभूत् राजा कालस्य कारणम् ॥
राजमूलो महाराज धर्मो लोकस्य लभ्यते ।[६][७]
प्रजा राजभयादेव न खादन्ति परस्परम्' ॥[८]
(म. भा. शां. रा. ६९. ७९. )

इति । ननु-'दण्डयेद्राजा'-इति भूपालस्यापि दण्डयितृत्वमुक्तम् । तत्कथं क्षत्रियस्याऽसाधारणधर्मः? मैवम् । राजशब्दस्य क्षत्रियविषयत्वेनावेष्ट्यधिकरणे निर्णीतत्वात् । तथा हि-[९]

द्वितीयाध्याये अवेष्ट्यधिकरणे श्रूयते-'आग्नेयमष्टाकपालं निर्वपति हिरण्यं दक्षिणा'- इत्यादिना राजकर्तृके राजसूये

१. D. reads तस्यांगे. २. All others except A. D. and the text of Manu read धर्ममात्मनः. ३. All others except A. and the text of Manu substitute दण्डं for सम्यक्. ४. G. reads -धर्मतः ५. A. reads यत्र. ६. H. reads राजमूलो राजधर्मो. ७. I. reads रक्ष्यते. ८. B. C. D. E. and F. read नन्दन्ति च for न खादन्ति. ९. From तथा हि to (P. 451, L. 17) एवमत्रापि राजशब्दः क्षत्रियपरः (both including) the intermediate portion is omitted by all others except A. and I.

अवेष्टिनामकेष्टिं प्रकृत्य–'यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये विधायाहुतिं हुत्वा तमभिघारयेत् । यदि राजन्य ऐन्द्रम् । यदि वैश्यो वैश्वदेवम्'–इति ।

तत्र संशयः । किं ब्राह्मणादीनामवेष्टौ प्राप्तानां वर्णानां राजसूये ऽधिकारः ? उत क्षत्रियस्यैव?–इति । तदर्थं च किं राजशब्दः त्रयाणामपि वर्णानां वाचकः ? किंवा क्षत्रियस्यैव ?–इति । ततोऽपि पुनर्विचारयितव्यम् । किं राजशब्दो राज्ययोगनिमित्तः? क्षत्रियत्वनिमित्तो वा ?–इति । तत्र राजशब्दो राज्ययोगनिमित्त एव । आर्यप्रसिद्धेः । सर्वलोकप्रसिद्धत्वादविगानाच्च । न तु क्षत्रियत्वनिमित्तः । अनार्यप्रसिद्धेरार्यप्रसिद्धापेक्षया दुर्बलत्वात् । द्रविडेषु विगानात् । तदन्येष्वप्रसिद्धश्च । तत्र स्यात् राज्ययोगात् राजानस्त्रयोऽपि भवन्ति । राज्यपदं तु रूढ्या जनपदरक्षणे वर्त्तते । न राजयोगमपेक्षते ।

ननु– 'कर्मणि '– इत्यधिकृत्य–

'पत्यन्तपुरोहितादिभ्यो यक् '।

( पा. सू. ५. १. १२८ )

इति वचनात् राजशब्दस्य तत्र पाठादाचाराच्च स्मृतेर्बलीयस्त्वात् राजयोग एव राज्यपदप्रवृत्तिनिमित्तं–इति चेत् । लोकप्रयोगस्यैव शब्दार्थावधारणे प्रमाणत्वात् स्मृतेरपि स एव मूलं नान्यत् । प्रयोगाच्च राज्यशब्दस्यैव स्वातन्त्र्यं तन्निमित्तत्वं च राजशब्दस्यावगम्यते । ततस्तदनुसारेण स्मरणं शब्दापशब्द-

---

१. Here I. gives the reading अत्र तस्मात्. २. I. reads पत्यंश- through mistake.

विभागमात्रपरं व्याख्येयम्। अतस्त्रयाणामपि राजपदाभिधेयत्वेन राजसूये प्राप्तानां निमित्तार्थानि श्रवणानि। 'यदि' शब्दोऽपि राजशब्दस्य राज्ययोगनिमित्तत्वे प्रमाणम्। अन्यथा प्राप्त्यभावात् 'यदि' शब्दोऽनुपपन्नः स्यात्। वैदिकश्च निर्देशः स्मृतेरपि बलीयान्। तस्मात् निमित्तार्थानि श्रवणानि—इति प्राप्ते ब्रूमः।

न तावद्वैदिकनिर्देशादत्र निर्णयः शक्यते। अन्यथाऽपि तत्सद्भावात्। 'राजानमभिषेचयेत्'— इति ह्यभिषेकविधौ प्रागेव राज्ययोगाद्राजशब्दस्य क्षत्रियमात्र एव प्रयुक्तत्वात्[१]। तेन रूढमेव राजपदं निर्णीयते। 'यदि' शब्दस्तु निपातत्वाद् 'यथा कथञ्चिदपि नियमे[२] न दुष्यति'—इति स्मरणाच्च स्वतन्त्रमेव राजपदम्। न च तस्य निर्मूलत्वम्। द्रविडप्रयोगस्यैव मूलस्य सम्भवात्। अतो न[३] यथार्थत्वे स्मरणस्य प्रमाणमस्तीति। तेनैवाभियुक्तप्रणीतेनाचारस्य सम्भवात्। गौण-भ्रान्त्यादिप्रयोगप्रसृतस्य बाधात् राज्ययोगेन राजशब्दः। स्वतन्त्रस्तु राजशब्दः क्षत्रियवचन—इति ब्राह्मणादेरवेष्टौ प्राप्त्यभावात् प्रापकानि वचनानि—इति। एवमत्रापि राजशब्दः क्षत्रियपरः।

ननु[४]—जनरञ्जनाद्राजत्वं महाभारतेऽभिहितम्—

'रञ्जनात् खलु राजत्वं प्रजानां पालनादपि'।

इति। बाढम्। सम्भवत्येवं क्षत्रियस्यापि रञ्जकत्वम्। 'क्षत्रियो हि' इत्यनेन द्वितीयश्लोकेन शिष्टपरि[५]पालनरूपो धर्मो

१. I. reads प्रयुक्तः. २. I. reads नयने. ३. I. gives the correct reading नायथार्थत्वे. ४. B. C. and F. read ननु च- for ननु -जन-. ५. I. omits -परि-.

ऽभिधीयते[1]। राजधर्मेषु प्रजारक्षणस्य[2] प्राधान्येन विवक्षितत्वात् प्रथमं प्रजारक्षणमित्युक्तम्। अत एव याज्ञवल्क्यः—

'प्रधानं क्षत्रिये कर्म[3] प्रजानां परिपालनम्'।

(या. स्मृ. १. ११९)

इति। मनुरपि तदेवादौ प्रदर्शयति—

'प्रजानां रक्षणं दानमिज्या ऽध्ययनमेव च।
विषयेष्वप्रसक्तिं च[4] क्षत्रियस्य समादिशत्'॥

(म. स्मृ. १. ८९)

इति। शान्तिपर्वण्यपि—

'नृपाणां परमो धर्मः प्रजानामेव[5] पालनम्।
निर्दिष्टफलभोक्ता हि राजा[6] धर्मेण युज्यते॥
वर्णानामाश्रमाणां च राजा भवति पालकः।
स्वे स्वे धर्मे नियुञ्जानः प्रजाः स्वाः पालयेत् सदा॥
पालनेनैव भूतानां कृतकृत्यो महीपतिः।
सम्यक् पालयिता भागं धर्मस्याप्नोति पुष्कलम्॥
यजते यदधीते च यद्ददाति यदर्चति।
राजा षड्भागभाक् तस्य प्रजा धर्मेण पालयन्[7]॥
सर्वाश्चैव प्रजा नित्यं राजा धर्मेण पालयेत्।
उत्थानेन प्रसादेन[8] पूजयेच्चापि धार्मिकान्॥

---

१. A. reads निरूप्यते, and I. विधीयते. २. A. reads प्रजारञ्जनस्य. ३. I. reads प्रधानः क्षत्रिये धर्मः, but all other manuscripts, as well as the text, do not follow this reading. ४. The text of Manu reads अप्रसक्तिश्च. ५. I. reads प्रजानां परिपालनम्. ६. B. C. D. E. and F. read राजधर्मेण for राजा धर्मेण. ७. After this word B. C. D. E. F. G. and H. add इति. ८. D. reads प्रदानेन.

राज्ञा हि पूजितो धर्मस्ततः सर्वत्र पूज्यते ।
यद् यदा ऽऽचरते राजा तत् प्रजानां स्म रोचते[1] ॥

इति । मार्कण्डेयपुराणे—

'वत्स राज्याभिषिक्तेन[2] प्रजारञ्जनमादितः ।
कर्त्तव्यमविरोधेन स्वधर्मस्य महीभृता[3] ॥
पालनेनैव भूतानां कृतकृत्यो महीपतिः ।
सम्यक् पालयिता भागं धर्मेष्वाप्नोति पुष्कलम्' ॥
(मा. पु. २७. ४–३१.)

इति । ब्रह्माण्डपुराणे—

'यदन्हा कुरुते धर्मं प्रजा धर्मेण पालयन् ।
दशवर्षसहस्राणि तस्य भुङ्क्ते महत्फलम्' ॥
(म. भा. शां. रा. ७१. २९)

इति । मनुरपि—

'सर्वतो धर्मषड्भागो राज्ञो भवति रक्षतः ।
अधर्मादपि षड्भागो भवत्येव ह्यरक्षतः[4] ॥
रक्षन् धर्मेण भूतानि राजा वध्यांश्च घातयन् ।
यजते ऽहरहर्यज्ञैः सहस्र-शतदक्षिणैः ॥
यो ऽरक्षन्बलिमादत्ते करं शुल्कं च पार्थिवः ।
प्रीतिं भोगं[5] च दण्डं च स सद्यो नरकं व्रजेत्' ॥

इति । रक्षणीयाश्च प्रजा भयमापन्नाः । भयं च तासां द्वेधा सम्पद्यते । चोर-व्याघ्रादिभ्यः परसैन्येभ्यो वा । अतस्तदुभय-

---

१. I. reads च. २. The text of Mârkandeya Purâna reads राज्ये ऽभिषिक्ते च. ३. D. reads महीभृतः. ४. The text reads बलतः. ५. B. C. and F. read भागं च.

निवारणाय 'प्रदण्डवान्'—इति 'परसैन्यानि निर्जित्य'—इति चोक्तम्। एतच्च निवारणं क्षत्रियस्यैव कुतो ऽसाधारणमित्याशङ्क्य तद्धेतुत्वेन[1] शस्त्रपाणित्वं वर्णितम्। तच्च क्षत्रियस्यैव। तथा च मनुः—

'शस्त्रास्त्रभृत्त्वं क्षत्रस्य वणिक्-पशु-कृषिर्विशः[2]।
आजीवनार्थं धर्मस्तु दानमध्ययनं यजिः[3]'॥

(म. स्मृ. १०. ७९)

इति। आनुशासनिकेऽपि क्षत्रियं प्रकृत्य पठ्यते—

'उत्साहः शस्त्रपाणित्वं तस्य धर्मः सनातनः'।

इति। शस्त्रपाणित्वेन च युद्धोपकरणानि सर्वाण्युपलक्ष्यन्ते। तानि च शान्तिपर्वणि दर्शितानि—

'यष्टयस्तोमराः खड्गा निशिताश्च परश्वधाः।
फलकान्यथ वर्माणि परिकल्प्यान्यनेकशः'॥

इति। 'प्रदण्डवान्' इत्यनेन चौरादिशिक्षा विवक्षिता। यद्यप्येषा पूर्ववचन एवोक्ता तथापि तत्र सा[4] प्राधान्येन प्रतिपादिता। अत्र तु प्रजारक्षणसाधनत्वेनेति न पौनरुक्त्यम्। दण्डप्रकारमाह मनुः—

'अनुबन्धं परीक्ष्यार्थं[5] देश-कालौ च तत्त्वतः।
सापराधमथालोच्य दण्डं दण्ड्येषु पातयेत्'॥

(म. स्मृ. ८. १२६)

इति। विष्णुः—

१. From तद्धेतुत्वेन to च युद्धोपकरणानि the intermediate portion is omitted by E. We do not think that this omission is a mistake of the writer. २. B. C. D. E. F. G. and H. read -कृषी. ३. I. reads जगुः; while D. reads यजुः through mistake. ४. I. omits सा. ५. The text of Manu reads परिज्ञाय for परीक्ष्यार्थ.

‘आ[1]गःस्वपि तथाऽन्येषु ज्ञात्वा जातिं धनं वयः ।
[2]दण्डं प्रकल्पयेद्राजा [3]सम्मन्त्र्य ब्राह्मणैः सह’ ॥
(वि. स्मृ. ५. १९४)

[4]इति । बृहस्पतिरपि—

‘वाग्धिग्वधः स्वकं चैव चतुर्धा कल्पितो दमः ।
पुरुषे दोषविभवं ज्ञात्वा सम्परिकल्पयेत् ॥
गुरून् पुरोहितान् विप्रान् वाग्दण्डेनैव दण्डयेत् ।
विवादिनो नरांश्चान्यान् दोषिणोऽर्थेन दण्डयेत् ॥
महापराधयुक्तांश्च वधदण्डेन दण्डयेत्’ ।

इति । तथा च[5] कात्यायनः—

‘मित्रादिषु प्रयुञ्जीत वाग्दण्डं धिक् तपस्विनाम् ।
यथोक्तं तस्य तत्कुर्युरनुक्तं साधुकल्पितम् ॥
अधार्मिकं त्रिभिर्न्यायैर्निगृह्णीयात् प्रयत्नतः ।
निरोधनेन बन्धेन विविधेन वधेन च’ ॥

इति । मनुः—

‘दश स्थानानि दण्डस्य मनुः स्वायम्भुवोऽब्रवीत् ।
त्रिषु वर्णेषु [6]तानि स्युरक्षतो ब्राह्मणो व्रजेत् ॥
उपस्थमुदरं जिह्वा हस्तौ [7]पादौ च पञ्चमम् ।
चक्षुर्नासे च कर्णौ च धनं देहस्तथैव च ॥

---

१. B. C. D. and F. read आसेष्वपि for आगःस्वपि. The text of Vishṇu reads अपराधिषु चाऽन्येषु for आगःस्वपि तथाऽन्येषु. २. I. reads दण्डं तु प्रणयेद्राजा. ३. Except A. and the text of Vishṇu all others read सामन्त- for सम्मन्त्र्य. ४. B. C. E. F. and G. omit इति । बृहस्पतिरपि. H. also omits this, but these words appear in the marginal correction. ५. I. omits च. ६. The text of Manu reads यानि. ७. B. C. and F. read पादं.

मौण्ड्यं प्राणान्तिको दण्डो ब्राह्मणस्य विधीयते ।
पुरुषाणां कुलीनानां नारीणां च विशेषतः ॥
( म. स्मृ. ८. १२४–१२५ )

इति । बृहस्पतिरपि–

‘जगत् सर्वमिदं हन्यात् ब्राह्मणस्य न तत्समम् ।
तस्मात्तस्य वधं राजा मनसा ऽपि न चिन्तयेत् ॥
अवध्यान् ब्राह्मणानाहुः सर्वपापेष्ववस्थितान् ।
येद्यद्विप्रेषु[1] कुशलं तत्तद्राजा समाचरेत् ।
राष्ट्रादेनं बहिः कुर्यात् समग्रधनमक्षतम्’ ॥

इति । यमोऽपि[2]–

‘एवं धर्मप्रवृत्तस्य राज्ञो दण्डधरस्य च ।
यशो ऽस्मिन् प्रथते लोके स्वर्गे वासस्तथाऽक्षयः’ ॥

इति । परसैन्यनिर्जयस्तु शान्तिपर्वणि दर्शितः–

‘चैत्रे[3] वा मार्गशीर्षे वा सेनायोगः प्रशस्यते । (१०)
पक्कसस्या हि पृथिवी भवत्यम्बुमती तदा[4] ॥
नैवातिशीतो नात्युष्णः कालो भवति[5] भारत । (११)
तस्मात्तदा[6] योजयीत परेषां व्यसनेषु वा ॥
एते हि योगाः सेनायाः प्रशस्ताः परबाधने । (१२)
जलवांस्तृणवान्मार्गः[7] समो गम्यः प्रशस्यते ॥
चारैः सुविदिताभ्यासः कुशलैर्वनगोचरैः । (१३)

---

१. यद्यद्धि कुशलं यत्नात् for यद्यद्विप्रेषु कुशलं. २. All others except I. omit यमोऽपि. ३. The text of Mahâbhârata reads चैत्र्यां वा मार्गशीर्ष्यां वा. ४. I. reads तथा. ५. B. C. D. E. F. G. and H. read गच्छति. ६. The text reads तथा योजयेत. ७. H. reads जनवान्.

सप्तर्षीन् पृष्ठतः कृत्वा युद्ध्येयुरचला इव। (१९)
यतो वायुर्यतः सूर्यो यतः शुक्रस्ततो जयः। (२०)
अकर्दमामनुदकाममर्यादामलोष्टकाम्।
अश्वभूमिं प्रशंसन्ति ये युद्धकुशला जनाः॥
समा[1] निरुदका चैव रथभूमिः प्रशस्यते।
नीचद्रुमा महाकक्षा सोदका हस्तियोधिनाम्॥
बहुदुर्गा महावृक्षा वेणु-वेत्रतिरस्कृता[2]।
पदातीनां क्षमा भूमिः पर्वतोपवनानि[3] च॥
पदातिबहुला सेना दृढा भवति भारत।
रथा[4]ऽश्वबहुला सेना सुदिनेषु प्रशस्यते॥
पदाति-नागबहुला प्रावृट्काले प्रशस्यते।
गुणानेतान् प्रसङ्ख्याय युद्धं शत्रुषु योजयेत्[5]॥
(म. भा. शां. रा. १००. १०-२९)

इति। मनुरपि-

'यदा तु यानमातिष्ठेदरिराष्ट्रम्प्रति प्रभुः।
तदाऽनेन विधानेन यायादरिपुरं शनैः॥
मार्गशीर्षे शुभे मासे[6] यायाद्यात्रां महीपतिः।
फाल्गुनं[7] वाऽथ चैत्रं वा मासौ प्रति यथाबलम्॥
अन्येष्वपि[8] तु कालेषु यदा पश्येद्ध्रुवं जयम्।
तदा यायाद्विगृह्यैव व्यसने चोत्थिते रिपोः॥

---

१. The text reads सपङ्कगर्तरहिता. २. The text reads-समाकुला. ३. B. C. E. F. and H. read सर्वतोपवनानि च; while I. reads सर्वतो न वनानि च. ४. I. reads तथाऽश्व-. ५. The text reads देश-कालौ प्रयोजयेत्. ६. The text of Manu reads मासि. ७. B. C. and F. read फाल्गुने वाऽथ चैत्रे वा. ८. I. reads अन्येष्वप्यृतु-.

कृत्वा विधानं मूले तु यात्रिकं च यथाविधि ।
उपगृह्यास्पदं चैव चारान्[1] सम्यग्विधाय च ॥
संशोध्य त्रिविधं मार्गं षड्विधं च स्वकं बलम् ।
साम्परायिककल्पेन यायादरिपुरं शनैः' ॥

( म. स्मृ. ७. १८१–१८५ )

इति । बलस्य षड्विधता उशनसा[2] दर्शिता—

'मूलबलं श्रेणीबलं मित्रबलं
धृतकंबलं शत्रुबलमाटविकबलं च' ।

इति । युद्धार्थं सैन्यसन्नाहरचनामाह मनुः—

'दण्डव्यूहेन तन्मार्गं यायात्तु शकटेन वा ।
वराह-मकाराभ्यां वा सूच्या वा गरुडेन वा ॥
यतश्च भयमाशङ्केत्ततो विस्तारयेद्बलम् ।
पद्मेन चैव व्यूहेन निविशेत तदा[3] स्वयम् ॥
सेनापति-बलाध्यक्षौ[4] सर्वदिक्षु निवेशयेत् ।
यतश्च भयमाशङ्केत्तां प्राचीं कल्पयेद्दिशम् ॥
गुल्मांश्च स्थापयेदाप्तान्[5] कृतसंज्ञान् समन्ततः ।
स्थाने युद्धे[6] च कुशलानभीरूनविकारिणः ॥
संहतान् योधयेदल्पान् कामं विस्तारयेद्बहून्[7] ।
सूच्या वज्रेण चैवैतान् व्यूहेन व्यूह्य योधयेत् ॥

---

१. B. C. E. F. G. and H. read चारं. २. B. C. E. and F. read मदालसादर्शिता for उशनसा दर्शिता. ३. I. reads तथा; while the text reads सदा. ४. I. reads सेनापतीन् बलाध्यक्षान्. ५. B. C. D. E. F. G. and H. read दीप्तान् for आप्तान्. ६. B. C. D. E. F. and G. read स्थानयुद्धे. ७. A. reads विभजेरथान्.

स्यन्दनाश्वैः[1] समे युद्ध्येदनूपे नौ-द्विपैस्तथा।
वृक्ष-गुल्मावृते चापैरसि-चर्मायुधैः स्थले॥
कौरुक्षेत्रांश्च[2] मात्स्यांश्च पाञ्चालाञ्छूरसेनजान्।
दीर्घान् लघूंश्चैव नरानग्रानीकेषु योजयेत्॥
प्रहर्षयेद्बलं व्यूह्य तांश्च सम्यक् परीक्षयेत्।
चेष्टाश्चैव[3] विजानीयादरीन् योधयतामपि॥
उपरुद्ध्यारिमासीत राष्ट्रं चास्योपपीडयेत्।
दूषयेच्चास्य सततं यवसान्नोदकेन्धनम्॥
भिन्द्याच्चैव[4] तडागानि[5] प्राकार-परिखास्तथा।
समवस्कन्दयेच्चैनं रात्रौ वित्रासयेत्तथा[6]॥
उपजप्यानुपजपेद्[7] बुद्ध्येच्चैव[8] हि तत्कृतम्।
युक्ते च दैवे युद्ध्येत जयप्रेप्सुरपेतभीः॥
साम्ना दानेन भेदेन समस्तैरथ वा पृथक्।

---

१. B. C. E. and F. read—

युद्ध्येरन् स्यन्दनाश्वैश्च समेऽनूपे च नौ-द्विपैः।,

and D. and G.—

युद्ध्येरन् स्यन्दनाश्वैव समेऽनूपे च नौ द्विपैः।.

२. I. and the text of Manu read कुरुक्षेत्रांश्च मत्स्यांश्च. ३. B. C. D. E. F. and G. omit—

चेष्टाश्चैव विजानीयादरीन् योधयतामपि।.

४. B. C. D. E. F. and G. omit the following three lines —

भिन्द्याच्चैव तडागानि प्राकारपरिखास्तथा।
समवस्कन्दयेच्चैनं रात्रौ वित्रासयेत्तथा॥
उपजप्यानुपजपेद्बुद्ध्येच्चैव हि तत्कृतम्।

H. also omits these lines, but they appear in the marginal correction of the manuscript. ५. I. reads तडाकानि. ६. I. reads अपि for तथा. ७. I. reads उपजाप्या-. ८. The text of Manu reads बुद्ध्येतैव च.

विजेतुं प्रयतेतारीन् न युद्धेन[1] कदाचन ॥
अनित्यो विजयो यस्मात् दृश्यते युद्ध्यमानयोः ।
पराजयश्च संग्रामे[2] तस्माद्युद्धं विवर्जयेत् ॥
त्रयाणामप्युपायानां पूर्वोक्तानामसम्भवे ।
तथा युद्ध्येत सम्पन्नो[3] विजयेत रिपुं[4] यथा ॥
जित्वा सम्पूजयेद्देवान् ब्राह्मणांश्चैव धार्मिकान् ।
प्रदद्यात् परिहारांश्च[5] ख्यापयेद[6]भयानि च ॥
सर्वेषां तु विदित्वैषां समासेन चिकीर्षितम् ।
स्थापयेत् तत्र तद्वंश्यं कुर्याच्च समयक्रियाम् ॥
प्रमाणानि च कुर्वीत तेषां धर्मान्[7] यथोदितान्' ।

(म. स्मृ. ७. १८७–२०३ )

इति । उक्तप्रकारेण परसैन्यानि निर्जित्य जितामेतां पूर्वां च स्वकीयां भुवं राजधर्मेण पालयेत् । तदेव धर्मेण पालनं 'पुष्पं[8] पुष्पं' (६२)—इति *तृतीयश्लोकेन विशदीक्रियते । यथा मालाकार आरामे यदा यदा यत् यत्पुष्पं विकसति तदा तदा तं[9]-त्तद्विचिनोति । न तु पुष्पलतामुन्मूलयति । तथा प्रजाभ्यः करमाददानो राजा यथोदयं षष्ठं भागं गृह्णीयात् । अंगारका-

* तृतीयश्लोकेन पूर्वमुदाहृते मूलस्थश्लोकत्रये अन्त्येन द्विषष्टितमेनेति बोध्यम् ।

१. B. C. D. E. F. G. and H. read युद्धयेत. २. G. reads संक्रामे. ३. B. C. E. and G. read सम्पत्तौ; while I. reads संयत्तो. ४. B. C. D. E. F. G. and H. read रिपूंस्तथा; while H. and the text of Manu read रिपून्यथा. ५. B. C. D. E. F. and G. read परिहारार्थं. ६. D. reads पक्षयेत्. ७. The text of Manu reads धर्म्यान्. ८. I. reads पुष्पमात्रं. ९. I. reads तद्विचिनोति.

रकस्तु वृक्षमुन्मूल्य सर्वात्मना दहति । न तु तथा प्रजाः पीडयेत् । एतच्च शान्तिपर्वणि दर्शितम्—

'मधुदोहं दुहेद्राष्ट्रं [1]भ्रमरान्न प्रवासयेत् ।
[2]वत्सापेक्षी दुहेच्चैव स्तनांश्चैव[3] न कुट्टयेत् ॥
[4]जलौकावत् पिबेद्राष्ट्रं मृदुनैव नराधिपः ।
[5]व्याघ्रीवदुद्धरेत् पुत्रं न दशेन्न च पीडयेत् ॥
[6]यथा च लेखकः पर्णमाखुः पादत्वचं यथा ।
[7]अतीक्ष्णेनाभ्युपायेन तथा राष्ट्रं समापिबेत् ॥
अल्पेनाल्पेन देयेन वर्धमानं प्रदापयेत् ।
ततो भूयस्ततो भूयः क्रमाद्[8]वृद्धिं समाचरेत्' ॥
( म. भा. शां. रा. ८८. ४–७ )

इति । मनुरपि—

'क्रय-विक्रयमध्वानं भक्तं च सपरिव्ययम् ।
योगं[9]-क्षेमं च सम्प्रेक्ष्य वणिजो दापयेत् करान् ॥
यथा फलेन[10] युज्येत राजा कर्त्ता च कर्मणाम् ।
यथाऽवेक्ष्य नृपो राष्ट्रे कल्पयेत् सततं करान् ॥

---

१. The text of Mahâbhârata reads भ्रमर इव पादपम्. २. All except A. and the text read न चक्षुवत्पीडयेत्. ३. I. reads स्तनांश्चैव विकुट्टयेत् through mistake. ४. A. D. and G. read जलूकावत्. ५. B. C. D. F. and G. read व्याघ्री चापहरेत्, E. and H. read व्याघ्रीवापहरेत्, A. reads व्याघ्रीवदाहरेत् and the text व्याघ्रीव च हरेत्. ६. The text reads यथा शल्यकवानाखुः पदं धूनयते सदा ।. ७. Except A. and the text all read अतीक्ष्णेनाप्युपायेन वर्धमानं प्रदापयेत् omitting तथा राष्ट्रं समापिबेत् ॥ अल्पेनाल्पेन देयेन. ८. I. reads क्रमाद्वृद्धिं. ९. I. reads योगं. १०. D. reads फले च युञ्जीत, and B. C. E. F. and G. read फलेन भुञ्जीत.

यथाऽल्पाल्पमदन्त्यद्यं वार्यौको-वत्स-षट्पदाः ।
तथाऽल्पाल्पो ग्रहीतव्यो राष्ट्राद्राज्ञाऽऽब्दिकः करः' ॥
(म. स्मृ. ७. १२७–१२९; म. भा. शा. ८७. १३)

इति । मार्कण्डेयो[२]ऽपि–

'मासानष्टौ यथा सूर्यस्तोयं हरति रश्मिभिः ।
सूक्ष्मेणैवाभ्युपायेन तथा शुल्कादिकं नृपः' ॥
(मा. पु. २७. २३)

इति । एतच्च करादानं मालाकारदृष्टान्तेन प्रतिपादितमितरेषामपि सर्वेषां राजधर्माणामुपलक्षणम् । ते च धर्माः याज्ञवल्क्येन दर्शिताः–

'महोत्साहः स्थूललक्षः कृतज्ञो वृद्धसेवकः ।
विनीतः सत्त्वसम्पन्नः कुलीनः सत्यवाक् शुचिः ॥
अदीर्घसूत्रः स्मृतिमानक्षुद्रो[३] ऽपरुषस्तथा ।
धार्मिको ऽव्यसनश्चैव प्राज्ञः शूरो रहस्यवित् ॥
स्वरन्ध्रगोप्ताऽऽन्वीक्षिक्यां दण्डनीत्यां तथैव च ।
विनीतस्त्वथ वार्त्तायां त्रय्यां चैव नराधिपः' ॥
(या. स्मृ. १. ३०९–३११)

इति । त[४] एतेऽन्तरङ्गा राजधर्माः । एत एव राजगुणा इत्यप्युच्यन्ते । अत एव–

'षट्त्रिंशद्गुणोपेतो राजा'–

---

१. This verse appears in the marginal correction of H. २. D. omits मार्कण्डेयोऽपि and the following verse. ३. I. reads अक्षुधो for अक्षुद्रो. ४. I. reads य एते.

इत्यस्य सूत्रस्य व्याख्यानावसरे महोत्साहादयः उशनसा पठिताः। बहिरङ्गा अपि राजधर्मा याज्ञवल्क्येन दर्शिताः—

'सुमन्त्रिणः[1] प्रकुर्वीत प्राज्ञान्मौलान् स्थिरान् शुचीन्।
तैः सार्द्धं चिन्तयेद्राज्यं विप्रेणाथ ततः स्वयम्'॥

(या. स्मृ. १. ३१२)

इति। मनुरपि—

'मौलाञ्छास्त्रविदः[2] शूरान् लब्धलक्ष्यान्[3] कुलोद्गतान्[4]।
सचिवान् सप्त चाष्टौ वा प्रकुर्वीत परीक्षितान्॥ (५४)
तैः सार्द्धं चिन्तयेन्नित्यं सामादीन् सन्धि-विग्रहम्[5]।
स्थानं समुदयं गुप्तिं लब्ध-प्रशमनानि च॥ (५६)
तेषां[6] स्वं स्वमभिप्रायमुपलभ्य पृथक् पृथक्।
समस्तानां च कार्येषु विदध्याद्धितमात्मनः॥
सर्वेषां तु विशिष्टेन ब्राह्मणेन विपश्चिता।
मन्त्रयेत् परमं मन्त्रं राजा षाड्गुण्यसंयुतम्॥
नित्यं तस्मिन् समाश्वस्तः सर्वकार्याणि निःक्षिपेत्।
तेन सार्द्धं विनिश्चित्य ततः कर्म समारभेत्'॥

(म. स्मृ. ७. ५४–५९)

इति। आरम्भणीयं च कर्म देशविशेषेषु दुर्गसम्पादनम्। तच्च याज्ञवल्क्येन दर्शितम्—

---

१. All others except A. and I. read सन्मन्त्रिणः and the text of Yâjnavalkya reads स मन्त्रिणः. २. D. reads शस्त्रविदः. ३. G. reads बद्ध-लक्षान्. ४. D. reads कुलागतान्. ५. D. E. H. and I. read -विग्रहान्. ६. I. reads सामान्य-.

‘ रम्यं प[1]शव्यमाजीव्यं जाङ्गलं देशमावसेत् ।
तत्र दुर्गाणि कुर्वीत जन-कोशात्मगुप्तये’ ॥

( या· स्मृ. १. ३२१ )

इति । दुर्गभेदा मनुना दे[2]र्शिताः—

‘ ध[3]न्वदुर्गं महीदुर्गमब्दुर्गं वार्क्षमेव वा ।
नृदुर्गं गिरिदुर्गं च [4]समावृत्य वसेत् पुरम् ॥
सर्वेण तु प्रयत्नेन गिरिदुर्गं समाश्रयेत्’ ।

( म. स्मृ. ७. ७०–७१ )

इति । दुर्गसंविधानप्रकारः शान्तिपर्वणि दर्शितः—

‘ दृढप्राकार-परिखं हस्त्यश्व-रथसङ्कुलम् ।
ऊर्जस्विनर-नागाश्वं चत्वरापणशोभितम् ॥
प्रसिद्धव्यवहारं च प्रशान्तमकुतोभयम् ।
[4]शूराढ्यं प्राज्ञसम्पूर्णं ब्रह्मघोषानुनादितम् ॥
समाजोत्सवसम्पन्नं सदा पूजितदैवतम् ।
वश्यामात्य-बलो राजा तत्पुरं स्वयमाविशेत्’ ॥

( म. भा. शां. रा. ८६. ६–७ )

इति । मनुरपि—

---

१. I. reads यशस्यम् for पशव्यम्. २. D. reads दुर्गभेदो मनुना दर्शितः, and omits the following four lines, up to शान्तिपर्वणि दर्शितः. ३. The text धनुर्दुर्गं. The text समाश्रित्य. ४. The text reads शूराढ्यजनसम्पन्नं. Here except A. D. and the text of Mahâbhârata all others are mistaken. They omit the following portion—

.................. ब्रह्मघोषानुनादितम् ॥
समाजोत्सवसम्पन्न सदा पूजितदैवतम् ।
वश्यामात्यबलो राजा.................. ॥

and read शूराढ्यं प्राज्ञसम्पूर्णं तत्पुरं स्वयमाविशेत्.

'तत्[1]स्यादायुधसम्पन्नं धन-धान्येन वाहनैः ।
ब्राह्मणैः शिल्पिभिर्यन्त्रैर्यवसेनोदकेन्धनैः ॥
तस्य मध्ये तु[2] पर्याप्तं कारयेद्गृहमात्मनः ।
गुप्तं सर्वर्तुकं[3] शुभ्रं[4] जल-वृक्षसमन्वितम्' ॥

( म. स्मृ. ७. ७५–७६ )

इति । दुर्गसंविधानमुक्त्वा यागादिधर्मानपि स एवाह—

'तदध्यास्योद्वहेद्भार्यां सवर्णां लक्षणान्विताम्[5] ।
कुले महति सम्भूतां हृद्यां रूपसमन्विताम् ॥
पुरोहितं च कुर्वीत वृणुयादेव चर्त्विजः[6] ।
तेऽ[7]स्य गृह्याणि कर्माणि कुर्युर्वैतानिकानि च ॥
यजेत राजा क्रतुभिर्विविधैराप्तदक्षिणैः ।
यज्ञार्थं[8] चैव विप्रेभ्यो दद्याद्भोगान् धनानि च ॥
सांवत्सरिक[9]माप्तैश्च राष्ट्रादाहारयेद्बलिम् ।
स्याच्चाम्नायपरो लोके वर्त्तेत पितृवन्नृषु' ॥

( म. स्मृ. ७. ७७–८० )

इति । याज्ञवल्क्योऽपि—

'पुरोहितं[10] प्रकुर्वीत दैवज्ञ[11]मुदितोदितम् ।
दण्डनीत्यां च कुशलमथर्वाङ्गिरसे तथा ॥

---

१. The text of Manu reads तं स्यात्. २. The text reads सु- for तु. ३. All except I. and the text read सार्वर्तुकं. ४. I. reads शुद्धं. ५. The text reads -गुणान्विताम्. ६. I. and the text read चर्त्विजम्. ७. All others except A. I. and the text read तस्य. ८. The text reads धर्मार्थं. ९. B. C. E. F. and G. omit this whole line. १०. All except A. and the text read पुरोहितं च कुर्वीत. ११. I. reads दैवज्ञमपि चाधिकम्, and G. omits the following portion.:—

यद्यपि स्मृत्यन्तरेष्विवात्रापि वर्णधर्मानन्तरमाश्रमधर्मा वक्तुमुचिताः तथापि व्यासेना ऽपृष्टत्वादाचार्येणोपेक्षिताः। अस्माभिस्तु श्रोतृहितार्थाय ते ऽपि[1] वर्ण्यन्ते। न च—पूर्वाध्याय एव कुतो न वर्णिता?—इति मन्तव्यम्। तत्र प्रसङ्गाभावात्। अत्र तु 'चातुर्वर्ण्याश्रमागतम्'— इत्याश्रमशब्देन तेषां बुद्धिस्थत्वादस्ति प्रसङ्गः। ते चाश्रमाश्चतुर्विधाः। तदुक्तं स्कान्दे—

'ब्रह्मचारी गृहस्थश्च वानप्रस्थो ऽथ भिक्षुकः।
एते क्रमेण विप्राणां चत्वारः पृथगाश्रमाः'॥

इति। मनुरपि[2]—

'ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिस्तथा।
एते गृहस्थप्रभवाश्चत्वारः पृथगाश्रमाः'॥

(म. स्मृ. ६. ८७.)

इति। गृहस्थप्रभवाः गृहस्थोपयोगिन[3] इत्यर्थः। तत्रोपनयनेन संस्कृतो ब्रह्मचारी।

'ब्रह्मचर्यमागामुप मा नयस्व'।

इति। मन्त्रवर्णात्। ब्रह्मचर्यमुद्दिश्यागां मामुपनयस्व इत्यर्थः। उपनयनं च गर्भाधानादिषु पठितत्वात् ब्राह्मः[4] संस्कारः। तदाह हारीतः—

द्विविधो हि संस्कारो भवति ब्राह्मो दैवश्च। (१)
गर्भाधानादिस्मार्तो ब्राह्मः। (२) पाकयज्ञा[5]

१. H. and I. omit अपि. २. D. omits मनुरपि, and the following quotation. ३. I. reads -उपजीविनः. H. also gives the same reading in the margin. ४. D. and H. read ब्राह्मसंस्कारः, and I. reads ब्राह्म्यसंस्कारः. I. reads ब्राह्म्य- for ब्राह्म- everywhere in this quotation. ५. I. reads पाकयज्ञ-हविर्यज्ञाः.

हविर्यज्ञाः सौमाश्च दैवः। (३) ब्राह्मेण संस्कृत ऋषीणां समानतां सायुज्यं गच्छति। (४) दैवेनोत्तरेण संस्कृतो देवानां समानतां सायुज्यं गच्छति'। (५)

(हा. स्मृ. ११. १-५)

इति। गर्भाधानादयो गौतमेनानुक्रान्ताः—

गर्भाधान-पुंसवना-ऽनवलोभन-सीमन्तोन्नयन-जातकर्म-नामकरणा-ऽन्नप्राशन-चौलोपनयनम्। (१३) चत्वारि वेदव्रतानि।(१४) स्नानं सहधर्मचारिणीसंयोगः।(१५) पञ्चानां यज्ञानामनुष्ठानं देवे-पितृ-मनुष्य-भूत-ब्रह्मणामेतेषां च। (१६) अष्टका पार्वणश्राद्धं श्रावण्याग्रहायणी चैत्र्याश्वयुजी चेति सप्त पाकयज्ञसंस्थाः। (१७) अग्न्याधेयो ऽग्निहोत्रं दर्शपूर्णमासा-ऽऽग्रयण-चातुर्मास्यानि निरूढपशुबन्धाः सौत्रामणीति सप्त हविर्यज्ञसंस्थाः। (१८) अग्निष्टोमो-ऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयो ऽतिरात्रा-ऽऽप्तोर्याम इति सप्त सोमसस्थाः। (१९) इत्येते चत्वारिंशत् संस्काराः। (२०)

(गौ. स्मृ. ८. १३-२०)

इति। तत्र गर्भाधानादयश्चूडान्ताः संस्कारा बीज-गर्भजनितदोषनिवृत्त्यर्थाः। अत एव याज्ञवल्क्यः चूडान्तान् संस्कारान् निरूप्याह—

---

१. Except A. and the text all others omit -देव-पितृ-मनुष्य भूत-ब्राह्मणानामेतेषां च. We have compared five different manuscripts of the text, but none of them we find omit this portion. २. The text reads -दर्श-पौर्णमासावाग्रयणं चातुर्मास्य-निरूढपशुबन्ध-सौत्रामणीति.

'एवमेनः शमं याति बीज-गर्भसमुद्भवम् ।
(या. स्मृ. १. १३)

इति । अतो ब्रह्मचर्याश्रमात् प्राक् ते वर्ण्यन्ते । तत्र द्विजानां गर्भाधानादयः समन्त्रकाः कार्याः। तदाह याज्ञवल्क्यः–

'ब्रह्म-क्षत्रिय-विट्-शूद्रा वर्णास्त्वाद्यास्त्रयो द्विजाः ।
निषेकादिश्मशानान्तास्तेषां वै मन्त्रतः क्रियाः'।।
(या. स्मृ. १. १०)

इति । गर्भाधानादीनां कालविशेषमाह स एव–

'गर्भाधानमृतौ पुंसः सवनं स्पन्दनात् पुरा ।
षष्ठेऽष्टमे वा सीमन्तो मास्येते जातकर्म च ।।
अहन्येकादशे नाम चतुर्थे मासि निष्क्रमः ।
षष्ठेऽन्नप्राशनं मासि चूडा कार्या यथाकुलम्' ।।
( या. स्मृ. १. ११–१२ )

इति । रजोदर्शनदिवसमारभ्य षोडश दिवसा ऋतुः । तदाह मनुः–

'ऋतुः स्वाभाविकः स्त्रीणां रात्रयः षोडश स्मृताः।
चतुर्भिरितरैः सार्धमहोभिः सद्विगर्हितैः ।।
तासामाद्याश्चतस्रस्तु निन्दितैकादशी च या ।
त्रयोदशी च शेषाः[1] स्युः प्रशस्ता दश रात्रयः ।।
युग्मासु पुत्रा जायन्ते स्त्रियोऽयुग्मासु रात्रिषु ।
तस्माद्युग्मासु पुत्रार्थी संविशेदार्त्तवे स्त्रियम्' ।।
( म. स्मृ. ३. ४६–४८ )

---

१. The text reads शेषास्तु.

इति । रजोदर्शनमारभ्य चत्वार्यहानि सद्विगर्हितानि । युग्मासु समासु । संविशेत् गच्छेत् ।

॥ इति गर्भाधानम् ॥

अथ पुंसवनम् । एवमृतौ गर्भाधानं कृत्वा गर्भचलनात् पुरा पुंसवनं कार्यम् । तच्चलनं द्वितीये वा तृतीये वा भवति । तदाह बैजवापः—

'मासि द्वितीये वा तृतीये वा पुरा स्पन्दते' ।

इति । पारस्करोऽपि—

'मासे द्वितीये तृतीये वा । (२) यदहः
पुंसा नक्षत्रेण चन्द्रमा युज्येत' ।

(पा. गृ. सू. १. ९. १४. २–३)

इति । पुंनक्षत्राणि च हस्तादीनि ज्योतिःशास्त्रे प्रसिद्धानि । अनवलोभनमाश्वलायनगृह्यपरिशिष्टेऽवगन्तव्यम् ।

॥ इति पुंसवनम् ॥

---

* इदं च आश्वलायनगृह्यपरिशिष्टे प्रथमेऽध्याये पञ्चविंशतितमेऽनुवाके–'अथ गर्भलम्भनम्' इत्यतोऽग्रे द्रष्टव्यम् ।

---

१. D. omits the following portion—
द्वितीये वा तृतीये वा भवति । तदाह बैजवापः—
'मासि द्वितीये वा तृतीये वा पुरा स्पन्दते'—
इति । पारस्करोऽपि— 'मासे-.

२. H. omits the following portion—
'मासि द्वितीये वा तृतीये वा पुरा स्पन्दते' ।
इति । पारस्करोऽपि.

३. I. omits तृतीये वा. ४. B. C. and F. read मासि द्वितीयेऽथ पुंसवनं तृतीये वा, H. and I. read द्वितीये वा तृतीये वा यदहः पुंसा, D. and G. read द्वितीये वा तृतीये वा यदा पुंसा.

अथ सीमन्तोन्नयनम्। सीमन्तोन्नयनस्य याज्ञवल्क्योक्त-कालादन्ये ऽपि काला मुनिभिः दर्शिताः। तत्र लौगाक्षिः[१]—

'तृतीये गर्भमासे[२] सीमन्तोन्नयनं कार्यम्'।

इति। आपस्तम्बो ऽपि—

'प्रथमे गर्भे[३] चतुर्थे मासि'।

इति। बैजवापो ऽपि—

'अथ सीमन्तोन्नयनं चतुर्थे पञ्चमे षष्ठे वाऽपि'।

इति। साँख्यायनगृह्ये[४] ऽपि—

'सप्तमे मासि प्रथमे गर्भे सीमन्तोन्नयनम्'।

इति। शाङ्खो ऽपि'—

'गर्भस्पन्दने[५] सीमन्तोन्नयनं यावद्वा न प्रसवः'।

इति। विशेषाश्रवणात्[६] सर्वे ऽप्येते विकल्प्यन्ते। एतच्च सीमन्तोन्नयनं क्षेत्रसंस्कारत्वात् सकृदेव कर्त्तव्यं न प्रतिगर्भम्। तथा च हारीतः—

'सकृत् संस्कृतसंस्कारा सीमन्तेन द्विजस्त्रियः[७]'।

इति। देवलो ऽपि—

'या[८] सकृत् संस्कृता नारी सर्वगर्भेषु संस्कृता'।

इति। गर्भसंस्कारपक्षे तु प्रतिगर्भमावर्त्तनीयम्। तथा च विष्णुः—

---

१. I. reads लोकाक्षिः for लौगाक्षिः. २. B. C. D. and F. omit -मासे and read तृतीये गर्भे. ३. G. omits गर्भे. ४. H. reads शाङ्खायन-. ५. I. reads -स्पन्दनमारभ्य. ६. D. and H. read विशेषश्रवणात्. ७. H. reads द्विजातयः. ८. G. reads सकृत्तु संस्कृता नारी; while B. C. F. H. and I. read सकृत् संस्कृता या नारी. Vijnaneśvara reads सकृत् सुसंस्कृता. (See I. II.).

'सीमन्तोन्नयनं कर्म न स्त्रीसंस्कार इष्यते।
केचिद्गर्भस्य संस्काराद्गर्भं गर्भं प्रयुञ्जते' ॥

अनयोः पक्षयोर्यथागृह्यं व्यवस्था। अकृतसीमन्तायाः प्रसवे सत्यव्रत आह–

'स्त्री यद्यकृतसीमन्ता प्रसूयेत कथञ्चन।
गृहीतपुत्रा विधिवत्पुनः संस्कारमर्हति' ॥

इति।

॥ इति सीमन्तोन्नयनम् ॥

अथ जातकर्म। तत्र जातकर्मणः कालो याज्ञवल्क्येन दर्शितः–

'मास्येते जातकर्म च'।

(या. स्मृ. १. ११)

इति। एते आगते जात इति यावत्। विष्णुरपि–

'जातकर्म[1] ततः कुर्यात् पुत्रे जाते यथोदितम्'।

इति। स्वगृह्ये–इति शेषः। तच्च स्नानानन्तरं कार्यम्। तथा च संवर्त्तः–

'जाते पुत्रे पितुः स्नानं सचैलं तु विधीयते'।

इति। जातकर्म च नाभिवर्धनात् प्रागेव कार्यम्। त[2]-था च मनुः–

'प्राङ् नाऽभिवर्धनात् पुंसो जातकर्म विधीयते।
मन्त्रवत् प्राशनं चास्य हिरण्य-मधु-सर्पिषाम्' ॥

(म. स्मृ. २. २९)

---

१. For this line we find in the text of Vishnu Smriti—

'जाते च दारके जातकर्म'।

(वि. स्मृ. २७. ४)

२. B. C. F. G. and H. omit तथा च मनुः and I. reads for the same तदाह हारीतः, but we do not find this verse in Hârîta.

इति। वर्धनं छेदनम्। न चाशौचशङ्कया कर्मानधिकारः—इति वाच्यम्। नाभिच्छेदात् प्रागाशौचाभावात्। तदाह जैमिनिः—

'यावन्न छिद्यते नालं तावन्नाप्नोति सूतकम्।
छिन्ने नाले ततः पश्चात् सूतकं तु विधीयते'॥

इति। विष्णुधर्मोत्तरे—

'अच्छिन्ननाभ्यां[1] कर्त्तव्यं श्राद्धं वै पुत्रजन्मनि।
आशौचोपरमे कार्यमथ वा नियतात्मभिः'॥

इति। तच्च श्राद्धं हेमद्रव्येण[2] कार्यम्। तदाह व्यासः—

'द्रव्याभावे द्विजाभावे प्रवासे पुत्रजन्मनि।
हेमश्राद्धं[3] प्रकुर्वीत यस्य भार्या रजस्वला'॥

इति। आदित्यपुराणे[4] पक्वान्ननिषेधो दर्शितः—

'जातश्राद्धे न दद्यात्तु पक्वान्नं ब्राह्मणेष्वपि।
यस्माच्चान्द्रायणात् शुद्धिस्तेषां भवति नान्यथा'॥

इति। तस्मिन् दिने यथाशक्ति दानं कर्त्तव्यम्। तदुक्तं आदिपुराणे[5]—

'देवाश्च पितरश्चैव पुत्रे जाते द्विजन्मनाम्।
आयान्ति तस्मात्तदहः पुण्यं पूज्यं च सर्वदा॥
तत्र दद्यात् सुवर्णं तु भूमिं गां तुरगं रथम्'।

इति[6]। शङ्खोऽपि—

१. I. reads -नाड्यां. २. I. reads हेम्ना for हेमद्रव्येण. ३. I. reads हेम्ना श्राद्धं for हेमश्राद्धं. ४. H. reads आदिपुराणे. ५. D. and G. read आदित्यपुराणे. ६. H. omits इति.

'सर्वेषां सकुल्यानां द्विपद-चतुष्पद-
धान्य-हिरण्यादि दद्यात्' ।

इति । एतच्चाशौचमध्ये ऽपि कार्यम् ।

'आशौचे तु समुत्पन्ने पुत्रजन्म यदा भवेत् ।
कर्त्तुस्तात्कालिकी शुद्धिः पूर्वाशौचेन शुद्ध्यति' ॥

इति ।

॥ इति जातकर्म ॥

अथ नामकरणम् । तस्य च याज्ञवल्क्योक्तकालादन्ये-ऽपि काला मनुना दर्शिताः—

'नामधेयं दशम्यां तु द्वादश्यां वा ऽस्य कारयेत् ।
पुण्ये तिथौ मुहूर्त्ते वा नक्षत्रे वा गुणान्विते' ॥

( म. स्मृ. २. ३० )

इति । कारयेदिति स्वार्थिको णिच् ।

'ततस्तु[1] नाम कुर्वीत पितैव दशमे ऽहनि' ।

( वि. पु. ३. १०. ८ )

इति विष्णुपुराणवचनात् । यद्वा पितुरभावे अयोग्यत्वे-वा ऽन्येन कारयेत् । तदाह शङ्खः—

'कुलदेवता-नक्षत्राभिसम्बन्धं
पिता कुर्यादन्यो वा कुलवृद्धः'।

इति । भविष्यत्पुराणे[2]—

१. The text of Vishnu Purâṇa substitutes तु for च. २. B. C. F. and G. read भविष्यपुराणे.

'नामधेयं दशम्यां च केचिदिच्छन्ति पार्थिव[1] ।
द्वादश्यामथ वा रात्रौ मासे पूर्णे तथाऽपरे ॥
अष्टादशेऽहनि तथा वदन्त्यन्ये मनीषिणः' ।

इति । गृह्यपरिशिष्टेऽपि—

'जननाद्दशरात्रे व्युष्टे संवत्सरे वा नामकरणम्' ।

इति । तत्र स्वगृह्यानुसारेण व्यवस्था । नामधेयस्वरूपं च वर्णभेदेन दर्शयति मनुः—

'मङ्गल्यं[2] ब्राह्मणस्य स्यात् क्षत्रियस्य बलान्वितम् ।
वैश्यस्य धनसंयुक्तं शूद्रस्य तु जुगुप्सितम् ॥
शर्मवद् ब्राह्मणस्य स्याद्राज्ञो रक्षासमन्वितम् ।
वैश्यस्य पुष्टिसंयुक्तं शूद्रस्य प्रेष्यसंयुतम् ॥
स्त्रीणां सुखोद्यमक्रूरं विस्पष्टार्थं मनोरमम्[3] ।
मङ्गल्यं दीर्घवर्णान्तमाशीर्वादाभिधानवत्' ॥

(म. स्मृ. २. ३१-३३)

इति । मङ्गल्यादीनि[4] पूर्वपदानि । शर्मादीन्युत्तरपदानि । तथा च नामान्येवंविधानि सम्पद्यन्ते—श्रीशर्मा, विक्रमपालः, माणिक्यश्रेष्ठी, हीनदासः—इत्यादि । स्त्रीणां तु श्रीदासीत्यादि । सुखोद्यं वदितुं शक्यमित्यर्थः[5] । अत्र[6] विशेषमाह बैजवापः—

'पिता नाम करोत्येकाक्षरं द्व्यक्षरं त्र्यक्षरं चतुरक्षरमपरिमितं वा घोषवदाद्यन्तरन्तस्थं दीर्घाभिनिष्ठानान्तम्' ।

१. D. reads पार्थिवाः. २. H. and I. read माङ्गल्यं. ३. The text of Manu reads मनोहरम्. ४. I. reads माङ्गल्यादीनि. ५. D. omits the following portion— -शक्यमित्यर्थः । अत्र विशेषमाह बैजवापः- 'पिता नाम करोत्येकाक्षरं द्व्यक्षरं त्र्यक्षरं चतुरक्षरमपरिमितं वा. ६. B. C. and F. read अथ.

इति। अयमर्थः—घोषवन्ति यान्यक्षराणि वर्गतृतीय-चतुर्थानि तान्यादौ कार्याणि। अन्तस्था य-र-ल-वा मध्ये कर्त्तव्याः। अन्ते ऽभिनिष्ठानो विसर्जनीयः[1]। तथा च—भद्रपालो[2] जातवेदा इत्यादि नाम भवति। यथोक्तनामकरणस्य फलमाहतुः शङ्खलिखितौ—

'एवं कृते नाम्नि शुचि तत्कुलं भवति'।

इति।

## ॥ इति नामकरणम् ॥

अथ निष्क्रमणम्। तत्र मनुः—

'चतुर्थे मासि कर्त्तव्यं[3] शिशोर्निष्क्रमणं गृहात्'।

(म. स्मृ. २. ३४)

इति। तत्र[4] कर्त्तव्यमाह यमः—

'ततस्तृतीये कर्त्तव्यं मासि सूर्यस्य दर्शनम्।
चतुर्थे मासि कर्तव्यं शिशोश्चन्द्रस्य दर्शनम्'॥

इति। लौगाक्षिरपि[5]—

---

१. B. C. and F. read ऽवर्जनीयः. H. also follows this reading, but corrects it in the margin. Except A. and H. all others omit अन्ते. २. B. C. and F. read द्रुपदो, H. reads द्रुपादो, but the marginal reading is भद्रपादो. D. reads बहुपादो and G. reads भद्रपादो. ३. D. reads कर्तव्यं तथाऽन्येषां च सम्मतम्. ४. I. reads अत्र; while D. omits the following portion—

अत्र कर्त्तव्यमाह यमः—

'ततस्तृतीये कर्त्तव्यं मासि सूर्यस्य दर्शनम्।
चतुर्थे मासि कर्त्तव्यं शिशोश्चन्द्रस्य दर्शनम्'॥

इति। लौगाक्षिरपि। 'तृतीयेऽर्धमासे दर्शनमादित्यस्य'-इति। पुराणेऽपि—

'द्वादशेऽहनि राजेन्द्र शिशोर्निष्क्रमणं गृहात्।
चतुर्थे मासि कर्त्तव्यं तथाऽन्येषां च संमतम्'॥

इति।

५. I. reads लोकाक्षिः.

'तृतीये ऽर्धमासे दर्शनमादित्यस्य' ।

इति । पुराणे ऽपि—

'द्वादशे ऽहनि राजेन्द्र शिशोर्निष्क्रमणं गृहात् ।
चतुर्थे मासि कर्त्तव्यं तथाऽन्येषां च सम्मतम्' ॥

इति । अत्रापि यथास्वंशाखं व्यवस्था ।

॥ इति निष्क्रमणम् ॥

अथान्नप्राशनम् । तत्र यमः—

'ततो ऽन्नप्राशनं मासि षष्ठे कार्यं यथाविधि ।
अष्टमे वा ऽपि कर्त्तव्यं येचेष्टं मङ्गलं कुले' ॥

इति । शङ्खो ऽपि—

'संवत्सरे ऽन्नप्राशनमर्धसंवत्सर इत्येके' ।

इति । लौगाक्षिः—

'षष्ठे मास्यन्नप्राशनं जातेषु दन्तेषु वा' ।

इति । तत्र विशेषमाह मार्कण्डेयः—

'देवतापुरतस्तस्य धात्र्युत्सङ्गगतस्य च ।
अलङ्कृतस्य दातव्यमन्नं पात्रे च काञ्चने ॥
मध्वाज्य-कनकोपेतं प्राशयेत् पायसं तु तम् ।
कृतप्राशमथोत्सङ्गाद्धात्री बालं समुत्सृजेत्' ॥

इति । प्राशनानन्तरं जीविकापरीक्षा मार्कण्डेयेन दर्शिता—

---

१. I. omits स्व-. २. D. G. and H. read काले कार्यं. ३. B. E. and F. read यथेष्टं. ४. G. omits शङ्खोऽपि. ५. G. reads लोगाक्षिः and I. reads लोकाक्षिः ६. B. C. D. F. and G. read मासे for मासि. ७. G. reads कृतम्, D. reads इ तम् and I. reads स तम्.

'अग्रतो ऽथ प्रविन्यस्य शिल्पभाण्डानि सर्वशः ।
शस्त्राणि चैव वस्त्राणि ततः पश्येत्तु लक्षणम् ॥
प्रथमं यत् स्पृशेद्बालस्ततो[१] भाण्डं स्वयं तथा ।
जीविका तस्य बालस्य तेनैव तु भविष्यति' ॥

इति ।

॥ इत्यन्नप्राशनम् ॥

अथ चूडाकरणम् । तत्र यमः—

'ततः संवत्सरे पूर्णे चूडाकर्म विधीयते ।
द्वितीये वा तृतीये वा कर्त्तव्यं श्रुतिदर्शनात्'[२] ॥

इति । बैजवापः—

'तृतीये[३] वर्षे चूडाकरणम्' ।

इति । शङ्खो ऽपि—

'तृतीये वर्षे चूडाकर्म[४] । पञ्चमे वा' ।

इति । लौगाक्षिरपि[५]—

'तृतीयस्य वर्षस्य भूयिष्ठे गते चूडाकरणम्' ।

इति । शौनको ऽपि—

'तृतीये वर्षे चौलं यथाकुलधर्मं[६] वा' ।

इति । तत्र ऋषिभेदेन चूडानियममाह लौगाक्षिः—

'दक्षिणतः कमुंजा[७] वासिष्ठानाम् । उभयतोऽत्रि-का-

१. B. C. and F. read स्वतो for ततो. २. A. reads श्रुतिचोदनात्. ३. D. reads त्रिवर्षे. ४. I. reads चूडाकरणं. ५. लोकाक्षिः is the reading of I., and that of G. is लोगाक्षिः. ६. D. reads कुलधर्मं यथा च. ७. B. C. F. and I. read कमुजा; while D. reads कमजा and H. कमूजा.

ऽयपानाम् । मुण्डा भृगवः । पञ्चचूडा अङ्गिरसः ।
म[1]ण्डनार्थं शिखिनो ऽन्ये । यथाकुलधर्मं वा[2]' ।

इति । क[3]मुंजा केशपङ्क्तिः । अत्र यथास्[4]वंशाखं व्यवस्था । अत्र यथोक्ताः चूडाकरणान्ता अनुपनीतविषयाः अतस्तत्प्रसङ्गादन्येऽपि केचनानुपनीतधर्माः कथ्यन्ते । तत्र गौतमः—

'प्रागुपनयनात् का[5]मचार-कामवाद-भक्षः'।
(गौ. स्मृ. २. १)

इति । कामचार इच्छागतिः । कामवादोऽश्लीलादिभाषणम् । कामभक्षः पर्युषितादिभक्षणम् । विष्णुपुराणे ऽपि—

'भ[6]क्ष्याभक्ष्ये तथा पेये वाच्यावाच्ये तथा ऽनृते ।
अस्मिन् काले न दोषः स्यात् स यावन्नोपनीयते' ॥
(वि. पु. ३. १०. ९)

इति । एतच्चाभक्ष्यभक्षणं महापातकहेतु[7]द्रव्यव्यतिरिक्तविषयम् । अत एव स्मृत्यन्तरम्—

'स्यात्कामचार-भक्ष्योक्तिर्महतः पातकादृते' ।

इति । यथा भक्ष्याभक्ष्यादिनियमो नास्ति एवमाचमनादिकर्त्तव्यान्तरमपि नास्ति । तदाह वसिष्ठः—

---

१. D. reads मङ्गलार्थं, G. and I. read मण्डलार्ध-; while H. reads मण्डलार्थं. २. B. C. and F. substitute च for वा. ३. B. C. F. and I. read कमुजा; while D. reads क्रमजा and H. क्रमुजा. ४. I. omits स्व-. ५. A. and the text do not insert काम– before -भक्ष; while all others कामचार-वाद-भक्षाः. ६. We do not find this verse in the text of Vishṇu Purâṇa (the Bombay Edition). But it appears in a Tilgu manuscript. ७. I. omits -द्रव्य-.

'न ह्यस्य विद्यते कर्म किञ्चिदा मौञ्जिबन्धनात् ।
वृत्त्या शूद्रसमस्तावद्यावत् वेदे न जायते' ॥
( व. स्मृ. २. ६; बौ. स्मृ. १. २. ३. ६ )

इति । गौतमो ऽपि—

'यथोपपादमूत्र-पुरीषो भवति । ( ४ ) नास्याचमनकल्पो विद्यते ( ४ ) न ब्रह्माभिव्याहरेदन्यत्र स्वधानिनयनात्' । ( ६ )
( गौ. स्मृ. २. ४-६ )

इति ।

## ॥ इति चूडाकरणम् ॥

अथाक्षराभ्यासस्तु कर्त्तव्यः । तदाह मार्कण्डेयः—

'प्राप्ते तु पञ्चमे वर्षे ह्यप्रसुप्ते जनार्दने ।
षष्ठीं प्रतिपदं चैव वर्जयित्वा तथा ऽष्टमीम् ॥
रिक्तां पञ्चदशीं चैव सौरि-भौमदिनं तथा ।
एवं सुनिश्चिते काले विद्यारम्भं तु कारयेत् ॥
पूजयित्वा हरिं लक्ष्मीं देवीं चैव सरस्वतीम् ।
स्वविद्यासूत्रकारांश्च स्वां विद्यां च विशेषतः ॥
एतेषामेव देवानां नाम्ना तु जुहुयात् घृतम् ।
दक्षिणाभिर्द्विजेन्द्राणां कर्त्तव्यं चापि पूजनम् ॥

१. H. reads न त्वस्य; while the text reads न ह्यस्मिन्. २. B. C. D. F. G. and H. read भेदो न जायते- ; while I. reads वेदी न जायते. ३. B. C. F. G. H. and I. read यथोपपादित-; while D. reads यथोपपादि-. ४. B. C. D. F. and H. read न तस्याचमन-. ५. B. C. D. F. and G. read सौर-भौमदिने.

प्राङ्मुखो गुरुरासीनो वरुणाभिमुखं शिशुम्।
अध्यापयेत्तु प्रथमं द्विजातीभिः[1] सुपूजितैः॥
ततः प्रभृत्यनध्यायान् वर्जनीयान् विवर्जयेत्।
अष्टमीद्वितयं[2] चैव पक्षान्ते च दिनत्रयम्'॥

इति।

## ॥ इति गर्भाधानादिचूडान्तसंस्कारप्रकरणम्॥

अथोपनयनम्। तत्र मनुः—

'गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनायनम्।
गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः॥
ब्रह्मवर्चसकामस्य कार्यं विप्रस्य पञ्चमे।
राज्ञो बलार्थिनः षष्ठे वैश्यस्यार्थार्थिनोऽष्टमे[3]॥
आ षोडशाद् ब्राह्मणस्य सावित्री नातिवर्त्तते।
आ द्वाविंशात् क्षत्रबन्धोराचतुर्विंशतेर्विशः॥
अत ऊर्ध्वं त्रयोऽप्येते यथाकालमसंस्कृताः।
सावित्रीपतिता व्रात्या भवन्त्यार्यविगर्हिताः॥
नैतैरपूतैर्विधिवदापद्यपि हि कर्हिचित्[4]।
ब्राह्मान् यौनांश्च सम्बन्धानाचरेत् ब्राह्मणः सह'॥

(म. स्मृ. २. ३६–४०)

इति। आपस्तम्बोऽपि—

---

१. D. and I. read द्विजातिभिः. २. G. reads अष्टमी च द्वितीया वै. ३. The text reads वैश्यस्येहार्थिनोऽष्टमे; while H. reads वैश्यस्याऽप्यर्थिनो ऽष्टमे. ४. B. C. F. G. and H. read कदाचन; while D. reads कथंचन for कर्हिचित्.

'सप्तमे ब्रह्मवर्चसकाममष्टम आयुष्कामं नवमे तेजस्कामं दशमे ऽन्नाद्यकामं एकादश इन्द्रिय- कामं द्वादशे पशुकामम्' ।

(आ. ध. सू, १. १. १. २०)

इति । एतच्च वर्णत्रयस्य साधारणम् । वर्णव्यवस्थया कालनियममाह स एव—

'वसन्ते ब्राह्मणमुपनयीत ग्रीष्मे
राजन्यं शरदि वैश्यम्' ।

(आ. ध. सू. १. १. १९)

इति । वर्णानुपूर्व्येणोपनयनस्येतिकर्त्तव्यतामाह मनुः—

'कार्ष्ण-रौरव-बास्तानि चर्माणि ब्रह्मचारिणः ।
वसीरन्नाऽऽनुपूर्व्येण शाण-क्षौमा-ऽऽविकानि[१] च' ॥

(म. स्मृ. २. ४१)

इति । कार्ष्णादीनि चर्माणि उत्तरीयाणि । तथा च शङ्खः—

'कृष्णरुरु-बस्ताजिनान्युत्तरीयाणि' ।

इति । वसिष्ठोऽपि—

'कृष्णाजिनमुत्तरीयं ब्राह्मणस्य । (६१) रौरवं राजन्यस्य[२] । (६२) गव्यं बस्ताजिनं वा वैश्यस्य । (६३)

(व. स्मृ. ११. ६१–६३)

इति । तथा च पारस्करः—

'ऐणेयमजिनमुत्तरीयं ब्राह्मणस्य । (१७)

१. The text reads -दिकानि च, but the commentator does not follow this reading. २. The text reads क्षत्रियस्य.

रौरवं राजन्यस्य । (१८) आजं गव्यं वा
वैश्यस्य । (१९) सर्वेषां वा गव्यम्' ।
(पा. गृ. सू. २. ५. १७-२०)

इति । शाणादीन्युत्तरीयाणि[1] । अत्रापस्तम्बः-

'वासः । (३९) शाण[2]-क्षौमाजिनानि । (४०) काषायं
चैके वस्त्रमुपदिशन्ति ब्राह्मणस्य[3] । (४१) मा-
ञ्जिष्ठं राजन्यस्य । (१) हारिद्रं वैश्यस्य' । (२)
(आ. ध. सू. १. १. २.३९-४१; ३. १-२)

इति । वसिष्ठः-

'शुक्लमहतं वासो ब्राह्मणस्य । (६४)
कार्पासं[4] माञ्जिष्ठं क्षौमं वा[5] क्षत्रियस्य ।
(६५)हारिद्रं कौशेयं वा वैश्यस्य' । (६६)
(व. स्मृ. ११. ६४-६६)

इति । मेखलामाह मनुः-

---

१. D. reads शाणादीन्यन्तराणि and I. शाणादीन्यधरीयाणि. २. The text reads शाणी-. ३. The text omits ब्राह्मणस्य, H. adds क्षौमं to ब्राह्मणस्य in its marginal correction, but we do not think it necessary. Here I. is wholly mistaken. It omits ब्राह्मणस्य and इति । वसिष्ठः-and also the quotation of Vasistha. Thus a Sûtra is composed partly of words from Âpastamba and partly of those from Vasistha. The meaningless Sûtra is—

वासः शाण-क्षौमाजिनानि काषायं चैके
वस्त्रमुपदिशन्ति शुक्लकार्पासवस्त्रं ब्राह्म
णस्य माञ्जिष्ठं राजन्यस्य हारिद्रं वैश्यस्य ।.

४. We compared here three different manuscripts of the text. This quotation from Vasistha appears in all the manuscripts, but in each there is a slight difference—कार्पासं क्षौमं is omitted by the text (Rev. A. N. Fuhrer's Edition), and the commentator (Krishna Pandit) omits क्षौमं. We follow all our manuscripts. ५. B. C. D. F. G. and H. omit वा.

'मौञ्जी त्रिवृत् समा श्लक्ष्णा कार्या विप्रस्य मेखला ।
क्षत्रियस्य तु[1] मौर्वी ज्या वैश्यस्य शाणतान्तवी' ॥

( म. स्मृ. २. ४२ )

इति । त्रिवृत् त्रिगुणा । यमोऽपि—

'विप्रस्य मेखला मौञ्जी ज्या मौर्वी क्षत्रियस्य तु ।
शाणसूत्री तु वैश्यस्य मेखला धर्मतः स्मृताः ॥
एतासामप्यभावे तु कुशाऽश्मन्तक-बल्वजैः ।
मेखला त्रिवृता कार्या ग्रन्थिनैकेन वा त्रिवृत्[2]' ॥

इति । मनुरपि—

'मुञ्जाभावे[3] तु कर्त्तव्याः कुशा ऽश्मन्तक-बल्वजैः ।
त्रिवृता ग्रन्थिनैकेन त्रिभिः पञ्चभिरेव वा ' ॥

( म. स्मृ. २. ४३ )

इति । दण्डमाह मनुः—

'ब्राह्मणो बैल्व-पालाशौ क्षत्रियो वाट-खादिरौ ।
पैलवोदुम्बरौ[4] वैश्यो दण्डानर्हन्ति धर्मतः' ॥

( म. स्मृ. २. ४५ )

इति । अनुकल्पमाह यमः—

'एतेषामप्यभावे तु सर्वेषां सर्वयज्ञियाः' ।

इति । मनुर्दण्डपरिमाणमाह—

१. I. substitutes च for तु. २. I. reads त्रिभिः. ३. The text reads मुञ्जालाभे. ४. B. C. D. F. G. and H. read पैप्पलोदुम्बरो, but it seems to be a mistake.

'केशान्तिको ब्राह्मणस्य दण्डः कार्यः प्रमाणतः।
ललाटसम्मितो राज्ञः स्यात्तु नासान्तिको विशः'॥

(म. स्मृ. २. ४६)

इति। गौतमो.ऽपि–

'मूर्ध-ललाट-नासाग्रप्रमाणाः'।

(गौ. स्मृ. १. २८)

इति। दण्डलक्षणमाह मनुः–

'ऋजवस्ते तु सर्वे स्युरव्रणाः सौम्यदर्शनाः।
अनुद्वेगकरा नृणां सत्वचो नाऽग्निदूषिताः'॥

(म. स्मृ. २. ४७)

इति। गौतमोऽपि–

'अपीडिता यूपवक्लाः सशल्काः'[1]।

(गौ. स्मृ. १. २७)

इति। यज्ञोपवीतमाह[2] मनुः–

'कार्पासमुपवीतं स्याद् विप्रस्योर्ध्ववृतं त्रिवृत्।
शणसूत्रमयं राज्ञो वैश्यस्याऽविकसूत्रकम्[3]'॥

(म. स्मृ. २. ४४)

इति। पैठीनसिरपि–

'कर्पासमुपवीतं ब्राह्मणस्य। क्षौमे[4]-
यं राजन्यस्य। आविकं वैश्यस्य'।

१. B. C. F. G. and H. read सवल्काः. २. D. omits यज्ञोपवीतमाह and substitutes पैठीनसिरपि for मनुः. ३. The text reads -सौत्रिकम्. ४. D. reads क्षौमं.

इति। उक्तोपवीतालाभे यथासम्भवं गोवालादिकं ग्राह्यम्। तदाह देवलः—

'कार्पास-क्षौम-गोवाल-शण-वल्क-तृणादिकम्[1]।
सदा सम्भवतः[2] कार्यमुपवीतं द्विजातिभिः'॥

इति। ऋष्यशृङ्गः—

'अपि वा वाससी यज्ञोपवीतार्थं
कुर्यात् तदभावे त्रिवृता सूत्रेण'।

इति। तच्च नवतन्तुकं कार्यम्। तदाह देवलः—

'यज्ञोपवीतं कुर्वीत सूत्रेण नवतन्तुकम्'।

इति। कात्यायनः।

'त्रिवृदूर्ध्ववृतं कार्यं तन्तुत्रयमधोवृतम्'।
(का. स्मृ. १. १. २)

इति। ऊर्ध्ववृतस्य लक्षणमाह संग्रहकारः—

'करेण दक्षिणेनोर्ध्वं गतेन त्रिगुणीकृतम्[3]।
वलितं मानवैः सूत्रं शास्त्र ऊर्ध्ववृतं स्मृतम्'॥

इति। ऊर्ध्वं गतेन दक्षिणेन करेण यद्वलितं तदूर्ध्ववृतमित्यर्थः। यज्ञोपवीतप्रयोगमाह देवलः—

'ग्रामान्निष्क्रम्य सङ्ख्याय षण्णवत्यङ्गुलीषु तत्।
तावत्त्रिगुणितं सूत्रं प्रक्षाल्याब्लिङ्गकैस्त्रिभिः॥
देवागारेऽथ वा गोष्ठे नद्यां वाऽन्यत्र वा शुचौ।
सावित्र्या त्रिवृतं कुर्यान्नवसूत्रं तु तद्भवेत्॥

१. B. C. F. G. and H. read -शाण-वल्क-. २. D. and G. read सम्भवता.
३. D. reads त्रिगुणं.

बिल्वाश्वत्थादियज्ञियवृक्षस्यान्यतमस्य तु।
ब[1]ध्नीयात्तत्सजीवं तु पितृभ्यो नम इत्यथ॥
व्या[2]मं नावेक्षितव्यं स्यात् पितॄणां तृप्तिदं हि तत्।
त्रि[3]स्ताडयेत् करतलं देवानां तृप्तिदं हि तत्॥
स[4]व्ये मृदं गृहीत्वाऽस्मिन् स्थापयेद्भूरिति ब्रुवन्।
पत्रं पुष्पं फलं वाऽपि व्याहृतीभिः प्र[5]तिक्षिपेत्॥
अभिमन्त्र्याथ भूरग्निश्चेति वृ[6]त्तत्रयं त्रिभिः।
हरि-ब्रह्मेश्वरेभ्यश्च प्र[7]णम्यैवावधारयेत्'॥

इति। अवधारणमन्त्रस्तु 'यज्ञोपवीतम्' *इत्यादिः। ग्रन्थिनियममाह कात्यायनः—

'त्रिवृतं चोपवीतं स्यात्तस्यैको ग्रन्थिरिष्यते'॥
(का. स्मृ. १. १. २)

इति। यज्ञोपवीतपरिमाणमाह स एव—

'पृष्ठवंशे च नाभ्यां च धृतं यद्विन्दते कटिम्।
तद्धार्यमुपवीतं स्यान्ना[8]तिलम्बं न चोच्छ्रितम्'॥
(का. स्मृ. १. १. ३.)

इति। देवलोऽपि—

---

* सम्पूर्णो मन्त्रस्त्वित्थम्—
'यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात्।
आयुष्यमग्र्यं प्रतिमं च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः'॥

---

१. I. reads बध्नीयात्तत्र. २. I. reads वामं through mistake. ३. I. reads त्रिःपीडयेत्. ४. D. reads सत्यं गृहं गृहीत्वा. ५. I. reads च निःक्षिपेत्. ६. I. reads त्रिवृत्त्रयं. ७. B. C. D. F. G. and H. read प्रणम्यावधारितिं; while I. reads प्रणम्यावद्धारिति. Both of these readings are incorrect and give no sense at all. ८. The text reads नाऽतो लम्बं.

'स्तनादूर्ध्वमधो नाभेर्न कर्त्तव्यं कदाचन'[1] ।

इति । उपवीतसङ्ख्यामाह भृगुः—

'उपवीतं बटोरेकं द्वे तथेतरयोः स्मृते ।
एकमेव यतीनां स्यादिति शास्त्रस्य निश्चयः'[2] ॥

इति । एतच्च नित्याभिप्रायम् । बहुषु[3] कामश्रवणात् । तदाह देवलः—

'बहूनि चायुःकामस्य' ।

इति । एतदुपवीतं सदा धार्यम् । तदाह भृगुः—

'सदोपवीतिना भाव्यं सदा बद्धशिखेन च ।
विशिखो व्युपवीतश्च यत् करोति न तत् कृतम् ॥
मन्त्रपूतं स्थितं काये यस्य यज्ञोपवीतकम् ।
नोद्धरेच्च ततः प्राज्ञो यदीच्छेच्छ्रेय आत्मनः ॥
सकृच्चोद्धरणात्तस्य[4] प्रायश्चित्ती भवेद् द्विजः' ।

इति । उपवीते विशेषमाह देवलः—

'सूत्रं सलोमकं चेत्स्यात्ततः कृत्वा विलोमकम् ।
सावित्र्या दशकृत्वोऽद्भिर्मन्त्रिताभिस्तदुक्षयेत्[5] ॥
विच्छिन्नं वाऽप्यधो यातं भुक्त्वा निर्मितमुत्सृजेत्' ।

इति । यज्ञोपवीतादीनां त्रोटनादौ प्रतिपत्तिमाह मनुः—

'मेखलामजिनं दण्डमुपवीतं कमण्डलुम् ।
अप्सु प्रास्य विनष्टानि गृह्णीताऽन्यानि मन्त्रवत्[6]' ॥

(म. स्मृ. २. ६४)

---

१. B. C. D. F. G. and H. read कथंचन. २. I. reads निर्णयः. ३. I. reads कामनया बहूनां. ४. B. C. F. and G. read सकृच्चाऽधारणात्. ५. I. reads उत्क्षिपेत्. ६. All others except A. I. and the text read मन्त्रतः.

इति। अथ दण्डादिधारणानन्तरमादित्योपस्थानं कार्यम्। तथाह मनुः–

'प्रतिगृह्येप्सितं दण्डमुपस्थाय च भास्करम्।
प्रदक्षिणं परीत्याग्निं चरेद्भैक्ष्यं यथाविधि'॥

(म. स्मृ. २. ४८)

इति। दण्डग्रहणान्तेतिकर्त्तव्यतायुक्तमुपनयनं प्राप्य गायत्रीमहावाक्यार्थभूतं भास्करमुपस्थाय सोऽहमित्येवं ज्ञात्वा अग्निं परिचर्य भैक्ष्यं चरेदित्यर्थः। अग्निपरिचर्या मनुना दर्शिता–

'दूरादाहृत्य समिधः सन्निदध्याद्विहायसि।
सायं प्रातश्च जुहुयात् ताभिरग्निमतन्द्रितः'॥

(म. स्मृ. २. १८६)

इति। विहायसि अन्तरिक्षे स्थापयेन्न तु भूमावित्यर्थः। समिदाहरणे विशेषमाह बैजवापः–

'पुरा ऽस्तमयात् प्रागुदीचीं दिशं गत्वा अहिंसन्नरण्यात् समिधमाहरेत्। शुष्का ब्रह्मवर्चसकाम आर्द्रास्त्वन्नाद्यकाम उभयोरुभयकामः'।

इति। समिल्लक्षणमाह कात्यायनः–

'नाङ्गुष्ठादधिका कार्या समित् स्थूलतया क्वचित्।
न वियुक्ता त्वचा चैव न सकीटा न पाटिता॥
प्रादेशान्नाधिका न्यूना तथा न स्याद्विशाखिका।
न सपर्णा नातियामा होमेषु तु विजानता॥

१. I. reads दण्डधारणा-. २. विहायसि is omitted by D. and G. ३. The text reads माह्या. ४. B. C. F. G. and H. read नासपर्वा; while D. reads नातियर्चा and the text न सपर्णा न निर्वीर्या for न सपर्णा नातियामा.

विशीर्णा[1] विमला[2] ह्रस्वा वक्रा ससुषिरा कृशा ।
दीर्घा स्थूला गुणैर्दुष्टा कर्मसिद्धिविनाशिका ' ॥
(का. स्मृ. १. ८. १७–१९)

इति । समिन्नियम उक्तो वायुपुराणे–

'पालाश्यः समिधः कार्याः खादिर्यस्तदलाभतः ।
शमी-रोहितका-ऽश्वत्थास्तदभावे ऽर्क-वेतसौ '॥

इति । अग्निकार्याकरणे प्रत्यवायमाह हारीतः–

'पुरा जग्राह वै मृत्युर्हिंसयन्[3] ब्रह्मचारिणम् ।
अग्निस्तं मोचयामास[4] तस्मात् परिचरेच्च तम् ' ॥
(हा. स्मृ. २. २७)

इति । भिक्षाचर्याप्रकारमाह याज्ञवल्क्यः–

'ब्राह्मणेषु चरेद्भैक्ष्यमनिन्द्येष्वात्मवृत्तये ।
आदिमध्यावसानेषु भवच्छब्दोपलक्षिता ॥
ब्राह्मण-क्षत्रिय-विशां भैक्ष्यचर्या यथाक्रमम् ' ।
(या. स्मृ. १. २९-३०)

इति । ब्राह्मणेष्विति स्वस्वजातीयोपलक्षणम् । अत एव व्यासः–

'ब्राह्मण-क्षत्रिय-विशश्चरेयुर्भैक्ष्यमन्वहम् ।
सजातीयगृहेष्वेव सार्ववर्णिकमेव वा[5]' ॥

इति । सार्ववर्णिकत्वमापद्विषयम् । अत एव भविष्यत्पुराणे दर्शितम्–

---

१. This verse does not appear in the text. २. I. reads विरला. ३. The text reads हिंसया. ४. The text reads मोक्षयामास. ५. B. C. D. F. G. and H. substitute च for वा.

'चतुर्वर्ण[1] चरेद्भैक्ष्यमलाभे कुरुनन्दन' ।

इति । आपद्यपि न शूद्रात् पक्वं गृह्णीयात् । तदाहाङ्गिराः—

'आममेवाददीतान्त्यादवृत्तावैकरात्रिकम् ।
आमं पूयति संसारे[2] धर्म्यं तेभ्यः प्रतिष्ठितम्[3] ॥
तस्मादामं ग्रहीतव्यं शूद्रादप्यङ्गिराऽब्रवीत्' ।

इति । अनापदि स्वजातीयेष्वपि प्रशस्तेष्वेव भैक्ष्यमाचरेत् । तदाह मनुः—

'वेदयज्ञैरहीनानां प्रशस्तानां[4] स्वकर्मसु[5] ।
ब्रह्मचार्याहरेद्भैक्ष्यं गृहेभ्यः प्रयतोऽन्वहम्' ॥
(म. स्मृ. २. १८३)

इति । 'आदिमध्यावसानेषु' इति । अयमर्थः—भिक्षाप्रवर्त्तनावाक्ये वर्णक्रमेण आदि-मध्यावसानेषु भवच्छब्दः प्रयोज्यः । तथा च मनुः—

'भवत्पूर्वं चरेद्भैक्ष्यमुपनीतो[6] द्विजोत्तमः ।
भवन्मध्यं तु राजन्यो वैश्यस्तु भवदुत्तरम्' ॥
(म. स्मृ. २. ४९)

इति । उक्तेषु केषुचिदपवादमाह[7] स एव—

'गुरोः कुले न भिक्षेत न ज्ञाति-कुल-बन्धुषु ।
अलाभे त्वन्यगेहानां पूर्वंपूर्वं परित्यजेत्[8] ॥

---

१. I. reads चातुर्वर्ण्यं. २. I. reads संस्कारे. ३. B. C. F. and I. read प्रतीच्छितम्; while D. reads प्रतीच्छतम्. ४. I. reads प्रसन्नानां, and G. reads देवयज्ञैः. ५. D. reads च कर्मसु for स्वकर्मसु ६. A. reads उपवीती. ७. I. reads क्वचिदपवादम् for केषु चिदपवादम्. ८. The text of Manu reads विवर्जयेत्.

सर्वं वाऽपि चरेद्ग्रामं पूर्वोक्तानामसम्भवे ।
नियम्य प्रयतो वाचमभिशस्तांस्तु वर्जयेत्' ॥
( म. स्मृ. २. १८४–१८५ )

इति । यत्तु–

'मातरं वा स्वसारं वा मातुर्वा भगिनीं निजाम् ।
भिक्षेत भिक्षां प्रथमं या चैनं न[1] विमानयेत्' ॥
( म. स्मृ. २. ५० )

इति तदुपनयनाङ्गभिक्षाविषयम् । तच्च भैक्ष्यं भोजनपर्याप्तमाहर्तव्यम् । अन्यथा दोषश्रवणात् । तदाह यमः–

'आहारमात्रादधिकं न क्वचिद्भैक्ष्यमाहरेत् ।
युज्यते स्तेयदोषेण कामतोऽधिकमाहरन्' ॥

इति । तच्च भैक्ष्यं गुर्वनुज्ञापुरःसरं भोक्तव्यम् । तदाहतुर्मनु-यमौ–

'स[2]माहृत्य तु तद्भैक्ष्यं यावदर्थममायया ।
निवेद्य गुरवेऽश्नीयादाचम्य प्राङ्मुखः शुचिः'॥
( म. स्मृ. २. ५१ )

इति । गुर्वसन्निधौ तद्भार्यादिभ्यो निवेदयेत् । तदाह गौतमः–

१. The text reads नाऽवमानयेत्. २. I. reads समाहृत्याथ for समाहृत्य तु.

'निवेद्य गुरवेऽनुज्ञातो भुञ्जीत ।( ३५ )
असन्निधौ तद्भार्या-पुत्र-सब्रह्मचारिभ्यः'। ( ३६ )
( गौ. स्मृ. २. ३५–३६ )

इति । गुर्वनुज्ञातं भैक्ष्यं सत्कृत्य भुञ्जीत । तदाह याज्ञवल्क्यः–

'कृताग्निकार्यो भुञ्जीत वाग्यतो गुर्वनुज्ञया ।
आपोशनक्रियापूर्वं सत्कृत्यान्नमकुत्सयन्' ॥
( या. स्मृ. १. ३१ )

इति । सत्कारश्च हारीतेन दर्शितः–

'भैक्ष्यमवेक्षितं पर्यग्निकृतमादित्यदर्शितं गुर-
वे निवेदितमनुज्ञातममृतसम्मितं प्राहुः । (६)
यदश्नाति ब्रह्मचारी ब्रह्मसिद्धिमवाप्नोति' ।
( हा. स्मृ. ३. ६–७ )

इति । गौतमोऽपि–

'सायम्प्रातस्त्वन्नमभिपूजितमनिन्दन् भुञ्जीत' ।
( गौ. स्मृ. १. ३० )

इति । एकान्ननिषेधमाह मनुः–

---

१. Here I. threw us in great doubt. It inserts गुरोरभावे and some other words in these Sûtras of Gautama, and by this addition forms a verse, which is as follows:—

निवेद्य गुरवेऽनुज्ञां ततो भुञ्जीत सन्निधौ ।
गुरोरभावे तद्भार्या-पुत्र-सब्रह्मचारिणाम् ॥

D. also makes slight changes and forms the following verse—

निवेद्य गुरवे भिक्षां भुञ्जीताऽसन्निधौ गुरोः ।
तद्भार्या-पुत्र-सब्रह्मचारिभ्य इति चाऽन्वहम् ॥

But these two readings are followed neither by any of our other manuscripts, nor any one of the five manuscripts of the text. २. B. C. D. F. G. H. and I. omit तु.

'भैक्ष्येण वर्त्तयेन्नित्यं नैकान्नादी भवेद्व्रती ।
भैक्ष्येण व्रतिनो वृत्तिरुपवाससमा स्मृता ॥
व्रतवद्देवदैवत्ये पित्र्ये कर्मण्यथर्षिवत् ।
काममभ्यर्थितोऽश्नीयात् व्रतमस्य न लुप्यते' ॥
(म. स्मृ. २. १८८-१८९ )

इति । अकरणे प्रत्यवायमाह स एव-
'अकृत्वा भैक्ष्यचरणमसमिध्य च पावकम् ।
अनातुरः सप्तरात्रमवकीर्णिव्रतं चरेत्' ॥
( म. स्मृ. २. १८७ )

इति । उपनीतस्य नियममाह यमः-
'दण्डं कमण्डलुं वेदं मौञ्जीं च रशनां तथा ।
धारयेद्ब्रह्मचर्यं च भिक्षान्नाशी गुरौ वसन्' ॥
इति । वेदो दर्भमुष्टिः । गुरौ गुरुगृहे इत्यर्थः । यमः-
'मेखलामजिनं दण्डमुपवीतं च नित्यशः ।
कौपीनं कटिसूत्रं च ब्रह्मचारी च धारयेत्' ॥
इति । मनुः-
'अग्नीन्धनं भैक्ष्यचर्यामधःशय्यां गुरोर्हितम् ।
आ समावर्त्तनात् कुर्यात् कृतोपनयनो द्विजः' ॥
( म. स्मृ. २. १०८ )

इति । सुमन्तुरपि-

१. B. C. D. F. G. and H. read एकान्नाशी. २. B. C. and F. read व्रते च, D. G. and H. read व्रते वा for व्रतवत्. ३. D. reads व्रतमप्यनुलुप्यते. ४. D. G. and H. omit स एव. ५. B. C. and F. read असमिद्धं. ६. Except A. and I. all others omit this word. ७. D. omits यमः.

'ब्रह्मचर्यं तपो भैक्ष्यं सन्ध्ययोरग्निकर्म च।
[1]स्वाध्यायं गुरुवृत्तिश्च [2]चर्येयं ब्रह्मचारिणः'॥

इति। गुरुवृत्तिप्रकारमाह व्यासः—

'जघन्यशायी पूर्वं स्यादुत्थायी गुरुवेश्मनि।
यच्च शिष्येण कर्त्तव्यं यच्च दासेन वा पुनः॥
कृतमित्येव तत् सर्वं कृत्वा तिष्ठेत्तु पार्श्वतः।
किङ्करः सर्वकारी च सर्वकर्मसु कोविदः॥
अभुक्तवति नाश्नीयादपीतवति नो पिबेत्।
न तिष्ठति तथाऽऽसीत नाऽसुप्ते प्रस्वपेत्तथा'॥

इति। विश्वामित्रः—

'तद्भार्या-पुत्रयोश्चैव वृद्धानां धर्म[3]शालिनाम्।
शुश्रूषा सर्वदा कार्या प्रणामादिभिरेव च'॥

इति। वर्ज्यानाह याज्ञवल्क्यः—

'मधु-मांसाञ्जनोच्छिष्ट-[4]शुक्त-स्त्री-प्राणिहिंसनम्।
भास्करालोकनाश्लील-[5]परीवादादि वर्जयेत्'॥
(या. स्मृ. १. ३३)

इति। मनु[6]रपि—

'वर्जयेन्मधु मांसं च गन्धं माल्यं रसान् स्त्रियः।
[7]शुक्तानि यानि सर्वाणि प्राणिनां चैव हिंसनम्॥

१. I. reads स्वाध्यायो. २. I. reads चर्येयुः. ३. B. E. F. and G. read -शीलिनाम्. ४. D. reads -भुक्त-, B. E. and F. read -सुक्त- and G. reads -षूक्त-. ५. I. reads -परिवादांश्च; while D. reads परिवादानि and H. reads परिवादान् विवर्जयेत्. ६. D. omits अपि, and G. omits मनुरपि. ७ B. reads सुक्तानि चैव, E. and F. मुक्तानि चैव, D. and G. शुक्लानि चैव, H. reads शुल्कानि चैव and I. reads चैव for यानि.

अभ्यङ्गमञ्जनं चाक्ष्णोरुपानच्छत्रधारणम् ।
कामं क्रोधं च लोभं च नर्त्तनं गीत-वादनम् ॥
द्यूतं च जनवादं च परीवादं तथाऽनृतम् ।
स्त्रीणां च प्रेक्षणालम्भमुपघातं परस्य च ॥
एकः शयीत सर्वत्र न रेतः स्कन्दयेत् क्वचित्' ॥
(म. स्मृ. २. १७७-१८०)

इति[1] । यमः—
'खट्वाऽऽसनं च शयनं वर्जयेद्दन्तधावनम् ।
स्वपेदेकः कुशेष्वेव न रेतः स्कन्दयेत् शुचि[2]:' ॥

इति[3] । कूर्मपुराणे—
'नादर्शं[4] वै समीक्षेत नाचरेद्दन्तधावनम् ।
गुरू[5]च्छिष्टं भेषजार्थं प्रयुञ्जीत न कामतः' ॥
(कू. पु. १. २. १४. २०-२१)

इति । आ[6]पस्तम्बोऽपि—
'पितुर्ज्येष्ठस्य च भ्रातुरुच्छिष्टं भोक्तव्यम्' ।
(आ. ध. सू. १. १. ४. ११)

इति । गुरुपुत्रा[7]द्युच्छिष्टं तु न भोक्तव्यम् । तदाह मनुः—

---

१. B. E. and F. omit the portion—
इति । यमः—
खट्वासनं च शयनं वर्जयेद्दन्तधावनम् ।
स्वपेदेकः कुशेष्वेव न रेतः स्कन्दयेत् क्वचित् ॥ इति ।
H. also omits this portion; while D. and G. omit only इति । यमः, and they insert the following verse. २. G. and I. read क्वचित्. ३. H. omits इति । कूर्मपुराणे-and also the verse following, but it appears in the marginal correction. ४. H. reads आदर्शं चैव नेक्षेत, D. reads नादर्शनं च वीक्षेत, I. reads नादर्शं चैवमीक्षेत and the text reads नादित्यं वै समीक्षेत. ५. The text reads गुरुप्रियार्थं सर्वं हि. ६. All others except A. and I. omit आपस्तम्बोऽपि. ७. I. reads गुरुपुत्रस्याऽप्युच्छिष्टं.

'उत्सादनं च गात्राणां स्नापनोच्छिष्टभोजने।
न कुर्याद्गुरुपुत्रस्य पादयोश्चाऽवनेजनम् ॥ (२०९)
अभ्यञ्जनं स्नापनं च गात्रोत्सादनमेव च।
गुरुपत्न्या न कार्याणि केशानां च प्रसाधनम्' ॥(२११)
(म. स्मृ. २. २०९–२११)

इति। ब्रह्मचर्यकालावधिमाह याज्ञवल्क्यः–

'प्रतिवेदं ब्रह्मचर्यं द्वादशाब्दानि पञ्च वा।
ग्रहणान्तिकमित्येके केशान्तश्चैव षोडशे'॥
(या. स्मृ. १. ३६)

इति। केशान्तः[1] गोदानाख्यं कर्म। तच्च षोडशे वर्षे कार्यम्। तदाह मनुः–

'केशान्तः[2] षोडशे वर्षे ब्राह्मणस्य विधीयते।
राजन्यबन्धोर्द्वाविंशे वैश्यस्य द्व्यधिके ततः' ॥
(म. स्मृ. २. ६९)

इति। यमः–

'वसेद्[3]द्वादश वर्षाणि चतुर्विंशतिमेव वा।
षट्त्रिंशतं वा वर्षाणि प्रतिवेदं व्रतं चरेत्' ॥

इति। एतत् त्रिवेदग्रहणाभिप्रायम्। अत एव मनुः–

'षट्[4]त्रिंशदाब्दिकं चर्यं गुरौ त्रैवेदिकं व्रतम्।
तदर्धिकं पादिकं वा ग्रहणान्तिकमेव वा' ॥
(म. स्मृ. ३. १)

इति। एवमुक्तलक्षणो ब्रह्मचारी द्विविधः। उपकुर्वाणको

---

१. All except A. and the text read केशान्तं चैव. २. All others except A. read केशान्तं. ३. I. reads वैश्यो for वसेत्: while G. reads वैश्ये. Both are wrong. ४. D. and I. read षट्त्रिंशवाब्दिकं.

नैष्ठिकश्च । उपकुर्वाणकस्योक्ता धर्माः । नैष्ठिकस्योच्यन्ते । तत्राह याज्ञवल्क्यः—

'नैष्ठिको ब्रह्मचारी तु वसेदाचार्यसन्निधौ ।
तदभावे ऽस्य तनये पत्न्यां वैश्वानरे ऽपि वा' ॥
(या. स्मृ. १. ४९)

इति । मनुरपि—

'यदि[1] त्वात्यन्तिको वासो रोचेतास्य गुरोः कुले ।
युक्तः परिचरेदेनमा शरीरविमोक्षणात् ॥ (२४३)
आचार्ये तु खलु[2] प्रेते गुरुपुत्रे गुणान्विते ।
गुरुदारे सपिण्डे वा गुरुवद्वृत्तिमाचरेत् ॥ (२४७)
एतेष्वविद्यमानेषु[3] स्थाना-ऽसन-विहारवान्[4] ।
प्रयुञ्जानोऽग्निशुश्रूषां साधयेद्[5]देहमात्मनः' ॥ (२४८)
(म. स्मृ. २. २४३-२४८)

इति । एतच्च सद्वृत्तब्राह्मणगुर्वादिविषयम् । अन्यथा दोषः । तदुक्तं तेनैव—

'नाऽब्राह्मणेगुरौ शिष्यो वासमात्यन्तिकं वसेत् ।
ब्राह्मणे चाऽननूचाने काङ्क्षन्[6] गतिमनुत्तमाम्' ।
(म. स्मृ. २. २४२)

---

१. The text reads this line as follows: –
यदि त्वात्यन्तिकं वासं रोचयेत गुरोः कुले ।,
and B. C. D. F. G. and H. read रोच्येत स्वगुरोः कुले for रोचेतास्य गुरोः कुले. २. H. reads स्वयं for खलु. ३. I. reads एषु for एतेषु. ४. Kullûkbhatta, the commentator on Manu reads स्नाना ऽसन-, but neither the other commentators nor our manuscripts of the text follow the reading. ५. B. C. D. F. G. and H. read साद्येत् for साधयेत्. This form is grammatically correct and gives sense, but no commentator follows this reading. ६. H. reads काङ्क्षन्वा गतिमुत्तमाम्.

इति । वसिष्ठो ऽपि–

'ब्र[1]ह्मचार्याचार्यं परिचरेदा शारीरविमोक्षणात् ।
(४) आचार्ये च[2] प्रेते ऽग्निं परिचरेत् । (५)
सं[3]यतवाक् । (७) चतुर्थ-षष्ठा-ऽष्टमकालभोजी ।
(८) भैक्ष्यमा[4]चरेत् । (९) गुर्वधीनः ।
(१०) जटिलः शिखाजटो वा । (११)
गुरुं ग[5]च्छन्तमनुगच्छन्नासीनं चेत्तिष्ठन् शा-
यानं चेदासीन उपासीत । (१२) आहूता-
ध्यायी । (१३) सर्वं लब्धं निवेद्य तदनुज्ञया
भुञ्जीत । (१४) खट्वाशयन-दन्तधावन-प्रक्षा-
लना-ऽञ्जना-ऽभ्यञ्जनोपानच्छत्रवर्जी[6] । (१५) स्था-
नासनशीलः स्विरह्नोऽभ्युपेयादपः' । (१७)

(व. स्मृ. ७. ४–१७)

इति । अहनि त्रिषवणस्नायी स्यादित्यर्थः । अग्निपरिचर्या हारीत-शङ्खलिखित-यमैर्निरूपिता–

'यज्ञियाः समिध आहृत्य सम्मार्जनोपलेपनोद्बो-
धन-समूहन-समिन्धन-पर्यग्निकरण-परिक्रमणो-

१. B. C. D. F. G. H. and I. read ब्रह्मचर्यं चरेत् for ब्रह्मचार्याचार्यं परिचरेत्, but this is a mistake. २. B. C. and F. omit च; while D. substitutes खलु for it. ३. The text (Bombay Edition by Rev. A. A. Fuhrer) reads सन्यतवाक् through mistake. ४. B. C. D. F. G. H. and I. omit आचरेत्. ५. गच्छन्तमनुगच्छेदासीनं चानुतिष्ठेत् शयानश्चेदासीत आहूताध्यायी सर्वलब्धनिवेदी खट्वाशयन-दन्तप्रक्षालनाञ्जनाभ्यञ्जनवर्जी This is the reading of B. C. F. G. H. and I., but I. reads -वर्जन- for -वर्जी. ६. Here I. and the text (Bombay Edition by Rev. A. A. F.) are mistaken. I. reads -वर्जनानश्शील-स्त्रीरहस्यभ्युपेयादप: through mistake and the said text omits स्थानासनशीलः. We compared three different manuscripts of the text as well as our other manuscripts in which this omitted portion is present.

पस्थान-होम-स्तोत्र-नमस्कारादिभिरग्निं परिचरेत्। (५) नाग्निमधितिष्ठेत्। (६) न पद्भ्यां कर्षेत्।(७) न मुखेनोपधमेत्। (८) नाऽऽपश्चाग्निं च युगपद्धारयेत्।(९) नाजीर्णभुक्तो नोच्छिष्टो वा ऽभ्येयादध्यात्। (१०) विविधैर्हविर्विशेषैराग्नेयैरहरहरग्निं समिन्धेत्। (११) आमन्त्र्य गच्छेत्। (१२) आहृत्य निवेदयेत् तन्मनाः। (१३) शरीरोपरमान्ते ब्रह्मणः सायुज्यं गच्छति'। (१४)

(हा. स्मृ. ३. ५–१४)

इति। एवं कुर्वतः फलमाह याज्ञवल्क्यः—

'अनेन विधिना देहं सादयन् विजितेन्द्रियः।
ब्रह्मलोकमवाप्नोति न चेहं जायते पुनः'॥

(या. स्मृ. १. ५०)

इति। मनुरपि—

'आ समाप्तेः शरीरस्य यस्तु शुश्रूषते गुरुम्।
स गच्छत्यञ्जसा विप्रो ब्रह्मणः सद्म शाश्वतम्'॥

(म. स्मृ. २. २४४)

इति। ननु—नैष्ठिकब्रह्मचर्याङ्गीकारे गार्हस्थ्यं निर्विषयं स्यात्। तन्न। गार्हस्थ्यस्य रागिविषयत्वात्। तदाह जाबालिः—

---

१. The text of Hârîta adds to ऽभ्यादध्यात् the following portion—नातिक्रमेत्। न विक्रमाभिमुखं तिष्ठेत् । न निष्ठीवेत् ।. २. All other manuscripts except A. and the text read आगत्य for आहृत्य, but our reading is correct and moreover gives good sense. ३. D. and G. read साधयन्. ४. Except A. and the text all others read न चेहाऽऽजा-.

'यदि गृहमेव कामयेत्तदा याव-
ज्जीवमग्निहोत्रं जुहुयात्'।

इति। अत्र केचित् नैष्ठिकब्रह्मचर्यं कुब्जादिविषयं मन्वाना गार्हस्थ्यस्य तदितरविषयतामाहुः*। उदाहरन्ति च तत्र विष्णुवचनम्—

'कुब्ज-वामन-जात्यन्ध-क्लीब-पङ्ग्वार्त्त-रोगिणाम्।
व्रतचर्या भवेत्तेषां यावज्जीवमसंशयम्'॥

इति। तन्न। नैष्ठिकब्रह्मचर्यस्य कुब्जादिष्वेव नियतत्वे समर्थं प्रत्यैच्छिकत्वमुच्यमानं विरुध्येत। ऐच्छिकत्वं च वसिष्ठेन दर्शितम्—

'चत्वार आश्रमाः (१) ब्रह्मचारि-गृहस्थ-
वानप्रस्थ-परिव्राजकाः। (२) तेषां वेद-
मधीत्य वेदौ वेदान् वा ऽविशीर्णब्रह्मचर्यो
यमिच्छेत्तमावसेत्'। (३)

(व. स्मृ. ७. १–३)

इति। भविष्यत्पुराणे ऽपि—

'गार्हस्थ्यमिच्छन् भूपाल कुर्याद्दारपरिग्रहम्।
ब्रह्मचर्येण वा कालं नयेत् सङ्कल्पपूर्वकम्॥
वैखानसो वाऽपि भवेत् परिव्राडथ वेच्छया'।

---

* यथोक्तं भाट्टैः—

'अत्रैवं शक्यते वक्तुं येऽन्ध-पङ्ग्वादयो नराः'—इत्यादि। उदाहृतं चैतदस्माभिः पूर्वम्।

---

१. B. C. and F. read वा ऽविकीर्ण-, D. and H. read वा ऽविचीर्ण-, G. reads वा ऽपि चीर्ण- and I. reads वा चीर्ण-.

इति। तस्मात् रागिविषयत्वेनैव गार्हस्थ्यं व्यवस्थापनीयम्-
इति।

## ॥ इति ब्रह्मचारिप्रकरणम् ॥

अथ गृहस्थाश्रमं निरूपयितुं तदधिकारहेतु स्नानमादौ निरूप्यते। तत्र याज्ञवल्क्यः-

'गुरवे तु वरं दत्त्वा स्नायीत तदनुज्ञया।
वेदं व्रतानि वा पारं नीत्वा ह्युभयमेव वा'॥

(या. स्मृ. १. ५१)

इति। तत्र दातव्यो वरो मनुना दर्शितः-

'न पूर्वं गुरवे किञ्चिदुपकुर्वीत धर्मवित्।
स्नास्यंस्तु गुरुणाऽऽज्ञप्तः शक्त्या गुर्वर्थमाहरेत्॥
क्षेत्रं हिरण्यं गामश्वं छत्रोपानहमासनम्[1]।
धान्यं वासांसि शाकं वा गुरवे प्रीतिमावहेत्'[2]॥

(म. स्मृ. २. २४५-४६)

इति। अयं च वरो गुरुप्रीत्यर्थो न तु विद्यानिष्क्रयार्थः। वेदविद्याऽर्हस्य मूल्यस्याऽसम्भवात्। तथा च छन्दोगश्रुतिः—

'यद्यप्यस्मा इमामद्भिः परिगृहीतां धनस्य
पूर्णां दद्यादेतदेव[3] ततो भूयः'।

(छां. उ. ३. ११. ६)

इति। तापनीयश्रुतिरपि-

---

१. B. C. D. F. G. and H. read छत्रोपानहमन्ततः. २. The text reads this line as follows:—

धान्यं शाकं च वासांसि गुरवे प्रीतिमावहेत्॥.

३. I. reads तदेव for एतदेव.

'सप्तद्वीपवती भूमिर्दक्षिणार्थं न कल्पते'।

(नृ. उ. ता. ५. २.)

इति। हारीतस्मृतिरपि—

'एकमप्यक्षरं यस्तु गुरुः शिष्ये निवेदयेत्।
पृथिव्यां नास्ति तद्द्रव्यं यद्दत्त्वा[1] त्वनृणी भवेत्'॥

(हा. स्मृ. ३. २१)

इति। 'वा वेदं व्रतानि' इत्यनेन स्नातकत्रैविध्यं दर्शितम्। तत्र वेदमात्रपरिसमापक एकः। व्रतमात्रपरिसमापको द्वितीयः उभयपरिसमापकस्तृतीयः। व्रतशब्देनात्र गृह्यप्रसिद्धान्युपनयनव्रत-सावित्रीव्रत[2]-वेदव्रतानि विवक्षितानि। स्नातकत्रैविध्यं हारीतेनोक्तम्—

'त्रयः स्नातका भवन्ति। विद्यास्नातको
व्रतस्नातको विद्या-व्रतस्नातकः'।

(हा. स्मृ. ४. १-२)

इति। वेदं पारं नीत्वेत्यत्राऽर्थावगतिरपि विवक्षिता*। अत एव कूर्मपुराणे—

*अत्र मीमांसका मन्यन्ते—'स्वाध्यायोऽध्येतव्यः'—इत्यस्य विधेरर्थज्ञानपर्यन्तत्वम्। अर्थज्ञानं विना कर्मानुष्ठानसामर्थ्याभावात्। तस्य च विधेर्यज्ञार्थत्वात् अर्थज्ञानमवश्यम्—इति। औपनिषदास्तु— 'स्वाध्यायोऽध्येतव्य-इत्यस्य विधेरक्षरग्रहणेनैव चारितार्थ्यम्। वेदाक्षरग्रहणमेव विधिफलम्। पूर्वकाण्डार्थज्ञानं तु कर्मानुष्ठानाक्षिप्तम्। उत्तरकाण्डार्थज्ञानं च काम्येन श्रोतव्यविधिना प्राप्तमतो विनाप्यर्थज्ञानं स्नायात्—इति सङ्क्षेपः। विस्तरस्तु हरिहरभाष्यादौ द्रष्टव्यः।

१. I. reads यद्दत्त्वाऽस्याऽनृणी भवेत्. २. B. C. D. and G. read सावित्रीव्रत-वेदाब्दव्रता-ऽऽरण्यकव्रतानि.

'वेदं वेदौ तथा वेदान् वेदान् वा चतुरो द्विजः ।
अधीत्य चाधिगम्यार्थं ततः स्नायाद्विजोत्तमाः ' ॥
(कू. पु. १. २. १९. १)

इति । स्नानप्रकारश्च गृह्ये प्रसिद्धः । स्नातकधर्माः कूर्म-पुराणे दर्शिताः—

'यज्ञोपवीतद्वितयं सोदकं च कमण्डलुम् । (३)
छत्रं चोष्णीषममलं पादुके चाप्युपानहौ ।
रौक्मे च कुण्डले वेदं कृत्तकेश-नखः शुचिः ॥ (४)
स्वाध्याये नित्ययुक्तः स्याद्बहिर्माल्यं च धारयेत् ॥(५)
शुक्लाम्बरधरो नित्यं सुगन्धः प्रियदर्शनः ।
न जीर्ण-मलवद्वासा भवेत्तु विभवे सति ॥ (६)
न रक्तमुल्बणं चान्यधृतं वासो न कन्थिकाम् । (७)
(कू. पु. १ २. १९. ३–७.)

इति ।

## ॥ इति स्नातकप्रकरणम् ॥

अथ विवाहः । तत्र मनुः—

'गुरुणाऽनुमतः स्नात्वा समावृत्तो यथाविधि ।
उद्वहेत द्विजो भार्यां सवर्णां लक्षणान्विताम्' ॥
(म. स्मृ. ३. ४ )

इति । याज्ञवल्क्योऽपि—

---

१. The text reads विन्द्याद्वा for वेदान्. २. The text substitutes अभि- for अधि-. ३. All others except D. and the text read द्विजोत्तमः. ४. The text reads this line as follows :—

रौक्मे च कुण्डले धार्ये न्युप्तकेश-नखः शुचिः ॥.

५. I. reads चास्य धृतं for चान्यधृतं. ६. D. omits अपि.

'अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत्।
अनन्यपूर्विकां कान्तामसपिण्डां यवीयसीम्॥
अरोगिणीं भ्रातृमतीमसमानार्ष-गोत्रजाम्'।
(या. स्मृ. १. ५२-५३)

इति। लक्षण्यां बाह्याभ्यन्तरलक्षणयुक्ताम्। बाह्यानि लक्षणानि मनुना दर्शितानि—

'अव्यङ्गाङ्गीं सौम्यनाम्नीं[1] हंस-वारणगामिनीम्।
तनुलोम-केश-दशनां मृद्वङ्गीमुद्वहेत् स्त्रियम्'॥
(म. स्मृ. ३. १०)

इति। वर्ज्यामाह स एव—

'नोद्वहेत् कपिलां कन्यां नाधिकाङ्गीं न रोगिणीम्।
नाऽलोमिकां नातिलोमां न वाचालां[2] न पिङ्गलाम्॥
नर्क्ष-वृक्ष-नदीनाम्नीं नान्त्य-पर्वतनामिकाम्।
न पक्ष्यहि-प्रेष्यनाम्नीं न च भीषणनामिकाम्[3]'॥
(म. स्मृ. ३. ८-९)

इति। कपिला रक्ततण्डुलवर्णा। पिङ्गला अग्निवर्णा। अन्त्येति म्लेच्छनाम्नी। विष्णुपुराणे ऽपि—

'न श्मश्रुव्यञ्जनवतीं न चैव पुरुषाकृतिम्।
न घर्घरस्वरां क्षामां[4] तथा काकस्वरां न च॥
नानिबद्धेक्षणां[5] तद्वद्वृत्ताक्षीं नोद्वहेद्बुधः[6]।
यस्याश्च रोमशे जङ्घे गुल्फौ यस्यास्तथोन्नतौ॥

---

१. D. reads सोमनाम्नीं. २. The text reads वाचाटां. ३. B. C. F. G. and H. read न विभीषणनामिकाम्. ४. The text reads क्षाम—वाक्यां काकस्वरां न वा. ५. B. C. and F. read नानिबन्धेक्षणां; while D. reads नाभिबन्धेक्षणां. ६. The text reads स्त्रियम् for बुधः.

गण्डयोः कूपकौ यस्या हसन्त्यास्तां च नोद्वहेत् ।
नातिरूक्षच्छविं पाण्डुकरजामरुणेक्षणाम् ॥
आ[1]पीनहस्त-पादां च न क[2]न्यामुद्वहेद्बुधः ।
न वामनां नातिदीर्घां नोद्वहेत् सं[3]हतभ्रुवम् ॥
न[4] चातिच्छिद्रदशनां न करालमुखीं नरः' ।
(वि. पु. ३. १०. १८–२२)

इति । आन्तराणि तु लक्षणान्याश्वलायनगृह्येऽ[5]भिहितानि–'दु[6]र्विज्ञेयानि लक्षणानीति । (४) अष्टौ पिण्डान् कृत्वा–ऋतमग्रे प्रथमं जज्ञ ऋते सत्यं प्रतिष्ठितं यदियं कुमार्यभिजाता तदियमिह प्रतिपद्यतां यत्सत्यं तद्दृश्यताम्–इति पिण्डानभिमन्त्र्य कुमारीं ब्रूयादेषामेकं गृहाणेति । (५) क्षेत्राच्चेदुभयतःसस्याद्गृह्णीयादन्नवत्यस्याः प्रजा भविष्यतीति विद्याद् । गोष्ठात् पशुमती । वेदिपुरीषाद् ब्रह्मवर्चस्विनी । अविदासिनो ह्रदात्

---

१. H. and I. read अपीन-. २. I. reads च ताम्. ३. The text reads संहत-. ४. H. and I. read न वाति-. ५. I. reads विहितानि. ६. A. reads this quotation as follows:—आन्तराणि लक्षणानि आश्वलायनगृह्ये दर्शितानि । दुर्ज्ञेयानि तानि वेदितव्यानि । पूर्वस्यां रात्रौ गोष्ठ-वेदिका-कितवस्थान-ह्रदेरिण-क्षेत्र-चतुष्पथ-श्मशानेभ्यो मृत्तिका गृहीत्वा अष्टौ पिण्डान् कृत्वा–'ऋतमग्रे प्रथमं जज्ञ ऋते सत्यं प्रतिष्ठितम् । यदियं कुमार्यभिजाता तदियमिह प्रतिपद्यतां यत्सत्यं तद्दृश्यतामिति पिण्डानभिमन्त्र्य कुमारीं ब्रूयादेषामेकं गृहाणेति । तत्रानुक्रमेण प्रथमे पिण्डे गृहीते धान्यवती भवति । द्वितीये पशुमती । तृतीयेऽग्निहोत्रपरा । चतुर्थे विवेकिनी चतुरा सर्वजनार्चनपरा भवति । पञ्चमे रोगिणी । षष्ठे वन्ध्या । सप्तमे व्यभिचारिणी । अष्टमे विधवा भवेदिति । This reading is followed by neither the text nor our manuscripts. This is probably a paraphrase of Âśvalâyana Sûtra.

सर्वसम्पन्ना । देवनात् कितवी । चतुष्पथाद्विप्र-
व्राजिनी । ईरणादधन्या । श्मशानात्पतिघ्नी’। (६)

( आ. गृ. सू. १. ५. ४–६ )

इति । विप्रव्राजिनी विविधं प्रकर्षेण व्रजतीति विप्रव्राजिनी स्वैरिणीत्यर्थः । अनन्यपूर्विकामिति दानेनोपभोगेन वा पुरुषान्तराऽगृहीताम् । अनेन पुनर्भूर्व्यावर्त्यते । अत एव काश्यपः—

‘सप्त पौनर्भवाः कन्या वर्जनीयाः कुलाधमाः ।
वाचा दत्ता मनोदत्ता कृतकौतुकमङ्गला ॥
उदकस्पर्शिता या च या च पाणिगृहीतिका ।
अग्निं परिगता या च पुनर्भूप्रसवा च या ॥
इत्येताः काश्यपेनोक्ता दहन्ति कुलमग्निवत्’ ।

इति । बौधायनः—

‘वाग्दत्ता मनोदत्ताऽग्निं परिगता सप्तमं पदं नीता भुक्ता गृहीतगर्भा प्रसूता चेति सप्तविधा पुनर्भूः तां गृहीत्वा न प्रजां न धर्मं विन्देत्’ ।

इति । नारदोऽपि—

‘[1]कन्यैवाऽक्षतयोनिर्या पाणिग्रहणदूषिता[2] ।
पुनर्भूः[3] प्रथमा प्रोक्ता पुनःसंस्कार[4]कर्मणि’॥

( ना. स्मृ. १२. ४६ )

इति । याज्ञवल्क्योऽपि—

---

१. B. C. and F. read कन्यैवाऽकृत्तयोनिर्या. २. B. C. F. G. H. and I. read -पूर्विका for -दूषिता. ३. B. C. F. H. and I. read पुनर्भूप्रतिमा ज्ञेया; while D. and G. पूनर्भूप्रतिमा ज्ञेयाः. ४. The text reads संस्कारमर्हति.

'अक्षता च क्षता चैव पुनर्भूः संस्कृता पुनः ।

(या. स्मृ. १. ६७)

इति । कान्तां कमनीयां उद्वोढुर्मनोनयनानन्दकारिणीम् । अत एव आपस्तम्बः—

'यस्यां मनश्चक्षुषोर्निबन्धस्तस्यामृद्धिः' ।

(आप. गृ. सू. १. ३. २०)

इति । असपिण्डामिति । समान एकः पिण्डो यस्याः सा सपिण्डा । न सपिण्डा असपिण्डा ताम् । सपिण्डता च सप्तमपुरुषपर्यवसायिनी । तत्रैकः पिण्डदाता त्रयः पिण्डभाजः पितृ-पितामह-प्रपितामहाः । त्रयो लेपभाजः वृद्धप्रपितामहादयः ।

तथा च मत्स्यपुराणे—

'लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः ।
पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्तपौरुषम्' ॥

(म. पु. १८. २९)

इति । मार्कण्डेयोऽपि—

'पिता पितामहश्चैव तथैव प्रपितामहः ।
पिण्डसम्बन्धिनो ह्येते विज्ञेयाः पुरुषास्त्रयः ॥
लेपसम्बन्धिनश्चान्ये पितामहपितामहात्[1]।
प्रभृत्युक्तास्त्रयस्तेषां यजमानस्तु[2] सप्तमः ।
इत्येष मुनिभिः प्रोक्तः सम्बधः साप्तपौरुषः' ॥

(मा. पु. ३१. ३–६)

इति । एतदुक्तं भवति—सप्तानां पुरुषाणामेकपिण्डक्रियाऽनुप्रवेशः सापिण्ड्यहेतुः । तथा च देवदत्तस्य स्वकीयैः पित्रादिभिः

१. H. and I. read पितामह-प्रपितामहात्, but it is incorrect. २. The text substitutes च for तु.

षड्भिः सह सापिण्ड्यम् । तथा पुत्रादिभिः षड्भिः सह सापिण्ड्यम्—इति । ननु—एवं सति भ्रातृ-पितृव्यादिभिः सह सापिण्ड्यं न स्यात् । परिगणितेष्वनन्तर्भावात् । मैवम् । उद्देश्यदेवतैक्येन क्रियैक्यस्यात्र विवक्षितत्वात् । देवदत्तकर्तृकक्रियायां ये देवतात्वेनानुप्रविशन्ति तेषां मध्ये यः कोऽपि भ्रातृ-पितृव्यकर्तृकक्रियायामप्यनुप्रविशतीत्यस्ति तैः सह सापिण्ड्यम् । एवं भार्याणामपि भर्तृकर्तृकपिण्डदानक्रियायां सहकर्तृकत्वात्[१] सापिण्ड्यमिति । तदिदं निर्वाप्यसापिण्ड्यम् ।

अपरे पुनरन्यथा सापिण्ड्यमाहुः । तथा हि—समान एकः पिण्डो देहावयवो येषां ते सपिण्डाः । तत्र पुत्रस्य साक्षात् पितृदेहावयवान्वयेन पित्रा सह सापिण्ड्यम् । तथा पितामहादिभिरपि पितृद्वारेण तच्छरीरावयवान्वयात् । साक्षान्मातृशरीरावयवान्वयेन मात्रा । मातामहादिभिरपि मातृद्वारेण तच्छरीरावयवान्वयात् । तथा पितृव्य-पितृष्वस्रादिभिरपि पितामहदेहावयवान्वयात् । तथा मातृष्वसृ-मातुलादिभिः सह मातामहदेहान्वयात् । पत्न्या सह एकशरीरारम्भकतया पत्युः । एवं भ्रातृभार्याणामप्येकशरीरारम्भकैः स्व-स्वपतिभिः सहैकशरीरारम्भकत्वेन । एवं तत्र तत्र साक्षात् परम्परया वा एकशरीरावयवान्वयेन सापिण्ड्यं योजनीयम्[२] ।

उक्तं द्विविधं सापिण्ड्यं यस्या नास्ति सेयमसापिण्डा तामुद्वहेत् । ननु—एवं सति न काप्युद्वाहः सम्भवेत् । सर्वत्र सापिण्ड्यस्य कथंचिद्योजयितुं शक्यत्वात् । विधातृशरीरानुवृत्तेर्दुष्परिहरत्वात् ।

१. I. reads सहकर्तृत्वात्. २. H. reads प्रयोजनीयम्.

'बहु स्यां प्रजायेय'।

(छां. उ. ६. २. ३; तै. उ. २. ६. १)

इति श्रुतेः। नैष दोषः। अविशेषेण[1] प्राप्तस्य सापिण्ड्यस्य सप्तसु पञ्चसु च पुरुषेषु सङ्कुचितत्वेन तदूर्ध्वं सापिण्ड्यनिवृत्तेः[2]। तथा च गौतमः–

पिण्डनिवृत्तिः[3] सप्तमे पञ्चमे वा'।

(गौ. स्मृ. १४. १३)

इति। याज्ञवल्क्योऽपि–

'पञ्चमात् सप्तमादूर्ध्वं मातृतः पितृतस्तथा'।

(या. स्मृ. १. ५३)

इति। मातृपक्षे पञ्चमात् पितृपक्षे सप्तमात् पुरुषादूर्ध्वं 'सापिण्ड्यं निवर्त्तते'–इत्यध्याहृत्य योजनीयम्।

'सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते'।

(म. स्मृ. ५. ६०)

इति मनुस्मरणात्। एतदुक्तं भवति। पितृपक्षे कूटस्थमारभ्य तत्पुत्रादिगणनायां सप्तमादूर्ध्वं वर-वध्वोर्विवाहो न दुष्यति। मातृपक्षे च कूटस्थमारभ्य तत्पुत्रादिपरिगणनायां वर-वध्वोर्माता चेत् पञ्चमी भवति तदा तयोः सापिण्ड्यनिवृत्तेर्विवाहो न दोषायेति। यत्तु विष्णुपुराणवचनम्–

---

१. D. omits अविशेषेण. २. D. omits the following portion—

सापिण्ड्यनिवृत्तेः। तथाऽत्र गौतमः–

'पिण्डनिवृत्तिः सप्तमे पञ्चमे वा'

इति। याज्ञवल्क्योऽपि–

'पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा।

इति। मातृपक्षे पञ्चमात् पितृपक्षे सप्तमात् पुरुषादूर्ध्वं. ३. Except A. and the text of Gautama all others read सपिण्डनिवृत्तिः.

'पञ्चमीं मातृपक्षात्तु पितृपक्षात्तु सप्तमीम् ।
गृहस्थ उद्वहेत् कन्यां न्याय्येन विधिना नृप'[1]॥
(वि. पु. ३. ११. २३)

इति । तत्र सप्तमीं पञ्चमीमतीत्येत्यध्याहार्यम् । अन्यथा[2]

'पञ्चमात् सप्तमादूर्ध्वम्'।
(या. स्मृ. १. ५३)

इति वचनविरोधात् ।

'पञ्चमे सप्तमे चैव येषां वैवाहिकी क्रिया ।
क्रियापरा अपि हि ते सर्वतः[3] शूद्रतां गताः'॥

इति मरीचिवचनविरोधाच्च । यद्यपि पैठीनसिना कल्पद्वयमुक्तम्—

'प[4]ञ्चमीं मातृतः परिहरेत् सप्तमीं पितृतः ।
त्रीन्मातृतः पञ्च पितृतो वा' ।

इति । तत्र द्वितीयः कल्पोऽसमानजातीयविषयः । यतः शङ्ख आह—

'यद्येकजाता बहवः पृथक्क्षेत्राः पृथग्धनाः ।
एकपिण्डाः पृथक्शौचाः पिण्डस्त्वावर्त्तते त्रिषु' ॥

इति । अयमर्थः । येषामेकः पिता मातरो भिन्नजातीयास्ते मातृभेदादसमानजातीयाः तथापि पित्रैक्यादस्ति तेषां सापिण्ड्यम् । तच्च त्रिषु पुरुषेष्वतीतेषु निवर्त्तते—इति । ननु—एवं सति पितृपक्षेऽपि त्रिभिः पुरुषैः सापिण्ड्यनिवृत्तेः 'पञ्च पितृतो वा' इति वचनं विरुद्ध्येत । एवं तर्हि—

---

१. D. reads याचेत विधिना नृप. २. D. reads अन्यथाऽपि च 'मातुः सप्तमादूर्ध्वम्.' ३. D. and G. read सर्वे ते शूद्रतां; while B. C. F. and H. read सर्वे ते ऽशुद्धतां. ४. I. reads पञ्च मातृतः परिहरेत्सप्त पितृतः.

'त्रीन्मातृतः पञ्च पितृतो वा' ।

इति पैठीनसिवचनं सजातीयेष्वेवाऽर्वाङ्निषेधपरम्[१] । अनुकल्पो वाऽस्तु ।

'मातृतः पितृतस्तथा' ।

( या. स्मृ. १. ५३ )

इत्यत्र पितृशब्देन बीजिनोऽपि संग्रहः । तथा च गौतमः—

'ऊर्ध्वं सप्तमात् पितृबन्धुभ्यः । ( ३ ) बीजिनश्च । (४) मातृबन्धुभ्यः पञ्चमात्' । (५)

( गौ. स्मृ. ४. ३–५)

इति । यो हि नियोगात् पुत्रमुत्पादयति स बीजी । पितृमातृबान्धवाः स्मृत्यन्तरे—

'पितुः पितृष्वसुः पुत्राः पितुर्मातृष्वसुःसुताः ।
पितुर्मातुलपुत्राश्च विज्ञेयाः पितृबान्धवाः ॥
मातुः पितृष्वसुः पुत्रा मातुर्मातृष्वसुः सुताः ।
मातुर्मातुलपुत्राश्च विज्ञेया मातृबान्धवाः'॥

इति । ननु—असपिण्डामिति न वक्तव्यम्[२] । वक्ष्यमाणेन 'असमानार्ष-गोत्रजाम्—इत्यनेनैव सपिण्डाया विवाहनिषेधसिद्धेः । सत्यम् । तथापि या मातुरसपिण्डा भवति सैवोद्वाहकर्मणि प्रशस्तेति वक्तुम् । तथा च मनुः—

'असपिण्डा च या मातुरसगोत्रा च या पितुः ।
सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने'॥

( म. स्मृ. ३. ५ )

---

१. I. reads सजातिष्वेव निषेधपरम् for सजातीयेष्वेवाऽर्वाङ्निषेधपरम्.
२. I. reads वक्तव्यम्.

इति । या मातुरसपिण्डा असगोत्रा च, या पितुरसगोत्रा चकारादसपिण्डा च सा मैथुने मिथुनसाध्ये दारकर्मणि द्विजातीनां प्रशस्ता परिणेयेत्यर्थः । ननु—अत्र मातृग्रहणमनर्थकम् । पितृगोत्रसापिण्ड्यनिषेधेनैव मातृगोत्रसापिण्ड्यनिषेधसिद्धेः । तस्याः पृथक् पिण्ड-गोत्रयोरभावात् ।

'एकत्वं सा गता भर्तुः पिण्डे गोत्रे च सूतके ।
स्वगोत्राद्भ्रश्यते नारी विवाहात् सप्तमे पदे' ॥

इति वचनात् । मैवम् । गान्धर्वादिविवाहेषु कन्याप्रदानाभावेन पितृगोत्र-सापिण्ड्ययोरनिवृत्तेः । तथा च मार्कण्डेयपुराणम्—

'ब्राह्मादिषु विवाहेषु या तूढा कन्यका भवेत् ।
भर्तृगोत्रेण कर्त्तव्या तस्याः पिण्डोदकक्रिया ॥
गान्धर्वादिविवाहेषु पितृगोत्रेण धर्मवत्' ॥

(ग. पु. २. २६. २१-२२)

इति । एतेन मातुलसुताविवाहविषये विवादोऽपि परास्तः । तथा हि—तन्निषेधवचनानि गान्धर्वादिविवाहोढजविषयाणि । तत्र सापिण्ड्यनिवृत्तेरभावात् । तदनुग्राहकश्रुति-स्मृति-सदाचारात् न ब्राह्मादिविवाहोढजविषयाणि । तत्र सापिण्ड्यनिवृत्तेः । तानि च निषेधवचनानि यथा । तत्र शातातपः—

'मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च ।
समानप्रवरां चैव द्विजश्चान्द्रायणं चरेत्' ॥

इति । पैठीनसिरपि—

१. I. reads धर्मवित्. २. I. reads विषयः.

'पितृ-मातृष्वसृ-दुहितरो मातुलसुताश्च[1] धर्मतस्ता भगिन्यः। ता वर्जयेदिति विज्ञायते'।

इति। सुमन्तुरपि—

'पितृपत्न्यः सर्वा मातरः। तद्भ्रातरो मातुलाः। तद्भ[2]गिन्यो मातृष्वसारः। तद्दुहितरश्च भगिन्यः। तदपत्यानि भागिनेयानि। अन्यथा सङ्करकारि[3]ण्यः'।

इति। व्यासः—

'मातुः सपिण्डा यत्नेन वर्जनीया द्विजातिभिः'।

इति। ननु—अविशेषेण प्रवृत्तानामेषां वचनानां कथं विशेषविषयता? विशेषवचनबलादिति ब्रूमः। तथा च मनुः—

'पैतृष्वसेयीं भगिनीं स्वस्रीयां मातुरेव च।
मातुश्च भ्रातु[4]राप्तस्य गत्वा चान्द्रायणं चरेत्॥
एतास्तिस्रस्तु भार्यार्थे नोपयच्छेत्तु[5] बुद्धिमान्'।

(म. स्मृ. ११. १७१–१७२)

इति। भगिनीपदं पैतृष्वसेयादिविशेषणम्। आप्तस्येति मातुर्भ्रातृविशेषणम्। तत्र सुतामित्यध्याहारः। आप्तस्य सन्निकृष्टस्य सापिण्डस्य गान्धर्वा[6]दिविवाहोढायाः मातुर्भ्रातुरित्यर्थः। पैतृष्वसेयीमित्यत्राप्यनिवृत्तसापिण्ड्या गान्धर्वादिनोढा पितृष्वसा विवक्षिता। तथा च सति तद्दुहितुर्भगिनीति विशेषणं सार्थकम्। ब्राह्मादिविवाहेषु सापिण्ड्यनिवृत्तेः

---

१. B. C. D. F. G. and H. omit च; while D. reads पितृष्वसृदुहितरो मातृष्वसृ-मातुलसुताः. २. B. C. D. F. and G. omit तद्भगिन्यो मातृष्वसारः. ३. B. C. and F. read -कारिणः. ४. The text reads भ्रातुस्तनयां. ५. G. and I. read नोपयच्छेत. ६. B. C. D. F. and G. read गान्धर्वादिनोढामातुः.

भगिनीपदं नान्वियात् । अयमेव न्यायो मातृष्वस्रीयाया-मपि योजनीयः । तस्माद्भगिन्यंशपदोपेतमनुवचनबलादविशेषे निषेधो विशेषविषय एवोपसंह्रियते । ननु–ब्राह्मादिविवाहविषये मातुलसुताया इव मातृष्वसृसुताया अपि विवाहः प्राप्नुयात् । तन्न । शिष्टगर्हितत्वेन तत्र निषेधस्मृतिकल्पनात् । शिष्टगर्हितस्यानुपादेयत्वं याज्ञवल्क्य आह–

'अस्वर्ग्यं लोकविद्विष्टं धर्ममप्याचरेन्न तु' ।

(या. स्मृ. १. १५६)

इति । यद्यपि मातुलसुतापरिणयनमुदीच्यशिष्टगर्हितं तथापि दाक्षिणात्यशिष्टैराचरितत्वेन नाविगीतो ऽयमुदीच्यानामाचारः । न च दाक्षिणात्यानां रागमूलत्वं शङ्कनीयम् । विधि-निषेधपरीक्षकैरेव तद्विवाहकरणात् । मातृष्वसुः सुताविवाहस्तु अविगीतेन शिष्टाचारेण गर्हितः । मातुलसुताविवाहस्यानुग्राहका[२]ः श्रुत्यादयः । तत्र मन्त्रवर्णः–

'[३]आयाहीन्द्र पथिभिरीळितेभिर्
यज्ञमिमं नो भागधेयं जुषस्व ।
तृप्तां जहुर्मातुलस्येव योषा
भागस्ते पैतृष्वसेयी [४]वपामिव' ॥

( ऋ. सं. ७. ४. ३. २२. ६. )

इति । अयमर्थः–हे इन्द्र पथिभिरी[५]डितेभिः स्तुतैः [६]सह

१. A. reads this sentence as follows -अयमेव न्यायो मातुर्विषये । मातुलसुतापरिणय उदीच्यशिष्टगर्हितः । तथापि दाक्षिणात्यशिष्टैराचरितविषये मातुलसुताया इव मातृष्वसृसुताया अपि विवाहः प्राप्नुयात्. २. I. reads -ग्राहका श्रुतिः. ३. This Mantra appears in Rigveda Samhita Mandala VII. Anuvâka III. in Parisishta. Eight Mantras are given after that Anuvâka under the name Parisishta or Appendix. ४. I. reads वपाम् for वपामिव. ५. Here some manuscripts substitute -ळि-for -डि- ६. B. C. D. F. G. and H. do not insert सह.

नो ऽस्माकमिमं यज्ञमायाहि । आगत्य च अस्मादिभिर्दीयमानं भागधेयं जुषस्व । तृप्तामाज्यादिना संस्कृतां वपां त्वामुद्दिश्य जहुः त्यक्तवन्तः । तत्र दृष्टान्तद्वयम् । यथा मातुलस्य योषा दुहिता भागिनेयस्य भागः भजनीया भागिनेयेन परिणेतुं योग्या, यथा च पैतृष्वसेयी पौत्रस्य भागः तथाऽयं ते तव भागो वपाऽऽख्यः- इति । वाजसनेयके ऽपि-

'तस्माद्वा[१] समानादेव पुरुषादत्ता चाऽद्यश्च जा-
यते उत तृतीये सङ्गच्छावहै चतुर्थे सङ्गच्छावहै'।

इति । समानादेकस्मात् पुरुषात् अत्ता भोक्ता अद्यश्च भोग्यः द्वावप्युत्पद्येते । तौ च मिथः सङ्कल्पयतः कूटस्थमारभ्य तृतीये चतुर्थे वा पुरुषे सङ्गच्छावहै विवहावहै इत्यर्थः ।

यद्यप्ययमर्थवादः तथापि मानान्तरविरोधाभावात् स्वार्थे प्रमाणम् । विरोधिवचनानाम[२]भावात् । मा[३]तृसपिण्डाविषयत्वस्य वर्णितत्वात् च । तस्मादविरुद्धार्थवादेनानूदितत्वादुपरिधारणवद्विधिः कल्पयितुं शक्यते ।

तथा हि-प्रेताग्निहोत्रे (पू. मी. वार्ति. ३. ४. १५) श्रूयते-

'अधस्तात् समिधं धारयन्ननुद्रवेत्
उपरि हि देवेभ्यो य[४]ज्ञं धारयति'।

इति । तत्र पैतृकस्य हविषोऽधस्तात् समन्त्रकं समिद्धारणं विधाय तद्वा[५]क्यशेषेण समिधो हविरुपरिधारणं दैवे कर्मणि यत् श्रु[६]तं तत् किमर्थवादः-उत वि[७]धिरयम्?-इति संशयः ।

---

१. B. C. D. F. G. and H. read तस्माद्ध for तस्माद्वा. २. I. omits अभावात्. ३. B. C. D. F. G. and H. omit मातृ-. ४. D. and I. omit यज्ञं. ५. I. reads वाक्यशेषे समिधां. ६. G. and H. read कृतं for श्रुतं. ७. B. C. and F. read विधायकः, H. and I. read विधीयते.

तत्राऽध्योचारणविधिस्तावकत्वेन तदेकवाक्यतालाभादर्थवाद इति—पूर्वः पक्षः। प्रसिद्धं ह्यर्थमनूद्य तेन स्तुतिर्युक्ता। उपरि धारणं तु न क्वापि प्रसिद्धम्। अतस्तावकत्वायोगाद्वाक्यभेदमभ्युपगम्याऽप्यपूर्वार्थत्वाद्विधिः कल्पितः।

एवं 'तृतीये पुरुषे सङ्गच्छावहै'—इत्यादावपि अपूर्वार्थत्वेन मातुलसुतां विवहेत्—इति विधिः कल्प्यते। तस्माच्छ्रुता[1]वनुग्रहीतोऽयं विवाहः। स्मृतयस्तु ब्राह्मादिषु सापिण्ड्यनिराकरणेन मातुलसुताविवाहप्रापकतया दर्शिताः। शिष्टाचारश्च दाक्षिणात्यानामविगीत उदाहृतः।

केचित्तु—आसुरादिष्वपि देशविशेषेण मातुलसुताविवाहो धर्म्य—इति मन्यन्ते। उदाहरन्ति च वचनानि। तत्र बौधायनः—

पञ्चधा विप्रतिपत्तिर्दक्षिणतः (* * *)। (१)
[2]अनुपनीतेन (* * *) भार्यया[3] च सहभोजनं
पर्युषितभोजनं[4] मातुलदुहितृ-पितृष्वसृदुहितृ-
परिणयनमिति[5]। (३) तथोत्तरत ऊर्णावि[6]-
क्रयः सीधुपानमुभयतोदद्भिर्व्यवहारः आयुधी-
यकं समुद्रयानमिति[7]। (४), इतरदितरस्मिन्
कुर्वन् दुष्यति इतर इतरस्मिन्। (५) तत्र[8]
तत्र देशप्रामाण्यमेव स्यात्। (६)
(बौ. स्मृ. १. १. २.१–६)

१. I. reads शास्त्रानुग्रहीतोऽयं विवाहः. २. The text (by E. Hultzsch) adds यथैतत् and reads अनुपेतेन. ३. The text (E. Hultzsch) omits च, and reads स्त्रिया सह-. ४. B. C. F. and H. omit पर्युषितभोजनं. ५. The text reads मातुल-पितृष्वसृदुहितृगमनं. ६. B. C. and F. omit ऊर्णाविक्रयः. ७. The text reads समुद्रसंयानं. ८. All others except A. and the text read तद्देशं प्रामाण्यात् for तत्र तत्र देशप्रामाण्यमेव स्यात्.

इति। इतरो दाक्षिणात्य इतरस्मिन् उत्तरदेशे मातुल-सम्बन्धं कुर्वन् दुष्यति। न स्वदेशे। तथेतर उदीच्य इतरस्मिन् दक्षिणदेशे सीधुपानादिकं कुर्वन् दुष्यति। न स्वदेशे। कुतः? देशप्रामाण्यात्। देशनिबन्धनत्वादाचारप्रामाण्यस्येत्यर्थः[1]। तथा च देवलः—

'यस्मिन् देशे य आचारो न्यायदृष्टः सुकल्पितः[2]।
स तस्मिन्नेव कर्तव्यो न तु देशान्तरे स्मृतः'[3]॥

इति। भृगुः[4]—

'यस्मिन् देशे पुरे ग्रामे त्रैविद्ये नगरेऽपि वा।
यो यत्र विहितो धर्मस्तं धर्मं न विचालयेत्'[5]॥

इति। ननु—शिष्टाचारप्रामाण्ये स्वदुहितृविवाहोऽपि प्रसज्येत। प्रजापतिना[6] तथाऽऽचरणात्। तथा च श्रुतिः—

'प्रजापतिर्वै[7] स्वां दुहितरमभ्यध्यायत्[8]'।

इति[9]। मैवम्। 'न देवचरितं चरेत्'—इति न्यायात्। अत एव बौधायनः—

'अनुष्ठितं तु यद्देवैर्मुनिभिर्यदनुष्ठितम्।
नाऽनुष्ठेयं मनुष्यैस्तदुक्तं कर्म समाचरेत्'॥

(बौ. स्मृ. १. १. २. १२)

---

१. I. omits -प्रामाण्यस्य. २. I. substitutes तु for सु-. ३. B. C. and F. read देशाचारैः स्मृतौ नृगोः, D. reads देशाचारः स्मृतो भृगोः and G. reads देशाचारः स्मृतो भृगोः for न तु देशान्तरे स्मृतः. ४. All others except A. and H. omit भृगुः. ५. D. and G. read न विचारयेत्. ६. H. and I. read प्रजापतेराचरणात्; while D. substitutes तदा for तथा. ७. I. omits वै. ८. D. H. and I. read अभ्यगात्, and for the same B. C. F. read अभ्यधापयत्. ९. After this word D. inserts न्यायात्.

इति। तदेवं पूर्वोक्त[1]ब्राह्मादिविवाहव्यवस्थया देशभेदविषयव्यवस्थया च[2] मातुलसुताविवाहो[3] 'ऽसपिण्डाम्'—इत्यादिशास्त्रादेव सिद्धः। यवीयसीं वयसा कायपरिमाणेन च न्यूनाम्। तत्र वयोन्यूनताया इयत्तामाह मनुः—

'त्रिंशद्वर्षोद्वहेत्[4] कन्यां हृद्यां द्वादशवार्षिकीम्।
त्र्यष्टवर्षो[5]ऽष्टवर्षां वा धर्मे सीदति सत्वरः'॥

(म. स्मृ. ९. ९४)

इति। बृहस्पतिरपि—

'त्रिंशद्वर्षो दशाब्दां तु भार्यां विन्देत नग्निकाम्।
एकविंशतिवर्षो वा सप्तवर्षामवाप्नुयात्'॥

इति। विष्णुपुराणेऽपि—

'वर्षैरेकगुणां भार्यामुद्वहेत् त्रिगुणः स्वयम्'।

(वि. पु. ३. १०. १६)

इति। अरोगिणीं अचिकित्स्यराजयक्ष्मादिरोगरहिताम्। भ्रातृमतीं ज्येष्ठः कनिष्ठो वा भ्राता यस्याः सा भ्रातृमती। अनेन पुत्रिकाशङ्का व्युदस्यते। अत एव मनुः—

'यस्यास्तु न भवेद्भ्राता न विज्ञायेत वा पिता।
नोपयच्छेत तां प्राज्ञः पुत्रिकाधर्मशङ्कया'॥

(म. स्मृ. ३. ११)

इति। यस्याः पिता पुत्रिकाकरणाभिप्रायवान् वा न वा—इति न विज्ञायते तां नोपयच्छेत्। यत्र तु नैषा शङ्का ता-

---

१. I. omits पूर्वोक्त-. २. B. C. and F. omit च; while D. omits देशभेदविषयव्यवस्थया. ३. I. reads -विवाहः 'न सपिण्डाम्'. ४. Except A. and the text all others read वहेत् for उद्वहेत्. ५. G. reads द्व्यष्टवर्षो; while B. C. aud F. read अष्टवर्षो through mistake.

मभ्रातृकामभ्युपयच्छेदित्यभिप्रायः। 'न विज्ञायेत वा पिता'—इत्युक्तेः वरेण सह सम्प्रतिपत्तिं विनाऽपि पितुः सङ्कल्पमात्रेण कन्या पुत्रिका भवतीति द्रष्टव्यम्। तथा च गौतमः—

'अभिसन्धिमात्रात् पुत्रिकेत्येकेषाम्। (१९)
तत्संशयान्नोपयच्छेदभ्रातृकाम्'।

( गौ. स्मृ. २९. १९–२० )

इति। मनुरपि—

'अपुत्रोऽनेन विधिना सुतां कुर्वीत पुत्रिकाम्।
यदपत्यं भवेदस्यां तन्मम स्यात् स्वधाकरम्' ॥

( म. स्मृ. ९. १२७ )

इति। वरेण सह सम्प्रतिपत्तिकरणं तु पुत्रिकाकरणे स्पष्टमेव विज्ञायते। सा च सम्प्रतिपत्तिर्वसिष्ठेन दर्शिता—

'अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलङ्कृताम्।
अस्यां यो जायते पुत्रः स मे पुत्रो भवेदिति' ॥

( व. स्मृ. १७. १७ )

इति। 'स नौ पुत्रो भवेदिति'—इति क्वचित्पाठः। अस्याश्च पुत्रिकाया गान्धर्वादाविव स्वपित्रादिभिः सह न सापिण्ड्य-सगोत्रत्वनिवृत्तिः। अत एव लौगाक्षिः—

'मातामहस्य गोत्रेण मातुः पिण्डोदकक्रियाम्।
कुर्वीत पुत्रिकापुत्र एवमाह प्रजापतिः' ॥

इति। तदेवमभिहितां पुत्रिकां शङ्कमानः पुत्रार्थी भ्रातृमतीमेवोद्वहेत्। 'असमानार्ष-गोत्रजाम्' ऋषेरिदमार्षं प्रवरः गोत्रप्रवर्त्तकस्य मुनेर्व्यावर्त्तकमुनिगण इत्यर्थः। तद्यथा—गो-

त्रप्रवर्त्तकस्य भरद्वाजस्य व्यावर्त्तकावंगिरो-वृहस्पती । अत एवाङ्गिरस-बार्हस्पत्य-भारद्वाज[1]गोत्रो ऽहमिति प्रयुञ्जते । एवमन्यदप्युदाहार्यम् । गोत्रं तु वंशपरम्पराप्रसिद्धम् । यस्या वध्वा वरेण सह प्रवरैक्यं गोत्रैक्यं वा नास्ति सा वधूर्विवाहमर्हति । क्वचिद्गोत्रभेदे ऽपि प्रवरैक्यमस्ति । तद्यथा—याज्ञवल्क्य-वाधूल-मौनं[2]-मौकानां भिन्नगोत्राणां भार्गव-वीतहव्य-सावेतसेति प्रवरस्यैक्यात् । अतस्तत्र विवाहप्रसक्तौ तद्व्यवच्छेदाय असमानार्षजाम्[3]—इत्युक्तम् । क्वचित् प्रवरभेदेऽपि गोत्रैक्यम् । तद्यथा-आङ्गिरसाम्बरीष-यौवनाश्व-मान्धात्रम्बरीष-यौवना-श्वेति—अत्राङ्गिरस-मान्धातृप्रवरभेदेऽपि यौवनाश्वगोत्रमेकम् । अतस्तत्र विवाहो माभूदित्यर्थंसमानगोत्रग्रहणम् । गोत्रप्रवर्त्तकाश्च प्राधान्येनाऽष्टौ मुनयः । ते चागस्त्याष्टमाः सप्तर्षयः । तथा च बौधायनः—

'विश्वामित्रो जमदग्निर्भरद्वाजो ऽथ गौतमः ।
अत्रिर्वसिष्ठः कश्यप इत्येते सप्त[6] सप्तर्षयः ॥
सप्तर्षीणामगस्त्याष्टमानां यदपत्यं तद्गोत्रमित्याचक्षते' ।

इति । स्मृत्यन्तरे ऽपि—

'जमदग्निर्भरद्वाजो विश्वामित्रो ऽत्रि-गौतमौ ।

---

१. B. C. F. and I. read -भरद्वाज-. २. Only I. reads -सौनकानां for -मौन-मौकानां. ३. D. reads असमानेत्युक्तम्. ४. A. reads असमानार्ष-गोत्रजामित्युक्तम्. ५. I. omits through mistake the following portion—

"विश्वामित्रो जमदग्निर्भरद्वाजो ऽथ गौतमः ।
अत्रिर्वसिष्ठः कश्यप इत्येते सप्त सप्तर्षयः ॥
सप्तर्षीणां अगस्त्याष्टमानां यदपत्यं तद्गोत्रमित्याचक्षते' ।

इति । स्मृत्यन्तरे ऽपि—. ६. B. C. F. and G. do not repeat सप्त.

वसिष्ठ-कश्यपागस्त्या मुनयो गोत्रकारिणः ।
एतेषां यान्यपत्यानि तानि गोत्राणि मन्वते' ॥

इति । एतेषां च गोत्राणामवान्तरभेदाः सहस्रसङ्ख्याकास्तेषां गणास्त्वेकोनपञ्चाशत् । तथा च बौधायनः—

'गोत्राणां च सहस्राणि प्रयुतान्यर्बुदानि च ।
ऊनपञ्चाशदेतेषां प्रवरा ऋषिदर्शनात्' ॥

इति । प्रवर-गोत्रयोः समानत्वासमानत्वे बौधायन-कात्यायन-विश्वामित्र-गर्गादिप्रणीतेषु प्रवरग्रन्थेषु प्रसिद्धे[1] । न चात्र मिलितयोर्गोत्र-प्रवरयोः पर्युदासनिमित्तत्वं शङ्कनीयम् । प्रत्येकं दोषाभिधानात् । तदाह बौधायनः—

'सगोत्रां चेदमत्योपयच्छेन्मातृवदेनां[2] बिभृयात्' ।

इति । शातातपोऽपि—

'परिणीय सगोत्रां तु समानप्रवरां तथा ।
कृत्वा तस्याः समुत्सर्गं तप्तकृच्छ्रं[3] विशोधनम्' ॥

इति । आपस्तम्बः—

'समानगोत्र-प्रवरां कन्यामूढ्वोपगम्य च ।
तस्यामुत्पाद्य चण्डालं[4] ब्राह्मण्यादेव हीयते' ॥

इति । इत्थं कन्यालक्षणं परीक्ष्य कुलमपि परीक्षणीयम् । अत एव मनुः—

'महान्त्यपि समृद्धानि गो-ऽजा-ऽवि-धन-धान्यतः ।
स्त्रीसम्बन्धे दशैतानि[5] कुलानि परिवर्जयेत् ॥

---

१. I. reads प्रसिद्धः through mistake. २. Except A. and I. all others read चेन्मत्योपयच्छेत्. ३. B. C. D. F. and G. read अतिकृच्छ्रं; while A. reads तप्तकृच्छ्रं. ४. I. reads सन्तानं for चण्डालं. ५. D. G. H. and I. read इहेमानि, but the text does not follow this reading.

हीनक्रियं निष्पुरुषं निश्छन्दो रोमशाऽर्शसम् ।
क्षय्यामयाव्यपस्मारि-श्वित्रि-कुष्ठिकुलानि च' ॥
(म. स्मृ. ३. ६–७)

इति । हीनक्रियं यागादिक्रियारहितम् । निष्पुरुषं स्त्रीमात्रशेषम् । निश्छन्दो ऽध्ययनवर्जितम् । यमो ऽपि—

'चतुर्दश कुलानीमान्यविवाह्यानि निर्दिशेत् ।
अनार्षेयं ब्राह्मणानामृत्विजां चैव वर्जयेत् ॥
अत्युच्चमतिह्रस्वं च अतिवर्णं च वर्जयेत् ।
हीनाङ्गमतिरिक्ताङ्गमामयाविकुलानि च ॥
श्वित्रि-कुष्ठि-कुलादीनां कुर्याद्विपरिवर्जनम् ।
सदाकामिकुलं[1] वर्ज्यं रोमशानां च यत्कुलम् ॥
अपस्मारिकुलं यच्च यच्च पाण्डुकुलं भवेत्' ।

इति । अनार्षेयं अविज्ञातप्रवरम् । एतच्च हीनक्रियादिवर्जनं तथाविधापत्यपरिहारार्थम् ।

'कुलानुरूपाः प्रजाः सम्भवन्ति' ।
(हा. स्मृ. २–१३)

इति हारीतवचनात् । पुराणे ऽपि—

'मातुलान् भजते पुत्रः कन्यका भजते पितॄन् ।
यथाशीला भवेन्माता तथाशीलो भवेत् सुतः[2]' ॥

इति । मनुरपि—

'पितुर्वा भजते शीलं मातुर्वोभयमेव वा ।
न कथञ्चन दुर्योनिः प्रकृतिं स्वां विमुञ्चति[3]' ॥

१. B. C. D. F. G. and H. read -कामकुलं. २. D. G. and H. read नृप for सुतः. ३ B. C. and F. read प्रकृतिं स्वां निगच्छति, D. and G. read प्रकृतिं स्वां च गच्छति, and H. reads दुर्योनिप्रसूतिः स्वानि गच्छति.

इति । हेयकुल[1]मुक्तम् । उपादेयं तु याज्ञवल्क्य आह—

‘दशपूरुषविख्यातात् श्रोत्रियाणां महाकुलात्’।

( या. स्मृ. १. ५४ )

इति । मातृतः पितृतः पञ्च पञ्च पुरुषा विख्याता यस्मिन् कुले तद्दशपुरुषविख्यातं तस्मात्-महाकुलात् पुत्र-प[2]श्वादि-समृद्धात् कन्यामुद्वहेदित्यर्थः ।

मनुरपि—

‘उत्तमैरुत्तमैर्नित्यं सम्बन्धानाचरेत् सह[3] ।
निनीषुः कुलमुत्कर्षम[4]धमानधमांस्त्यजेत्’॥

( म. स्मृ. ४. २४४ )

इति । अत्रोत्तमान् स एवाह—

‘विशुद्धाः कर्मभिश्चैव श्रुति-स्मृतिनिदर्शितैः ।
अविप्लुतब्रह्मचर्या महाकुलसमन्विताः ॥
महाकुलैश्च सम्बन्धा म[5]हत्स्वेव व्यवस्थिताः ।
सन्तुष्टाः सज्जनहिताः साधवः समदर्शिनः ॥
लोभ-राग-द्वेषा-ऽमर्ष-मान-मोहादिवर्जिताः ।
अक्रोधनाः सुप्रसादाः कार्याः सम्बन्धिनः स[6]दा’॥

इति । अधमानाह स[7] एव—

‘ये स्तेनाः पिशुनाः क्लीबा ये च नास्तिकवृत्तयः ।
विकर्मणा च जीवन्तो विकृताकृतयस्तथा ॥

१. H. reads -कुलत्वं. २. I. reads -शस्यादि. ३. D. reads सदा for सह. ४. B. C. D. F. and H. read -मवमानवमांस्त्यजेत्; while G. reads -मधमानयमांस्त्यजेत्. ५. D. reads महतश्च, G. reads महत्त्वे च and I. reads महत्त्वेन for महत्स्वेव. ६. D. and G. read तथा for सदा; while H. reads तदा ७. B. C. D. F. G. and H. omit स एव.

प्रबद्धवैराः शूर्यै राजकिल्बिषिणस्तथा ।
ब्रह्मस्वादननित्याश्च कदर्याश्च विगर्हिताः ॥
अप्रजा येषु वंशेषु स्त्रीप्रजाप्रसवस्तथा ।
पतिघ्न्यश्च सुवासिन्यः ताश्च[1] यत्नेन वर्जयेत्'॥

इति । कन्यादाने वरनियमो गौतमेन दर्शितः—

'विद्या[2]-चारित्र-बन्धु-लक्षण[3]-शील-सम्पन्नाय दद्यात्' ।
(गौ. स्मृ. ४. ९)

इति । यमोऽपि—

'कुलं च शीलं च वपुर्वयश्च
विद्यां च वित्तं च सनाथतां[4] च ।
एतान् गुणान् सप्त परीक्ष्य देया
कन्या बुधैः शेषमचिन्तनीयम्'॥

इति । याज्ञवल्क्यः—

'एतैरेव गुणैर्युक्तः सवर्णः श्रोत्रियो वरः[5] ।
यत्नात् परीक्षितः पुंस्त्वे युवा धीमान् जनप्रियः'॥
(या. स्मृ. १. ५५)

इति । एतैः कन्यकायामुक्तैर्गुणैर्युक्तः[6] । पुंस्त्वपरीक्षोपायस्तु नारदेन दर्शितः—

'यस्या[7]ऽप्सु प्लवते वीर्यं[8] ह्रादि मूत्रं च फेनिलम् ।
पुमान् स्याल्लक्षणैरेतैर्विपरीतैस्तु[9] षण्ढकः ॥

---

१. I. reads तांश्च. २. Except A. and the text of Gautama read विद्या-ऽऽचार- for विद्या-चारित्र-. ३. The text does not insert -लक्षण-. ४. D. reads सनातनां च. ५. D. and G. read नरः. ६. I. reads कन्यकायामुक्तलक्षणैः; while B. C. D. F. G. and H. read कन्यकायामुक्तगुणैर्युक्तः. ७. The text of Nârada reads रेतोस्योत्प्लवते नाऽप्सु. ८. B. C. D. F. and G. read बीजं for वीर्यं. ९. B. C. D. F. G. H. and I. read विपरीतस्तु; while B. C. F. and G. substitute पण्डकः for षण्ढकः.

चतुर्दशविधः शास्त्रे षण्ढो[1] दृष्टो मनीषिभिः ।
चिकित्स्यश्चा ऽचिकित्स्यश्च तेषामुक्तो विधिः क्रमात् ॥
निसर्गषण्ढो[2] वध्रिश्च[3] पक्षषण्ढस्तथैव च ।
अभिशापाद्गुरो रोगाद्देवक्रोधात्तथैव च ॥
ईर्ष्याषण्ढश्च सेव्यश्च वातरेता मुखेभगः ।
आक्षिप्तो मोघबीजश्च शालीनो ऽन्यापतिस्तथा' ॥
( ना. स्मृ. १२. १०–१३ )

इति । निसर्गषण्ढः स्वभावतो लिङ्ग-वृषणहीनः । वध्रिः[4] छिन्नमुष्कः । पञ्चदश दिनानि स्त्रियमासेव्यमानः सन् सकृद्भोगक्षमः[5] पक्षषण्ढः । गुरुशापषण्ढादयस्त्रयः स्पष्टाः । ईर्षया पुंस्त्वमुत्पाद्यते[6] यस्य स ईर्ष्याषण्ढः । ह्युपचारविशेषेण पुंस्त्वशक्तिर्यस्य स सेव्यषण्ढः । वातोपहतरेतस्को वातरेताः । यस्य मुख एव पुंस्त्वशक्तिः न योनौ स मुखेभगः । रेतोनिरोधात् षण्ढीभूत आक्षिप्तषण्ढः । गर्भाधानासमर्थबीजः मोघबीजः । अप्रगल्भतया क्षोभाद्वा नष्टपुंस्त्वः शालीनः । यस्य[7] भार्याव्यतिरेकेणान्यासु पुरुषभावः सोऽन्यापतिः । एतच्च परीक्ष्य ज्ञेयम् । अत्र कारणमाह स एव–

'अपत्यार्थं स्त्रियः सृष्टाः स्त्री क्षेत्रं बीजिनो नराः ।
क्षेत्रं बीजवते देयं ना ऽबीजी क्षेत्रमर्हति' ॥
( ना. स्मृ. १२. १९ )

---

१. B. C. F. and G. read पण्डो. २. B. C. F. and G. substitute everywhere पण्ड- for षण्ढ-. ३. B. C. F. and H. read वध्रः, I. also follows the same reading and D. G. read वन्ध्यः. ४. B. C. F. and H. read वध्रः, D. and G. read वन्ध्यः. ५. B. C. D. F. G. and H. omit -मानः सन् and read स्त्रियमासेव्य सकृद्भोग-. ६. I. reads उत्सद्यते through mistake. ७. Except A. and I. all others omit यस्य.

इति। षण्ढवदन्यानपि वर्जनीयान्नरानाह कात्यायनः—

'दूरस्थानामविद्यानां मोक्षमार्गानुसारिणाम्।
शूराणां निर्धनानां च न देया कन्यका बुधैः'॥

इति। कीदृशाय तर्हि देया? इत्यत आह मनुः—

'उत्कृष्टाया[1]ऽभिरूपाय वराय सदृशाय च।
अप्राप्तामपि तां तस्मै कन्यां देया[2]द्यथाविधि'॥

(म. स्मृ. ९. ८८)

इति।[3] अप्राप्तामपीति अप्राप्तविवाहसमयां बालिका[4]मपीत्यर्थः। प्राशस्त्यमाह मरीचिः[5]—

'जन्मतो[6] गर्भाधानाद्वा पञ्चमाब्दात् परं शुभम्।
कुमारीवरणं[7] दानं मेखलाबन्धनं तथा'॥

इति। बौधायनोऽपि—

'दद्याद्गुणवते कन्यां नग्निकां ब्रह्मचारिणे।
अपि वा गुणहीनाय नोपरुन्ध्यात् रजस्वलाम्'॥

(बौ. स्मृ, ४. १. ११)

इति। यत्तु यमेनोक्तम्—

'काममा मरणात्तिष्ठेद्गृहे कन्यर्तुमत्यपि।
न[8] त्वेवैनां प्रयच्छेत गुणहीनाय कर्हिचित्' ॥

(म. स्मृ. ९. ८९)

१. B. C. D. F. G. and H. read ऽनुरूपाय for ऽभिरूपाय. २. Except A. and the text others read दद्याद्विचक्षणः. ३. B. C. F. and G. omit इति. ४. H. reads बालकान्. ५. All, except A. omit प्राशस्त्यमाह मरीचिः ६. This verse is omitted by A. B. C. and F. ७. I. reads कुमारीणां तथा for कुमारीवरणं. ८. The text of Manu substitutes च for तु.

इति । तद्गुणवति सम्भवति गुणहीनाय कन्यां न दद्यादित्येवंपरम् । न तु सर्वथा गुणहीननिषेधपरम् । नो चेत्—

'अपि वा गुणहीनाय' ।

( बौ. स्मृ. ४. १. ११ )

इति बौधायनोक्तोऽनुकल्पो निर्विषयः स्यात् ।

'ऋतुमत्यपि तिष्ठेत्' ।

(म. स्मृ. ९. ८९)

इति वचनं उक्तरीत्या न स्वार्थे तात्पर्यवत् । यतः—

'नोपरुन्ध्याद्रजस्वलाम्' ।

( बौ. स्मृ. ४. १. ११ )

इत्यनेन विरुद्ध्येत । अत एव वासिष्ठोऽपि—

'प्रयच्छेन्नग्निकां कन्यां ऋतुकालभयात् पिता ।
ऋतुमत्यां हि तिष्ठन्त्यां दोषः पितरमृच्छति'॥

इति । संवर्त्तोऽपि

'रोमकाले तु सम्प्राप्ते सोमो भुङ्क्ते तु कन्यकाम् ।
रजःकाले तु गन्धर्वा वह्निस्तु कुचदर्शने ॥ (६९)
तस्मादुद्वाहयेत् कन्यां यावन्नर्तुमती भवेत्' । (६८)

( सं. स्मृ. १. ६९–६८ )

इति । कन्याशब्देन लज्जाद्यभिज्ञानरहितवयोयुक्ता विवक्षिता । तथा च वायुपुराणम्—

---

१. All others except I. omit कन्यां. २. I. reads कामकाले. ३. D. and H. read भुङ्क्तेऽथ. ४. D. G. and H. read गन्धर्वाँ. ५. Except A. all read पुराणे for वायुपुराणम्.

'यावन्न लज्जया[1] ऽङ्गानि कन्या पुरुषसन्निधौ ।
योन्या[2]दीन्यवगूहेत तावद्भवति कन्यका' ॥

इति । संग्रह[3]कारो ऽपि—

'यावच्चैलं न गृह्णाति यावत् क्रीडति पांसुभिः ।
यावद्दोषं न जानाति तावद्भवति कन्यका' ॥

इति । वयोविशेषेण दातुः फलविशेषमाह मरीचिः—

'गौरीं ददन्नाकपृष्ठं वैकुण्ठं रोहिणीं ददन् ।
कन्यां ददद्ब्रह्मलोकं रौरवं तु रजस्वलाम्' ॥

इति । गौर्यादिशब्दार्थः संवर्त्ते[4]न दर्शितः—

'अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी ।
दशवर्षा भवेत् कन्या अत ऊर्ध्वं रजस्वला' ॥

( सं. स्मृ. १. ६६ )

इति । यमो[6] ऽपि—

'अष्टवर्षा भवेद्गौरी नवमे नग्निका भवेत् ।
दशमे कन्यका प्रोक्ता द्वादशे वृषली स्मृता'[5] ॥

इति । मुख्यानुकल्पभेदेन दातृविशेषानाह नारदः—

'पिता दद्यात् स्वयं कन्यां भ्राता वा[7]ऽनुमते पितुः ।
मा[8]तामहो मातुलश्च सकुल्यो बान्धवस्तथा ॥

---

१. I. reads लज्जिता ऽङ्गानि; while D. reads गूहते ऽङ्गानि and G. लज्जतेऽङ्गानि. २. I. reads योन्यादीनि न गूहेत; while D. and G. read योन्यादीन्नाऽवगूहेत. ३. संग्रहकारो ऽपि and the following verse do not appear in D. ४. Except A. all others substitute यमेन for संवर्त्तेन, but the following verse appears in Samvarta. ५. I. reads दशमे कन्यका प्रोक्ता. ६. Except A. all others substitute संवर्त्तो ऽपि for यमो ऽपि, but the following verse is not found in the text of Samvarta. ७. B. C. D. F. and G. substitute च for वा and I. reads ऽनुमतौ; while H. reads ऽनुमतः. ८. The text of Nârada reads पितामहो.

माता त्वभावे सर्वेषां प्रकृतौ यदि वर्त्तते ।
तस्याम[1]प्रकृतिस्थायां कन्यां दद्युः सनाभयः[2] ॥
यदा तु नैव कश्चित्स्यात् कन्या राजानमाव्रजेत्[3]' ।
( ना. स्मृ. १२. २०–२१ )

इति । याज्ञवल्क्यो ऽपि–

'पिता पितामहो भ्राता सकुल्यो जननी तथा ।
कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः ॥
अप्रयच्छन् समाप्नोति भ्रूणहत्यामृतावृतौ ।
गम्यं त्वभावे दातॄणां कन्या कुर्यात् स्वयंवरम्' ॥
( या. स्मृ. १. ६३–६४ )

इति । गम्यं गमनार्हं सावर्ण्यादिगुणयुक्तमित्यर्थः । तथा च नारदः–

'सवर्णमनुरूपं च कुल-शील-वयः[4]-श्रुतैः ।
सहधर्मं चरेत् तेन पुत्रां[5]श्चोत्पादयेत्ततः' ॥
( ना. स्मृ. १२. २३ )

इति । 'सवर्णं वरं प्राप्य'–इत्यध्याहृत्य योजनीयम् । एतच्चा ऽसति रजोदर्शने द्रष्टव्यम् । दृष्टे तु रजसि सत्स्वपि पित्रादिषु कञ्चित्कालं पितुः शासनं परीक्ष्य तदुपेक्षणेन स्वयमेव वरं वरयेत् । तदाह बौधायनः–

---

१. D. reads यस्यां. २. Except A. and the text all read स्वजातयः. ३. The text reads आश्रयेत्. ४. Except A. and the text others read -बल-श्रुतैः. ५. The text reads प्रजाः for पुत्रान्.

'त्रीणि वर्षाण्यृतुमती काङ्क्षेत पितृशासनम् ।
ततश्चतुर्थे वर्षे तु विन्देत सदृशं पतिम् ॥
अविद्यमाने सदृशे गुणहीनमपि श्रयेत्' ।
( बौ. स्मृ. ४. १. १४ )

इति । मनुरपि—

'त्रीणि वर्षाण्युदीक्षेत कुमार्यृतुमती सती ।
ऊर्ध्वं तु कालादेतस्माद् विन्देत सदृशं पतिम् ॥
अदीयमाना भर्त्तारमधिगच्छेद्यदि स्वयम् ।
नैनः किञ्चिदवाप्नोति न च यं सा ऽधिगच्छति' ॥
( म. स्मृ. ९. ९०–९१ )

इति । सा यं भर्त्तारमधिगच्छति सो ऽपि नैनोऽधिगच्छतीत्यर्थः । यत्तु विष्णुनोक्तम्—

'ऋतुत्रयमुपास्यैव कन्या कुर्यात् स्वयंवरम्' ।

इति तद्गुणवद्वरलाभे सति द्रष्टव्यम् । ननु—ऋतुमत्यां कन्याशब्दः कथं प्रयुक्तः? यतो यमेन 'दशवर्षा भवेत् कन्या'—इत्युक्तम् । न च—दशमे वर्षे ऋतुः सम्भवति । नायं दोषः । गौर्यादिशब्दवत् कन्याशब्दस्यापि यमेन परिभाषितत्वात् । सा च परिभाषा फलकथनादावुपयुक्ता । तच्च पूर्वमेवोदाहृतम्—

'कन्यां ददद् ब्रह्मलोकम्' ।

इति । लोकप्रसिद्धस्तु कन्याशब्दो विवाहरहितस्त्रीमात्रमाचष्टे । एवं च सति शास्त्रेषु बहवः कन्याशब्दा अनुगृहीता भवन्ति । तथा चाऽऽनुशासनिके ऽष्टावक्रोपाख्याने वृद्धस्त्रियां प्रयुक्तः—

'कौमारं ब्रह्मचर्यं मे कन्यैवाऽस्मि न संशयः'।

( म. भा. आ. २०. २२ )

इति । शल्यपर्वण्यपि वृद्धस्त्रियां नारदेन प्रयुक्तः—

'असंस्कृतायाः कन्यायाः कुतो लोकास्तवानघे'।

(म. भा. श. ५१.१०)

इति । उमामहेश्वरसंवादेऽपि—

'ऋतुस्नाता तु या शुद्धा सा कन्येत्यभिधीयते'।

इति । ननु—'असंस्कृतायाः'—इति वचने विवाहरहिताया उत्तमलोकाभाव उक्तः सो ऽनुपपन्नः। विवाहरहितानामपि ब्रह्मवादिनीनामुपनयनाऽध्ययनादिभिः उत्तमलोकसम्भवात् । अत एव हारीतेनोक्तम्—

'द्विविधाः स्त्रियः । ब्रह्मवादिन्यः सद्योवध्वश्च। तत्र ब्रह्मवादिनीनामुपनयनमग्नीन्धनं वेदाध्ययनं स्वगृहे च भिक्षाचर्या इति । सद्यो[2] वधूनां तूपस्थिते विवाहे कथञ्चिदुपनयनमात्रं कृत्वा विवाहः कार्यः' ।

(हा. स्मृ. २१. २३)

---

१. The text reads—

'तासां द्विविधो विकल्पः । ब्रह्मवादिन्यः सद्योद्वहाश्चेति । ब्रह्मवादिनीनामुपनयनमग्निसंस्कारः स्वगृहेऽध्ययनं भैक्ष्यचर्या च। प्राप्ते रजसः समावर्तनम् । अतिरिक्ते ऽप्रधानम् । सद्यो ऽपध्वंसनं वा' ।.

२. I. omits सद्यो and terminates the quotation at भिक्षाचर्या, showing that the latter half of the quotation is written by the author, but this is a mistake. ३. This portion appears in the text.

इति । मैवम् । *तस्य कल्पान्तरविषयत्वात् । तथा च यमः[1]—

'पुरा कल्पे कुमारीणां मौञ्जीबन्धनमिष्यते ।
अध्यापनं च वेदानां सावित्रीवाचनं तथा ॥

---

* इदमसमञ्जसमिव प्रतिभाति । तथा हि—हारीतेन प्रथमं—

'अमन्त्रिका तु कार्येयं स्त्रीणामावृदशेषतः ।
संस्कारार्थं शरीरस्य यथाकालं यथाक्रमम्' ॥

(म. स्मृ. २. ६६)

इत्यस्या मनूक्तेः 'शूद्रसमाः स्त्रियः' इत्यस्य च बाधार्थं—

'न शूद्रसमाः स्त्रियः' ।

(हा. स्मृ. २१. २०)

इत्यभिधाय—

'न हि शूद्रयोनौ ब्राह्मण-क्षत्रिय-वैश्या जायन्ते' ।

(हा. स्मृ. २१. २१)

इति हेतुरुपन्यस्तः । अनन्तरं च 'द्विविधाः स्त्रिय' इत्यनेन—

'वैवाहिको विधिः स्त्रीणां संस्कारो वैदिकः स्मृतः ।
पतिसेवा गुरौ वासो गृहार्थो ऽग्निपरिक्रिया' ॥

(म. स्मृ. २. ६७)

इत्यादिवचनानां सद्योवधूपरत्वमभिधाय—

'तस्माच्छन्दसा स्त्रियः संस्कार्याः' ।

(हा. स्मृ. २१. २२)

इति स्त्रीणां वैदिकसंस्कारा विहिताः । 'पुरा कल्पे तु नारीणां' इत्यादि यमोक्तिस्तु भूतार्थवादत्वेन स्वार्थे तात्पर्यवती ।

यदि च कल्पान्तरविषयत्वं हारीतवचनस्य स्वीक्रियेत तर्हि शूद्रयोनिजत्वरूपस्य दोषस्य स्वीकार एव भवेत् । तथा च सति अस्मिन् कल्पे सर्वेषामेव ब्राह्मण-क्षत्रिय-विशां शूद्रयोनिजत्वमापतेदितीमं महान्तमनर्थं शिष्टाः कथं परिहरिष्यन्तीति न जानीमः ।

---

१. D. substitutes मनुः for यमः.

पिता पितृव्यो भ्राता वा नैनामध्यापयेत् परः ।
स्वगृहे चैव कन्याया भैक्ष्यचर्या विधीयते ॥
वर्जयेदजिनं चीरं जटाधारणमेव च' ।

इति । 'अष्टवर्षा भवेद्गौरी'— इत्यादिना विवाहकाल- उक्तः । अथ विवाहभेदा उच्यन्ते । तत्र मनुः—

'चतुर्णामपि वर्णानां प्रेत्य चेह हिताहितान् ।
अष्टाविमान् समासेन स्त्रीविवाहान्निबोधत ॥
ब्राह्मो दैवस्तथैवाऽऽर्षः प्राजापत्यस्तथाऽऽसुरः ।
गान्धर्वो राक्षसश्चैव पैशाचश्चाऽष्टमोऽधमः[1] ' ॥

(म. स्मृ. ३. २०–२१)

इति । एषां क्रमेण लक्षणमाह स एव—

'आच्छाद्य चार्चयित्वा च श्रुत-शीलवते स्वयम् ।
आहूय दानं कन्याया ब्राह्मो धर्मः प्रकीर्त्तितः ॥
यज्ञे तु वितते सम्यगृत्विजे कर्म कुर्वते ।
अलङ्कृत्य सुतादानं दैवं धर्मं प्रचक्षते ॥
एकं गोमिथुनं द्वे वा वरादादाय धर्मतः ।
कन्याप्रदानं विधिवदार्षो धर्मः स उच्यते ॥
[2]सहोभौ चरतां धर्ममिति वाचाऽनुभाष्य तु ।
कन्याप्रदानमभ्यर्च्य प्राजापत्यो विधिः स्मृतः ॥
ज्ञातिभ्यो द्रविणं दत्वा [3]कन्यायै च स्वशक्तितः ।
कन्याप्रदानं स्वाच्छन्द्यादासुरो धर्म उच्यते ॥

१. I. reads मतः for ऽधमः. २. The text reads सह नौ. ३. D. reads कन्यायाश्च स शक्तितः, B. C. F. G. and H. read कन्यायाश्च स्वशक्तितः and the text reads कन्यायै चैव शक्तितः.

इच्छयाऽन्योन्यसंयोगः कन्यायाश्च वरस्य च।
गान्धर्वः स[1] च विज्ञेयो मैथुन्यः कामसम्भवः॥
हत्वा[2] छित्वा च भित्वा च क्रोशन्तीं रुदतीं गृहात्[3]।
प्रसह्य कन्याहरणं राक्षसो विधिरुच्यते॥
सुप्तां मत्तां प्रमत्तां वा रहो यत्रोपगच्छति।
स पापिष्ठो विवाहानां पैशाचः कथितो[4]ऽष्टमः॥

(म. स्मृ. ३. २७-३४)

इति। नारदोऽपि—

'ब्राह्मस्तु प्रथमस्तेषां प्राजापत्यस्[5]तथा परः।
आर्षश्चैवाऽथ दैवश्च गान्धर्वश्चाऽऽसुरस्तथा॥
राक्षसोऽ[6]नन्तरस्तस्मात् [7]पैशाचश्चाष्टमो मतः'॥

(ना. स्मृ. १२. ३८-३९)

इति। वर्णानुपूर्व्येण विवाहनियममाह मनुः—

'[8]षडानुपूर्व्या विप्रस्य क्षत्रस्य चतुरोऽवरान्।
विट्-शूद्रयोस्तु तानेव विद्याद् धर्म्यान्[9]नरराक्षसान्'॥

(म. स्मृ. ३. २३)

इति। आदितः षड्विवाहा विप्रस्य धर्म्याः। आसुरादयश्च-

---

१. B. C. and F. read स इति ज्ञेयो; while G. reads इति विज्ञेयो and the text reads स तु विज्ञेयो. २. G. substitutes हृत्वा; while D. दत्वा for हत्वा. ३. We follow here A. B. C. D. F. G. and the text. H. and I. substitute बलात् for गृहात्. ४ The text and H. read चाऽष्टमोऽधमः; while D. and G. read प्रथितो ऽष्टमः. ५. B. C. D. and F. read ततः परम्; while G. and H. read ततः परः. ६. The text reads ऽनवरः. ७. B. C. D. F. G. and H. read ऽधमः; while the text substitutes स्मृतः for मतः. ८. G. reads षष्ठाऽऽनुपूर्व्यात्; while all others except A. B. C. D. substitute आनुपूर्व्यात् for आनुपूर्व्या. ९. D. G. and I. read धर्म्यान्नराक्षसान्.

त्वारः पौश्चात्याः क्षत्रियाणां धर्म्याः । राक्षसवर्जं त एव वैश्य-शूद्रयोरपि । एतेषां ब्राह्मादीनां मध्ये प्रशस्तानाह स एव—

'चतुरो ब्राह्मणस्याद्यान् प्रशस्तान् कवयो विदुः ।
राक्षसं क्षत्रियस्यैकमासुरं वैश्य-शूद्रयोः' ॥

( म. स्मृ. ३. २४ )

इति । स्मृत्यन्तरे ऽपि—

'चत्वारो ब्राह्मणस्याऽऽद्याः शस्ता गान्धर्व-राक्षसौ ।
राज्ञस्तथाऽऽसुरो वैश्ये शूद्रे चान्त्यस्तु गर्हितः' ॥

इति । गर्हितो न कस्यापि प्रशस्त इत्यर्थः । अन्यविवाहालाभे ब्राह्मणादीनां पैशाचमप्यनुजानाति वत्सः—

'सर्वोपायैरसाध्या स्यात् सुकन्या पुरुषस्य या ।
चौर्येणापि विवाहेन सा विवाह्या रहःस्थिता' ॥

इति । ब्राह्मादीनां फलमाह मनुः—

'दश पूर्वान् परान् वंश्यानात्मानं चैकविंशकम् ।
ब्राह्मीपुत्रः सुकृतकृन्मोचयत्येनसः पितॄन् ॥
दैवोढाजः सुतश्चैव सप्त सप्त परावरान् ।
आर्षोढाजः सुतस्त्रींस्त्रीन् षट् षट् कायोढजः सुतः ॥
ब्राह्मादिषु विवाहेषु चतुर्ष्वेवानुपूर्वशः ।
ब्रह्मवर्चस्विनः पुत्रा जायन्ते शिष्टसम्मताः ॥

१. B. C. D. and F. read पश्चात्; while I. reads पैशाचान्ताः. २. Here I. substitutes संवर्त्तः for वत्सः; but the other manuscripts do not follow him. Also Kamalâkera Bhatta quotes the following verse and reads वत्सः (see Nirṇaya sindhu Vol. III., Part I., Vivaha Prakaraṇa). ३. B. C. F. G. and H. read पूर्वापरान्. ४. The text reads मोचयेदेनसः. ५. B. C. D. F. G. and H. read दैवोढायाः. ६. B. C. D. F. G. and H. read आर्षोढायाः.

रूप-सत्त्व-गुणोपेता धनवन्तो यशस्विनः ।
पर्याप्तभोगा धर्मिष्ठा जीवन्ति च शतं समाः ॥
इतरेष्ववशिष्टेषु[1] नृशंसा ऽनृतवादिनः ।
जायन्ते दुर्विवाहे तु ब्रह्मधर्मद्विषः सुताः' ॥

( म. स्मृ. ३. ३७–४१ )

इति । प्रशस्तेष्वपि चतुर्षु विवाहेषु पूर्वः पूर्वः[2] प्रशस्ततरः । तत्र बौधायनः–

'तेषां[3] चत्वारः पूर्वे ब्राह्मणस्य
तेष्वपि पूर्वः पूर्वः श्रेयान् ।
उत्तरेषामुत्तरोत्तरः[4] पापीयान्' ।

( बौ. स्मृ. १. ११. २०. १०–११ )

इति । ननु–आसुरवदार्षोऽपि पापीयान् । क्रयप्राप्तत्वाविशेषात्[5] । अत एव कश्यपः–

'क्रयक्रीता तु या नारी न सा पत्न्यभिधीयते ।
न सा दैवे न सा[6] पित्र्ये दासीं तां कश्यपोऽब्रवीत्' ॥

(का. स्मृ. ४९ )

इति । मनुरपि आर्षस्य क्रयक्रीतत्वादधर्म्यत्वमभिप्रेत्याह–

'पञ्चानां तु त्रयो धर्म्या द्वावधर्म्यौ स्मृताविह ।
पैशाचश्चाऽऽसुरश्चैव न कर्त्तव्यौ कथञ्चन[7]' ॥

( म. स्मृ. ३. २५ )

इति । ब्राह्मादीनामासुरान्तानां मध्ये ब्राह्म-दैव-प्राजा-

---

१. B. C. F and G. read इतरेषु त्वशिष्टेषु; while I. reads इतरेषु च शिष्टेषु. २. B. C. D. F. and H. do not repeat पूर्वः. ३. D. does not insert तेषां चत्वारः. ४. Except A. and the text all others read इतरेषां. ५. D. and G. substitute क्रम- for क्रय-. ६. I. reads सापिण्ड्ये instead of सा पित्र्ये. ७. The text reads कदाचन for कथञ्चन.

पत्न्याः त्रयो धर्म्याः। क्रयाभावात्। आर्षा-ऽऽसुरौ द्वावधर्म्यौ। क्रयक्रीतत्वात्। तयोरप्यासुरः पैशाचवदापद्यपि न कर्त्तव्यः —इति। तन्न। पञ्चानामिति वचनस्य मतान्तरोपन्यासपरत्वात्। कुत एतत्? यतः स्वयमेवोत्तरत्र गोमिथुनस्य शुल्कत्वं मतान्तरत्वेनानूद्य निषेधति—

'आर्षे गोमिथुनं शुल्कं केचिदाहुर्मृषैव तत्।
अल्पो वाऽपि महान् वाऽपि विक्रयस्तावदेव सः'॥
(म. स्मृ. ३. ५३)

इति। गोमिथुनं शुल्कम्—इति यत् केचिदाहुस्तन्मृषैव। न हि तस्य शुल्कत्वं सम्भवति। तल्लक्षणाभावात्। अनियतपरिमाणत्वं हि शुल्कलक्षणम्। क्रये तद्दर्शनात्। क्रयसाधनं हि मूल्यं देश-कालाद्यपेक्षया अल्पं वा महद्वा भवति। प्रकृते तु परिमाणं नियतम्। यतः आर्षस्तावतैव गोमिथुनेनैव सम्पद्यते न त्वन्यथा। अतः क्रयक्रीतत्वाभावाद्धर्म्य एवाऽऽर्षः। अत एव देवलः—

'पूर्वे विवाहाश्चत्वारो धर्म्यास्तोयप्रदानिकाः[१]।
अशुल्का ब्राह्मणार्हाश्च तारयन्ति द्वयोः[२] कुलम्'॥

इति। न च—गान्धर्वादिविवाहेषु सप्तपदाभिक्रमणाद्यभावात्[३] पतित्वभार्यात्वाभावः—इति शङ्कनीयम्। स्वीकारात् प्राक्[४] तदभावे ऽपि पश्चात्तत्सद्भावात्। तदाह देवलः—

१. B. C. D. F. G. and H. read तोयप्रदानजाः. २. I. reads कुलद्वयम् instead of द्वयोः कुलम्. ३. B. C. D. F. and G. read सप्तम- for सप्त-. ४. D. and H. read प्रागभावेति.

'गान्धर्वादिविवाहेषु पुनर्वैवाहिको विधिः।
कर्त्तव्यश्च त्रिभिर्वर्णैः समयेनाऽग्निसाक्षिकम्'॥

इति। गृह्यपरिशिष्टे ऽपि—

'गान्धर्वा-ऽऽसुर-पैशाचा विवाहो राक्षसश्च यः।
पूर्वं परिग्रहस्तेषु[1] पश्चाद्धोमो विधीयते'॥

इति। होमाकरणे तु न भार्यात्वम्। अत एव वसिष्ठ-बौधायनौ—

'बलादपहृता[2] कन्या मन्त्रैर्यदि न संस्कृता।
अन्यस्मै विधिवद्देया यथा कन्या तथैव सा'॥
(व. स्मृ. १७. ७३; बौ. स्मृ. ४. १. १५)

इति। तस्माद्गान्धर्वादिष्वपि सप्तपदाभिक्रमणसम्भवादस्ति[3] भार्यात्वम्। ब्राह्मादिषु विवाहेषु यद्दानमुक्तं तत्सकृदेव। तथा च याज्ञवल्क्यः—

'सकृत् प्रदीयते कन्या हरंस्तां चोरदण्डभाक्'।
(या. स्मृ. १. ६५)

इति। मनुरपि[4]—

'सकृदंशो[5] निपतति सकृत् कन्या प्रदीयते।
सकृदाह ददानीति त्रीण्येतानि सतां[6] सकृत्'॥
(म. स्मृ. ९. ४७)

इति। एतच्चाऽदुष्टवराभिप्रायम्। यदाह नारदः—

---

१. B. C. F. and H. read परिश्रयस्तेषां; while I. reads परिक्रमस्तेषां. २. The text of Baudhâyana and Vasishtha read बलाचेत् प्रहृता; while H. reads बलादप्युद्धृता. ३. B. C. and F. read सप्तमपदाभिक्रमेण. ४. All others except A. and I. omit मनुरपि, and for मनुरपि D. substitutes तथा. ५. D. reads सकृद्दण्डो. ६. All others except A. and the text read सकृत् सकृत्.

'दत्वा न्यायेन[1] यः कन्यां वराय न ददाति ताम् ।
अदुष्टश्चेद्वरो राज्ञा स दण्डयस्तत्र चोरवत्' ॥
(ना. स्मृ. १२. ३२)

इति । किमयमुत्सर्गः[2]? नेत्याह याज्ञवल्क्यः—

'दत्तामपि हरेत् पूर्वाच्छ्रेयांश्चेद्वर[3] आव्रजेत्' ॥
(या. स्मृ. १. ६५)

इति । एतद्वाग्दानाभिप्रायम् । यस्मै वाचा दत्ता ततोऽन्यश्चेत् प्रशस्ततरो लभ्यते ततस्तस्मै देया न तु दुष्टाय पूर्वस्मै । तथा च गौतमः—

'प्रतिश्रुत्या ऽप्यधर्मसंयुक्ताय न दद्यात्' ।
(गौ. स्मृ. ४. ५)

इति । वरदोषास्तु कात्यायनेनोक्ताः—

'उन्मत्तः पतितः कुष्ठी तथा षण्ढः सगोत्रजः[4] ।
चक्षुः-श्रोत्रविहीनश्च तथाऽपस्मारदूषितः ॥
वरदोषास्तथैवैते कन्यादोषाः प्रकीर्तिताः' ।

इति । यस्तु ऊढायाः पुनरुद्वाहो यम-शातातपाभ्यां दर्शितः—

'वरश्चेत् कुल-शीलाभ्यां न युज्येत कथञ्चन ।
न मन्त्राः कारणं तत्र न च कन्याऽनृतं भवेत् ॥
समाच्छिद्य तु तां कन्यां बलादक्षतयोनिकाम्[5] ।
पुनर्गुणवते दद्यादिति शातातपो ऽब्रवीत्[6] ॥

१. B. C. D. F. G. H. and I. read कान्ताय for न्यायेन. २. B. C. and F. read नियमः for उत्सर्गः. ३. G. reads पूर्वाम्. ४. B. C. D. F. G. and H. read स्वगोत्रजः. ५. D. G. and H. read -योनिजाम्. ६. I. adds इति after इति शातातपोऽब्रवीत्.

हीनस्य कुल-शीलाभ्यां हरन् कन्यां न दोषभाक्।
न मन्त्राः कारणं तत्र न च कन्याऽनृतं भवेत्' ॥

इति। कात्यायनोऽपि—

'स तु यद्यन्यजातीयः पतितः क्लीब एव वा।
विकर्मस्थः सगोत्रो वा दासो दीर्घामयोऽपि वा ॥
ऊढाऽपि देया सो ऽन्यस्मै सप्रावरण-भूषणा'।

इति। मनुरपि—

'नष्टे मृते प्रव्रजिते क्लीबे च पतिते तथा।
पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते' ॥
(ना. स्मृ. १२. ९७)

इति। सोऽयं पुनरुद्वाहो युगान्तरविषयः। तथा चादित्य-पुराणम्।

'ऊढायाः पुनरुद्वाहं ज्येष्ठांशं गोवधं तथा।
कलौ पञ्च न कुर्वीत भ्रातृजायां कमण्डलुम्' ॥

इति। यस्तु कन्यादोषमनभिधाय प्रयच्छति स राज्ञा दण्डयितव्य इत्याह नारदः—

'यस्तु दोषवतीं कन्यामनाख्याय प्रयच्छति।
तस्य कुर्यान्नृपो दण्डं पूर्वसाहसचोदितम्' ॥
(ना. स्मृ. १२. ३३)

इति। याज्ञवल्क्योऽपि—

'अनाख्याय ददद्दोषं दण्ड्य उत्तमसाहसम्'।
(या. स्मृ. १. ६६)

---

१. B. C. and F. read वाऽन्यस्मै; while D. G. and H. read चाऽन्यस्मै.
२. I. omits this whole verse and इति। याज्ञवल्क्योऽपि through mistake.

इति। कन्यादोषास्तु नारदेन दर्शिताः—

'दीर्घ-कुत्सितरोगार्त्ता व्यङ्गा संस्पृष्टमैथुना[1]।
दृष्टान्यगतभावा[2] च कन्यादोषाः प्रकीर्त्तिताः'॥

(ना. स्मृ. १२. ३६)

इति। न केवलं दोषमनाख्याय ददतो दण्डः अपि तु सा ऽपि परित्याज्येत्याह मनुः—

'विधिवत् प्रतिगृह्यापि त्यजेत् कन्यां विगर्हिताम्।
व्याधितां विप्रदुष्टां वा छद्मना चोपपादिताम्'॥

(म. स्मृ. ९. ७२)

इति। नारदो ऽपि—

'नाऽदुष्टां दूषयेत् कन्यां नाऽदुष्टं दूषयेद्वरम्।
दोषे सति[3] न दोषः स्यादन्योन्यं त्यजतोस्तयोः[4]'॥

(ना. स्मृ. १२. ३१)

इति। एतत् सप्तमपदाभिक्रमणादर्वाग्[5]वेदितव्यम्। तत्रैव भार्यात्वस्योत्पत्तेः। अत एव मनुः—

'पाणिग्रहणिका[6] मन्त्रा नियतं दारलक्षणम्।
तेषां निष्ठा तु विज्ञेया विद्वद्भिः सप्तमे पदे'॥

(म. स्मृ. ८. २२७)

इति। यमो ऽपि—

'नोदकेन न वा वाचा कन्यायाः पतिरिष्यते[7]।
पाणिग्रहणसंस्कारात् पतित्वं सप्तमे पदे'॥

---

१. The text संसृष्ट-. २. The text दुष्टा-. ३. The text reads तु सति नागः instead of सति न दोषः. ४. Except A. and the text others read द्वयोः for तयोः. ५. I. reads सप्तपद्यभिक्रमणात्. ६. Except A. and the text all read पाणिग्रहणमन्त्रैस्तु. ७. D. reads उच्यते.

इति । पाणिग्रहणसंस्कारात् पूर्वं परिणेतुर्मरणे ऽपि न कन्यात्वं हीयते । तथा च वसिष्ठः—

'अद्भिर्वाचा च दत्तायां म्रियेताऽऽदौ[१] वरो यदि ।
न च मन्त्रोपनीता स्यात् कुमारी पितुरेव सा'॥

( व. स्मृ. १७. ७२ )

इति । वरणानन्तरं देशान्तरगमने विशेषमाह कात्यायनः—

'वरयित्वा तु यः कश्चित् प्रणश्येत् पुरुषो यदा ।
[२]ऋत्वागमांस्त्रीनतीत्य कन्याऽन्यं वरयेद्वरम्'॥

इति । नारदो ऽपि—

'प्रतिगृह्य तु[३] यः कन्यां वरो देशान्तरं व्रजेत् ।
त्रीनृतून्[४] समतिक्रम्य कन्याऽन्यं वरयेद्वरम्'॥

( ना. स्मृ. १२. २४ )

इति । शुल्कं दत्वा यदि वरो म्रियते तदा किं कर्त्तव्यमित्यत आह मनुः—

'कन्यायां दत्तशुल्कायां म्रियते यदि शुल्कदः ।
देवराय प्रदातव्या यदि कन्याऽनुमन्यते'॥

( म. स्मृ. ९. ९७ )

इति । देशान्तरगमने तु विशेषः कात्यायनेनोक्तः—

'प्रदाय शुल्कं गच्छेद्यः कन्यायाः स्त्रीधनं तथा ।
धार्या सा वर्षमेकं तु देयाऽन्यस्मै विधानतः'॥

इति । एवं च वाग्दानादारभ्य सप्तपदाभिक्रमणात्[५] प्राक्

---

१. I. reads म्रियते वा for म्रियेताऽऽदौ. २. I. reads तदा समांस्त्रीनतीत्य. ३. The text substitutes च for तु. ४. H. and I. read संवत्सरमतिक्रम्य, but the text does not follow them. ५. I. reads सप्तपद्यभिक्रमणात्.

दोषदर्शने मरणादौ वा कन्यामन्यस्मै दद्यादित्युक्तं भवति । अत एव कात्यायनः—

'अनेकेभ्यो हि दत्तायामनूढायां तु तत्र वै[१] ।
पुरोऽऽगतश्च[२] सर्वेषां लभेत[३] तादिमां सुताम् ॥
अथागच्छेत वोढायां दत्तं पूर्ववरो हरेत्' ।

इति । अनूढायां यस्मै पूर्वं प्रतिश्रुता स एव कन्यां लभते । अन्येनोढायां तु स्वदत्तं शुल्कमात्रं हरेत् न कन्यामित्यर्थः ।

'लक्षण्यां स्त्रियमुद्वहेत्' ।

( या. स्मृ. १. ५२ )

इति यदुक्तं तत्रोद्वहनीया कन्या द्विविधा । सवर्णा चाऽसवर्णा च । तयोराद्या प्रशस्ता । तदाह मनुः—

'सवर्णाऽग्रे द्विजातीनां प्रशस्ता दारकर्मणि ।
कामतस्तु प्रवृत्तानामिमाः स्युः क्रमशोऽवराः[४]' ॥

( म. स्मृ. ३. १२ )

इति । अग्रे स्नातकस्य प्रथमविवाहे । दारकर्मणि अग्निहोत्रादौ धर्मे । सवर्णा वरेण समानो वर्णो ब्राह्मणादिर्यस्याः सा । यथा ब्राह्मणस्य ब्राह्मणी क्षत्रियस्य क्षत्रिया वैश्यस्य वैश्या प्रशस्ता । धर्मार्थमादौ सवर्णामूढ्वा पश्चाद्रिरंसवश्चेत्तदा तेषामवराः हीनवर्णाः इमाः क्षत्रियाद्याः क्रमेण भार्याः स्मृताः । तथा च याज्ञवल्क्यः—

---

१. H. substitutes च for वै. २. B. C. D. F. and G. read परागतश्च for पुराऽऽगतश्च and I. परागमश्च for the same. ३. B. C. and F. read लभते तादिमां तु ताम्; while D. reads लभते तादिमां सुताम् and H. reads लभते यदिमां तु ताम्. ४. The text reads वराः instead of ऽवराः. The commentator Kullûkabhaṭṭa has the reading given in this work.

'तिस्रो वर्णानुपूर्व्येण द्वे तथैका यथाक्रमम्।
ब्राह्मण-क्षत्रिय-विशां भार्या स्वा शूद्रजन्मनः'॥
(या. स्मृ. १. ५७)

इति। मनुरपि–

'शूद्रैव भार्या शूद्रस्य सा च स्वा च विशः स्मृते।
ते च सा चैव राज्ञः[1] स्युः ताश्च स्वा चाऽग्रजन्मनः'॥
(म. स्मृ. ३. १३)

इति। नारदोऽपि–

'ब्राह्मणस्याऽऽनुलोम्येन स्त्रियोऽन्यास्तिस्र एव तु।
शूद्रायाः प्रातिलोम्येन तथाऽन्ये पतयस्त्रयः॥
द्वे भार्ये क्षत्रियस्यान्ये वैश्यस्यैका प्रकीर्त्तिता।
वैश्याया द्वौ पती ज्ञेयावेकोऽन्यः क्षत्रियापतिः'॥
(ना. स्मृ. १२. ५–६)

इति। वसिष्ठ-पारस्करावपि–

'तिस्रो ब्राह्मणस्य वर्णानुपूर्व्येण[2]। (८)
द्वे राजन्यस्य। (९) एका वैश्यस्य। (१०)
सर्वेषां[3] वा शूद्रामप्येके[4] मन्त्रवर्जम्[5]'। (११)
(व. स्मृ. १. २४–२५; पा. गृ. सू. १. ४. ८–११)

इति। पैठीनसिः–

---

१. D. reads राज्ञस्तु; while the text reads राज्ञश्च. २. The author quotes this from Vasishtha and Pâraskara, but their texts have no similar readings. The text of Vasishtha inserts भार्या before वर्णानुपूर्व्येण, and reads एकैका वैश्य-शूद्रयोः for एका वैश्यस्य ३. The text of Vasishtha omits सर्वेषां वा, and adds तद्वत् to मन्त्रवर्जम्; while the text of Pâraskara omits only वा. ४. All others except A. and the text of Pâraskara omit अपि. ५. G. reads -वर्जितम्.

‘अलाभे कन्यायाः स्नातकव्रतं चरेत् । अपि वा
क्षत्रियायां पुत्रमुत्पादयीत । शूद्रायां वेत्येके’ ।

इति । विष्णुरपि—

‘द्विजस्य भार्या शूद्रा तु धर्मार्थं न भवेत् क्वचित् ।
रत्यर्थमेव सा तस्य रागान्धस्य प्रकीर्त्तिता’॥

(वि. स्मृ. २६. ५)

इति । एवं तावदेतेषां मतेन द्विजानामापदि शूद्रासंग्रहणं रतिमात्रफलमपि दोषमान्द्यादनुज्ञातम् । इदानीमपरेषां मतेन ब्राह्मण-क्षत्रिययोः तावच्छूद्रावर्जनमेव युक्ततरं नोद्वाहः-इत्युच्यते । तत्र मनुः—

‘न ब्राह्मण-क्षत्रिययोरापद्यपि हि तिष्ठतोः ।
कस्मिंश्चिदपि वृत्तान्ते शूद्रा भार्योपदिश्यते ॥
हीनजातिस्त्रियं मोहादुद्वहन्तो द्विजातयः ।
कुलान्येव नयन्त्याशु ससन्तानानि शूद्रताम्[२] ॥
शूद्रावेदी पतत्यत्रेरुतथ्यतनयस्य च ।
शौनकस्य सुतोत्पत्त्या तदपत्यतया भृगोः ॥
शूद्रां शयनमारोप्य ब्राह्मणो यात्यधोगतिम् ।
जनयित्वा सुतं तस्यां ब्राह्मण्यादेव हीयते ॥
वृषलीफेनपीतस्य निःश्वासोपहतस्य च ।
तस्यां चैव प्रसूतस्य निष्कृतिर्न विधीयते’ ॥

(म स्मृ. ३.१४–१९)

इति । आश्वमेधिकेऽपि—

१. B. C. D. G. and H. substitute च for वा. २. I. read शूद्रवत्.

'शूद्रायोनौ पतद्बीजं हाहाशब्दं द्विजन्मनः।
कृत्वा पुरीषगर्त्तेषु पतितोऽस्मीति दुःखितम्[1]॥
मामधःपातयन्नेष पापात्मा काममोहितः।
अधोगतिं व्रजेत्[2]क्षिप्रमिति शस्वा पतेत्तु तत्'॥

इति। ननु—

'ताश्च स्वा चाऽग्रजन्मनः'॥

(म. स्मृ. ३. १३)

इति मनुना शूद्राविवाहो विप्रस्याऽभ्यनुज्ञातः। पुनश्च तेनैव

'न ब्राह्मण-क्षत्रिययोः'।

(म. स्मृ. ३. १४)

इति स निषिद्धः अतो व्याहतिः[3]—इति चेन्मैवम्। मतभेदेन युगभेदेन वा व्यवस्थोपपत्तेः। अत एव याज्ञवल्क्येन मतभेदः स्पष्टीकृतः—

'यदुच्यते द्विजातीनां शूद्राद्दारोपसङ्ग्रहः[4]।
नैतन्मम[5] मतं यस्मात्तत्राऽयं जायते स्वयम्'॥

(या. स्मृ. १. ५६)

इति। आनुशासनिकेऽपि—

'अपत्यजन्म शूद्रायां न प्रशंसन्ति साधवः।
रत्यर्थमपि शूद्रा[6] स्यान्नेत्याहुरपरे जनाः'॥

इति। युगभेदेन व्यवस्था च स्मृत्यन्तरे स्पष्टीकृता—

---

१. G. H. and I. read दुःखितः. २. D. and G. read व्रजन्; while H. reads व्रजत्. ३. I. reads व्याहतः. ४. B. C. D. F. and H. read शूद्रादारोपसंग्रहः. ५. Except A. and the text all others read न तत् for नैतत्. ६. B. C. and F. read शूद्री.

'असवर्णासु कन्यासु विवाहश्च द्विजातिभिः'।

इत्यादिमनुक्रम्य–

'कलौ युगे त्विमान् धर्मान् वर्ज्यानाहुर्मनीषिणः'।

इत्युपसंहारात्[१]। विवाहविधिस्तु मनुनाऽभिहितः–

'पाणिग्रहणसंस्कारः सवर्णासूपदिश्यते।
असवर्णास्वयं ज्ञेयो विधिरुद्वाहकर्मणि॥
शरः क्षत्रियया ग्राह्यः प्रतोदो वैश्यकन्यया।
वासोदशा शूद्रया तु वर्णोत्कृष्टस्य वेदने'॥

(म. स्मृ. ३. ४३–४४)

इति। शङ्ख-लिखितावपि–

'इषुं गृह्णाति राजन्या। प्रतोदं वैश्या। दशान्तं शूद्रा। ब्राह्मणस्तु सवर्णायाः पाणिं गृह्णीयात्'।

इति। पैठीनसिः–

'साङ्गुष्ठं ब्राह्मण्याः पाणिं गृह्णीयात्। क्षत्रिया शरम्। वैश्या प्रतोदम्। शूद्रा वस्त्रदशाम्।[२] परिक्रमो ब्राह्मणस्योक्तो राजन्य-वैश्ययोराचार्यपरिक्रमः'[३]।

इति। कृतोद्वाहस्योपगमनियममाह मनुः–

१. A. inserts the following portion after this sentence—सा च व्यवस्था दृष्टोपपत्तिमूलिका। असवर्णाऽऽशौचविधानात्. २. Here I. has committed a mistake. It shows this quotation to be a verse, for observing the rules of Chhanda. It reads ब्राह्मणः and वैश्यायाश्च प्रतोदं तु for ब्राह्मण्याः and वैश्या प्रतोदं respectively, and adds इति to दशाम्. ३. I. has left this line out of the quotation of Paithînasi.

'ऋतुकालाभिगामी स्यात् स्वदारनिरतः सदा।
पर्ववर्जं व्रजेच्चैनां तद्व्रतो[1] रतिकाम्यया' ॥

(म. स्मृ. ३. ४५)

इति। रजोदर्शनप्रभृति षोडशाहोरात्रात्मकः कालो गर्भग्रहणसमर्थो हि[2] ऋतुः। तस्मिन् ऋतावपत्यार्थी सदा स्त्रियमुपगच्छेत्। तत्राभिगमनं[3] स्वदारेष्वेव। ऋतावपि पर्वतिथिं वर्जयेत्। अनृतावपि तया स्त्रिया प्रार्थितो विनाऽप्यपत्योद्देशं तामभिगच्छेत्। यथानिर्दिष्टमृतुं याज्ञवल्क्यो दर्शयति–

'षोडशर्तुर्निशाः स्त्रीणां तस्मिन् युग्मासु संविशेत्।
ब्रह्मचार्येव पर्वाणि आद्याश्चतस्रश्च वर्जयेत्' ॥

(या. स्मृ. १. ७९)

इति। तस्मिन् ऋतौ पर्वाणि आद्याश्चतस्रो रात्रीश्च[4] वर्जयित्वा युग्मासु समासु षष्ठीप्रभृतिषु गच्छेत् पुत्रार्थम्। अयुग्मासु स्त्रीजन्मभयादगमनम्। न तु प्रतिषिद्धत्वात्। युग्मास्वपि रात्रावेव[5]ोपगमनं नाऽह्नि[6]। प्रतिषिद्धत्वात्। तथा चाऽऽथर्वणी श्रुतिः–

'प्राणं वा एते प्रस्कन्दन्ति[7]। ये दिवा रत्या संयुज्यन्ते ब्रह्मचर्यमेव तद्यद्रात्रौ रत्या संयुज्यन्ते'।

(प्र. उ. १. १३)

इति। शङ्ख-लिखितावपि–

१. B. C. and F. read अनृतावपि काम्यया; while G. reads तद्व्रत्तौ रतिकाम्यया. २. I. omits हि. ३. D. has made here some changes. It reads यथानिर्दिष्टमृतुं याज्ञवल्क्यो दर्शयति before तत्राभिगमनं, and omits ऋतावपि पर्वतिथिं वर्जयेत्। अनृतावपि तया स्त्रिया प्रार्थितो विनाऽप्यपत्योद्देशं तामभिगच्छेत्. ४. Except A. all others omit च. ५. I. reads रात्रिष्वेव. ६. D. omits न and reads अहनि प्रतिषिद्धत्वात्; while I. adds दिवा कामस्य and reads निषिद्धत्वात् for प्रतिषिद्धत्वात्. ७. Except A. and the text [a] प्रस्कन्दयन्ति.

'नार्त्तवे दिवा मैथुनं व्रजेत्' ।

इति । 'ऋतुकालाभिगामी स्यात्'—इत्यत्र नियमद्वयं वेदितव्यम् । ऋतौ गच्छेदेव न तु वर्जयेत्—इत्येको नियमः । ऋतावेव गच्छेन्नाऽनृतौ इत्यपरः । अत एव देवलः—

'स्वयं दारानृतुस्नातान् स्वस्थश्चेन्नोपगच्छति ।
भ्रूणहत्यामवाप्नोति गर्भं प्राप्तं विनाश्य सः'[1]॥

इति । बौधायनो ऽपि—

त्रीणि वर्षाण्यृतुमतीं यो भार्यां नोपगच्छति[2] ।
स तुल्यं भ्रूणहत्याया[3] दोषमृच्छत्यसंशयम् ॥ (१७)
ऋतौ नोपैति यो भार्यामनृतौ यश्च गच्छति ।
तुल्यमाहुस्तयोः पापमयोनौ[4] यश्च सिञ्चति' ॥(१९)
(बौ. स्मृ. ४. १. १७)

इति । पर्ववर्जमित्यनेन निषिद्धतिथि-नक्षत्राण्युपलक्ष्यन्ते । निषिद्धपर्व त्वमावास्या[5] पौर्णमासी च । तत्र स्त्रीगमनं श्रुत्या निषिद्धम्—

'नाऽमावास्यायां च पौर्णमास्यां च स्त्रिय-
मुपेयात् यद्युपेयान्निरिन्द्रियः स्यात्' ।
(तै. सं. २. ५. ६. ४)

इति । अन्याश्च निषिद्धास्तिथयोऽष्टम्यादयः । तत्र मनुः—

'अमावास्यामष्टमीं[6] च पौर्णमासीं चतुर्दशीम् ।
ब्रह्मचारी भवेन्नित्यमप्यृतौ स्नातको द्विजः' ॥
(म. स्मृ. ४. १२८)

---

१. G. reads विनश्यति, and I. reads विनाशयेत्. २. The text reads नाधिगच्छति. ३. The text reads भ्रूणहत्यायै. ४. The text reads दोषं. ५. Except A. H. and I. all read च for तु. ६. Except A. and the text others read अमावास्याऽष्टमी चैव पौर्णमासी चतुर्दशी ।.

इति। अमावास्यादयो यास्तिथयः तासु। 'स्त्रीसङ्गत्यागेन' इत्यध्याहृत्य योजनीयम्। ऋतुकालेऽपि दिनषट्कं वर्ज्यमिति स एवाह—

'तासामाद्याश्चतस्रस्तु निन्दितैकादशी च या।
त्रयोदशी च शेषास्तु प्रशस्ता दश रात्रयः'॥

(म. स्मृ. ३. ४७)

इति। निषिद्धं नक्षत्रं याज्ञवल्क्यो दर्शयति—

'एवं गच्छन् स्त्रियं क्षामां मघां मूलं च वर्जयेत्'।

(या. स्मृ. १. ८०)

इति। क्षामां लघ्वाहारादिना कृशामित्यर्थः। अत एव बृ[1]हस्पतिः स्त्री-पुंसयोराहारविशेषं सनिमित्तमाह—

'स्त्रियाः शुक्रेऽधिके स्त्री स्यात् पुमान् पुंसोऽधिके भवेत्।
तस्मात् शुक्रविवृद्ध्यर्थं स्निग्धं वृष्यं[2] च भक्षयेत्॥
लघ्वाहारां[3] स्त्रियं कुर्यादेवं सञ्जनयेत् सुतम्'।

इति। मनुरपि—

'पुमान् पुंसोऽधिके शुक्रे स्त्री भवत्यधिके स्त्रियाः।
समेऽपुमान् पुं-स्त्रियोर्वा[4] क्षीणेऽल्पे च विपर्ययः'॥

(म. स्मृ. ३. ४९)

इति। अपुमानिति छेदः। संक्रान्तिश्च पञ्चपर्वान्तःपातित्वाद्वर्जनीया। तदुक्तं विष्णुपुराणे—

---

१. I. adds अपि to बृहस्पतिः. २. H. and I. read हृद्यं च; while A. reads अन्नं च. ३. A. reads लघ्वाहारं प्रकुर्यात् स्त्री. ४. The text and B. C. F. G. H. read पुं-स्त्रियौ; while H. substitutes हि for वा.

'चतुर्दश्यष्टमी चैव अमावास्या च[1] पूर्णिमा ।
पर्वाण्येतानि राजेन्द्र रविसंक्रान्तिरेव च ॥
तैल-स्त्रि-मांस-भोगी[2] च पर्वस्वेतेषु[3] वै पुमान् ।
विण्मूत्रभोजनं नाम प्रयाति नरकं नृप'॥
(वि. पु. ३. ११. ११४-१५)

इति । देशाश्च वर्ज्यास्तत्रैव दर्शिताः—
'चैत्य-चत्वर-सौधेषु नैव[4] देवचतुष्पथे ।
नैव श्मशानोपवन-सलिलेषु महीपते ॥
गच्छेद्व्यवायं मतिमान्मूत्रोच्चारप्रपीडितः' ॥ (११९)
(वि. पु. ३. ११. ११८-१९)

इति । स्वदारनिरत—इत्यनेन मनसाऽपि परदारगमनं निषिद्धतया विवक्षितम् । एतदपि तत्रैव दर्शितम्—
'परदारान्न गच्छेत[5] मनसाऽपि कथञ्चन ।(१२१)
परदाररतिः[6] पुंसामुभयत्रापि भीतिदा[7] ॥ (१२२)
इति मत्वा स्वदारेषु ऋतुमत्सु व्रजेद्बुधः' । (१२३)
(वि. पु. ३. ११. १२१-२३)

इति । अन्यदपि वर्ज्यं तत्रैव दर्शितम्—
नाऽस्नातां[8] तु स्त्रियं गच्छेन्नातुरां न रजस्वलाम् ।
नाऽनिष्टां न प्रकुपितां नाऽप्रशस्तां न रोगिणीम्[9] ॥

---

१. The text substitutes ऽथ for च. २. The text omits च and reads -मांससम्भोगी. ३. All except A. and the text read सर्वेषु; while I. has made a mistake here. ४. I. reads न चैव च; while the text reads -तीरेषु नैव नैव for -सौधेषु नैव देव-. ५. I. reads गच्छेत्तु; while the text substitutes च for तु. ६. The text reads -गतिः. ७. The text reads सीदति for भीतिदा. ८. I. reads न स्नातां. ९. The text reads गर्भिणीम् for रोगिणीम्.

नाऽदक्षिणां नाऽन्यकामां नाऽकामां नाऽन्ययोषितम्।
क्षुत्क्षामां नो[1]ऽतिभुक्तां वा[2] स्वयं चैतैर्[3]गुणैर्युतः॥
स्नातः[4] स्रग्गन्धधृक् प्रीतो[5] व्यवायं पुरुषो व्रजेत्'।
(वि. पु. ३. ११. १११–११३)

इति। तद्व्रतः इत्यनेन श्रौतं वरं स्मारयति। तथा च श्रुतिः—

'स स्त्रीषꣳ[6] सादमुपासीददस्यै ब्रह्महत्यायै तृतीयं प्रतिगृह्णीतेति ता अब्रुवन् वरं वृणा[7]महा ऋत्वियात्[8] प्रजां विन्दामहै काममाविज[9]नितोः सं[10]भवामेति तस्मादृत्वियात् स्त्रियः प्रजां विन्दन्ते काममा विज[11]नितोः सम्भवन्ति वारे वृतꣳ ह्यासां तृतीयं ब्रह्महत्यायै प्रत्यगृह्णन् त्सा मल[12]वद्वासा भवत्'।
(तै. सं. २. ५. १. ५)

इति। अयमर्थः—इन्द्रः किल विश्वरूपनाम्नः पुरोहितस्य वधात् ब्रह्महत्यामुपागतामञ्जलिना स्वीकृत्य[13] संवत्सरं धृत्वा[14] लोकापवादाद्भीतस्तां त्रेधा[15] विभज्य प्रथमभागं पृथिव्यै द्वितीयभागं

---

१. The text omits न. २. D. substitutes च for वा. ३. The text reads चैभिः for चैतैः; while H. reads वैभिः. ४. H. reads स्नात्वा. ५. The text reads स्फीतः for प्रीतः. ६. B. C. F. G. and I. read स्त्रीषंसादं; while H. reads स्त्रीषदं, and D. reads षꣳ सादं. ७. B. C. F. G. H. and I. read वृणावहा. ८. B. C. F. read ऋत्विया; while H. reads ऋत्वियाम्. ९. G. H. and I. read विजनितेः. १०. I. reads सम्भवामहै, G. and H. read सम्भवन्ति. H. omits the following portion—
तस्मात् ऋत्वियाः स्त्रियः प्रजां विन्दन्ते काममाविजनितोः सम्भवन्ति.
११. I. and G. read विजनितेः. १२ H. reads मलवासा. १३. D. omits स्वीकृत्य. १४. D. reads गृहीत्वा instead of धृत्वा. १५. D. reads त्रिविधं.

वनस्पतिभ्यो वरपूर्वकं दत्वा तृतीयभागदानाय स्त्रीसमूहमुपागमत्[१] । ताश्च वरमयाचन्त । ऋतुकालगमनात् प्रजां लभेमहि आप्रसवमनृतावपि यथेच्छं सम्भवामेति । वरं लब्ध्वा तृतीयं[२] भागं प्रत्यगृह्णन् । स च भागो रजोरूपेण परिणतः । ततः प्रभृति मासि मासि योषिन्मलवद्वासाः[३] सम्भवन्ति । याज्ञवल्क्योऽपि—

'यथाकामी भवेद्वाऽपि स्त्रीणां वरमनुस्मरन् ।
स्वदारनिरतश्चैव स्त्रियो रक्ष्या यतः[४] स्मृताः' ॥

( या. स्मृ. १. ८१ )

इति । बृहस्पतिरपि—

'ऋतुकालाभिगमनं पुंसा कार्यं प्रयत्नतः ।
सदैव वा पर्ववर्जं स्त्रीणामभिमतं हि तत्' ॥

इति । ऋतुकालाभिगमनमित्यत्र केचिदेवमाचक्षते—अजातपुत्रस्यैवैष नियमो न तु जातपुत्रस्य—इति । उपपादयन्ति च । तत्र कूर्मपुराणम्—

'ऋतुकालाभिगामी स्याद् यावत् पुत्रोऽभिजायते' ।

( कू. पु. १. २. १९. ११ )

इति । ऋणापाकरणार्थं हि पुत्रोत्पादनम् । तथा च श्रुतिः—

'जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते
ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः

१. H. and I. read -भागमादाय. २. I. reads तृतीयभागं. ३. H. reads मलवासाः, but corrects the reading in the margin. ४. D. reads इति.

प्रजया[1] पितृभ्य एष वा अनृणो यः पुत्री
यज्वा ब्रह्मचारिवासी' ।

(तै. सं. ६. ३. १०. ५)

इति । मन्त्रवर्णो[2] ऽपि—

'ऋणमस्मिन् सन्नयत्यमृतत्वं च गच्छति ।
पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखम्' ॥

( ऐ. ब्रा. ७. ३. ४ )

इति । तदेतदृणापाकरणमेकपुत्रोत्पादनेन सम्पद्यते । तावताऽपि पुत्रित्वसिद्धेः । तथा च मनुः—

'ज्येष्ठेन जातमात्रेण पुत्री भवति मानवः ।
पितृणामनृणश्चैव स तस्मात् सर्वमर्हति ॥
यस्मिन्नृणं सन्नयति[3] येन चाऽऽनन्त्यमश्नुते ।
स एव धर्मजः पुत्रः कामजानितरान् विदुः' ॥

(म. स्मृ. ९. १०६–७)

इति । ननु—बहुपुत्रत्वमपि क्वचित् श्रूयते—

'इमां त्वमिन्द्र मीढ्वः सुपुत्रां सुभगां कृणु ।
दशाऽस्यां पुत्राना धेहि पतिमेकादशं कृधि' ॥

(ऋ. सं. ८. ३. २८. ५)

इति—

'क्रीडन्तौ पुत्रैः' ।

(ऋ. सं. ८. ३. २८. २)

इति

---

१. D. omits प्रजया पितृभ्यः. २. D. reads -वर्णेऽपि. ३. I. inserts हि after सन्नयति.

'रयिं च पुत्रांश्चादात्' ।

(ऋ. सं. ८. ३. २८. १)

इति च । सत्यम् । नायं विधिः । किन्तु बह्वपत्यप्रशंसा । तस्मादजातपुत्रस्यैवायं ऋतुगमननियमः— इति । एतदपरे न क्षमन्ते । यद्यपि पुत्रित्वमानृण्यं चैकेनैव पुत्रेण सम्पद्यते तथाप्यस्ति बहुपुत्रत्वविधिः—

'एतमु एवाहमभ्यगासिषं तस्मान्मम त्वमेकोऽसीतीह कौषीतकिः पुत्रमुवाच । रश्मींस्त्वं पर्यावर्त्तयाद्बहवो वै ते भविष्यन्ति' ।

(छां. उ. १. ५. २)

इति छन्दोगैराम्नानात् । तस्य चाऽयमेवार्थः कौषीतकिर्नाम मुनिः स्वयमादित्यमण्डलमेकमेवोपासीन उद्गानं कृत्वा तत्फलत्वेन पुत्रमेकं प्रतिलभ्य तमुवाच अहमेतमेकमेवादित्यं ध्यायन् गानमकार्षं तस्माद्दोषान्मम त्वमेक एव पुत्रो ऽसि । एकपुत्रत्वं च न प्रशस्तम् । अतस्त्वं बहुपुत्रतायै रश्मीन् बहूनुपास्तिवेलायामावर्त्तय— इति ।

महाभारते ऽपि—

'अपत्यं[2] नस्त्वमेवैकः कुले महति भारत ॥ (६१)
अनपत्यं[3] त्वेकपुत्रमित्याहुर्धर्मवादिनः ॥ (६५)
चक्षुरेकं[4] च पुत्रश्च अस्ति नास्तीति[5] भारत ।
चक्षुर्नाशे तनोर्नाशः पुत्रनाशे कुलक्षयः ॥

१. B. C. D. F. G. and H. omit एव. २. B. C. D. F. G. H. and I. read अपत्यं तु ममैवैकं. ३. B. C. F. G. and H. read अपुत्रमेकपुत्रत्वम् while D. and I. read अपुत्रं चैकपुत्रत्वम्. ४. This and the following line are not found in the text (Calcutta Edition). ५. B. C. D. F and G. read नास्ति च.

अनित्यतां च मर्त्यानां[1] मत्वा शोचामि पुत्रक। (६३)
सन्तानस्याऽविनाशं[2] तु कामये भद्रमस्तु ते' ॥ (६४)
(म. भा. आदि. १००. ६१-६४)

इति। ननु—ज्येष्ठेनैव पुत्रेणानृण्यसिद्धेर्निरर्थकं पुत्रान्तरोत्पादनम्। तन्न। सर्वेषां[3] पुत्राणामानृण्यहेतुत्वात्। न हि पुत्रजननमात्रेण पितुरानृण्यम्। किं तर्हि सम्यगनुशिष्टेन पुत्रेण शास्त्रीयेषु कर्मस्वनुष्ठितेषु पश्चादानृण्यं सम्पद्यते। अत एव वाजसनेयिब्राह्मणे पुत्रानुशासनविधिः समाम्नातः—

'तस्मात्[4] पुत्रमनुशिष्टं लोक्यमाहुस्तस्मादेनमनु[5]शासति। स[6] यद्यनेन किञ्चिदक्ष्णयाऽकृतं भवति तस्मादेनँ[7] सर्वस्मात् पुत्रो मुञ्चति[8]। तस्मात् पुत्रो नाम स[9] पुत्रेणैवाऽस्मिँल्लोके प्रतितिष्ठति[10]'।
(बृ. उ. १. ५. १७)

इति। अस्यायमर्थः—अस्ति किञ्चित् सम्प्रतिपत्तिनामकं कर्म। यदा पितुर्मरणावसरो भवति तदा पुत्रमाहूय वेदाध्ययने यज्ञे लौकिकव्यापारे च[11] यद्यत्कर्त्तव्यजातं तस्य सर्वस्य पुत्रे सम्प्रदानं[12] कर्तव्यम्। सेयं सम्प्रतिपत्तिः। तस्यां[13] च

---

१. The text reads लोकानामनुशोचामि for मर्त्यानां मत्वा शोचामि. २. The text reads अविनाशाय. ३. B. adds तु to सर्वेषां. ४. The following portion is omitted in all manuscripts, but it appears in the text—स यदैवंविदस्माल्लोकात्प्रैत्यथैभिरेव प्राणैः सह पुत्रमाविशति. ५. D. and G. read अनुशंति for अनुशासति. ६. I. omits स. B. C. F. and H. read स यद्येतेन, D. reads संपद्य न and G. reads संपद्येनं. ७. Except A. and the text others add to तस्मादेन. ८. I. reads मोचयति, but neither the text nor any of the other manuscript follows it. ९. Except A. and the text all others do not insert स. १०. H. reads प्रतिष्ठति. ११. B. C. and F. omit च. १२ D. reads सम्पादनं. १३. D. and H. read तस्माच्च.

सम्प्रतिपत्तौ[1] यस्मादनुशिष्ट एव[2] पुत्रोऽधिकारी तस्मादनुशिष्टं पुत्रं परलोकहितमाहुः[3] शास्त्रज्ञाः । अत एव पुत्रानुशासनं कुर्युः पितरः । स चानुशिष्टः पुत्रः यत्किञ्चित्[4] स्वपित्रा शास्त्रीयं[5] कर्म अक्ष्णया[6] वक्रत्वेन शास्त्रवैपरीत्येन कृतं[7] भवति तस्मात्[8] सर्वस्मात् पापादेनं[9] स्वपितरं[10] स्वयं शास्त्रीयं[11] कर्म सम्यगनुतिष्ठन् मोचयति । तस्मात् पुन्नाम्नो नरकात् त्रायते—इति व्युत्पत्त्या[12] पुत्रो नाम । स च पिता स्वयं मृतः पुत्रशरीरेणैवास्मिन् लोके यथाशास्त्रं कर्म कुर्वन्ननुतिष्ठति—इति ।

एवं सति बहूनां मध्ये यथावदनुशासनं[13] प्रज्ञामांद्यादिप्रतिबन्धबाहुल्यात् कस्यचिदेव सम्पद्यते । अनुशिष्टेष्वपि बहुषु यथावदनुष्ठानं कस्यचिदेव । अतो ज्येष्ठः कनिष्ठो वा यस्तादृशः[14] स एवाऽऽनृण्यहेतुः । अत एव पुराणेऽभिहितम्—

'एष्टव्या बहवः पुत्रा यद्येको ऽपि गयां व्रजेत्' ।

(वि. स्मृ. ८५. ६७)

इति ।

'दशास्यां पुत्रानाधेहि' ।

(ऋ. सं. ८. ३, २८. ५)

---

१. D. and G. read सम्पत्तौ. २. Except A. and I. others do not insert एव. C. and F. omit the following portion—
एव पुत्रोऽधिकारी तस्मादनुशिष्टं पुत्रं परलोकहितमाहुः शास्त्रज्ञाः । अत एव पुत्रानुशासनं कुर्युः पितरः । स चानुशिष्टः पुत्रः यत्किञ्चित्. ३. D. omits -हित-. ४. All, except A. and I. omit यत्किञ्चित्. ५. H. reads स्वशास्त्रीयं. कुरुते. instead of शास्त्रीयं कर्म. ६. H. reads अन्यथा, but the marginal reading of the same has अक्ष्णया. ७. H. reads कृतमकृतम् for कृतं. ८. D. G. and H. read एतस्मात्. ९. H. reads इमं. १०. B. C. D. F. and G. do not insert स्व- before पितरं. ११ H. omits शास्त्रीयं; while G. reads स्वशास्त्रीयं for स्वयं शास्त्रीयं. १२. D. and H. read मत्या for व्युत्पत्त्या. १३. H. reads यथावाऽनुशासनं. १४. H. omits यः.

इत्यादिमन्त्राश्चैवं सति बहुपुत्रत्वं[1]विधिमुपोद्दलयन्ति। यत्तु '[2]कामजानितरान्'-इति मनुनोदाहृतं तदननुशिष्टविषयम्। तस्मात् जा[3]तपुत्रोऽप्यृतावुपेयादेव। बहूनां पत्नीनामृतुयौगपद्ये क्रममाह देवलः-

'यौगपद्ये तु तीर्थानां विप्रा[4]दिक्रमशो व्रजेत्।
रक्षणार्थमपुत्रां वा ग्रहणक्रमशोऽपि वा'॥

इति। तीर्थमृतुः। तद्यौगपद्ये सत्यसवर्णासु वर्णक्रमेण सवर्णासु विवाहक्रमेण गच्छेत्। यदा तु काचिदपुत्रा पुत्र[5]वत्य इतराः तदा अपुत्रां अग्रतो गच्छेत्। ऋतावपि जातिभेदेनोपगमनकालसङ्कोचमाह देवलः-

'ब्राह्मण्यां द्वादशाहं स्याद्वेदोक्तमृतुधारणम्।
दशा-ऽष्टौ षट् च शेषाणां विधीयन्ते ऽनुपूर्वशः'॥

इति। पञ्चमदिवसमारभ्य द्वादशाहादिसंख्याऽवगन्तव्या। चतुर्थे तु दिवसे गमनं वैकल्पिकम्। विहित-प्रतिषिद्धत्वात्। तथा च हारीतो विदधाति-

'चतुर्थे[6]ऽहनि स्नातायां युग्मासु वा[7] गर्भाधानम्'।

(हा. स्मृ. २. ९)

इति। व्यासो निषेधति-

---

१. H. reads विधानं for -विधिं. २. I. reads कामजानितरानित्युदाहृतं; while B. C. D. F. and G. read उशनसोदाहृतं for मनुनोदाहृतं, but the quotation is taken from Manu (see P. 105. L. १२). ३. D. and H. read जाते पुत्रे; while B. C. F. and G. omit ऋतौ. ४. B. C. and F. read विप्रादि-; while D. G. and H. read विवाह-. ५. B. C. and F. read पुत्रवती च for पुत्रवत्य इतराः. ६. The text omits ऽहनि and reads स्नातया युग्मेषु वा गर्भं दधाति. ७. B. C. and F. substitute च for वा.

'चतुर्थे सा न गम्याऽह्नि गता[1]ऽल्पायुं प्रसूयते'।

इति। व्यवस्थितविकल्पश्चायमुदितानुदितहोमवत्। रजो[2]-निवृत्तौ चतुर्थ्यां[3] विधिः तदनुवृत्तौ प्रतिषेधः। तथा च मनुः—

'रजस्युपरते साध्वी स्नानेन स्त्री रजस्वला'॥

(म. स्मृ. ५. ६६)

इति। साध्वी गर्भाधानादिविहितकर्मयोग्येत्यर्थः। दिन-विशेषेणोपगमने फलविशेषोऽभिहितो लिङ्गपुराणे—

'चतुर्थे सा न गम्या[4]ऽह्नि गता[5]ऽल्पायुं प्रसूयते।
विद्याहीनं व्रतभ्रष्टं पतितं पारदारिकम्॥ (१०९)
दारिद्र्यार्णवमग्नं च तनयं सं[6]प्रसूयते।
कन्यार्थिनैव गन्तव्या पञ्चम्यां विधिवत् पुनः॥(११०)
षष्ठ्यां गम्या म[7]हाभागा सत्पुत्रजननी भवेत्। (१११)
सप्तम्यां चैव कन्यार्थी गच्छे[8]त्सैवं[9] प्रसूयते।
अष्टम्यां सर्वसम्पन्नं तनयं सम्प्रसूयते॥ (११४)
नवम्यां दा[10]रिकाऽर्थं स्याद्दशम्यां पण्डितं त[11]था।
एकादश्यां तथा नारीं जनये[12]त्येव पूर्ववत्॥
द्वादश्यां धर्मतत्त्वज्ञं श्रौत-स्मार्त्तप्रवर्त्तकम्।

१. B. C. D. F. G. and H. read गन्ता for गता. २. I. reads रजसो. ३. The text reads चतुर्थ्यां. ४. The text substitutes तु for ऽह्नि. ५. B. C. F. G. and H. read गन्ताऽल्पायुः; while the text reads गतो ऽल्प युः and I. reads अल्पायुः for अल्पायुं. ६. B. C. D. E. F. G. H. and I. read वा instead of सम्-. ७. All, except A. and the text read महाभाग, but this is incorrect. In the text the portion is addressed to Ṛishis. ८. A. reads सुपुत्रं वै प्रसूयते. ९. B. C. D. F. G. and H. read चैव for सैव. १०. The text reads दारिकायार्थी for दारिकाऽर्थं स्यात्. ११. The text reads पण्डितो भवेत्. १२. I. reads जनयन्नेव.

त्रयोदश्यां [1]जडां नारीं [2]वर्णसङ्करकारिणीम् ॥
जनयत्यङ्गना तस्मान्न गच्छेत् सर्वयत्नतः ।
चतुर्दश्यां यदा गच्छेत् [3]सुपुत्रजननी भवेत् ॥
पञ्चदश्यां च [4]धर्मिष्ठां षोडश्यां [5]ज्ञानपारगम्' ।
(लिं. पु. १. ८९. १०९–११८)

इति । [6]ऋतुकालानभिगमने यो दोषो ऽभिहितः तस्याप-
वादमाह व्यासः—

'व्याधितो बन्धनस्थो वा प्रवासेष्वथ पर्वसु ।
ऋतुकाले[7]ऽपि नारीणां भ्रूणहत्या प्रमुच्यते ॥
वृद्धां वन्ध्यामवृत्तां च मृतापत्याम[8]पुष्पिणीम् ।
कन्यां च बहुपुत्रां च [9]वर्जयन्मुच्यते भयात्' ॥

इति । [10]भ्रूणहत्या भ्रूणहननम् । [11]उक्तरीत्या यस्यां वृद्ध-
त्वादिदोषरहितायामृतुकालोपगमनमवश्यम्भावि यस्यां च
वृद्धादौ नावश्यम्भावि सा सर्वाऽपि सम्यक् पालनीया ।
तथा च मनुः—

'पितृभिर्भ्रातृभिश्चैताः पतिभिर्देवरैस्तथा ।
पूज्या [12]भूषयितव्याश्च बहुकल्याणमीप्सुभिः ॥
यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः ।
[13]यत्रैतास्तु न पूज्यन्ते सर्वास्तत्राऽफलाः क्रियाः ॥

१. All, except A. and I. read तथा for जडां. २. The text reads सर्व-सङ्कर-. ३. The text reads सा पुत्रजननी. ४. All, except A. and the text read धर्मज्ञां. ५. D. reads धर्मपारगम्. ६. B. C. F. G. and H. read ऋतुकालाऽगमने. ७. D. and G. read ऋतुकाले तु; while B. C. F. and H. read ऋतुकालेषु. ८. I. reads अपुष्पिताम्. ९. C. D. and H. read वर्जयेत्. १०. B. C. F. G. and H. read भ्रूणहतिः. ११. H. reads उक्तनीत्या. १२. B. C. D. F. G. and H. read पोषयितव्याश्च. १३. H. reads यत्रेमास्तु.

शोचन्ति जामयो यत्र विनश्यत्याशु तत्कुलम् ।
न[1] शोचन्ति तु यत्रैता वर्द्धते तद्धि सर्वदा ॥
जामयो यानि गेहानि शपन्त्यप्रतिपूजिताः ।
तानि कृत्याहतानीव विनश्यन्ति समन्ततः ॥
तस्मादेताः सदाऽभ्यर्च्या[2] भूषणा-ऽऽच्छादनाशनैः[3] ।
भूतिकामैर्नरैर्नित्यं सत्कारेषूत्सवेषु[4] च ॥
सन्तुष्टो भार्यया भर्त्ता भर्त्रा भार्या तथैव च ।
यस्मिन्नेव कुले नित्यं कल्याणं तत्र वै ध्रुवम्' ॥
(म. स्मृ. ३. ५५–६०)

इति । पूज्यत्वं चाऽवृत्ताव्यतिरिक्तासु द्रष्टव्यम् । अवृत्तायास्तु प्राणयात्रामात्रभोजनम्[5] । तथा च याज्ञवल्क्यः–

'हृताधिकारां मलिनां पिण्डमात्रोपजीविनीम् ।
परिभूतामधःशय्यां वासयेद्व्यभिचारिणीम्' ॥
(या. स्मृ. १. ७०)

इति । यथा विन्ना साध्वी भर्त्तव्या तथैवा ऽधिविन्नाऽपि । तदाह स[6] एव–

'अधिविन्नाऽपि भर्त्तव्या महदेनोऽन्यथा भवेत्' ।
(या. स्मृ. १. ७४)

इति । अधिवेदनं भार्यान्तरपरिग्रहः । अधिवेदननिमित्तान्यपि स[7] एवाह–

१. D. reads न च शोचन्ति for न शोचन्ति तु; while G. reads न शोचति तु through mistake. २. The text reads पूज्याः for अभ्यर्च्याः, and D. reads समभ्यर्च्याः. ३. I. reads -ऽऽच्छादनादिभिः. ४. B. C. D. F. G. and H. read सत्कारेणोत्सवेन. ५. I. reads -धारणमात्र-. ६. All, except A. H. and I. read याज्ञवल्क्यः for स एव. ७. A. H. and I. read याज्ञवल्क्येन दर्शितानि for स एवाह.

'सुरापी व्याधिता धूर्ता वन्ध्याऽर्थघ्न्यप्रियंवदा।
स्त्रीप्रसूश्चाधिवेत्तव्या पुरुषद्वेषिणी तथा'॥

(या. स्मृ. १. ७३)

इति। सुरापी मद्यपीत्यर्थः। सुरापाने तु नाधिवेदनमात्रम्। अपि तु त्याग एव।

'तथा महति पातके'।

(या. स्मृ. १. ७२)

इति त्यागहेतुत्वेनाभिधानात्।

'पतत्यर्द्धं शरीरस्य यस्य भार्या सुरां पिबेत्'।

(व. स्मृ. २१. १५)

इति वचनाच्च। अत एव मनुः—

'मद्यपाऽसाधुवृत्ता च प्रतिकूला च या भवेत्।
व्याधिता वाऽधिवेत्तव्या हिंस्राऽर्थघ्नी च सर्वदा'॥

(म. स्मृ. ९. ८०)

इति। व्याधिता दीर्घरोगिणी। ब्रह्मपुराणेऽपि—

'धर्मविघ्नकरीं भार्यामसतीं चाऽतिकोपिनीम्।
त्यजेद्धर्मस्य रक्षार्थं तथैवाऽप्रियवादिनीम्'॥

इति। त्यजेदधिविन्देत। न तु भोगं परित्यजेत्।

१. D. substitutes अपि for तु. २. B. C. and F. read मद्यपानप्रवृत्ता च and D. reads मद्यपाऽसत्यवृत्ता च; while G. and H. read मद्यपाऽसत्प्रवृत्ता च. ३. All, except A. and the text, substitute च for वा. ४. I. reads रोगिणीम्. ५. I. inserts न before त्यजेत् and thus forms a line of the verse immediately preceding, but न is not found in any other manuscript.

अधिवेदनकालविशेषो मनुना दर्शितः–

'वन्ध्याऽष्टमे ऽधिवेद्याऽब्दे दशमे तु मृतप्रजा।

एकादशे स्त्रीजननी सद्यस्त्वप्रियवादिनी' ॥

(म. स्मृ. ९. ८१)

इति। [1]व्याधितायां विशेषमाह स एव–

'या रोगिणी स्यात्तु हिता सम्पन्ना चैव शीलतः।

साऽनुज्ञाप्याऽधिवेत्तव्या नावमान्या तु[2] कर्हिचित्' ॥

(म. स्मृ. ८. ८२)

इति। अधिवेदनं द्विविधम्। धर्मार्थं कामार्थं च। तत्र पुत्रोत्पत्त्यादिधर्मार्थे पूर्वोक्तानि मद्यपेत्यादीनि निमित्तानि। कामार्थे तु न[3] तान्यपेक्षणीयानि। किन्तु पूर्वोढा तोषणीया। तथा च स्मृत्यन्तरे–

'एकामुत्क्रम्य कामार्थमन्यां[4] लब्धुं य इच्छति।

समर्थस्तोषयित्वाऽर्थैः पूर्वोढामपरां वहेत्' ॥

इति। यद्यसौ स्वयं न तोषयेत् तदा तत्तोषणाय राजा द्रव्यं दापयेत्। तदाह याज्ञवल्क्यः–

'आज्ञासम्पादिनीं दक्षां वीरसूं प्रियवादिनीम्।

त्यजन् दाप्यस्तृतीयांशमद्रव्यो भरणं स्त्रियाः' ॥

(या. स्मृ. १. ७६)

१. D. G. and H. omit व्याधि- and read हितायां; while F. omits the above quotation from Manu, also the word व्याधितायां through mistake. २. The text substitutes च for तु. ३. D. reads न च परीक्षणीयानि. ४. B. C. F. and H. read कन्यां for अन्यां. H. has अन्यां in the marginal reading.

इति। सधनस्य तृतीयांशदानं निर्द्धनस्याऽशनाच्छादनादिना पोषणमिति। या तूक्तद्रव्यापरितोषणात्[1] प्रकारान्तरेण वा[2] निर्गच्छेत्तां प्रत्याह मनुः—

'अधिविन्ना तु या नारी निर्गच्छेद्रुषिता[3] गृहात्।
सा सद्यः सन्निरोद्धव्या त्याज्या वा कुलसन्निधौ'॥

(म. स्मृ. ९. ८३)

इति। त्यागो नाम तदीयजनक[4]कुलप्रेषणम्।

'पूज्या भूषयितव्याश्च'।

(म. स्मृ. ३. ५५)

इति यदुक्तं तत्र बहुपत्नीकस्य पूजाक्रममाह मनुः—

'यदि स्वाश्चाऽपराश्चैव विन्देरन् योषितो द्विजाः।
तासां वर्णक्रमेण स्याज्ज्यैष्ठ्यं पूजा च वेश्मनि॥
भर्त्तुः शरीरशुश्रूषां धर्मकार्यं च नैत्यकम्।
स्वा स्वैव[5] कुर्यात् सर्वेषां नाऽसजातिः[6] कथञ्चन'॥

(म. स्मृ. ९. ८५-८६)

इति। बह्वीषु पत्नीषु सहधर्मचारिणीं निर्धारयति याज्ञवल्क्यः—

'सत्यामन्यां सवर्णायां धर्मकार्यं न कारयेत्।
सवर्णासु विधौ धर्म्ये[7] ज्येष्ठया न विनेतराः'॥

(या. स्मृ. १. ८८)

---

१. B. C. D. F. and G. read -तोषात् for -तोषणात्. २. H. omits वा. ३. B. C. D. F. and G. read रोषिता; while I. reads द्वेषिता. ४. B. C. and F. omit -जनक- and read तदीये कुले. ५. The text reads चैव. ६. I. reads नान्यजातिः; while the text reads नाऽस्वजातिः, but the commentators do not follow the latter reading. ७. I. reads धर्मे for धर्म्ये.

इति। सवर्णयैव सह धर्मं चरेत् नाऽसवर्णया। अलाभे तु सवर्णाया इतरया अपि सह धर्मं चरेदित्यर्थाल्लभ्यते। न च—एवं सति शूद्रया अपि सहधर्माचरणं प्रसज्येत—इति वाच्यम्। वसिष्ठवचनेन तन्निषेधात्—

'कृष्णवर्णा या रामा रमणायैव सा न धर्माय'।

(व. स्मृ. १८. १८)

इति। सवर्णाऽनेकत्वे तु धर्मानुष्ठाने ज्येष्ठया विना मध्यमा कनिष्ठा च न योक्तव्ये। किन्तु ज्येष्ठया कनीयस्यो विनियोक्तव्याः। तथा च बौधायनः—

'एकैकामेवं सान्नाय्येदेकैकां गार्हपत्य-
मीक्षयेत् एकैकामाज्यमवेक्षयेत्'।

इत्यादि। कात्यायनः—

'नैकयाऽपि विना कार्यमाधानं भार्यया द्विजैः।
अकृतं तद्विजानीयात् सर्वानन्वारभन्ति यत्'॥

(का. स्मृ. १. ८. ९)

इति। यद्यस्मात् सर्वानन्वारभन्ते तस्मादेकया कृतमप्यकृतमेव। केचिदत्र—

'ज्येष्ठया न विनेतराः'।

(या. स्मृ. १. ८८)

१. B. C. and F. omit the following portion—
नासवर्णया। अलाभे तु सवर्णाया इतरयापि सह धर्मं चरेत्.
२. Except A. and the text all substitute वै for रामा. ३. B. C. F. and the text omit सा. D. also omits it and reads तन्न धर्माय. ४. B. C. D. F. G. and H. read -वाऽऽसां सन्नह्येत्. ५. The text reads सर्वान्वा चाऽऽरभन्ति. ६ D. reads केचित्तत्र.

इति वचनमन्यथा व्याचक्षते। ज्येष्ठैव सहधर्मचारिणी नेतराः—इति। उदाहरन्ति च तत्र विष्णुवचनम्—

'अग्निहोत्रादियज्ञेषु न द्वितीया सहाचरेत्।
अन्यथा निष्फलं तस्य स्विष्टैः क्रतुशतैरपि'॥

इति। एतद्व्याख्यानं बौधायन-कात्यायनवचनविरोधान्नादरणीयम्। विष्णुवचनं त्वसवर्णद्वितीयाविषयम्। सत्स्वग्निषु या परिणीता तद्विषयं वा। नष्टेष्वग्निषु पुनराधाने तस्या अपि कर्तृत्वादग्निहोत्रादिषु सहाधिकारः। तत्रैव विशेषमाह कात्यायनः—

'अग्निहोत्रादिशुश्रूषां बहुभार्यः सवर्णया।
कारयेत्तद्बहुत्वे च ज्येष्ठया गर्हिता न चेत्॥
या वा[१] स्याद् वीरसूरासामाज्ञासम्पादिनी च या।
दक्षा प्रियंवदा शुद्धा तामत्र विनियोजयेत्॥
दिनक्रमेण[३] वा कर्म यथाज्यैष्ठ्यं[४] स्वशक्तितः।
विभज्य सह वा कुर्युः[५] यथाज्ञानं च शास्त्रवत्'॥

( का. स्मृ. २. ११. ३–६ )

इति। यदि ज्येष्ठा न गर्हिता तदा तया कारयेत्। गर्हिता चेत् कनिष्ठया वीरसुवा कारयेत्। वीरसुवोऽपि बह्व्यश्चेत् तासामपि मध्ये आज्ञासम्पादनादिगुणयुक्तां विनि-

---

१. The text does not insert this verse. २. D. G. H. and I. read तथा वीरसुवामासाम्; while B. C. and F. follow them, but substitute -सुता for -सुवा-. ३. The text reads दिनत्रयेण. ४. B. C. F. G. H. and I read -ज्यैष्ठ्यमशक्तितः. ५. B. C. D. F. G. H. and I. read कुर्यात् यथा ज्ञानमशक्तितः, but the word अशक्तितः seems to be redundant.

योजयेत् । प्रतिदिनमेका कर्त्तुमशक्ता चेत् तदा दिनक्रमेण यथाज्यैष्ठ्यं कारयेत् । एकस्मिन्नपि दिने यद्येका कृत्स्नं कर्त्तुमशक्ता तदा सर्वास्तत् कर्म यथाज्ञानं विभज्य कुर्युः । यत्तु कात्यायनेनैवोक्तम्–

'प्रथमा धर्मपत्नी स्याद् द्वितीया रतिवर्धिनी ।
दृष्टमेव फलं तत्र नाऽदृष्टमुपपद्यते' ॥

इति तद्विष्णुवचनेन समानार्थम् ।

॥ इत्थं सविशेषो विवाहो निरूपितः ॥

अथ सवर्णाऽसवर्णाविवाहप्रसङ्गेन बुद्ध्यारूढानामनुलोमप्रतिलोमजातानां व्यवहारोपयोगिसंज्ञाप्रतिपत्त्यर्थं जातिभेदो निरूप्यते । तत्र[2] याज्ञवल्क्यः–

'सवर्णेभ्यः सवर्णासु जायन्ते हि सजातयः ।
अनिन्द्येषु विवाहेषु पुत्राः सन्तानवर्धनाः' ॥

( या. स्मृ. १. ९० )

इति । सजातयो माता-पितृसमानजातीयाः । मनुरपि–

'सर्ववर्णेषु तुल्यासु पत्नीष्वक्षतयोनिषु ।
आनुलोम्येन सम्भूता जात्या ज्ञेयास्त एव ते' ॥

( म. स्मृ. १०. ५ )

इति । ब्राह्मणदम्पतीभ्यामुत्पन्नो जात्या ब्राह्मणो भवेत् । एवं क्षत्रियादिष्वपि । देवलोऽपि–

'ब्राह्मण्यां ब्राह्मणाज्जातः संस्कृतो ब्राह्मणो भवेत् ।
एवं क्षत्रिय-विट्-शूद्रा ज्ञेयाः स्वेभ्यः स्वयोनिजाः' ॥

इति । असवर्णास्वनुलोमजानाह मनुः–

१. D. omits यत्तु कात्यायनेनैवोक्तम्. २. D. omits तत्र.

'स्त्रीष्वनन्तरजातासु द्विजैरुत्पादितान् सुतान्।
सदृशानेव तानाहुर्मातृदोषविगर्हितान्'॥

(म. स्मृ. १०. ६)

इति। ऊढायां क्षत्रियायां ब्राह्मणादुत्पन्नो ब्राह्मणसदृशो न तु मुख्यब्राह्मणः। हीनजातीयमातृसम्बन्धात्। एवमन्यत्रापि। ते चानुलोमजा मूर्धावसिक्तादिजातिभेदेन षड्विधाः। ते च याज्ञवल्क्येन दर्शिताः—

'विप्रान् मूर्धावसिक्तो हि क्षत्रियायां विशः स्त्रियाम्।
अम्बष्ठः शूद्र्यां निषादो जातः पारसवो[१]ऽपि वा॥
वैश्या-शूद्र्योस्तु राजन्यान्माहिष्योग्रौ सुतौ स्मृतौ।
वैश्यात्तु करणः शूद्र्यां विन्नास्वेष[२] विधिः स्मृतः'॥

( या. स्मृ. १. ९१–९२ )

इति। तत्र ब्राह्मणाज्जातास्त्रयः। क्षत्रियात् द्वौ। वैश्यादेकः। तदुक्तं मनुना—

'विप्रस्य त्रिषु वर्णेषु नृपतेर्वर्णयोर्द्वयोः।
वैश्यस्य वर्णे एकस्मिन्[३] षडेतेऽपसदाः[४] स्मृताः'॥

( म. स्मृ. १०. १० )

इति। मुख्य[५]पितृजात्यभावात् अ[६]पसदाः। ननु—मूर्धावसिक्तत्वादीनि न जात्यन्तराणि अनुलोमजानां मातृजातीयत्वात्। तदाह विष्णुः—

---

१. Some manuscripts read पारशवो. २. H. reads विना ह्येष, but it does not give good sense. ३. The text reads वर्णे चैकस्मिन्. ४. H. reads पार्शवः स्मृताः and has ऽपसदाः in the margin. ५. D. substitutes मूल- for मुख्य-. ६. H. here also reads पार्शवाः and gives the reading ऽपसदाः in the margin.

'समानवर्णासु पुत्राः समानवर्णा भवन्ति । (१)
अनुलोमासु मातृसवर्णाः । (२) प्रतिलो-
मास्वार्यविगर्हिताः' । (३)

(वि. स्मृ. १६. १–३)

इति । शङ्खो ऽपि–

'क्षत्रियायां ब्राह्मणेनोत्पन्नः क्षत्रिय एव
भवति । क्षत्रियाद्वैश्यायां वैश्य एव
भवति । वैश्येन शूद्र्यां शूद्र एव भवति' ।

इति । नैष दोषः । अनयोर्वचनयोर्मातृजात्युदितधर्मप्राप्त्यर्थत्वात् । अन्यथा बीजोत्कर्षवैयर्थ्यापत्तेः । यथा क्षेत्रापकर्ष उत्कृष्टजातिनिवारकः एवं बीजोत्कर्षो ऽपि निकृष्टजातिं कुतो न निवारयेत् ? तस्मात् जात्यन्तराण्येव मूर्धावसिक्तत्वादीनि ।

ननु–देवलेनाऽनुलोमजातयोऽन्यथा वर्णिताः–

'ब्राह्मणात् क्षत्रियायां तु सवर्णो नाम जायते ।
क्षत्रियाच्चैव वैश्यायां जातोऽम्बष्ठ इति स्मृतः' ॥

इति । नायं दोषः । एकस्यामेव जातौ मूर्धावसिक्त-सवर्ण-संज्ञयोर्विकल्पेन प्रवृत्तत्वात् । एवमम्बष्ठादिष्वपि । न चैकत्र संज्ञाविकल्पे दृष्टान्ताभावः शङ्कनीयः । एकत्र निषाद-पारसवसंज्ञाविकल्पस्य मनु-देवल-याज्ञवल्क्यैरुदाहृतत्वात् । प्रतिलोमजास्तु मनुना दर्शिताः–

---

१. The text reads सवर्णा for समानवर्णा. २. I. reads अनुलोमजास्तु. ३. I. reads प्रतिलोमजाः. ४. Except A. and I. all omit अपि. ५. H. reads संज्ञाविकल्पेन.

'क्षत्रियाद्विप्रकन्यायां सूतो[1] भवति जातितः।
वैश्यान्मागध-वैदेहौ राज-विप्राङ्गनासुतौ। (११)
शूद्रादायोगवः क्षत्ता चण्डालश्चाधमो नृणाम्।
वैश्य-राजन्य-विप्रासु जायन्ते वर्णसङ्कराः। (१२)
आयोगवश्च क्षत्ता च चण्डालश्चाधमो नृणाम्।
प्रातिलोम्येन जायन्ते शूद्रादपसदास्त्रयः॥ (१६)
वैश्यान्मागध-वैदेहौ क्षत्रियात् सूत एव तु[2]। (१७)
(म. स्मृ. १०. ११-१७)

इति। देवलो ऽपि-
'शूद्रादायोगवः क्षत्ता[3] चण्डालः प्रतिलोमजाः।
वैश्यायां क्षत्रियायां च ब्राह्मण्यां च यथाक्रमम्॥
तथैव मागधो वैश्याज्जातो वैदेहकस्तथा।
ब्राह्मण्यां क्षत्रियाज्जातः सूतो जात्या न कर्मणा'॥

इति। याज्ञवल्क्यो ऽपि[4]-
'ब्राह्मण्यां क्षत्रियात् सूतो वैश्याद् वैदेहकस्तथा[5]।
शूद्राज्जातस्तु चण्डालः सर्वधर्मबहिष्कृतः॥
क्षत्रिया मागधं वैश्यात् शूद्रात् क्षत्तारमेव च।
शूद्रादायोगवं वैश्या जनयामास वै सुतम्'॥
(या. स्मृ. १. ९३-९४)

इति। वर्णानामनुलोमजानां प्रतिलोमजानां च परस्परसाङ्कर्येणोत्पन्नाः श्वपाक-पुल्कस[6]-कुक्कुटादयो जातिविशेषास्त्व-

१. G. reads शूद्रो for सूतो. २. I. substitutes च for तु. ३. Except A. H. and I. all read आयोगव-क्षत्तृ-चण्डालाः. ४. D. omits -ऽपि. ५. The text reads वैदेहिकः, but the reading seems to be incorrect. ६. G. reads -पुक्कस- for-पुल्कस- and D. reads -कुलट- for -कुक्कुट-.

नेकविधाः । ते च तद्वृत्तयश्च पुराणसारे प्रपञ्चिताः । तेषु च जातिविशेषेषूत्तमाधमभावं विविनक्ति देवलः—

'तेषां सवर्णजाः श्रेष्ठास्तेभ्योऽन्वगनुलोमजाः ।
अन्तराला बहिर्वर्णाः पतिताः प्रतिलोमजाः'॥

इति । विजातीयान्मिथुनादुत्पन्ना अन्तरालाः । ते च द्विविधाः अनुलोमजाः प्रतिलोमजाश्च । तत्रानुलोमजाः सवर्णजेभ्यो हीना अपि न वर्णबाह्याः । मातृसमानवर्णत्वात् । प्रतिलोमजास्तु वर्णबाह्यत्वात् पतिता अधमाः । याज्ञवल्क्योऽपि—

'असत्सन्तस्तु विज्ञेयाः प्रतिलोमानुलोमजाः'।

(या. स्मृ. १. ९५)

इति । क्वचिदधमजातेरप्युत्तमजातिप्राप्तिर्भवति । तदाह स एव—

'जात्युत्कर्षो युगे ज्ञेयः सप्तमे पञ्चमे ऽपि वा'।

(या. स्मृ. १. ९६)

इति । कूटस्थस्त्री-पुंसयुगमारभ्य परिगणनायां पञ्चमे षष्ठे सप्तमे वाऽनुलोमेन युग्मे जातिरुत्कृष्यते । तद्यथा । पुमान् विप्रः वधूः शूद्रा तयोर्युग्मं कूटस्थम् । तस्मादुत्पन्ना निषादी साऽपि विप्रेणोढा तयोर्युग्मं द्वितीयम् । एवं तदुत्पन्नायां वध्वां विप्रेणोढायां तृतीयादियुग्मपरम्परा भवति । तत्र सप्तमे युग्मे जातमपत्यं ब्राह्मण्योपेतं[1] भवति । एवं वैश्याविप्रयुगुलं कूटस्थम्[2] । तस्मादुत्पन्नाऽम्बष्ठा तस्याश्च विप्रस्य च युग्मं द्वितीयम् । एवं तदुत्पन्नाया विप्रेणोढायां षष्ठं यद्[3] युग्मं तस्मादुत्पन्नस्य ब्राह्मण्यं भवति । तथा क्षत्रिया-विप्रयोर्युग्मं कूटस्थम् । तदु-

१. D. reads ब्राह्मणत्वोपेतं. २. I. inserts युग्मं after कूटस्थम्. ३. D. omits यत्.

त्पन्ना मूर्द्धावसिक्ता। तस्याश्च विप्रस्य च युग्मं द्वितीयम्। तत्परम्परायां पञ्चमाद् युग्मादुत्पन्नस्य ब्राह्मण्यं भवति। एतदुक्तं भवति-पञ्चमे षष्ठे सप्तमे वेति व्यवस्थितविकल्पाः। कूटस्थयोर्दम्पत्योः समनन्तरैकान्तर-द्व्यन्तर-जातियोगे पञ्चमादयोऽवगन्तव्याः-इति। तथा च सति शूद्रा-वैश्ययोर्वैश्याक्षत्रिययोश्च समनन्तरत्वात् पञ्चमे, शूद्रा-क्षत्रिययोस्तु षष्ठे जातिरुत्कृष्यते। क्वचिदुत्तमजातेरप्यधमजातिप्राप्तिर्भवति। तदाह स एव-

'व्यत्यये कर्मणां साम्यं पूर्ववच्चाधरोत्तरम्'।

( या. स्मृ. १. ९६ )

इति। विप्रादीनां चतुर्णां वर्णानां मुख्यवृत्तितया विहितानि याजन-पालन-पाशुपाल्य-द्विजशुश्रूषाऽऽदीनि यानि कर्माणि तेषामापदि व्यत्यये विपर्यासे सति यदि निवृत्तायामप्यापदि तामधमवृत्तिं न परित्यजेत् तथा पुत्र-पौत्रादयोऽपि तां न परित्यजेयुः तदानीं पूर्ववत् पञ्चम-षष्ठ-सप्तमेषु युग्मेषु जातमपत्यं तद्वृत्त्युचितजातिसाम्यं प्रतिपद्यते—इति। तद्यथा-ब्राह्मणः शूद्रवृत्त्या जीवन् यदि पुत्रमुत्पादयति सोऽपि तथैव-इत्येवं परम्परायां सप्तमादुत्पन्नस्य शूद्रत्वं भवति। एवं क्षत्रियः शूद्रवृत्त्या जीवन् षष्ठे युग्मे शूद्रं जनयति। वैश्यस्तु पञ्चमे युग्मे-इति द्रष्टव्यम्। 'पूर्ववत्'—इति आरभ्येत्यर्थः। अधरोत्तरमिति भावप्रधानो निर्देशः। यथा वर्णसाङ्कर्ये प्रातिलोम्यमधमं आनुलोम्यमुत्तमं तथा वृत्तिसांकर्येऽपि। तद्यथा। क्षत्रियस्यापद्यपि याजनादिब्राह्मणवृत्त्युपजीवनमधमम्।

१. All, except I., omit एतदुक्तं भवति. २. D. and I. read -विकल्पः. ३. H. and I. omit तु. ४. I. reads पूर्ववदित्यादेरयमर्थः. ५. D. substitutes यद्यपि for आपद्यपि.

'न तु कदाचिज्ज्यायसीम्' ।

( व. स्मृ. २. २३ )

इति वसिष्ठेन निषिद्धत्वात् पाशुपाल्यादिवैश्यवृत्त्युपजीवनमुत्तमम् ।

'अजीवन्तः[१] स्वधर्मेणोऽनन्तरां यवीयसीं[२] वृत्तिमातिष्ठेरन्'।

( व. स्मृ. २. २२ )

इति वसिष्ठेनापदि विधानादिति । पूर्ववच्चाधरोत्तरमित्यस्याऽपरा व्याख्या–त्रिविधो हि सङ्करः। वर्णसङ्करः सङ्कीर्णसङ्करो वर्णसङ्कीर्णसङ्करश्चेति । तद्यथा—उत्तमाधमवर्णयोर्दाम्पत्यं वर्णसङ्करः । तज्जन्ययोर्माहिष्य-करण्योर्दाम्पत्यं सङ्कीर्णसङ्करः। वर्णसङ्कीर्णयोर्दाम्पत्यं वर्णसङ्कीर्णसङ्करः। तत्र-'विप्रान्मूर्धावसिक्तः'–इत्यानुलोम्येन वर्णसङ्करजा दर्शिताः। 'ब्राह्मण्यां[३] क्षत्रियात् सूतः'–इति प्रातिलोम्येन वर्णसङ्करजा दर्शिताः।

'माहिष्येण करण्यां तु रथकारः प्रजायते' ।

( या. स्मृ. १. ९५ )

---

१. D. reads आजीवन्तः. २. The text of Vasishtha (Bombay Lithographic Edition, printed in the year 1805 of the Sâlivâhana era) reads अन्यतरामपापीयसीं; all, except A. and the text (Bombay Edition by Rev. A. A. Führer, Ph. D. ; and the Banares Edition with commentary), read पापीयसीं, but we do not think it a correct reading. अपापीयसीं is a better reading. ३. G. reads ब्राह्मण्या; while D. omits the following portion—

'ब्राह्मण्यां क्षत्रियात् सूतः'—इति प्रातिलोम्येन वर्णसङ्करजा दर्शिताः।
माहिष्येण करण्यां तु रथकारः प्रजायते ।

इति सङ्करजा दर्शिताः.

इति सङ्कीर्णसङ्करजा दर्शिताः। इदानीमधरोत्तरमित्यनेन वर्णसङ्कीर्णसङ्करजाः प्रदर्श्यन्ते। अधरे प्रतिलोमजाः। उत्तरे अनुलोमजाः। तद्यथा। मूर्धावसिक्तायां सङ्कीर्णायामुत्तमायां क्षत्रिय-वैश्य-शूद्रैर्वर्णैरधमैरुत्पादिताः अधरे। निषाद्यां सङ्कीर्णायां अधमायां ब्राह्मण-क्षत्रिय-वैश्यैरुत्तमैर्वर्णैरुत्पादिता उत्तरे। अधरे चोत्तरे च अधरोत्तरम्। पूर्ववदिति पदेन—

'असत् सन्तस्तु विज्ञेयाः'।

(या. स्मृ. १. ९९)

इति वचनार्थोऽतिदिश्यते। यथा पूर्ववर्णैरुत्पादिता वर्णसङ्करजाः सङ्कीर्णसङ्करजाश्च प्रतिलोमजा असन्तः अनुलोमजाश्च सन्तः तथा वर्णसङ्कीर्णसङ्करजा अपि अनुलोमजाः सन्तः प्रतिलोमजास्त्वसन्तः—इति द्रष्टव्यम्। उक्तत्रैविध्ये वर्णसङ्करं वर्णसङ्कीर्णसङ्करं वाऽऽश्रित्योत्पद्यमाना वर्णाभासाः षष्टिर्भवन्ति। सङ्कीर्णसङ्करमाश्रित्योत्पद्यमाना जात्याभासा अनन्ताः। तदुक्तं स्मृत्यन्तरे—

'प्रातिलोम्यानुलोम्येन वर्णैस्तज्जैश्च वर्णतः।
षष्टिर्वाऽन्ये प्रजायन्ते तत्प्रसूतेस्त्वनन्तता'।।

इति। प्रातिलोम्यानुलोम्याभ्यां वर्णैरुत्पादिता द्वादश। षडनुलोमवर्णजाः सूत-वैदेह-चण्डाल-मागध-क्षत्रायोगवाः प्रतिलोमवर्णजाः। इत्थं वर्णजैस्तैर्द्वादशभिर्वर्णसम्बन्धादुत्पादिता अष्टचत्वारिंशत्। एवं षष्टिसंख्ययैवोपलक्षिता अन्ये

---

१. I. omits वर्णैः. २. D. and H. read षष्ठिस्त्वन्ये; while B. C. and F. read षष्ठचैवान्ये and G. reads षष्ठयैवान्ये. ३. I. reads प्रतिलोमानुलोमाभ्यां. ४. B. C. D. F. G. and H. omit the following portion—

षडनुलोमवर्णजाः। सूत-वैदेह-चण्डाल-मागध-
क्षत्रायोगवाः प्रातिलोमवर्णजाः इत्थं.

५. I. reads द्वादशभिर्वर्णैः संबन्धात् for वर्णजैस्तैर्द्वादशभिर्वर्णसम्बन्धात्.

वर्णाभासा जायन्ते । तद्यथा । मूर्धावसिक्ताम्बष्ठ-निषाद-माहिष्योग्र-करणाः षडनुलोमवर्णजाः । सूत-वैदेह-चण्डाल-मागध-क्षत्रायोगवाः प्रतिलोमवर्णजाः । इत्थं द्वादश । तत्र मूर्धावासिक्तेनानुलोमेन क्षत्रिया-वैश्या-शूद्रासूत्पादितास्त्रयः । प्रातिलोम्येन ब्राह्मण्यामेकः । अम्बष्ठस्यानुलोम्येन द्वौ । प्रातिलोम्येन द्वौ । निषादस्यानुलोम्येनैकः । प्रातिलोम्येन त्रयः । माहिष्यस्यानुलोम्येन द्वौ । प्रातिलोम्येन द्वौ । उग्रस्यानुलोम्येनैकः । प्रातिलोम्येन त्रयः करणस्यानुलोम्येनैकः । प्रातिलोम्येन त्रयः—इति पूर्वषट्कोत्पादिताश्चतुर्विंशतिः । एवं सूतादीनां षण्णां वर्णानामेकैकस्य चतसृषु वर्णेष्वेकैकः—इति तेऽपि चतुर्विंशतिः । एवं मिलित्वा षष्टिः सम्पद्यते । तेभ्यः षष्टिसंख्याकेभ्य उत्पादितैरपत्यैराभासानां संख्याया आनन्त्यं भवतीति समाप्ता प्रासङ्गिकी[1] जातिभेदकथा ।

## ॥ इति जातिभेदनिरूपणम् ॥

विवाहानन्तरभाविनः प्रकृताः[2] पञ्चमहायज्ञादयः सोमसंस्थाऽन्ताः संस्कारा आह्निकवचने षट्कर्मवचने च निरूपिताः—इति नात्र पुनरुच्यन्ते । अथावशिष्टा[3] गृहस्थधर्मा निरूप्यन्ते । तत्रोपाकर्मविधिमाह याज्ञवल्क्यः—

'अध्यायानामुपाकर्म श्रावण्यां श्रवणेन वा ।
हस्तेनौषधिभावे वा पञ्चम्यां श्रवणस्य तु' ॥

( या. स्मृ. १. १४२ )

इति । अधीयन्ते—इत्यध्याया वेदाः । तेषामुपाकर्म प्रारम्भः ।

---

१. B. C. F. and H. read प्रासङ्गिणी. २. H. and I. read प्राकृताः
३. B. C. D. and F. read तथा for अथ.

स च श्रावणमासस्य पौर्णमास्यां अन्यस्यां वा श्रवणनक्षत्रयुक्तायां तिथौ हस्तनक्षत्रयुक्तायां श्रावणमासस्य पञ्चम्यां वा कर्त्तव्यः। यदा तु श्रावणमासे ओषधयो न प्रादुर्भवन्ति तदा भाद्रपदे मासे प्रोक्ततिथिषु कुर्यात्। तदाह वसिष्ठः—

'अथातः स्वाध्यायोपाकर्म श्राव-
ण्यां पौर्णमास्यां[1] प्रौष्ठपद्यां वा[2]'।

(व. स्मृ. १३. १.)

इति। मनुरपि—

'श्रावण्यां प्रौष्ठपद्यां वाऽप्युपाकृत्य यथाविधि।
युक्तश्छन्दांस्यधीयीत मासान् विप्रोऽर्द्धपञ्चमान्'॥

(म. स्मृ. ४. ९५)

इति। अर्द्धं पञ्चमं येषां ते तथा, सार्द्धान् चतुरो मासानित्यर्थः। यदा पुनः[3] श्रावण्यां प्रौष्ठपद्यां[4] वा शुक्रास्तमयादिप्रतिबन्धः तदानीमाषाढ्यां कर्त्तव्यम्। तदुक्तं कूर्मपुराणे—

'श्रावणस्य तु मासस्य पौर्णमास्यां द्विजोत्तमाः।
आषाढ्यां प्रौष्ठपद्यां वा वेदोपाकरणं स्मृतम्'॥

(कू. पु. १. २. १४. ६२)

इति। बौधायनोऽपि—

'श्रावणपौर्णमास्यामाषाढ्यां वोपा[5]-
कृत्य तैष्यां माघ्यां वोत्सृजेत्[6]'।

(बौ. स्मृ. १. ५. १२. १६)

---

१ H. omits पौर्णमास्यां. २. B. and C. substitute च for वा. ३. D. inserts तु after यदा. ४. B. C. D. and F. read श्रावणी-प्रौष्ठपद्योः ५. B. C. and F. read चोपाकृत्य for वोपाकृत्य. ६. B. C. and F. read चोत्सृजेत् for वोत्सृजेत् and the text reads उत्सृजेयुः for उत्सृजेत्.

इति । तेषु त्रिष्वपि मासेषु पूर्णिमा-श्रवण-हस्ताः शाखा-भेदेन व्यवस्थिताः । तदाह गोभिलः–

'पर्वण्यौदयिके कुर्युः श्रावण्यां[१] तैत्तिरीयकाः ।
बह्वृचाः श्रवणर्क्षे[२] तु हस्तर्क्षे सामवेदिनः' ॥

इति । गार्ग्यो ऽपि–

'पर्वण्यौदयिके कुर्युः श्रावण्यां तैत्तिरीयकाः ।
बह्वृचाः श्रवणे कुर्युर्ग्रह-सङ्क्रान्तिवर्जिते' ॥

इति । अत्र औदयिके इति पर्वादिषु सर्वत्र सम्बद्ध्यते । पर्वण[३] औदयिकत्वे विशेषमाह स एव–

'श्रावणी पौर्णमासी तु सङ्गवात्परतो यदि ।
तदा त्वौदयिकी ग्राह्या नान्यथौदयिकी[४] भवेत्' ॥

इति । श्रवणस्य[५] त्वौदयिकत्वमन्वय-व्यतिरेकाभ्यां व्यासेन दर्शितम्–

'श्रवणेन[६] तु यत्कर्म ह्युत्तराषाढसंयुते ।
संवत्सरकृतो ऽध्यायस्तत्क्षणादेव नश्यति ॥

१. B. D. G. and H. read श्रावणं for श्रावण्यां and C. and F. read श्रावणे for the same. २. I. reads श्रवणे कुर्युर्ग्रहसंक्रान्तिवर्जिते, but this is a mistake. It omits the following portion—

'......श्रवणर्क्षे तु हस्तर्क्षे सामवेदिनः' ॥

इति । गार्ग्योऽपि-

'पर्वण्यौदयिके कुर्युः श्रावण्यां तैत्तिरीयकाः ।
बह्वृचाः.......................................' ॥,

and adds the latter portion of the quotation from Gârgya to that of Gobhila. Also it may be said that it omits the whole of Gobhila's quotation together with गार्ग्योऽपि. ३. I. reads पर्वणि. ४. B. C. D. F. G. and H. read अन्यदा for अन्यथा. ५. C. reads श्रावणस्य. Probably this is a mistake. ६. C. reads श्रावणेन.

धनिष्ठासंयुते कुर्याच्छ्रावणं कर्म यद्भवेत् ।
तत् कर्म सफलं ज्ञेयमुपाकरणसंज्ञितम्’॥

इति[1] । श्रवणे यत् कर्म विहितं तदुत्तराषाढसंयुते न कुर्यात् । यदि कुर्यात् तदा नश्यतीति योजनीयम् । ‘ग्रह-संक्रान्तिवर्जिते’–इति यदुक्तं तत्र विशेषमाह गार्ग्यः—

‘अर्धरात्रादधस्ताच्चेत् सङ्क्रान्तिर्ग्रहणं तथा ।
उपाकर्म न कुर्वीत परतश्चेन्न दोषकृत् ॥
यत्रा[2]र्धरात्रादर्वाक् चेद् ग्रहः सङ्क्रम एव वा[3] ।
नोपाकर्म तदा कुर्यात् श्रावण्यां श्रवणे ऽपि च[4]’ ॥

इति । यत्तु—कर्कट[5]मासे नोपाकर्म कर्त्तव्यम् । तथा च स्मृत्यन्तरे—

‘वेदोपाकरणे प्राप्ते कुलीरे संस्थिते रवौ ।
उपाकर्म न कर्त्तव्यं कर्त्तव्यं सिंहयुक्तके[6]’॥

इति तदेत[7]द्देशान्तरविषयम् । तथा च बृहस्पतिः[8]—

‘नर्मदोत्तरभागे तु कर्त्तव्यं सिंहसंयुते ।
कर्कटे संस्थिते भानावुपाकुर्यात्तु[9] दक्षिणे’ ॥

---

१. D. omits इति. २. B. C. and F. read यत्रा; while D. and H. read यत्रा. ३. B. C. D. F. G. and H. read च instead of वा. ४. G. and H. substitutes वा for च, while D. reads श्रवणेन वा. ५. I. reads कर्कटे मासे; while D., instead of inserting यत्तु कर्कटमासे नोपाकर्म कर्त्तव्यम् । immediately after the quotation from Gârgya, gives it after the verse beginning with वेदोपाकरणे. All, except A. and G., omit यत्तु, but the omission affects the sense. ६. I. reads -संयुते. ७. B. C. and F. omit तदेतद्देशान्तर-विषयम् । तथा च बृहस्पतिः—

नर्मदोत्तरभागे तु कर्तव्यं सिंहसंयुते ।
कर्कटे संस्थिते भानावुपाकुर्यात्तु दक्षिणे ॥.

८. D. and H. read स्मृत्यन्तरम् for बृहस्पतिः. ९. D. G. and H. substitute च for तु.

इति । ननु—उपाकरणं ब्रह्मचारिधर्मः ।

'उपाकृत्याधीयीत'

इति[1] तस्य ग्रहणाध्ययनाङ्गत्वप्रतीतेः । ग्रहणाध्ययनं च ब्रह्मचारिण एव ।

'वेदमधीत्य स्नायात्' ।

इति स्नानात् प्राचीनत्वावगमनात्[2] । अतः कथमिदं गृहस्थधर्मत्वेनोच्यते ? नायं दोषः । गृहस्थस्याऽपि ग्रहणाध्ययनेऽधिकारसम्भवात् । अत एव 'अधीयीत'—इत्यनुवृत्तौ शौनक आह–

'समावृत्तो[3] ब्रह्मचारिकल्पेन । यथा-
न्यायमितरे । जायोपेतोऽप्येवम्[4]' ।

इति । अस्यार्थः—येन नियमविशेषेण युक्तो ब्रह्मचारी अधीते तेनैव नियमेन समावृत्तोऽप्यधीयीत । समावृत्तादितरे ब्रह्मचारिणस्तु यथान्यायं स्वविध्युक्तप्रकारेणाधीयीरन्[5] । तथा जायोपेतो गृहस्थोऽपि ब्रह्मचारिवन्नियमोपेतोऽधीयीतेति । न च–समावृत्त-गृहस्थयोर्ग्रहणाध्ययनाधिकारे–

'वेदमधीत्य स्नायात्' ।

इति विरुद्ध्येत—इति शङ्कनीयम् । तस्य वचनस्य विद्यास्नातकविषयत्वात् । अत एव—

१. D. G. H. and I. omit इति. २. D. G. and I. read प्राचीनत्वावगमात्. ३. I. adds आ before समावृत्तो, but this is a mistake. We are unable to search the text; but it is plain that the author (Mâdhâvâcharya) has not used आ. ४. D. H. and I. read जायोपेता इत्येके; while G. reads जायोपेत इत्येके. These readings are not grammatically incorrect, but from his explanation given below the author seems not to agree with them. ५. B. C. and F. add च after this word.

'[1]वेदं व्रतानि वा पारं नीत्वा ह्युभयमेव वा'।

( या. स्मृ. १. ५१ )

इति पक्षद्वयोपन्यासो दर्शितः। उपाकरणस्य गृहस्थधर्मत्वाभ्युपगमे मनु-याज्ञवल्क्यस्मृत्योर्गृहस्थधर्मप्रकरणपाठोऽप्यनुगृहीतो भवति। उपाकरणस्येतिकर्त्तव्यता कार्ष्णाजिनिना-दर्शिता-

'उपाकर्मणि चोत्सर्गे यथाकालं समेत्य च।
ऋषीन् दर्भमयान् कृत्वा पूजयेत् तर्पयेत्ततः'॥

इति। बौधायनोऽपि-

'गौतमादीनृषीन् सप्त कृत्वा दर्भमयान् पुनः।
पूजयित्वा यथाशक्ति तर्पयेद्वंशमुद्धरन्'॥

इति।

॥ इत्युपाकर्म ॥

अथोत्सर्जनम्। तत्र याज्ञवल्क्यः-

'पौषमासस्य रोहिण्यामष्टकायामथापि वा।
जलान्ते छन्दसां कुर्यादुत्सर्गं विधिवद्बहिः'॥

( या. स्मृ. १. १४३ )

इति। मनुरपि-

'पुष्ये तु छन्दसां कुर्याद्बहिरुत्सर्जनं द्विजः।
माघशुक्लस्य वा प्राप्ते पूर्वाह्णे प्रथमेऽहनि'॥

( म. स्मृ. ४. ९६ )

---

१. B. C. D. F. and G. read वेदव्रतानि and H. reads वेदान् व्रतानि, but the text does not follow them.

इति । यदा श्रावण्यामुपाकर्म तदापुष्यमासस्य शुक्लप्रतिपदि पूर्वाह्ने, यदि प्रौष्ठपद्यामुपाकर्म तदा माघस्येति व्यवस्थितोऽयं[१] विकल्पः । उत्सृष्टस्यापि पुनरध्ययनं प्रागुपाकरणात् कालविशेषे विदधाति मनुः—

'अतः[२] परं तु छन्दांसि शुक्लेषु[३] नियतः पठेत् ।
वेदाङ्गानि[४] रहस्यं च कृष्णपक्षेषु सम्पठेत्[५]'॥

( म. स्मृ. ४. ९८. )

इति । कूर्मपुराणे ऽपि—

'छन्दांस्यूर्ध्वमतोऽभ्यस्येत् शुक्लपक्षेषु वै द्विजः ।
वेदाङ्गानि पुराणानि कृष्णपक्षेषु मानवः'॥

( कू. पु. १. २. १४. ६९ )

इति । यदि भाविविघ्नभयात्[६] सहसा ऽध्येतव्यमिति[७] बुद्धिः तदा संवत्सरान्ते प्रागुपाकरणादुत्सृजेत् ।

' यत् स्वाध्यायमधीतेऽब्दम्' ।

इति श्रुतेः । उपाकरणोत्सर्जने प्रशंसति कात्यायनः—

'प्रत्यब्दं यदुपाकर्म सोत्सर्गं विधिवद् द्विजैः ।
क्रियते छन्दसां तेन पुनराप्यायनं भवेत् ।
अयातयामैश्छन्दोभिर्यत् कर्म क्रियते द्विजैः ।
क्रीडमानैरपि सदा तत्तेषां[८] सिद्धिकारकम्'॥

( का. स्मृ. ३. २७. १७–१८ )

---

१. B. C. D. F. G. and H. omit अयं. २. The text reads अत ऊर्ध्वं for अतःपरं. ३. D. reads शुक्ले तु. ४. H. and I. read अङ्गानि च for वेदाङ्गानि, and the text reads वेदाङ्गानि च सर्वाणि for वेदाङ्गानि रहस्यं च. ५. B. C. D. F. and G. read कृष्णपक्षे पठेदिति; while H. and I. omit कृष्णपक्षेषु सम्पठेत्. ६. B. C. D. F. G. and H. read -विघ्नतया for -विघ्नभयात्. ७. G. reads ऽध्येतव्यानि. ८. D. reads तत्रैषां.

अन्येऽपि धर्माः कूर्मपुराणे दर्शिताः–

‘नाधार्मिकैर्वृते ग्रामे न व्याधिबहुले भृशम्।
न शूद्रराज्ये निवसेन्न पाषण्डिजनैर्वृते ॥ (२३)
हिमवद्विन्ध्ययोर्मध्यं पूर्व-पश्चिमयोः शुभम्।
मुक्त्वा समुद्रयोर्देशं नान्यत्र निवसेत् द्विजः ॥ (२४)
कृष्णो वा यत्र चरति मृगो नित्यं स्वभावतः।
पुण्याश्च विश्रुता नद्यस्तत्र वा निवसेत् द्विजः ॥ (२५)
परस्त्रियं न भाषेत नाऽयाज्यं याजयेद्बुधः ॥ (८९)
न देवायतनं गच्छेत् कदाचिच्चाऽप्रदक्षिणम् ॥ (९०)
न वीजयेद्वा वस्त्रेण समवायं च वर्जयेत्।
नैकोऽध्वानं प्रपद्येत नाऽधार्मिकजनैः सह ॥ (९१)
न निन्देद्योगिनः सिद्धान् व्रतिनो वा यतींस्तथा’। (९४)
(कू. पु. १. २. १६. २३–९४)

इति। मनुरपि–

‘देवतानां गुरो राज्ञः स्नातकाचार्ययोस्तथा।
नाक्रामेत् कामतश्छायां बभ्रुणो दीक्षितस्य च ॥ (१३०)
क्षत्रियं चैव सर्पं च ब्राह्मणं च बहुश्रुतम्।
नावमन्येत वै भूष्णुः कृशानपि कदाचन ॥ (१३५)
आमृत्योः श्रियमान्विच्छेन्नैनां मन्येत दुर्लभाम् ॥ (१३७)

१. D. reads पापर्द्धि-. २. The text reads मध्ये. ३. D. reads विस्तृताः-
४. The text reads न देवायतने स्वपेत्.

सत्यं ब्रूयात् प्रियं ब्रूयात् न ब्रूयात् सत्यमप्रियम् ।
प्रियं च नानृतं ब्रूयादेष[1] धर्मः सनातनः ॥ (१३८)
नाऽतिकल्यं नाऽतिसायं नाऽतिमध्यं दिने[2] स्थिते ।
नाऽज्ञातेन समं गच्छेन्नैको न वृषलैः सह ॥ (१४०)
हीनाङ्गानतिरिक्ताङ्गान् विद्याहीनान् वयोऽधिकान् ।
रूप-द्रविणहीनांश्च जातिहीनांश्च नाऽक्षिपेत् ॥(१४१)
वैरिणं नोपसेवेत सहायं चैव वैरिणः ।
अधार्मिकं तस्करं च परस्यैव च[3] योषितम्' ॥(१३३)
( म. स्मृ. ४. १३०–१४१ )

इति । मार्कण्डेयो ऽपि—

'असदालापमनृतं वाक्पारुष्यं विवर्जयेत् ।
असच्छास्त्रमसद्वादमसत्सेवां च पुत्रक ॥ (१९)
न म्लेच्छभाषां शिक्षेत न पश्येदात्मनः शकृत् ।
नाऽधितिष्ठेच्छकृन्मूत्र[4]-केश-भस्म-कपालिकाः ॥ (२४)
तुषाङ्गारास्थिशीर्णानि[5] रज्जु-वस्त्रादिकानि च ॥ (२५)
वर्जयेन्मार्जनीरेणुं नापेयं च पिबेद्द्विजः' ।

इति । सामान्येन च धर्मं संक्षिप्याह मनुः—

'येनास्य पितरो याता येन याताः पितामहाः ।
तेन यायात् सतां मार्गं तेन गच्छन्न रिष्यति[6] ॥ (१७८)

---

१. B. C. and F. read एवं धर्मः. २. All, except A. and the text, read नाऽतिमध्यंगते रवौ. ३. I. reads तु for च. ४. B. C. and F. read -मूत्रं, G. also reads the same. ५. G. and I. read -शीर्षाणि; while H. reads the portion as follows:—

-शाणानि रज्जुवस्त्रादिकानि च.

६. The text reads रिष्यते.

यत् कर्म कुर्वतोऽस्य स्यात् परितोषोऽन्तरात्मनः।
तत् प्रयत्नेन कुर्वीत विपरीतं तु वर्जयेत्' ॥ (१६१)
(म. स्मृ. ४. १६१-१७८)

इति।

॥ इत्थं ब्रह्मचारि-गृहस्थाश्रमधर्मौ निरूपितौ ॥

अथ वानप्रस्थाश्रमो निरूप्यते। ननु-केचन[२] गार्हस्थ्य-व्यतिरिक्तमाश्रमान्तरं नेच्छन्ति उदाहरन्ति च तत्र गौतम-[३]स्मृतिम्-

'ऐकाश्रम्यं[४] त्वाचार्याः[५] प्रत्यक्षविधानाद्गार्हस्थ्यस्य'।
(गौ. स्मृ. ३. ३६)

इति। आचार्यास्तु गार्हस्थ्यमेवाश्रमो[६] नान्यः कश्चिदस्तीति मन्यन्ते। हेतुं चाचक्षते गार्हस्थ्यस्य प्रत्यक्षश्रुतिषु विधानादितरस्य तदभावात्-इति। यथा[७] हि-बह्वृचाः 'अग्निमीळे'-(ऋ. सं. १. १. १. १) इत्यारभ्य मन्त्र-ब्राह्मणात्मके कृत्स्नेऽपि वेदे होतृकर्त्तव्यमेवामनन्ति। यजुर्वेदिनश्च 'इषे त्वा'-(कृ. य. सं. १. १. १. १) इत्यादिना अध्वर्युकर्त्तव्यम्। सामगा अपि 'अग्न आयाहि'- (सा. सं. १. १. १. १) इत्यादिनोद्गातृकर्त्तव्यम्। होत्रादयश्च गृहस्था एव। तथा चाधीयमानेषु प्रत्यक्षवेदेषु गृहस्थकर्त्तव्याभिधानेन तदाश्रम-

---

१. D. reads कुर्वतोऽपि स्यात्, H. and I. read कुर्वतो ऽप्यस्य. २. D. H. and I. read केचित्. ३. D. does not add गौतम- before स्मृतिम्. ४. B. H. and I. read एकाश्रम्यं, D. and G. read एकाश्रमं. ५. G. and H. substitute वा for तु. ६. I. reads गार्हस्थ्यमेक एवाश्रमो. ७. I. reads तथा हि.

विधिः परिकल्प्यते न त्वेवमितराश्रमविधिकल्पकं किञ्चित् पश्यामः । अत एव–

'यावज्जीवमग्निहोत्रं जुहोति' ।

इति श्रुतिः कृत्स्नं पुरुषायुषं गृहिकर्मस्वेव विनियुङ्क्ते । श्रुत्यन्तरं च–

'एतद्वै जरामर्यं सत्रं यदग्निहोत्रम् । जरया वा ह्येवास्मान्मुच्यते मृत्युना वा' ।

इति । न चैवं सति कथं ब्रह्मचर्याश्रमाङ्गीकारः–? इति शङ्कनीयम् । नैष्ठिकस्य पक्षकोटिनिःक्षिप्तत्वादुपकुर्वाणकस्य व्रतित्वेन आश्रमित्वाभावात् । यदा कर्मित्वेनाभिमतयोर्ब्रह्मचारि-वानप्रस्थयोरीदृशी गतिः तदा कैव कथा कृत्स्नकर्मत्यागिनो यतेः । तस्मात् गार्हस्थ्यमेक एवाश्रमः– इत्याचार्याणां पक्षः ।

अत्रोच्यते । अस्ति हि चतुर्णां आश्रमाणां प्रत्यक्षश्रुतिविधानम् । तथा च जाबाला आमनन्ति–

'ब्रह्मचर्यं समाप्य गृही भवेत् गृही भूत्वा वनी भवेत् । वनी भूत्वा प्रव्रजेत्' ।

(जा. उ. ४)

---

१. G. reads -कल्पते. २. A. reads इतराश्रमविधिं कञ्चित् पश्यामः. for इतराश्रमविधिकल्पकं किञ्चित् पश्यामः. ३. D. reads गृहकर्म. ४. D. omits सत्रं. ५. D. reads पक्ष-कोटि-क्षिप्तत्वात्. ६. B. C. and F. read अप्रसिद्धत्वेन for व्रतित्वेन and I. reads प्रतिपन्नत्वेन for the same. ७. B. C. F. G. H. and I. read -वनस्थयोः. ८. G. inserts च after समाप्य. ९. B. C. and F. reads गृहाश्रमी भूत्वा प्रव्रजेत् for गृही भूत्वा वनी भवेत् वनी भूत्वा प्रव्रजेत्. H. reads गृहाश्रमी भूत्वा वनी भवेत् वनाश्रमी भूत्वा प्रव्रजेत् and I. reads गृहाद्वनी भूत्वा प्रव्रजेत् for the same.

इति । आचार्यास्तु रागिणमभिप्रेत्य तस्योर्ध्वरेतःसु नै[1]ष्ठिकब्रह्मचार्यादिषु त्रिष्वाश्रमेष्वनधिकारं मन्यमाना गार्हस्थ्यमेव वर्णयामासुः । यत्तु कृत्स्ने[2]ऽपि वेदे गृहस्थधर्मस्यैवाम्नानमित्युक्तम् तदयुक्तम्[3] । वानप्रस्थस्यापि स[4]दारस्याग्निहोत्रादिसद्भावात् । नैष्ठिकब्रह्मचारिधर्मस्तु छन्दोगैः पठ्यते—

'ब्रह्मचार्याऽऽचार्यकुलवासी' ।

(छां. उ. २. २३. २)

तृतीयो ऽत्यन्तमात्मानमाचार्यकुले ऽवसादयन्' ।

(छां. उ. २. २३. २)

इति । उपकुर्वाणकधर्माः सर्वशाखासूपनयनप्रकरणेषु प्रसिद्धाः । यतिधर्माश्चोपनिषद्भागे । अतो यावज्जीवादिश्रुतेः कामिविषयत्वेनाऽऽश्रमान्तराणि न चापलपितुं[5] शक्यन्ते । साधिताश्चोत्तरमीमांसायां चत्वार आश्रमाः । तस्मात् क्रमप्राप्तो वानप्रस्थाश्रमः प्रस्तूयते । तत्र याज्ञवल्क्यस्त्वं[6] विधत्ते—

'सुतविन्यस्तपत्नीकस्तया वा ऽनुगतो वनम् ।
वानप्रस्थो ब्रह्मचारी साग्निः सोपासनो व्रजेत्' ॥

(या. स्मृ. ३. ४५ )

इति । वानप्रस्थो बुभूषुः स्वस्य ब्रह्मचर्यनियमेन पत्न्या अनुपयोगात्तां रक्षणीयत्वेन पुत्रेषु निःक्षिप्य वनं व्रजेत् । यदा साऽपि नियता सती पतिशुश्रूषां कामयते तदा तया सह वनं व्रजेत् । तस्मिन् पक्षे वैतानिक-गृह्याभ्यामग्निभ्यां सह

१. I. reads ब्रह्मचर्यादिषु, but the reading seems to be incorrect. २ D. inserts च before अपि. ३ D omits तदयुक्तम्. ४. H. reads सदाचारस्य; while G. reads सदाचाराग्निहोत्रादि- for सदारस्याग्निहोत्रादि-. ५. D. reads नच पालयितुं; while I. reads न तया प्रलपितुं. The latter reading is incorrect. ६. D. substitutes अपि for त्वं विधत्ते.

गच्छेत् । सुतनिक्षेपपक्षे स्वात्मनि अग्नीन् समारोप्य प्रव्रजेत् । तदाह छागलेयः—

'अपत्नीकः समारोप्य ब्राह्मणः प्रव्रजेद् गृहात्' ।

इति । तादृशो ऽरण्यं गत्वा[१] वैखानससूत्रोक्तमार्गेणाग्निमादध्यात् । तदाह वसिष्ठः—

'वानप्रस्थो जटिलश्चीराजिनवासाः[२] । ( १ ) न फालकृष्टमधितिष्ठेत् । ( २ ) अकृष्टं मूलफलं सञ्चिन्वीत । ( ४ ) ऊर्ध्वरेताः । ( ५ ) क्षमाशयः[३] । (६) दद्यादेव न प्रतिगृह्णीयात् । (८) ऊर्ध्वं[४] पञ्चभ्यो मासेभ्यः । (१०) श्रामणकेनाग्नि[५]माधायाहिताग्निः स्यात्[६] । (११) वृक्षमूलनिके[७]तन ऊर्ध्वं षड्भ्यो मासेभ्यो ऽनग्निरनिकेतः ।(१२)

१. D. omits गत्वा and reads राधावैखानस-; while G. reads गत्वा वेषमानस- for गत्वा वैखानस-. For the same H. reads तादृशोऽरण्यां राधवैखानस.- but has तादृशोरण्यं गत्वा राधवैखानस- in the margin. We cannot make out here the meaning of राध-. २. The texts ( Bombay Sanskrit Series Edition and Benares Edition) read -जिनवासी, but the Bombay Edition ( lithographic ) and all our manuscripts do not follow this reading. ३. D. reads क्षुपशयः, G. reads क्षुपार्शपद्. H. reads क्षुत्पाशयो. All the three readings are incorrect and meaningless. I. reads क्षपाशयो. The Bombay Edition (Rev. A. A. Fuhrer, Ph. D.) read क्षामाशयः. The Benares Edition and the Bombay Edition (lithographic) read क्षमाशयः. ४. This Sutra is found in all our manuscripts, but the three printed copies of the text have omitted it. A manuscript of the text does not omit it. Here the Bombay Sanskrit Series Edition is mistaken. ५. The B. Edition reads श्रावणकेन, but this reading is meaningless. ६. B. C. F. G. H. and I. omit स्यात्. ७. B. C. F. G. H. and I. omit same words and read वृक्षमूलिको स्यात् for वृक्षमूलनिकेतन ऊर्ध्वं षड्भ्यो मासेभ्यो ऽनग्निरनिकेतः। स्यात्. The portion वृक्षमूलनिकेतनः. is added to the 11th Sûtra in each of the three printed copies of the text, but this portion belongs to the tenth Sûtra.

दद्याद् देवर्षि-पितृ-मनुष्येभ्यः स गच्छेत्
स्वर्गमानन्त्यम्'। (१३)

(व. स्मृ. ९. १–१३)

इति। श्रामणकं तपस्विधर्मप्रतिपादकं वैखानससूत्रम्। अकृष्टमूलमाहारत्वेन ब्रुवन् ग्राम्याहारपरित्यागं सूचयति। अत एव मनुः–

'सन्त्यज्य ग्राम्यमाहारं सर्वं चैव परिच्छदम्।
पुत्रेषु भार्यां निक्षिप्य वनं गच्छेत् सहैव वा'॥

(म. स्मृ. ६. ३)

इति। गृहस्थस्य वनप्रवेशावसरमाह यमः–

'द्वितीयमायुषो भागमुषित्वा तु गृहे द्विजः।
तृतीयमायुषो भागं गृहमेधी वने वसेत्॥
उत्पाद्य धर्मतः पुत्रानिष्ट्वा यज्ञैश्च शक्तितः।
दृष्ट्वाऽपत्यस्य चापत्यं ब्राह्मणोऽरण्यमाविशेत्'॥

इति। अत्र ब्राह्मणग्रहणं त्रैवर्णिकोपलक्षणार्थम्।

'उषित्वा तु गृहे द्विजः'–

इत्युपक्रमानुसारात्। मनुरपि–

'गृहस्थस्तु यदा पश्येद्वलीपलितमात्मनः।
अपत्यस्यैव चापत्यं तदाऽरण्यं समाश्रयेत्'॥

(म. स्मृ. ६. २)

इति। शङ्ख-लिखितावपि–

१. B. C. F. G. and H. as well as the three printed copies of the text omit -ऋषि-. २. B. C. D. F. and G. substitute वा for च.

'पुत्रानुत्पाद्य संस्कृत्य वेदमध्याप्य वृत्तिं
विधाय दारैः संयोज्य गुणवति पुत्रे कुटु-
म्बमावेश्य कृतप्रस्थानलिङ्गो वृत्तिविशे-
षाननुक्रामेत्[1]। क्रमशो यायावराणां वृ-
त्तिमुपास्य वनमाश्रयेदुत्तरायणे पूर्वपक्षे'।

इति। एतच्चाश्रमसमुच्चयपक्षे द्रष्टव्यम्। असमुच्चयपक्षे त्व-
कृतगार्हस्थ्यो ऽपि वानप्रस्थे ऽधिक्रियते। तदाह वसिष्ठः—

'चत्वार आश्रमाः। (१) ब्रह्मचारि-गृहस्थ-वानप्रस्थ-
परिव्राजकाः। (२) तेषां वेदमधीत्य वेदौ वेदान्वा-
ऽविशीर्णब्रह्मचर्यो[2] यमिच्छेत् तमावसेत्।(३)
(व. स्मृ. ७. १–३)

इति। आपस्तम्बो ऽपि—

चत्वार आश्रमा गार्हस्थ्यं आचा-
र्यकुलं मौनं वानप्रस्थम्'।

इत्युपक्रम्य—

'यत्कामयेत तदारभेत'।
(आ. ध. सू. २. ९. २१. १)

इत्युपसंहरति। वनप्रतिष्ठस्य[3] कर्त्तव्यमाह याज्ञवल्क्यः—

'अफालकृष्टेनाग्नींश्च पितॄन् देवातिथीनपि।
भृत्यांश्च तर्पयेच्छश्वज्जटा-लोमभृदात्मवान्'[4]॥
(या. स्मृ. ३. ४६)

इति। अफालकृष्टं शाक-मूल-नीवारादि। तथा च मनुः—

---

१. D. G. and I. read अनुक्रमेत्. २. B. C. D. F. G. H. and I. read वेदमधीत्य वेदं विदित्वा चीर्ण- for वेदौवेदान्वाऽविशीर्ण.- ३. I. reads वनप्रतिष्ठस्य ४. The text reads श्मश्रु- for शश्वत्.

'मुन्यन्नै[1]र्विविधैर्मेध्यैः शाक-मूल-फलेन वा।
एतैरे[2]व महायज्ञान् निर्वपेद्विधिपूर्वकम्'॥

(म. स्मृ. ६. ५)

इति। न च—ब्रह्मचारि-विधुरयोरनग्निकयोर्वनस्थयोः कथमग्नीनां तर्पणं?—इति वाच्यम्। वैखानसशास्त्रोक्तस्याग्नेः सद्भावात्। न च[3]—अफालकृष्टनीवारादिना पुरोडाशकरणे 'व्रीहिभिर्यजेत'—इति श्रुतिर्बाध्येत—इति शङ्कनीयम्। व्रीहीणामप्यफालकृष्टानां सम्भवात्। तस्मादकृष्टपच्यैर्व्रीह्यादिभिर्वैतानिकं कर्म[4] कुर्यात्। तथा च मनुः—

'वैतानिकं च जुहुयादग्निहोत्रं यथाविधि।
दर्शमस्कन्दयन् पर्व[5] पौर्णमासं विशेषतः[6]॥
ऋक्षेष्ट्या[7]ग्रयणं चैव चातुर्मास्यानि चाहरेत्।
तुरा[8]यणं च क्रमशो द[9]क्षस्यायनमेव च॥
वा[10]सन्त-शारदैर्मेध्यैर्मुन्यन्नैः स्वयमाहृतैः।
पुरोडाशं च[11]रुं चैव निर्वपेद्विधिपूर्वकम्'॥

(म. स्मृ. ६. ९-११)

इति। मे[12]ध्यैर्यज्ञार्हैर्मुन्यन्नैरकृष्टपच्यैरित्यर्थः। संग्राह्यद्रव्यस्येयत्तामाह याज्ञवल्क्यः—

---

१. G. reads उत्पन्नैः. २. The text reads एतान्येव for एतैरेव. ३. B. C. and F. substitute वा for च. ४. D. omits कर्म. ५. G. substitutes ब्रह्म for पर्व; ६. B. C. F. H. and I. read पौर्णमास्यां प्रयोगतः for पौर्णमासं विशेषतः; while the text substitutes च योगतः for विशेषतः. ७. D. reads पक्षेष्ट्या—; while I. reads आग्रहायणं for आग्रयणं. ८. I. and the text read उत्तरायणं for तुरायणं. ९. The text reads दाक्षस्य. १०. I. reads वासन्तैः शारदैः. ११. The text reads चरूंश्चैव विधिवन्निर्वपेत्पृथक्. १२. D. reads यज्ञैः.

'अह्नो मासस्य षण्णां वा तथा संवत्सरस्य वा ।
अर्थस्य सञ्चयं कुर्यात् कृतमाश्वयुजे त्यजेत्' ॥
( या. स्मृ. ३. ४७ )

इति । एकदिनसाध्यस्य कर्मणो यावत् पर्याप्तं तावतो-ऽस्य सञ्चयं कुर्यात् । एवमेकमास-संवत्सरपक्षे ऽपि योजनी-यं । तत्र यदि किञ्चित् सञ्चितमवशिष्येत् तत्सर्वमाश्वयु-जे त्यजेत् । यदाह विष्णुः—

'मासनिचयः संवत्सरनिचयो वा । (११) संवत्सर-
निचयी पूर्वं निचयमाश्वयुज्यां जह्यात्' । (१२)

इति । पूर्वं संत्यज्य ततो नूतनं सञ्चिनुयात् । मनुरपि—

'त्यजेदाश्वयुजे मासे मुन्यन्नं पूर्वसञ्चितम् ।
जीर्णानि चैव वासांसि शाक-मूल-फलानि च ॥(१५)
सद्यःप्रक्षालको वा स्यान्मास सञ्चयिको ऽपि वा ।
षण्मासनिचयो वाऽपि समानिचय एव वा' ॥(१८)
(म. स्मृ. ६. १५–१८)

इति । तत्र वर्ज्यानाह स एव—

'वर्जयेन्मधुमांसं च भौमानि कवकानि च ।
भूस्तृणं शिग्रुकं चैव श्लेष्मातकफलानि च ॥ (१४)

१. From कुर्यात् to एवमेकमास- the intermediate portion has been omitted in F. through the writer's mistake. २. H. omits एक-. ३. F reads -निचयात् पूर्वं निचयं; while the text reads –निचयः पूर्वनिचितं ४. The text reads मासि. ५. B. C. F. and G. read -प्रक्षालिकः, H. and I. read -प्रक्षालितः. The commentators Sarvajña Narayaṇa, Nandana and Râmchandra follow the reading -प्रक्षालिकः. ६. B. C. D. F. G H. and I. read -मांसानि. ७. B. C. F. and I. read भूतृणं.

न फालकृष्टमश्नीयादुत्सृष्टमपि केनचित् ।
न ग्रामजातान्यार्तोऽपि पुष्पाणि च फलानि च'॥ (१,६)

(म स्मृ. ६. १४–१६)

इति । कवकानि छत्राकाणि । तपोनियममाह याज्ञवल्क्यः–

'दान्तस्त्रिषवणस्नायी निवृत्तश्च प्रतिग्रहात् ।
स्वाध्यायवान् दानशीलः सर्वसत्त्वहिते रतः ॥
दन्तोलूखलिकः कालपक्वाशी वाऽश्मकुट्टकः ।
श्रौतं स्मार्तं फलस्नेहैः कर्म कुर्यात् क्रियास्तथा ॥
चान्द्रायणैर्नयेत् कालं कृच्छ्रैर्वा वर्तयेत् सदा ।
पक्षे गते चाप्यश्नीयान्मासे वाऽहनि वा गते ॥
स्वप्याद्भूमौ शुची रात्रौ दिवा सम्प्रपदैर्नयेत् ।
स्थानासन-विहारैर्वा योगाभ्यासेन वा तथा ॥
ग्रीष्मे पञ्चाग्निमध्यस्थो वर्षासु स्थण्डिलेशयः ।
आर्द्रवासास्तु हेमन्ते शक्त्या वाऽपि तपश्चरेत्' ॥

(या. स्मृ ३. ४८–५२)

इति । दन्ता एवोलूखलं निस्तुषीकरणसाधनं तद् यस्यास्ति स दन्तोलूखलिकः । बाह्योलूखलादिसाधननिरपेक्ष इत्यर्थः ।

---

१. B. C. F. H. and I. read उत्कृष्टं for उत्सृष्टं. २. I. reads -न्यर्होऽपि for -न्यार्तोऽपि. ३. The text reads मूलानि instead of पुष्पाणि. ४. I. reads छत्रकाणि. ५. C. F. and H. read दयोनियम-, but this is meaningless here. ६. B. C. F. G. and H. read शान्तः for दान्तः. ७. B. C. and F. read कुट्टशः, but it seems incorrect. ८. I. reads श्रौत–स्मार्तं. ९. The text inserts तथा first and क्रिया. afterwards. १०. D. reads शुचिर्भूमौ: while I. reads स्वपेद्भूमौ. ११. B. C. D. F. G. H. and I. read दिवसं प्रपदैः, but we follow here A. and the text १२. C. and F. read वाऽथ वा.

कालपक्वं बदरेङ्गुद-पनसफलादि। अश्मना कुट्टनमवहननं यस्य सोऽश्मकुट्टकः। फलस्नेहो लिकुच-मधुकादिमेध्येतरु-फलजन्मानि तैलानि। क्रियाः भोजनाभ्यञ्जनाद्याः। विष्णुरपि—

'पुष्पाशी। (७) फलाशी। (८) मूलाशी।
(११) शाकाशी। (९) पर्णाशी। (१०)
यवान्नं पक्षान्तयोर्वा सकृदश्नीयात्। (१२)
(वि. स्मृ. ९५. ७–१२)

इति। कूर्मपुराणे ऽपि—

'एकपादेन तिष्ठेत मरीचीन्वा पिबेत् सदा। (३०)
पञ्चाग्निधूमपो वा स्यादूष्मपः सोमपो ऽथ वा॥
पयः पिबेत् शुक्लपक्षे कृष्णपक्षे च गोमयम्। (३१)
शीर्णपर्णाशनो वा स्यात् कृच्छ्रैर्वा वर्त्तयेत् सदा॥(३२)
अथर्वशिरसो ऽध्येता वेदान्ताभ्यासतत्परः। (३३)
यमान् सेवेत सततं नियमांश्चाप्यतन्द्रितः॥ (३४)

---

१. I. reads मधूकादि-, but this form does not appear anywhere else. २. I. reads -मेध्यतर-. ३. H. reads विष्णुपुराणेऽपि through mistake. ४. Here we follow the text and A., B. C. D. F. G. and I. read वायुपुष्पाशी for पुष्पाशी. This reading seems meaningless. H. reads वायुपच्याशी and gives another reading वायुपुष्पाशी in the margin. ५. This Sûtra appears in the text after पर्णाशी. ६. B. C. and F. read पक्वान्नं वा सकृदश्नीयात्; while D. G. H. and I. read वायुपक्वान्नयोर्वा सकृदश्नीयात् for यवान्नं पक्षान्तयोर्वा सकृदश्नीयात्. ७. The text reads तदा for सदा. ८. The text reads पञ्चाग्निर्धूमपः. ९ D. reads जलपः for ऊष्मपः; while C. and F. omit the following portion—

................ऊष्मपः सोमपो ऽथ वा।
पयः पिबेत् शुक्लपक्षे कृष्णपक्षे च गोमयम्॥
शीर्णपर्णाशनो वा स्यात् ............॥,

and read पञ्चाग्निधूमपो वा स्यात् कृच्छ्रैर्वा वर्तयेत्सदा.

जितेन्द्रियो जितक्रोधस्तत्त्वज्ञानविचिन्तकः ।
ब्रह्मचारी भवेन्नित्यं न पत्नीं[१] प्रतिसंश्रयेत् ॥ (१६)
यस्तु पत्न्या वनं[२] गत्वा मैथुनं कामतश्चरेत् ।
तद्व्रतं तस्य लुप्येत प्रायश्चित्तीयते द्विजः ॥ (१७)
नक्तं चाऽन्नं समश्नीयाद् दिवा चा[३]ऽऽहृत्य शक्तितः ।
चतुर्थकालिको वा स्यात् स्याद्वा चाऽष्टमकालिकः॥(२५)
चान्द्रायणविधानैर्वा शुक्ले कृष्णे च वर्त्तयेत् ।
पक्षे पक्षे समश्नीयाद्यवागूं क्वथितां सकृत् ॥
पुष्प-मूल-फलैर्वा ऽपि केवलैर्वर्तयेत् सदा ।
स्वाभाविकैः स्वयं शीर्णैर्वैखानसमते स्थितः ॥ (२७)
(कू. पु. १. २. २७. १६-३४)

इति । अग्निपरिचर्यायामक्षमं प्रत्याह याज्ञवल्क्यः–
'अग्नीन्वा[४]ऽप्यात्मसात् कृत्वा वृक्षावासो[५] मिताशनः ।
वानप्रस्थ-गृहेष्वेव[६] यात्रार्थं भैक्ष्यमाचरेत् ॥
ग्रामादाहृत्य वा[७] ग्रासानष्टौ भुञ्जीत वाग्यतः' ।
( या. स्मृ. ३. ५४-५५ )

इति । मनुरपि–
'अग्नीनात्मनि वैतानान्[८] समारोप्य यथाविधि ।
अनग्निरनिकेतः स्यान्मुनिर्मूल-फलाशनः ॥ ( २५ )
अप्रयत्नः सुखार्थेषु ब्रह्मचारी धराशयः । ( २६ )
गृहमेधिषु चान्येषु द्विजेषु वनवासिषु ॥ ( २७ )

१. The text reads पत्नीमपि for पत्नीं प्रति-. २. B. C. D. F. G. and H read समं रागात् and for the same I. reads समं गत्वा. ३. I. substitutes वा for च. ४. I. reads अग्नीनपि for अग्नीन्वा ऽपि. ५. D. reads कृतावासेर. ६. I. reads वानप्रस्थो गृहेषु, but this is a mistake. ७. I. reads वै for वा, but it is incorrect. ८. G. and I. read वैतानात्, but this is meaningless

ग्रामादाहृत्य वाऽश्नीयादष्टौ ग्रासान् वने वसन् ।
प्रतिगृह्य पुटेनैव पाणिना शकलेन वा ॥ (२८)
एताश्चान्याश्च सेवेत दीक्षा विप्रो वने वसन् । (२९)
आसां महर्षिचर्याणां त्यक्त्वा ऽन्यतमया तनुम् ।
वीतशोक-भयो विप्रो ब्रह्मलोके महीयते'॥ (३२)
(म. स्मृ. ६. २९-३२)

इति । ननु—अष्टग्रासविधाने—
'षोडशा ऽरण्यवासिनः' ।
(आ. ध. सू. २. ४. ९. १३; बौ. स्मृ. २. ७. १३. ७)

इति वचनं विरुद्ध्येत । तन्न[1] । शक्ताशक्तविषयत्वेन व्यवस्थोपपत्तेः । सर्वानुष्ठानासमर्थं प्रत्याह याज्ञवल्क्यः—
'वायुभक्षः प्रागुदीचीं गच्छेदा वर्ष्मसङ्क्षयात्' ।
(या. स्मृ. ३. ५५)

इति । कूर्मपुराणे ऽपि—
'महाप्रस्थानिकं वा ऽसौ कुर्यादनशनं तु वा ।
अग्निप्रवेशमन्यद्वा ब्रह्मार्पणविधौ स्थितः ॥
येस्तु[2] सम्यगिममाश्रमं शिवं
संश्रयत्यशिवपुञ्जनाशनम् ।
तांपहन्तृ[3] पदमैश्वरं परं
याति यत्र जगतो ऽस्य संस्थितिः' ॥
(कू. पु. १. २. २७. ३८-३९)

इति ।

॥ इत्थं वानप्रस्थाश्रमो निरूपितः ॥

१. G. does not insert तन्न. २. This whole verse does not appear in the text. ३. B. C. D. F. G. and H. read तापहर्तृ.

अथ चतुर्थाश्रमो निरूप्यते। तत्र मनुः–

'वनेषु तु विहृत्यैवं तृतीयं भागमायुषः।
चतुर्थमायुषो भागं त्यक्त्वा सङ्गान् परिव्रजेत्'॥

(म. स्मृ. ६. ३३)

इति। याज्ञवल्क्यो ऽपि–

'वनाद्गृहाद्वा कृत्वेष्टिं सार्ववेदसदक्षिणाम्।
प्राजापत्यां तदन्ते तानग्नीनारोप्य चात्मनि॥
अधीतवेदो जपकृत् पुत्रवानन्नदो ऽग्निमान्।
शक्त्या च यज्ञकृन्मोक्षे मनः कुर्यात्तु नान्यथा'॥

(या. स्मृ. ३. ५६–५७)

इति। आश्रमचतुष्टयसमुच्चयमभिप्रेत्य वनान्मोक्षे मनः कुर्यादित्युक्तम्। आश्रमत्रयसमुच्चयाभिप्रायेण गृहाद्वेति पक्षान्तरोपन्यासः।

ननु–अत्रापि चतुष्टयसमुच्चय एवाभिप्रेयताम्। परिव्रज्यानन्तरं वानप्रस्थस्यानुष्ठातुं शक्यत्वात्। मैवम्। ब्रह्मचर्यादीनां चतुर्णामाश्रमाणां आरोहस्य प्रतिनियतत्वात्। तथा च जाबाला आश्रमाणामारोहमामनन्ति–

'ब्रह्मचर्यं समाप्य गृही भवेत्। गृही भूत्वा
वनी भवेत्। वनी भूत्वा प्रव्रजेत्'।

(जा. उ. ४)

१ F. omits अथ चतुर्थाश्रमो निरूप्यते। तत्र मनुः–
वनेषु तु विहृत्यैवं तृतीयं भागमायुषः।.

२. B. and C. read निवर्त्य for विहृत्य. This gives a better sense. ३. B. C. F. G. and H. omit इति. ४. D. reads प्राजापत्यं. ५ I. reads पारिव्राज्यानन्तरं.

इति । न त्वेवमवरोहः क्वचिदप्याम्नातः । प्रत्युतावरोहं दक्षो निषेधति—

त्रयाणामानुलोम्यं स्यात्[१] प्रातिलोम्यं न विद्यते । (१२)
प्रातिलोम्येन यो याति न तस्मात् पापकृत्तमः ॥ (३१)
यो गृहाश्रममास्थाय ब्रह्मचारी भवेत् पुनः ।
न यतिर्न वनस्थश्च स सर्वाश्रमवर्जितः[२] ॥ (९)
( द. स्मृ. १. ९-१३ )

इति । यदि गृही कथञ्चित् प्रत्यवरुह्य ब्रह्मचारी भवेत् तदाऽसौ सर्वाश्रमबहिष्कृतः । आरूढपतितत्वात् । अतो न वनस्थादिभिराश्रमवाचिभिः[३] शब्दैरभिलप्यो भवति । अयं चावरोहाभाव उत्तरमीमांसायां* तृतीयाध्याये वर्णितः । वनाद् गृहाद्वेत्यत्र-ब्रह्मचर्याद् वा-इत्यपि द्रष्टव्यम् । यदा जन्मान्तरानुष्ठितसुकृत[४]परिपाकवशात्[५] बाल्य एव वैराग्यमुपजायते तदानीमकृतोद्वाहो ब्रह्मचर्यादेव प्रव्रजेत् । तथा च जाबालश्रुतिः-

---

* वर्णितं चैतत् श्रीमच्छङ्करभगवत्पादैः—

'तद्भूतस्य तु नाऽतद्भावो जैमिनेरपि नियमातद्रूपाभावेभ्यः'।

( ब्र. सू. ३. ४. ४० )

इत्येतत्सूत्रमारभ्य । सन्त्यूर्ध्वरेतस आश्रमाः । तान् प्राप्तस्य कथञ्चित् ततः प्रच्युतिरास्ति न वेति संशयः । एवं प्राप्ते तद्भूतस्य तु प्रतिपन्नोर्ध्वरेतोभावस्य न कथञ्चिदप्यतद्भावो न ततः प्रच्युतिः स्यात्—इति ।

---

१. The text reads हि for स्यात्. २. The text reads सर्वाश्रमविवर्जितः; while D. reads न यतेर्न वनस्थस्य. ३. I. reads आश्रमवासिभिः शब्दैरभिलाप्यः for आश्रमवाचिभिः शब्दैरभिलप्यः. ४ I. reads -सुकृति-. ५. I. reads -बलात्.

'यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेत् गृहाद्वा वनाद्वा'।
(जा. उ. ४.)

इति। पूर्वमविरक्तं जाबालं[1] प्रत्याश्रमचतुष्टयसमुच्चयमायुर्विभागेनोपन्यस्य विरक्तमुद्दिश्य यदि वेति पक्षान्तरोपन्यासः। इतरथेति बाल्य एव सति[2] वैराग्य इत्यर्थः। अकृतोद्वाहस्य संन्यासो नृसिंहपुराणे दर्शितः—

'यस्यैतानि सुगुप्तानि[3] जिह्वोपस्थोदरं शिरः[4]।
संन्यसेदकृतोद्वाहो[5] ब्राह्मणो ब्रह्मचर्यवान्'॥
(नृ. पु. ५८. ३६)

इति। अङ्गिरा अप्याह—

'संसारमेव निःसारं दृष्ट्वा सारदिदृक्षया।
प्रव्रजत्यकृतोद्वाहः परं वैराग्यमाश्रितः॥
प्रव्रजेद् ब्रह्मचर्येण प्रव्रजेच्च गृहादपि।
वनाद्वा प्रव्रजेद्विद्वानातुरो वा ऽथ दुःखितः'॥

इति। दुःखितो व्याधि-चोर-व्याघ्राद्युपद्रुतः[6]। आतुरो मुमूर्षुः। तत्र महाभारतम्—

'उत्पन्ने सङ्कटे घोरे चोर-व्याघ्रादिसङ्कटे।
भयभीतस्य संन्यासमङ्गिरामुनिरब्रवीत्॥
आतुराणां च संन्यासे न विधिर्नैव च क्रिया।
प्रेषमात्रं समुच्चार्य संन्यासं तत्र कारयेत्[7]'॥

---

१. I. has made a gross mistake here. It omits the जा- in जाबालं and reads बालं, which gives no sense here. २. I. substitutes अवगत- for सति. ३. The text reads सुगुप्तानि. ४. The text reads गिरः. ५. I. reads स न्यस्येद्. ६. I. reads व्याधितश्चौर-. ७. D. reads पूर्वयेत; while G. H. and I. read पूरयेत्.

इति । ननु—ब्रह्मचर्यादेव प्रव्रज्याऽङ्गीकारे मनुवचनानि विरुद्धयेरन्—

'ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् ।
अनपाकृत्य मोक्षं तु सेवमानो व्रजत्यधः ॥
अधीत्य विधिवद्वेदान् पुत्रानुत्पाद्य धर्मतः ।
इष्ट्वा च शक्तितो यज्ञैर्मनो मोक्षे निवेशयेत् ॥
अनधीत्य गुरोर्वेदाननुत्पाद्य तथाऽऽत्मजान्[२] ।
अनिष्ट्वा चैव यज्ञैश्च मोक्षमिच्छन् व्रजत्यधः' ॥

( म. स्मृ. ६. ३५–३७ )

इति । ऋणत्रयं श्रुत्या दर्शितम्—

'जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवान् जायते ।
ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया
पितृभ्यः । एष वा अनृणो यः पुत्री यज्वा ब्रह्म-
चारी वासि' ।

( बौ. स्मृ. २. ९. १६. ७ )

इति । यदा स्वर्गप्रापकः पितृयाणमार्गो ऽप्यृणा ऽपाकरण-मन्तरेण न सम्भवति तदा कैव कथा मोक्षमार्गे । अत एव मन्त्रवर्णः—

'अनृणा अथो ऽस्मिन्ननृणाः परस्मिन्
तृतीये लोके अनृणा स्याम ।
ये देवयाना उत पितृयाणाः
सर्वान् पथो अनृणा अक्षियेम' ॥

---

१. B. C. and F. read गुरौ for गुरोः, and for the same the text substitutes द्विजो. २. The text reads सुतान् for ऽऽत्मजान्..

इति। ब्राह्मणमपि—

'सर्वान् लोकाननृणोऽनुसञ्चरति'।

इति। मैवम्। अविरक्तविषयत्वादेतेषां वचनानाम्। अत एव विरक्तस्य प्रव्रज्यायां कालविलम्बं निषेधति जाबालश्रुतिः—

'यदहरेव विरजेत्तदहरेव प्रव्रजेत्'।

(जा. उ. ४)

इति। ननु[1]—उक्तरीत्या[2] ब्रह्मचर्यादिषु आश्रमेषु यथावद्धर्मानुष्ठायिनां-तत्तदा[3]श्रमात् प्रव्रजेत्—इति प्रतीयते। तथा सति स्नातक-विधुरादीनामनाश्रमिणामाश्रमिणां च केषाञ्चित् केनचित् प्रतिबन्धेन विहितधर्माननुष्ठायिनां सत्यपि वैराग्ये संन्यासो न प्राप्नुयात्। मैवम्। तेषां प्रत्यक्षश्रुत्यैव[4] तद्विधानात्—

'अथ पुनर्व्रती[5] वाऽव्रती वा स्नातको[6] वाऽस्नातको वा उत्सन्नाग्निरनग्निको वा यदहरेव विरजेत् तदहरेव प्रव्रजेत्'।

(जा. उ. ४)

इति। यमोऽपि—

'पुनर्दारक्रियाऽभावे मृतभार्यः[7] परिव्रजेत्।
वनस्थो धूतपापो वा परं पन्थानमाश्रयेत्'॥

इति। स्नातक-विधुरादीनामन्तरालवर्त्तिनामाश्रमनिरपे-

---

१. B.C. and F. omit the following portion:—

ननु-उक्तरीत्या ब्रह्मचर्यादिषु आश्रमेषु
यथावद्धर्मानुष्ठायिनां तत्तदाश्रमात् प्रव्रजेत्-इति.

२. D. and H. read -नीत्या for रीत्या. ३. I. does not repeat तत्. ४. B. C. F. G. and H. read-श्रुतौ च, and D. reads-श्रुतौ for-श्रुत्यैव. ५. B. C. D. and F. omit व्रती वा, D. reads पुनरव्रती. I. also has the same reading. ६. I. reads स्नातको for स्नातको वाऽस्नातको वा. ७. G. reads -भार्यं परित्यजेत्.

क्षैर्जपोपवास-तीर्थयात्रादिकर्मभिश्चित्तशुद्धिसम्भवेन मोक्षाश्रमे ऽधिकारो ऽस्तीति तृतीये ऽध्याये मीमांसितम् । धर्मलोपे ऽप्य[1]नुतापवतस्तत्प्रायश्चित्तत्वेन संन्यासः सम्भवति । तथा च स्मृत्यन्तरम्–

'ये च सन्तानजा दोषा ये च स्युः कर्मसम्भवाः ।
संन्यासस्तान् दहेत्सर्वान्मू[2]षाग्निरिव काञ्चनम्' ॥

इति । मनुरपि–

'मृत्तोयैः शुद्ध्यते शोध्यं नदी वेगेन शुद्ध्यति ।
रजसा स्त्री मनोदुष्टा संन्यासेन द्विजोत्तमः' ॥
(म. स्मृ. ५. १०८; बृ. यो. या. स्मृ. ११. ५१)

इति । अत्र केचित्–ब्राह्मणस्यैव संन्यासाधिकारो न क्षत्रिय-वैश्ययोः–इत्याहुः । उदाहरन्ति च श्रुति-स्मृती । तत्र वाजसनेयकब्राह्मणम्–

'एतं वै तमात्मानं विदित्वा ब्राह्मणाः
पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणा-
याश्च व्युत्थायाऽथ भिक्षाचर्यं चरन्ति' ।
(बृ. उ. ३. ५. १)

इति । मनुरप्युपक्रमोपसंहारयोर्ब्राह्मणशब्दं प्रयुङ्क्ते–

'आत्मन्यग्नीन् समारोप्य ब्राह्मणः प्रव्रजेद् गृहात्' ।
(म. स्मृ. ६. ३८)

इत्युप[3]क्रमः ।

---

१. B. C. and F. read ऽप्यनुतापतः. २. B. C. F. G. H. and I. read तुषाग्निरिव. ३. D. omits उपक्रमः.

'एष वोऽभिहितो धर्मो ब्राह्मणस्य चतुर्विधः' ।

(म. स्मृ. ६. ९७)

इत्युपसंहारः । नारदोऽपि—

'प्रथमादाश्रमाद्वाऽपि विरक्तो भवसागरात् ।
ब्राह्मणो मोक्षमन्विच्छंस्त्यक्त्वा सङ्गान् परिव्रजेत्' ॥

इति । योगियाज्ञवल्क्योऽपि—

'चत्वारो ब्राह्मणस्योक्ता आश्रमाः श्रुतिचोदिताः[1] ।
क्षत्रियस्य त्रयः प्रोक्ता द्वावेको वैश्य-शूद्रयोः' ॥

(यो. या. स्मृ. १. २८)

इति । वामनपुराणेऽपि—

'चत्वार आश्रमाश्चैते ब्राह्मणस्य प्रकीर्त्तिताः ।
गार्हस्थ्यं ब्रह्मचर्यं च वानप्रस्थं त्रयोऽऽश्रमाः ॥
क्षत्रियस्यापि कथिता[2] य आचारा द्विजस्य हि ।
ब्रह्मचर्यं[3] च गार्हस्थ्यमाश्रमद्वितयं[4] विशः ॥
गार्हस्थ्यमुचितं त्वेकं शूद्रस्य क्षणदाचर' ।

(वा. पु. १४. १६-१८)

इति । ननु—शूद्रस्याऽऽश्रम एव नास्ति—

'चत्वार आश्रमास्तात तेषु शूद्रस्तु नार्हति' ।

इति निषेधात् । ततः कथं तस्य गार्हस्थ्याङ्गीकारः? उच्यते । समन्त्रक एव विवाहो निषिध्यते । न त्वमन्त्रकः। अन्यथा विवाहप्रकरणोदाहृतानि[5] शूद्राविषयाणि वचनानि पञ्चमहायज्ञादिगृहस्थधर्मेषु शूद्राधिकारवचनानि च विरुद्ध्येरन् । तस्माद-

---

१. D. reads नोदिताः. २. The text reads गदितो इत्याचारो द्विजस्य ३. The text reads वैखानसत्वं गार्हस्थ्यं. ४. The text reads -माश्रमं. ५. B. C. and F. read स्मृतानि; while C. reads अभिहितानि for उदाहृतानि.

स्ति शूद्रस्य गार्हस्थ्यम् । संन्यासस्तूक्तरीत्या विप्रस्यैव । अत एव स्मृत्यन्तरे काषाय-दण्डादिलिङ्गधारणं क्षत्रिय-वैश्य-योर्निषिद्धम्—

'मुखजानामयं धर्मो यद्विष्णोर्लिङ्गधारणम् ।
बाहुजातोरुजातानां नाऽयं धर्मो विधीयते' ॥

इति । अपरे पुनः संन्यासं त्रैवर्णिकाधिकारमिच्छन्ति । अधीतवेदस्य द्विजातिमात्रस्य समुच्चय-विकल्पाभ्यामाश्रमचतुष्टयस्य बहुस्मृतिषु विधानात् । अत एव याज्ञवल्क्येन संन्यासप्रकरणे द्विजशब्दः प्रयुक्तः—

'सन्निरुद्ध्येन्द्रियग्रामं राग-द्वेषौ प्रहाय च ।
भयं हृत्वा[1] च भूतानाममृतीभवति[2] द्विजः' ॥

( या. स्मृ. ३. ६१ )

इति । स्मृत्यन्तरं तु शृङ्गग्राहिकयैव[3] वर्णत्रयस्य संन्यासं विदधाति—

'ऋणत्रयमपाकृत्य निर्ममो निरहङ्कृतिः ।
ब्राह्मणः क्षत्रियो वाऽथ वैश्यो वा प्रव्रजेद् गृहात्' ॥

इति । कूर्मपुराणेऽपि द्विजग्रहणं कृतम्—

'अग्नीनात्मानि संस्थाप्य द्विजः प्रव्रजितो भवेत् ।
योगाभ्यासरतः शान्तो ब्रह्मविद्यापरायणः' ॥

( कू. पु. १. २. २८. २)

इति । यानि पूर्वोदाहृतवचनानि तानि क्षत्रिय-वैश्ययोः

---

१. The text reads हित्वा. २. G. reads अनृणी for अमृती-. ३. I. reads -ग्राहिकतयैव.

काषाय-दण्डनिषेधपराणि। तथा च मुखजानामिति वचनमुदाहृतम्। बौधायनो ऽपि-

'ब्राह्मणानामयं धर्मो यद्विष्णोर्लिङ्गधारणम्।
राजन्य-वैश्ययोर्नेति [१]दत्तात्रेयमुनेर्वचः' ॥

इति। परिव्राड्बुभूषुः सर्वस्वदक्षिणां प्राजापत्यामिष्टिं निर्वपेत्। तदाह मनुः-

'प्राजापत्यां निरूप्येष्टिं [२]सर्ववेदसदक्षिणाम्।
आत्मन्यग्नीन् समारोप्य ब्राह्मणः प्रव्रजेद्गृहात्' ॥
(म. स्मृ. ६. ३८)

इति। यद्वा आग्नेयीमिष्टिं कुर्यात्। तदुक्तं श्रुत्या-

'[३]तद्वैके प्राजापत्या[४]मेवेष्टिं कुर्वन्ति तदु[५]
तथा न कुर्यात् आग्नेयीमेव कुर्यात्।
अग्निर्हि प्राणः [६]प्राणमेवैतया करोति'।
(जा. उ. ४)

इति। कूर्मपुराणे ऽपि-

'प्राजापत्यां निरूप्येष्टिमाग्नेयीमथ वा पुनः।
[७]अन्तःपक्वकषायो ऽसौ [८]ब्रह्माश्रममुपाश्रयेत्' ॥
(कू. पु. १. २. २८, ४)

---

१. I. reads तत्राऽऽत्रेय-. २. B. C. F. G. and H. read सार्ववेदस-. ३. G. and H. read तथैके. D. also inserts तथैके, but the remaining portion of the Shruti and इति। कूर्मपुराणेऽपि are omitted through mistake. I. substitutes अथैके for तद्वैके. ४. I. omits एव. ५. H. and I. omit तदु. ६. B. C. and F. read -मेव तथा करोति; while A. reads -मेव समया तथा करोति. ७. The text reads दान्तः ८. D. reads ब्रह्माश्रय-मुपासयेत्.

20*

इति । तत्र[१] प्राजापत्येष्टिराहिताग्निविषया 'अग्नीन् समारोप्य'—इत्यग्निबहुत्वाभिधानात् । आग्नेयी त्वनाहिताग्निविषया तद्वाक्यशेषे 'अग्निमाजिघ्रेत्'—इत्येकाग्न्यभिधानात् । सा चेष्टिः श्राद्धादिपुरःसरं प्रकर्त्तव्या[२] । तथा च नृसिंहपुराणम्—

'एवं वनाश्रमे[३] तिष्ठन् तपसा दग्धकिल्बिषः ।
चतुर्थमाश्रमं गच्छेत् सं[४]न्यस्य विधिना द्विजः ॥
देयं[५] पितृभ्यो देवेभ्यः स्वपितृभ्योऽपि यत्नतः ।
दत्वा श्राद्धमृषिभ्यश्च मनुजे[६]भ्यस्तथाऽऽत्मने ॥
इष्टिं वैश्वानरीं कृत्वा प्राजापत्यामथाऽपि वा ।
अग्निं स्वात्मनि संस्थाप्य मन्त्रवत् प्रव्रजेत् पुनः' ॥

(नृ. पु. ६०. २—४)

इति । श्राद्धानि चाष्टौ दैवादीनि । तथा चाह बौधायनः—

'दैवं[७]मार्षं[८] तथा दिव्यं पित्र्यं मातृक-मानुषे ।
भौतिकं चात्मनश्चान्ते अष्टौ श्राद्धानि निर्वपेत्' ॥

इति । उक्तश्राद्धादौ योग्यता कृच्छ्रैः सम्पादनीया । तदाह कात्यायनः—

---

१. I. omits तत्र. २. B. C. and F. read -पुरःसरा and omit प्रकर्त्तव्या, D. reads पुरःसरं, but omits प्रकर्त्तव्या, G. substitutes कर्त्तव्या for प्रकर्त्तव्या, and H. आपाद्या for the same. ३. D. reads वनाश्रये. ४. B. C. F. and H. read श्राद्धस्य. ५. B. C. D. and F. read दैवं for देयं, H. देवं. and I. दिव्यपितृभ्यो for the same; while the text reads दिव्यं ऋषिभ्यः for देयं पितृभ्य :. ६. I. reads मनुष्येभ्यः. ७. B. C. and F. read सदैवमार्षकं दिव्यं; while D. reads दैवमानुषकं दिव्यं and G. H. दैवमार्षकं दिव्यं for दैवमार्षं तथा दिव्यं. ८. D. reads वर्जयेत् for निर्वपेत्.

‘कृच्छ्रांस्तु चतुरः कृत्वा पावनार्थमनाश्रमी ।
आश्रमी चेत्तप्तकृच्छ्रं[1] तेनाऽसौ योग्यतां व्रजेत्’ ॥

इति । श्राद्धानन्तरभाविनीमिष्टेः[2] प्राचीनामितिकर्त्तव्यतामाह बौधायनः—

‘कृत्वा श्राद्धानि सर्वाणि पित्रादिभ्योऽष्टकं पृथक् ।
वापयित्वा च केशादीन्मार्जयेन्मातृका इमाः ॥
त्रीन् दण्डानङ्गुलिस्थूलान्[3] वैणवान्मूर्धसम्मितान् ।
एकादश-नव-द्वि-त्रि-चतुः-सप्ता[4]-ऽष्टपर्वकान् ॥
सत्वकानव्रणान् सौम्यान् समसन्नतपर्वकान् ।
वेष्टितान् कृष्णगोवालरज्ज्वा तु चतुरङ्गुलान् ॥
एको वा तादृशो दण्डो गोवालरहितो[5] भवेत् ।
कुश-कार्पास-सूत्रैर्वा क्षौमसूत्रैरथापि वा ॥
कुशलैर्[6]ग्रथितं शिक्यं पद्माकारसमन्वितम् ।
षट्पादं पञ्चपादं वा मुष्टिद्वयविसर्पितम्[7] ॥
विकेशं सितमस्पष्टमुभयद्वादशाङ्गुलम् ।
द्विगुणं त्रिगुणं वाऽपि सर्वतोऽष्टाङ्गुलं तु वा ॥
प्रादेशमात्रं वा सूक्ष्मकार्पासैः[8] कृतमव्रणम्[9] ।

---

१. B. C. D. F. and I. read ततः कृच्छ्रं. २. G. and H. read इष्टिप्राचीनाम्. ३ B. C. D. and F. read अङ्गुलीतुल्यान्; while H. reads अङ्गुलैस्तुल्यान्. ४. D. reads -सामान्यपर्वकान्, G. H. and I. read -सप्तान्यपर्वकान्. ५. H. and I. read -सहितो for -रहितो. ६. B. C. F. and H. read; कुचिलैः, but the correct is कुचैलैः. ७. Here we follow A. C. F. and G. while B. and H. read -विसर्पतम्, D. and I. read -विदारितम्. ८. D. and G. read सूत्रा-ऽक्ष-कार्पासैः, for वा सूक्ष्मकार्पासैः; while H. reads वा सूक्ष्मं कार्पासैः and I. reads वा सूत्रं कार्पासैः for the same. ९. H. substitutes पूतं and I. ततम् for कृतम्.

चण्डालाद्यहृतं[१] चैतत् स्मृतं जलपवित्रकम्[२] ॥
गृहीतं मन्त्रवत्तच्चेत्[३] सशिक्यं च कमण्डलुम् ।
दारवं वैणवं वाऽपि मृदलाबुमयं[४] तु वा ॥
पात्रं शिलामयं ताम्रं पर्णादिमयमेव वा ।
चतुरस्रं वर्तुलं वाऽप्याऽऽसनं दारवं शुभम् ॥
कौपीनाच्छादनं वासः कन्थां[५] शीतनिवारणीम् ।
पादुके चापि शौचार्थं[६] दश मात्रा उदाहृताः ॥
छत्रं पवित्रं सौचीं[७] च त्रिविष्टब्धं तथाऽजिनम् ।
पद्मानि[८] चाक्षसूत्रं च मृत्खनित्री कृपाणिका ॥
योगपट्टं बहिर्वास[८] इत्येता एकविंशतिः ।
तासां पञ्चादिका[९] नित्या दश वा सर्वशोऽपि वा ॥
गृहीत्वेमा अथागत्य देवागारेऽग्निवेश्मनि ।
ग्रामान्ते ग्रामसीमान्ते यद्वा शुचिमनोहरे ॥
आज्यं पयो दधीत्येतत्त्रिवृद्वा जलमेव वा ।
ॐ भूरित्यादिना प्राश्य रात्रिं चोपवसेत्ततः ॥
एतावतैव विधिना भिक्षुः स्यादापदि द्विजः ।
अथादित्यस्यास्तमयात् पूर्वमग्नीन् विहृत्य सः ॥

---

१. D. and G. read -द्यनुतं, B. C. and F. read -द्यत्कृतं and H. reads -द्यहृतं. २. G. and H. substitute कुल- for जल-. ३. B. C. and F. read मन्त्रवत्त्वे तत्; while G. and I. read मन्त्रवत्तद्वत्. ४. D. and H. read मृद्धातुभवं; while G. reads मृदा धातुभवं. ५. D. and G. read कन्था शीतनिवारिणी. ६. All, except A. and I. read शौचार्थे. ७. B. C. and F. read सूचीं धचात्रिविष्ट तथा हितम्, H. reads सूचीं च धत्रिविष्टतया हितम्. Both the expressions are incorrect and meaningless. ८. B. C. F. G. and H. पक्ष्माणि, I. पक्षाणि; while D. reads चाष्टसूत्रं, for चाक्षसूत्रं. ८. B. C. and F. read वरिहिसि:, while H. reads योगपट्टं गृहिवसि:, but it reads in the margin बहि: for वासि:. ९. I. reads पञ्चाधिका:.

आज्यं च गार्हपत्ये तु संस्कृत्यैतेन च स्रुवा।
पूर्णया[1]ऽऽहवनीये तु जुहुयात् प्रणवेन तत्॥
ब्रह्मा[2]न्वाधानमेतत् स्यादग्निहोत्रे हुते ततः।
स्तीर्त्वा[3] तु गार्हपत्यस्य दर्भानुत्तरतोऽत्र तु॥
पात्राणि सादयित्वाऽथ ब्रह्मायतन एव तु।
स्तीर्णेषु दर्भेष्वासीत त्वजिनान्तरितेषु वा॥
जागृयाद्रात्रिमेतां तु यावद् ब्राह्मो मुहूर्त्तकः।
एतामवस्थां सम्प्राप्य मृतोऽप्यानन्त्यमश्नुते॥
अग्निहोत्रं स्वकाले च हुत्वा प्रातस्तनं ततः।
इष्टिं वैश्वानरीं कुर्यात् प्राजापत्यामथापि वा'॥

इति। आज्यादिप्राशनानन्तरमग्निविहरणात् पूर्वं सावित्रीप्रवेशं कुर्यात्। तदुक्तं बौधायनधर्मे—

'ॐ भूः सावित्रीं प्रविशामि-तत्सवितुर्वरेण्यम्
ॐ भुवः सावित्रीं प्रविशामि-भर्गो देवस्य धीमहि
ॐ सुवः सावित्रीं प्रविशामि-धियो यो नः
प्रचोदयात् —इति अर्धर्चशः समस्तया वा[4]'।
(बौ. स्मृ. २. १०. १४)

इति। इष्टिं परिसमाप्याऽग्नींश्चात्मनि समारोप्य प्रैषमुच्चारयेत्। तदाह कात्यायनः—

'आत्मन्यऽग्नीन् समारोप्य वेदिमध्ये स्थितो हरिम्।
ध्यात्वा हृदि त्वनुज्ञातो गुरुणा प्रैषमीरयेत्'॥

१. I. reads पूर्णमाहवनीये through mistake. २. I. reads बह्वन्वाधान-. ३. I. reads स्थित्वा through mistake. ४. B. C. and F. substitute च for वा.

इति। अथ प्रैषमुच्चार्याऽभयदानं कुर्यात्। तदुक्तं कपिलमते[1]-

'विधिवत् प्रैषमुच्चार्य त्रिरुपांशु द्विरुच्चकैः[2] ।
अभयं सर्वभूतेभ्यो मत्तः[3]स्वाहेत्यपो भुवि ॥
निनीषन्[4] दण्ड-शिक्यादि गृहीत्वा ऽथ बहिर्व्रजेत्' ।

इति । दण्डादीनां मन्त्रानाह बौधायनः—

'सखामेत्यादिना दण्डं गृह्णीयाद् गुरुणाऽर्पितम् ।
येन देवाः पवित्रेणेत्युक्त्वा जलपवित्रकम् ॥
यदस्य पारे रजसः शुक्रमित्यपि शिक्यकम् ।
व्याहृतीभिस्तथा पात्रमथ कौपीनमित्यृचा ॥
युवा सुवासा इत्येवं तच्छंयोरुपवीतकम् ।
एतद् गृहीत्वा निष्क्रम्य स्वग्रामं बान्धवांस्त्यजेत् ॥
निःस्पृहो ऽन्यत्र गत्वैव व्रतैः स्वैर्वर्त्तयेत् सदा' ।

इति । एतच्च जलपवित्रादिकं चतुर्विधेषु भिक्षुषु प्रथमद्वितीयविषयम् । चातुर्विध्यं तु भिक्षूणां हारीत आह—

'चतुर्विधा भिक्षवस्तु प्रोक्ताः सामान्यलिङ्गिनः ।
तेषां पृथक् पृथक् ज्ञानं वृत्तिभेदादिकं श्रुतम्[5] ॥
कुटीचको[6] बहूदको हंसश्चैव तृतीयकः ।
चतुर्थः परमो हंसो यो यः पश्चात्स उत्तमः' ॥

(हा. स्मृ. १०.१३–१४)

इति । पितामहो ऽपि—

१. I. reads कापिलमते. २. I. reads त्रिरुच्चकैः. ३. I. reads मम for मत्तः. ४. D. G. and H. read निनीय; while I. reads निर्णीय through mistake. ५. B. C. F. G. and H. read वृत्तिभेदात्कृतं श्रुतम्; while I. substitutes च तत् for श्रुतम्. ६. I. reads कुटीचरो for कुटीचको.

'चतुर्विधा भिक्षवस्तु प्रख्याता ब्रह्मणो मुखात् ।
कुटीचको बहूदको हंसश्चैव तृतीयकः ॥
चतुर्थः परहंसश्च संज्ञाभेदैः प्रकीर्त्तिताः' ।

इति । तत्राधिकारविशेषः पुराणे दर्शितः—

'विरक्तिर्द्विविधा प्रोक्ता तीव्रा तीव्रतरेति च ।
सत्यामेव तु तीव्रायां न्यसेद् योगी कुटीचकः ॥
शक्तो बहूदके[1] तीव्रतरायां हंससंज्ञिते[2] ।
मुमुक्षुः[3] परमे हंसे साक्षाद्विज्ञानसाधने'[4] ॥
(नृ. पु. ६०–१३)

इति । तत्र कुटीचकस्य वृत्तिविशेषमाह प्रजापतिः—

'कुटीचको नाम स्वगृहे वर्त्तमानः शुचिरकलुष आहिताग्निषु[5] भिक्षां भुञ्जानो ऽपगतकाम-क्रोध-लोभ-मोहो ऽहङ्कारवर्जित[6] आत्मा ऽनुग्रहं कुरुते' ।

इति[7] । वृद्धपराशरो ऽपि—

कुटीचका नाम पुत्रादिभिः कुटीं कारयित्वा काम-क्रोध-लोभ-मोह-मद-मात्सर्यादीन् हित्वा विधिवत् संन्यासं गृहीत्वा त्रिदण्ड-जलपवित्रकाषायवस्त्रधारिणः स्नान[8]-शौचाचमन-जप-स्वाध्याय-ब्रह्मचर्य-ध्यानतत्पराः पुत्रादेरेव भि-

---

१. B. C. and F. read बहूदकः. २. B. C. and F. read हंससंज्ञितौ. ३. B. C. and F. read मुमुक्षा. ४. B. C. and F. read साधनम्. ५. B. C. and F. read आहिताग्निभिक्षां. ६. B. C. F. and H. add य after -वर्जितः. ७. All, except A., omit इति. ८. I. omits स्नान–.

क्षाकाले ऽन्नं यात्रामात्रमुप[१]भुञ्जानाः तस्यां कुट्यां नित्यं व[२]सन्त आत्मानं मोक्षयन्ति' ।

इति । स्कन्दपुराणे ऽपि—

'कुटीचकस्तु संन्यस्य स्वे[३] च सद्मनि नित्यशः।
भिक्षामादाय भुञ्जीत स्वबन्धूनां गृहे ऽथ वा ॥
शिखी यज्ञोपवीती स्यात् त्रिदण्डी सकमण्डलुः'।

इति । कुटीचकस्या[४]ऽशक्तविषयत्वाद् युक्तो गृहवासादिः । तदुक्तं बौधायनेन—

'कुटीचकाः परिव्रज्य स्वे स्वे[५] वेश्मनि नित्यशः ।
भिक्षां बन्धुभ्य आदाय भुञ्जते शक्तिसङ्ख्यात्' ॥

इति । बहूदकस्य वृत्तिविशेषमाह स्कन्दः—

'बहूदकस्तु[६] संन्यस्य बन्धु-पुत्रादिवर्जितः ।
सप्तागारं चरेद्भैक्ष्यमेकान्नं च परित्यजेत् ॥
गोवाल-रज्जु-सम्बद्धं त्रिदण्डं शिक्यमुद्धृतम् ।
जलपात्रं पवित्रं च खनित्रं च कृपाणिकाम् ॥
शिखां यज्ञोपवीतं च देवताराधनं चरेत्' ।

इति । वृद्धपराशरो ऽपि—

'तत्र बहूदका नाम त्रिदण्ड-कमण्डलु-पद्म[७]-पवित्र-पात्र-काषायवस्त्रधारिणो वेदान्तार्थावबो-

---

१. B. C. D. F. and G. read -युञ्जानाः for -भुञ्जानाः. २. B. C. F. G. and H. read सन्तः for वसन्तः. ३. D. G. H. and I. read स्वे स्वे for स्वे च. ४. D. reads अशुक्त-; while H. reads कुटीचरस्याऽमुक्तविषयत्वात्. ५. D. and G. read ज्येष्ठवेश्मनि. ६. B. C. D. F. and H. read च for तु. ७. I. omits -पद्म-.

धकाः साधुवृत्तेषु[1] ब्राह्मणगृहेषु भैक्षचर्यां
चरन्त आत्मानं मोक्षयन्ते'[2] ।

इति । पितामहो ऽपि—

'बहूदकः स विज्ञेयः सर्वसङ्गविवर्जितः ।
बन्धुवर्गे न भिक्षेत स्वभूमौ नैव संवसेत् ॥
निश्चलः स्थाणुभूतश्च सदा मोक्षपरायणः ।
न कुट्यां नोदके सङ्गं कुर्याद्वस्त्रे च चेतसा ॥
नाऽगारे नाऽऽसने नाऽन्ने नाऽस्तरे च त्रिदण्डके ।
स्वमात्रायां न कुर्याद्वै रागं दण्डादिके यतिः' ॥

इति । हंसवृत्तिः स्कन्दपुराणे दर्शिता—

'हंसः कमण्डलुं शिक्यं भिक्षापात्रं तथैव च ।
कन्थां कौपीनमाच्छाद्यमङ्गवस्त्रं बहिःपटम् ॥
एकं तु वैणवं दण्डं धारयेन्नित्यमादरात् ।
देवतानामभेदेन कुर्याद् ध्यानं समर्चयेत्' ॥

इति[3] । विष्णुरपि—

'यज्ञोपवीतं दण्डं च वस्त्रं जन्तुनिवारणम् ।
तावान् परिग्रहः प्रोक्तो नान्यो हंसपरिग्रहः' ॥

इति । पितामहो ऽपि—

'हंसस्तृतीयो विज्ञेयो भिक्षुर्मोक्षपरायणः ।
नित्यं त्रिषवणस्नायी त्वार्द्रवासा भवेत् सदा ॥
चान्द्रायणेन वर्त्तेत यतिधर्मानुशासनात् ।
वृक्षमूले वसेन्नित्यं गुहायां वा सरित्तटे' ॥

इति । बौधायनो ऽपि—

१. H. reads साधुवृद्धेषु. २. I. reads मोक्षयन्ति. ३. H. and I. omit इति.

'हंसाः कमण्डलुं शिक्यं दण्डपात्राणि बिभ्रतः ।
ग्राम-तीर्थैकरात्राश्च नगरे पञ्चरात्रकाः ॥
त्रि-षड्रात्रोपवासाश्च पक्ष-मासोपवासिनः ।
कृच्छ्र-सान्तपनाद्यैश्च व्रतैः कृशवपुर्धराः' ॥

इति । परमहंसवृत्तिः स्कन्दपुराणे दर्शिता–

'कौपीनाच्छादनं वस्त्रं कन्थां शीतनिवारिणीम् ।
अक्षमालां च गृह्णीयात् वैणवं दण्डमव्रणम् ॥
माधूकरमथैकान्नं परहंसः समाचरेत् ।
परहंसस्त्रिदण्डं च रज्जुं गोवालनिर्मिताम् ॥
शिखां यज्ञोपवीतं च नित्यं कर्म परित्यजेत्' ।

इति । अत्र केचिच्छ्रद्धाजाड्येन सन्ध्यावन्दन-गायत्री-शिखा-यज्ञोपवीतत्यागमसहमानाः यथावर्णितं पारमहंस्यं विद्विषन्ति । उदाहरन्ति च कानिचिद्वचनानि । तत्र हारीतः–

'चत्वारोऽप्याश्रमा ह्येते सन्ध्यावन्दनवर्जिताः ।
ब्राह्मण्यादेव हीयन्ते यद्यप्युग्रतपोधराः' ॥

(हा. स्मृ. १४.१८)

इति । बौधायनोऽपि–

'अनागतां तु ये पूर्वामनतीतां तु पश्चिमाम् ।
सन्ध्यां नोपासते विप्राः कथं ते ब्राह्मणाः स्मृताः' ॥

(बौ. स्मृ. २. ४.१९)

इति । स्मृत्यन्तरेऽपि–

१. D. and G. read मन्त्रैः; while I. reads यज्ञैः. २. A. reads सेवेत वा माधुकरीमेकान्नं हंस आचरेत् । ३. B. C. F. G. and H. read प्रद्विषन्ति. ४. I. reads चत्वार आश्रमाः. ५. I. reads उग्रतपोधनाः; while B. C. and F. read उक्तवचोधराः. H. reads उपगतं बुधैः and gives another reading उग्रतपोधराः in the margin. ६ D. reads अनातुरां. ७. D. omits इति.

'सायं प्रातः सदा सन्ध्यां ये विप्रा नो उपासते।
कामं तान् धार्मिको राजा शूद्रकर्मसु योजयेत्'॥
(का. स्मृ. १. ९)

इति। मनुरपि—
'सावित्रीपतिता व्रात्या भवन्त्यार्यविगर्हिताः'॥
(म. स्मृ. २. ३९)

इति। अत्रिरपि—
'यज्ञोपवीतं सर्वेषां द्विजानां मुक्तिसाधनम्।
परित्यजन्ति ये मोहान्नरा निरयगामिनः'॥
(अ. स्मृ. ३)

इति। पद्मपुराणे[१]ऽपि—
'शिखा-यज्ञोपवीतेन त्यक्तेनाऽसौ कथं द्विजः'।

इति। नैवम्। एतेषां वचनानां परमहंसव्यतिरिक्तविषयत्वेनाप्युपपत्तेः। पारमहंस्यं तु बहुषु प्रत्यक्षश्रुतिषूपलभ्यमानं केन प्रद्वेष्टुं शक्यम्। तथा च जाबालश्रुतिः—

'तत्र परमहंसा नाम संवर्त्तका-ऽऽरुणि-श्वेतकेतु-दुर्वासा-ऋभु-निदाघ[२]-जडभरत-दत्तात्रेय-रैवतकप्रभृतयोऽव्यक्तलिङ्गा अव्यक्ताचारा अनुन्मत्ता उन्मत्तवदाचरन्ति'।
(जा. उ. ६)

इति। तेषां च शिखादित्याग आत्मज्ञानादिधर्माश्च तत्रैव श्रुताः—

१. H. reads यमपुराणेऽपि, but the name is not found anywhere else.
२. The name -निदाघ- does not appear in B. C. and F. The other names are met with everywhere in many ancient works -निदाघ seems to be a corrupted name.

'दण्डं कमण्डलुं शिक्यं पात्रं जलपवित्रकम्। शिखां यज्ञोपवीतं च—इत्येतत् सर्वं भूः स्वाहेत्यप्सु परित्यज्याऽऽत्मानमन्विच्छेत्[१]। यथाजातरूपधरो[२] निर्द्वन्द्वो निष्परिग्रहः तत्त्वब्रह्ममार्गे सम्यक् सम्पन्नः शुद्धमानसः प्राणसन्धारणार्थं यथोक्तकाले विमुक्तो भैक्ष्यमाचरन् करपात्रेण[३] लाभालाभयोः[४] समो भूत्वा शून्यागार-देवगृह-तृणकूट-वल्मीक-वृक्षमूल-कुलालशाला-ऽग्निहोत्र-नदी-पुलिन-गिरिकुहर-कन्दर-कोटर-निर्झर-स्थण्डिलेष्वनिकेतवास्य[५]प्रयत्नो निर्ममः शुक्लध्यान[६]परायणो ऽध्यात्मनिष्ठो ऽशुभ[७]कर्मनिर्मूलनपरः संन्यासेन देहत्यागं करोति स परमहंसो नाम'।

( जा. उ. ६ )

इति। तस्यामेव च श्रुतौ जनक-याज्ञवल्क्यसंवादरूपेण यज्ञोपवीतत्यागमाक्षिप्य समाहितम्—

'पृच्छामि त्वां याज्ञवल्क्य अयज्ञोपवीती कथं ब्राह्मणः? इति। स होवाच याज्ञवल्क्यः। इदमेवास्य त[८]द्यज्ञोपवीतं य आत्मेति'।

( जा. उ. ५ )

इति। आरुणिश्रुतावपि पारमहंस्यं प्रपञ्चितम्—

१. H. and I. read अन्विच्छन्. २. H. reads यथाज्ञातरूपधरो; while I. omits - जात- and reads यथारूपधरो. ३. B. C. and F. read उदपात्रेण; while A. reads मुखपात्रेण. ४. B. C. F. and G. read लाभालाभौ समो भूत्वा. D. also follows this reading, but omits समो and substitutes कृत्वा for भूत्वा. H. reads लाभालाभे समो भूत्वा. ५. I. reads अनिकेतवान्. ६. D. reads शक्लध्यानपरायणः. ७. H. and I. read ऽशुद्ध-. ८. I. omits तद्.

'आरुणिः प्रजापतेर्लोकं जगाम । तं गत्वोवाच केन भगवन् कर्माण्यशेषतो विसृजानीति ? तं होवाच प्रजापतिः । तव[1] पुत्रान् भ्रातृव्य-बन्ध्वा-दीन्[2] शिखां यज्ञोपवीतं यागं सूत्रं स्वाध्यायं च भूर्लोकं भुवर्लोकं स्वर्लोकं महर्लोकं[3] जनोलोकं तपोलोकं सत्यलोकं चातल[4]-वितल-सुतल-तलातल-महातल-रसातल-पातालं ब्रह्माण्डं च विसर्जयेत् । दण्डमाच्छादनं कौपीनं परिग्रहेत् । शेषं विसृजेत् । ब्रह्मचारी[5] गृहस्थो वानप्रस्थो वा लौकिकाग्नीनुदराग्नौ समारोपयेत् । गायत्रीं च स्ववागग्नौ[6] समारोपयेत् । उपवीतं भूमौ वाऽप्सु वा विसृजेत् । कुटीचको[7] ब्रह्मचारी कुटुम्बं विसृजेत् । पात्रं विसृजेत् । दण्डान् लोकाग्नीन् विसृजेदिति होवाच । अत ऊर्ध्वममन्त्रवदाचरेदूर्ध्वगमनं[8] विसृ-जेत्त्रिसन्ध्यादौ स्नानमाचरेत् । सन्धिं[9] समाधावा-

१. H. substitutes नच for तव, but it seems to be a mistake. २. I. reads भ्रातृन् बन्ध्वादीन् शिखा-यज्ञोपवीतं. ३. H. and I. omit महर्लोकं, but it is required here. ४. Except A. and I. all read -पाताल- after अतल-. ५. All, except A. and I., interchange the places of ब्रह्मचारी and गृहस्थो. ६. I. reads शरीराग्नौ, but it is a mistake. D. G. and H. read स्ववाचाग्नौ. ७. I. omits कुटीचको ब्रह्मचारी कुटुम्बं विसृजेत् । पात्रं विसृजेत्, But this portion appears in all our MSS., and also in the text. I. also gives a reading कुटीचको ब्रह्मचारी कुटुम्बं विसृजेत् । विप्रत्वं विसृजेत् । पात्रं विसृजेत्. ८. C. F. and I. read ऊर्ध्वं गमनं. ९. I. omits this sentence, but it appears in the text.

त्मन्याचरेत् । सर्वेषु वेदेष्वाऽऽरण्यकमावर्त्तये-
दुपनिषदमावर्त्तयेत्'।

( आरु. उ. १ )

इति । मैत्रायणश्रुतावपि–

'इन्द्रस्य वज्रो ऽसीति त्रीन् वैणवान् दण्डान्
दक्षिणपाणौ धारयेदेकं वा । यद्येकं तदा सशिखं
वपनं कृत्वा विसृज्य यज्ञोपवीतम्'।

( आ. उ. ४ )

इति । पिप्पलादशाखायामपि–

'सशिखं वपनं कृत्वा बहिःसूत्रं त्यजेद्बुधः ।
यदक्षरं परं ब्रह्म तत्सूत्रमिति धारयेत् ॥
सूचनात् सूत्रमित्याहुः सूत्रं नाम परं पदम् ।
तत्सूत्रं विदितं येन स विप्रो वेदपारगः ॥
येन सर्वमिदं प्रोतं सूत्रे मणिगणा इव ।
तत्सूत्रं धारयेद्योगी योगवित्तत्त्वदर्शिवान् ॥
बहिःसूत्रं त्यजेद्विद्वान् योगमुत्तममास्थितः ।
ब्रह्मभावमिदं सूत्रं धारयेद्यः स चेतनः ॥
धारणादस्य सूत्रस्य नोच्छिष्टो नाऽशुचिर्भवेत् ।
सूत्रमन्तर्गतं येषां ज्ञानयज्ञोपवीतिनाम् ॥

---

१ D. reads सर्वेषु देवेष्वावरणं, G. and I. read सर्वेषु देवेष्वाचरणं and H. reads सर्वेषु वेदेष्वावरणं. All these readings are incorrect. २. D. G. H. and I. read मैत्रावरुण-, but we do not find this name given to any Vaidika Sâkhâ or Upanishad. ३. D. does not insert वैणवान्. ४. I. reads योगसूत्रं समास्थितः, H. reads योगमन्वं समास्थितः.

ते वै सूत्रविदो लोके ते च यज्ञोपवीतिनः।
ज्ञानशिखिनो[1] ज्ञाननिष्ठा ज्ञानयज्ञोपवीतिनः॥
ज्ञानमेव परं तेषां पवित्रं ज्ञानमुच्यते।
अग्नेरिव शिखा नान्या यस्य ज्ञानमयी शिखा॥
स शिखीत्युच्यते विद्वान्नेतरे[2] केशधारिणः।
कर्मण्यधिकृता ये तु वैदिके ब्राह्मणादयः॥
एभिर्धार्यमिदं सूत्रं क्रियाङ्गं तद्धि वै स्मृतम्।
शिखा ज्ञानमयी यस्य उपवीतं च तन्मयम्॥
ब्राह्मण्यं सकलं तस्य इति ब्रह्मविदो विदुः।
इदं यज्ञोपवीतं तु परमं यत् परायणम्॥
विद्वान्[3] यज्ञोपवीती स्यात् स यज्ञः[4] स च यज्ञवित्' ।

इति। व्यासस्मृतावपि—

'यज्ञोपवीतं कर्माङ्गं वदन्त्युत्तमबुद्धयः।
उपपूर्वनयात्[5]* पूर्वं यतो लोके न दृश्यते॥
यावत् कर्माणि कुरुते तावदेवास्य धारणम्।
तस्मादस्य परित्यागः क्रियते कर्मभिः सह॥

* उपपूर्वो नयः नयतिः उपनयनमित्यर्थः।

१. G. H. and I. read ज्ञानशिखा ज्ञाननिष्ठाः २. I. reads नेतरैः केशधारणैः. ३. B. C. and F. insert स-before विद्वान्. ४. D. reads यज्ञं तं यज्विनो विदुः and G. स यज्ञस्तं यज्विनं विदुः. H. reads स यज्ञस्तं यजनं विदु, but gives another reading in the margin सन्यस्तं यज्विनं विदुः; and I. reads यज्ञास्तं यज्वनं विदुः. ५. B. C. and F. read उपपूर्वान्नयात्पूर्वं यज्ञो and D. reads उपपूर्वाणि वा पूर्वं यतो. This latter reading is meaningless. G. and I. read उपकुर्वाणकात्पूर्वं यतो.

अग्निहोत्रविनाशे[1] तु जुह्वादीनि यथा त्यजेत् ।
यथा च मेखलादीनि गृहस्थाश्रमवाञ्छया ॥
पत्नी योक्त्रं यथेष्टयन्ते सोमान्ते च यथा ग्रहान्[2] ।
तद्वद् यज्ञोपवीतस्य त्यागमिच्छन्ति योगिनः'॥

इति । विश्वामित्रोऽपि—

'अथापरं परिव्राजकलिङ्गं सर्वतः परिमोक्षमेके[3] । सत्यानृते[4] सुख-दुःखे वेदानिमं लोकममुं च परित्यज्याऽऽत्मानमन्विच्छेत् । शिखा-यज्ञोपवीत-कमण्डलु-कपालानां[5] त्यागी' ।

इति । बौधायनोऽपि—

'अत ऊर्ध्वं यज्ञोपवीतं मन्त्रमाच्छादनं यष्टयः शिक्यं जलपवित्रं कमण्डलुं पात्रमित्येतानि वर्जयित्वा एकं[6] दण्डमादत्ते सखा[7] म गोपायेति' ।

इति । स्मृत्यन्तरेऽपि—

'यदा तु विदितं तत् स्यात् परं ब्रह्म सनातनम् ।
तदैकदण्डं सङ्गृह्य उपवीतं शिखां त्यजेत्' ॥

इति । अत्र केचिदाहुः—उपवीतत्यागवचनानि पुरातनयज्ञोपवीतविषयाणि । तथा च स्मृतिः—

---

१. B. C. F. and G. read अग्निहोम-. २. D. reads ग्रहात्; while H. ग्रहाः. ३. B. C. and F. read -मोज्जमेके. H. has the same reading, but reads in the margin -मोक्ष- for -मोज्ज-. ४. B. C. and F. read सत्यानृतेषु अद्धः श्वेवेदान् and H. reads सत्यानृतेषु शुद्धश्च वेदान्. Both the readings are quite incorrect. ५. D. omits the following portion :—

-कमण्डलु-कपालानां त्यागी'—इति । बौधायनोऽपि— 'अत ऊर्ध्वं यज्ञोपवीतं मन्त्रमाच्छादनं यष्टयः शिक्यं जलपवित्रं. ६. I. substitutes वैणवं for एकं. ७. All, except A. and I. read सखा मा.

'नखानि निकृत्य पुराणं वस्त्रं यज्ञोपवीतं कम-
ण्डलुं त्यक्त्वा नवानि गृहीत्वा ग्रामं प्रविशेत्'।

इति । यदाऽऽचमनाङ्गयज्ञोपवीतं न स्यात् तदा ब्राह्मण्यादेव हीयते । तस्मादस्ति परमहंसस्याऽपि यज्ञोपवीतम्—इति । तदयुक्तम् । उदाहृतस्मृतेर्बहूदकादिविषयत्वात् ।

'न यज्ञोपवीतं नाऽऽच्छादनं चरति परमहंसः'।

( प. उ. २ )

इति श्रुतेः ।

'अयज्ञोपवीती शौचनिष्ठः काम-
मेकं वैणवं दण्डमाददीत'।

( आ. उ. ४ )

इति श्रुत्यन्तराच्च । न च—बाह्योपवीतमन्तरेणाऽऽचमनाद्यसम्भवः । कौषीतकिब्राह्मणे प्रश्नोत्तराभ्यां तदुपपादनात् ।

'किमस्य यज्ञोपवीतं? का[1] वास्य
शिखा? कथं वास्योपस्पर्शनम्?'।

( कठ. श्रु. १ )

इति प्रश्नः ।

'इदमेवास्य तद्[2] यज्ञोपवीतं यदात्मध्यानं विद्या शिखा'।

( कठ. श्रु. १ )

इत्याद्युत्तरम् । ब्राह्मण्यं तु—ज्ञा[3]नमयशिखा-यज्ञोपवीतिन एव पुष्कलम्—इति पिप्पलादश्रुतावुदाहृतम् ।

केचित्तु—परमहंसस्यापि त्रिदण्डमिच्छन्ति । उदाहरन्ति च

---

१. I. reads का शिखा कथं चास्य. २. I. omits तद्. ३. I. reads विज्ञान.

वचनानि । तत्र दक्षः सर्वेषामाश्रमिणां क्रमेण लक्षणमभिदधानः—

'त्रिदण्डेन यतिश्चैव'[1]।

(द. स्मृ. १. १४)

इति यतेर्लक्षणमभिधाय त्रिदण्डरहितस्य यतित्वं निषेधति—

'यस्यैतल्लक्षणं नास्ति प्रायश्चित्ती न चाऽऽश्रमी'।

(द. स्मृ. १. १५)

इति। हारीत-दत्तात्रेय-पितामहाः कुटीचकादीन् चतुरोऽप्युपन्यस्य सर्वेषां त्रिदण्डमेव विदधते—

'वृत्तिभेदेन भिन्नाश्च नैव लिङ्गेन ते द्विजाः ।
लिङ्गं तु वैणवं तेषां त्रिदण्डं सपवित्रकम्' ॥

इति । अत्रिरपि—

'शिखिनस्तु श्रुताः केचित् केचित् मुण्डाश्च भिक्षुकाः ।
चतुर्धा भिक्षुकाः प्रोक्ताः सर्वे चैव त्रिदण्डिनः' ॥

(अ. स्मृ. १. १३)

इति । एकदण्डवचनानि[2] तु त्रिदण्डाऽलाभविषयाणि । तदाह[3] मेधातिथिः—

'यावन्न स्युस्त्रिदण्डास्तु तावदेकेन पर्यटेत्' ।

इति । हारीतोऽपि—

'नष्टे जलपवित्रे वा त्रिदण्डे वा प्रमादतः ।
एकं तु वैणवं दण्डं पालाशं बैल्वमेव वा ॥
गृहीत्वा विचरेत्तावद्यावल्लभ्येत् त्रिदण्डकम्' ।

(हा. स्मृ. ११. १४)

१. H. reads त्रिदण्डोऽत्र for त्रिदण्डेन and I. reads त्रिदण्डन-for the same through mistake. २. B. C. D. F. and H. read -विषयाणि for -वचनानि. ३. All, except A. and I. read तथाऽऽह.

इति । अत्रोच्यते—परमहंसस्यैकदण्डनिराकरणे बह्वागमविरोधः स्यात् । उदाहृताश्च परमहंसस्यैकदण्डप्रतिपादिकाः श्रुति-स्मृतयः । एवं सति मेधातिथि-हारीताभ्यां यदेकदण्डस्यांऽनुकल्पत्वमुक्तं तद्बहूदकादिविषयं भविष्यति । परमहंसस्य तु नैकदण्डो ऽनुकल्पः । यतो व्यास आह—

'त्रिदण्डस्य परित्याग एकदण्डस्य धारणम् ।
एकस्मिन् दृश्यते वाक्ये तस्मादस्य प्रधानता' ॥

इति । यत्तु—

'सर्वे चैव त्रिदण्डिनः' ।

इति तद्वाग्दण्डादिविषयम् । न तु यष्टित्रयाभिप्रायम् । तथा च मनुः—

'वाग्दण्डो ऽथ मनोदण्डः कायदण्डस्तथैव च[1] ।
यस्यैते निहिता[2] बुद्धौ त्रिदण्डीति स उच्यते ॥
त्रिदण्डमेतं[3] निःक्षिप्य सर्वभूतेषु मानवः ।
काम-क्रोधौ तु संयम्य ततः सिद्धिं निर्गच्छति[4]' ॥
(म. स्मृ. १२. १०–११)

इति । दक्षो ऽपि—

'वाग्दण्डो ऽथ मनोदण्डः कर्मदण्डस्तथैव च ।
यस्यैते नियता दण्डास्त्रिदण्डीति स उच्यते' ॥

इति । एतेषां च त्रयाणां दण्डानां स्वरूपं स एवाह—

'वाग्दण्डो[5] मौनता प्रोक्ता कर्मदण्डस्त्वनीहता ।
मानसस्य तु दण्डस्य प्राणायामो विधीयते' ॥

---

१. All, except A. and the text read कर्मदण्डः. २. We follow here A. and the text. All others read नियताः. ३. I. reads त्रिदण्डमेतत्. ४. The text reads नियच्छति. ५. B. C. D. F. G. and H. read—

वाग्दण्डे मौनमातिष्ठेत् कर्मदण्डे त्वनीहताम् ।.

इति । यदपि पितामहेनोक्तम्—

'परः परमहंसस्तु तुर्याख्यः श्रुतिरब्रवीत् ।
यमैश्च नियमैर्युक्तो विष्णुरूपी त्रिदण्डभृत्' ॥

इति तदप्युक्तरीत्या वाग्दण्डाद्यभिप्रायम् । यदपि—

'लिङ्गं तु वैणवं तेषां त्रिदण्डं सपवित्रकम्' ।

इति यष्टित्रयाभिधानं तदपि बहूदकविषयत्वेनोपपन्नम् । यो हि बहूदक एव सन् ग्रामैकरात्रादिकां हंसवृत्तिमाचरति स वृत्तितो हंसो भवति । वेदान्तश्रवणादिकां परमहंसवृत्तिं चेदाश्रयति तदा वृत्तितः परमहंसो [1]भवति । तेषां हंसादीनां त्रिदण्डमेव लिङ्गम् । अनेनैवाभिप्रायेण—

'[2]वृत्तिभेदेन भिन्नाश्च नैव लिङ्गेन ते द्विजाः' ।

[3]इत्युक्तम् । अन्यथा मुख्ययोर्हंस-[4]परमहंसयोरेकदण्ड-विधायकान्युदाहृतानि वचनानि निर्विषयाणि स्युः । तस्मादेक एव दण्डः परमहंसस्य । ननु—परमहंसोपनिषदि एक-दण्डो [5]ऽप्यमुख्यत्वेनैव श्रूयते—

'कौपीनं दण्डमाच्छादनं [6]च स्वशरीरोपभोगार्थाय
[7]च लोकस्योपकारार्थाय [8]च परिग्रहेत् । तच्च न

१. B. C. D. F. G. and H. omit भवति. २ B. C. D. and F. insert only वृत्तिभेदेन भिन्ना-, and omit-श्च न वै लिङ्गेन ते द्विजाः'। इत्युक्तम्. H. also omits this portion, but it appears in the marginal correction. ३. All, except A. and H. omit इत्युक्तम्. They have only इति. ४. I. omits -परमहंस-. ५. I. reads ऽमुख्येनैव. ६. G. omits च. ७. G. and H. omit च. ८. D. omits च.

मुख्यमस्ति । को मुख्यः?-इति चेत् अयं मुख्यो न दण्डं न शिक्यं[2] नाच्छादनं चरति[3] परमहंसः'।

( पर. उ. १ )

इति । बाढम् । नास्त्येव विद्वत्परमहंसस्य बाह्ययष्ट्युपयोगः । अत एव च[4] वाक्यशेषे ज्ञानमेव तस्य दण्डः—इत्युक्तम्—

'ज्ञानदण्डो धृतो येन एकदण्डी स उच्यते' ।

( पर. उ. ३ )

इति । यष्टिधारणं तु विविदिषोः परमहंसस्य । न च—विद्वद्-विविदिषुभेदेन पारमहंस्यद्वैविध्ये मानाभावः शङ्कनीयः । वाजसनेयिब्राह्मणे तदुपलम्भात् ।

'एतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रेषणायाश्च वित्तेषणायाश्च लोकेषणायाश्च व्युत्थायाऽथ भिक्षाचर्यं चरन्ति' ।

( बृ. उ. ३.५.१;४.४.२२ )

इति विद्वत्संन्यासे प्रमाणम् ।

'एतमेव विदित्वा मुनिर्भवति । एतमेव प्रव्राजिनो लोकमिच्छन्तः[5] प्रव्रजन्ति' ।

( बृ. उ. ४. ४. २२ )

---

१. D. reads नच न मुख्यम्; while B. C. F. H. and I. read तच न मुख्यः for तच न मुख्यमस्ति. २. B. C. D. F. and G. substitute शिखां for शिक्यं. ३. B. C. and F. read चेति for चरति. ४. B. C. F. G. H. and I. omit च. ५. B. C. and F. read -मीप्सन्तः.

इत्येतद्वाक्ये[1] विद्वद्विविदिषुसंन्यासौ उभावपि विस्पष्टमवगम्येते ।

'एतत् सर्वं भूः स्वाहेत्यप्सु परित्यज्याऽऽत्मानमन्विच्छेत्'।

( जा. उ. ६ )

इति जाबालवाक्ये त्रिदण्डादिपरित्यागात्मकं विविदिषुपारमहंस्यमाम्नातम्[2] । श्रुतिश्च[3]–

'न्यास इति ब्रह्मा[4] ब्रह्मा हि परः परो हि ब्रह्मा तानि वा एतान्यवराणि तपांसि न्यास एवात्यरेचयत्' ।

( म. ना. उ. २१. २ )

इत्यग्निहोत्र-यज्ञ-दानादितपोनिन्दापुरःसरं पारमहंस्यं विधाय तस्य परमहंसस्य विविदिषोरात्मविद्याऽधिकारं दर्शयति–

'ओमित्येतमात्मानं युञ्जीत' ।

( म. ना. उ. २४. २ )

इति । तस्मात् द्वैविध्यसद्भावाद्दण्डादिनिवारणमशेषकर्मगून्यविद्वत्परमहंसविषयम् । विदुषः कर्त्तव्यशून्यतां[5] भगवानाह–

'यस्त्वात्मरतिरेव[6] स्यादात्मतृप्तश्च मानवः ।
आत्मन्येव[7] च सन्तुष्टस्तस्य कार्यं न विद्यते'॥

( भ. गी. ३. १७ )

---

१. B. C. and F. substitute जाबाले for एतद्वाक्ये. H. and I. read चान्यस्मिन् । एतद्वाक्ये for the same. २. All manuscripts, except A. have been mistaken here. They do not read separately the Śruti and the preceding sentence. D. reads -पारमहंस्यं विधाय तस्य परमहंसस्य for पारमहंस्यमाम्नातम्. ३. H. does not insert श्रुतिश्च before न्यास इति. ४. D. reads ब्रह्म ब्रह्म for ब्रह्मा ब्रह्मा. ५. I. reads ब्रह्म for ब्रह्मा. ६. B. C. and F. read कर्तव्यमुक्ततां. ७. D. reads यः स्वात्मरतिः. ८. G. reads स्वात्मन्येव.

इति। दक्षोऽपि—

'नाऽध्येतव्यं न वक्तव्यं न श्रोतव्यं कदाचन।
एतैः सर्वेषु[2] निष्णातो यतिर्भवति नान्यथा[3]'॥

(द. स्मृ. ७. ३३)

इति। स्मृत्यन्तरेऽपि—

'ज्ञानामृतेन तृप्तस्य कृतकृत्यस्य योगिनः।
नैवास्ति किञ्चित् कर्त्तव्यमस्ति[1] चेन्न स सर्ववित्'॥

इति। बह्वृचब्राह्मणेऽपि—

'एतद्ध स्म वै तद्विद्वांस आहुर्ऋषयः[4] कावषेयाः किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे'।

इति। विविदिषोस्तु श्रवण-मननादिकर्त्तव्यसद्भावात् तदुपकारित्वेन दण्डधारणादिनियम उपपद्यते। ननु—ज्ञानरहितस्यापि दण्डप्रतिषेध आम्नायते—

'काष्ठदण्डो धृतो येन सर्वाशी ज्ञानवर्जितः।
स याति नरकान् घोरान् महारौरवसंज्ञितान्'॥

(पार. उ. ३)

इति[5]। नायं दोषः। विद्यां विविदिषां च विना जीवनार्थमेव केवलमेकदण्डं यो धत्ते तद्विषयत्वात् प्रतिषेधस्य। अत एव सर्वाशीति विशेषितम्[6]। स्मृतावपि—

१. The text reads कर्तव्यं. २. The text reads the whole line as follows:—
'एतैः सर्वैः सुसम्पन्नो यतिर्भवति नेतरः'॥;
while B. C. F. and H. read यो वै सर्वसुनिष्णातो, D. and I. read एतैः सर्वैः सुनिष्पन्नो for एतैः सर्वेषु निष्णातो. ३. I. reads नान्यदा. ४. H. and I. do not insert ऋषयः; while I. substitutes कौषेयाः for कावषेयाः through mistake. ५. B. C. F. and I. omit इति. ६. D. reads विशेषणम्.

'एकदण्डं समाश्रित्य जीवन्ति बहवो नराः ।
नरके रौरवे घोरे कर्मत्यागात् पतन्ति ते'॥

इति । युक्तश्च नरके[1] पातः । सत्यपि बाह्यदण्डे पापनिवर्त्तकानामान्तरदण्डानाम[2]भावात् । पापनिवर्त्तकत्वं च कालिकापुराणे दर्शितम्—

'वैणवा ये स्मृता दण्डा लिङ्गमात्रप्रबोधकाः ।
लिङ्गव्यक्त्यै[3] हि धार्यास्ते न पुनर्धर्महेतवः ॥
कायजा ये बुधैर्नित्यं नृणां पापप्रमोक्षणात्[4] ।
जितेन्द्रियैर्जितक्रोधैर्धार्या वै तत्त्वदर्शिभिः'॥

इति । ये कायजास्त्रयो दण्डास्ते पापविमोक्षणाय धार्या इत्यन्वयः । ननु—एकदण्ड-त्रिदण्डयोर्विकल्पः क्वचित् स्मर्यते । तत्र विष्णु-बौधायनौ—

'एकदण्डी भवेद्वा ऽपि त्रिदण्डी वा मुनिर्भवेत्'[5]।

इति । व्यासः—

'त्रिदण्डमेकदण्डं वा व्रतमास्थाय तत्त्ववित् ।
पर्यटेत् पृथिवीं नित्यं वर्षाकाले स्थिरो भवेत्' ॥

इति । शौनको ऽपि—

'अथ काषायवासाः सखा म गोपा-
येति त्रिदण्डमेकदण्डं वा गृह्णाति'।

इति । आश्वमेधिके भगवद्वचनम्—

१. I. reads नरकपातः. २. D. omits आन्तरदण्डानां. ३. D. G. and I. read -व्यक्तौ. ४. I. reads -विमोक्षणात्. ५. We find this line neither in Vishṇu nor Baudhâyana. Baudhâyana substitutes एकदण्डी त्रिदण्डी वा for it. It may be found in Padya Vishṇu and Baudhâyana.

'एकदण्डी त्रिदण्डी वा शिखी मुण्डित एव वा ॥ (८)
काषायमात्रसारो ऽपि यतिः पूज्यो युधिष्ठिर'। (९)
(म. भा. आ. १०६.८–९)

इति। बाढम्। उक्तरीत्या[1] तयोर्व्यवस्था द्रष्टव्या। तत्र कुटीचक-बहूदकयोस्त्रिदण्डः। हंस-परमहंसयोरेकदण्डः। तथा च[2] सति तत्रतत्रोदाहृतानि वचनानि उपपद्यन्ते।

॥ तदेवं चतुर्विधः संन्यासो निरूपितः॥

अथ तद्धर्मा निरूप्यन्ते। तत्र बौधायनः–

'उषःकाले समुत्थाय शौचं कृत्वा यथाविधि।
दन्तान् विधाव्य[3] चाचम्य पर्ववर्ज[4] यथाविधि॥
स्नात्वा चाचम्य विधिवत्तिष्ठन्नासीन एव वा।
बिभ्रज्जलपवित्रं वाऽप्यक्षसूत्रं करद्वये॥
तद्वत् पवित्रे गोवालैः कृते दुष्कृतनाशने।
उदये विधिवत् सन्ध्यामुपास्य त्रिकजप्यवान्[5]॥
मित्रस्य चर्षणीत्याद्यैरुपस्थाय पवित्रिभिः[6]।
पूर्ववत् तर्पयित्वाऽथ जपेत् सम्यक् समाहितः'॥

इति। मनुरपि–

'एक[7] एव चरेन्नित्यं सिद्ध्यर्थमसहायकः[8]।
सिद्धिमेकस्य सम्पश्यन्[9] न जहाति न हीयते'॥
(म. स्मृ. ६. ४२)

१. B. C. F. and H. read -नीत्या. २. I. omits च. ३. I. reads विमृज्य. ४. D. reads वर्ष- for पर्व-. ५. B. C. and F. read -हव्यवान्. ६. I. reads परित्रिभिः. ७. D. reads एवं यश्चरते for एक एव चरेत्. ८. The text reads असहायवान्. ९. H. reads वश्या हि for सम्पश्यन्; while D. reads the whole line as follows:—
'सिद्धिमेकस्य पश्यन् हि न जानाति न हीयते'॥.

इति। एकस्यासहायस्य विचरतो राग-द्वेषादिप्रतिबन्धाभावात् ज्ञानलक्षणां सिद्धिं निश्चिन्वन् तां सिद्धिं न जहाति। तस्यां सिद्धावप्रत्यूहेन प्रवर्त्तते। प्रवृत्तश्च तस्याः सिद्धेर्न हीयते किन्तु पारं गच्छति। यदा तु द्वितीय-तृतीयपुरुषसहायवान् विचरेत्तदा राग-द्वेषसम्भवादुक्तसिद्धेर्हीयते। अत एव[१] दक्षः—

'एको भिक्षुर्यथोक्तस्तु द्वावेवं मिथुनं स्मृतम्।
त्रयो ग्रामः[२] समाख्यात ऊर्ध्वं तु नगरायते॥
नगरं न हि[३] कर्त्तव्यं ग्रामो ऽपि मिथुनं तथा।
एतत्त्रयं प्रकुर्वाणः स्वधर्मात् च्यवते यतिः॥
राजवार्त्ता[४] हि[५] तेषां च भिक्षावार्त्ता परस्परम्।
स्नेह-पैशुन्य-मात्सर्यं सन्निकर्षान्न संशयः'॥
(द. स्मृ. ७. ३५—३७)

इति। यदा तु श्रवणादिसम्पत्त्यभावादात्मज्ञानसिद्धौ स्वयमशक्तः स्यात् तदा तत्र शक्तेन द्वितीयेन सह विचरेत्। यथाह श्रुतिः—

'वर्षासु ध्रुवशीलो ऽष्टौमासमेकाकी यतिश्चरेत् द्वौ वा'।
(आ. उ. ३)

इति। चरेत् चरेतामित्यर्थः। शौनको[६] ऽपि—

'एकाकी विचरेत् सर्वभूतेभ्यो हितमाचरेत्'।

---

१. The text substitutes चैव for एव. २. B. C. F. and H. read ग्रामाः समाख्याताः and the text reads तथा for समा-. ३. I. reads तु न for न हि. For the same H. reads तद्धि through mistake, and the text reads हि न. ४. The text reads राजवार्तादि. ५. I. includes this word in the preceding quotation through mistake. ६. We follow here only A. All others do not insert शौनकोऽपि. They show the following line as belonging to the author.

इति। तदाह याज्ञवल्क्यः—

'सर्वभूतहितः शान्तः त्रिदण्डी सकमण्डलुः।
एकारामः परिव्रज्य भिक्षार्थी ग्राममाश्रयेत्'॥

(या. स्मृ. ३. ५८)

इति। हिताचरणं नाम हिंसाऽननुष्ठानमात्रम्। न पुनरुपकारेषु प्रवृत्तिः।

'हिंसा-ऽनुग्रहयोरनारम्भः'।

(गौ. स्मृ. ३. २४)

इति गौतमस्मरणात्। अत एव अहिंसादीनाहाऽत्रिः—

'अहिंसा सत्यमस्तेयं ब्रह्मचर्यापरिग्रहौ।
भावशुद्धिर्हरेर्भक्तिः सन्तोषः शौचमार्जवम्॥
आस्तिक्यं ब्रह्मसंस्पर्शः स्वाध्यायः समदर्शनम्।
अनौद्धत्यमदीनत्वं प्रसादः स्थैर्य-मार्दवे॥
स्वस्नेहो गुरुशुश्रूषा श्रद्धा क्षान्तिर्दमः शमः।
उपेक्षा धैर्य-माधुर्ये तितिक्षा करुणा तथा॥
ह्रीस्तपो ज्ञान-विज्ञाने योगो लघ्वशनं धृतिः।
स्नानं सुरार्चनं ध्यानं प्राणायामो बलिः स्तुतिः॥
भिक्षाटनं जपः सन्ध्या त्यागः कर्मफलस्य च।
एष स्वधर्मो विख्यातो यतीनां नियतात्मनाम्'॥

इति। प्रव्रज्यां कृत्वाऽपि गुरोः समीपे ब्रह्मज्ञानपर्यन्तं निवसेत्। तदुक्तं लिङ्गपुराणे—

---

१. I. reads भिक्षार्थं ग्राममाविशेत्. २. D. and G. read लब्धाशनं.

'आश्रमत्रयमुक्तस्य प्राप्तस्य परमाश्रमम् ।
ततः संवत्सरस्यान्ते प्राप्य ज्ञानमनुत्तमम् ॥ (१९)
अनुज्ञाप्य गुरुं चैव चरेद्धि पृथिवीमिमाम् ।
त्यक्तसङ्गो जितक्रोधो लघ्वाहारो[२] जितेन्द्रियः ॥
पिधाय बुद्ध्या द्वाराणि ध्यानेनैकमना भवेत्' ।
(लिं. पु. १. ९०. १९)

इति । मत्स्यपुराणे ऽपि–
'गुरोरभिहिते युक्तः स तु संवत्सरं वसेत् ।
नियमेष्वप्रमत्तस्तु यमेषु च सदा भवेत् ॥
प्राप्य चान्ते ततश्चैव ज्ञानयोगमनुत्तमम् ।
अविरोधेन धर्मस्य विचरेत् पृथिवीं यतिः'॥
(लिं. पु. १. ८९. ५–६)

इति । संवत्सरमित्युपलक्षणम् । यावज्ज्ञानं तावन्निवसेत् । गुरुसमीपवासस्य ज्ञानार्थत्वात् । पृथिवीविचरणे[४] विशेषमाह कण्वः–

'एकरात्रं वसेत् ग्रामे नगरे पञ्चरात्रकम् ।
वर्षाभ्यो ऽन्यत्र वर्षासु मासांश्च चतुरो वसेत्'॥

इति । मत्स्यपुराणे[५] ऽपि–
'अष्टौ मासान् विहारः स्याद्यतीनां संयतात्मनाम्[६] ॥ (२१)

१. All, except the second line of this quotation, do not appear in the text. २. Except A. D. and G. all read लघ्वाहारं. ३. These two verses are found in Linga-purâṇa. They do not appear in Matsya-purâṇa. D. G. H. and I. read गुरोरपि हिते. ४. All, except A. and I. read पृथिवीचरणे for पृथिवीविचरणे. ५. D. omits पुराणे and reads मात्स्ये. ६. A. reads विजितात्मनाम्.

एकत्र चतुरो मासान् वार्षिकान् निवसेत् पुनः ।
अविमुक्ते प्रविष्टानां विहारस्तु न विद्यते ॥ (२२)
न देहो[1] भविता तत्र दृष्टं शास्त्रं पुरातनम्' ॥ (२३)
( म. पु. १८४. २१-२३ )

इति । चातुर्मास्यनिवासे प्रयोजनमाह मेधातिथिः—

'संरक्षणार्थं जन्तूनां वसुधातलचारिणाम् ।
आषाढादींश्च चतुर[2] आमासात् कार्त्तिकाद्यतिः ॥
धर्माढ्ये जलसम्पन्ने ग्रामान्ते निवसेच्छुचिः' ।

इति । अन्यानपि हेयोपादेयांश्च धर्मान् संगृह्याह स एव—

'श्रद्धया परयोपेतः परमात्मपरायणः ।
स्थूल-सूक्ष्मशरीरा[3]भ्यां मुच्यते दशषट्कवित् ॥
त्रिदण्डं कुण्डिकां कन्थां भैक्ष[4]भाजनमासनम् ।
कौपीनाच्छादनं वासः षडेतानि परिग्रहेत् ॥
स्थावरं जङ्गमं बीजं तैजसं विष[5]मायुधम् ।
षडेतानि न गृह्णीयाद्यतिर्मूत्र-पुरीषवत् ॥
रसायनक्रिया[6]वादं ज्योतिषं क्रय-विक्रयम् ।
विविधानि च शिल्पानि वर्जयेत् परदारवत् ॥
भिक्षाटनं जपं स्नानं ध्यानं शौचं सुरार्चनम् ।
कर्त्तव्यानि षडेतानि सर्वथा[7] नृपदण्डवत् ॥

---

१. I. reads दोषो. २. D. reads चतुरो मासाना कार्तिकाद्यतिः; while H. reads चतुरो मासान्वार्षिकान्निवसेद्यतिः. ३. I. reads -शरीरेभ्यो. ४. D. and G. read भिक्षाभाजनम्. ५. I. reads विषयायुधम्. ६. I. reads रसायनं क्रियावादं; while D. substitutes -वर्ज्यं for-वादं, and for the same H. reads -वाद्यं. ७. D. substitutes वर्जयेत् for सर्वथा through mistake; while I. reads नृप, दण्डवत्. It places नृप in the vocative case.

[1]नेटादिप्रेक्षणं द्यूतं[2] प्रमदां सुहृदं तथा ।
भक्ष्यं भोज्यमुदक्यां च षण्न पश्येत् कदाचन ॥
स्कन्धावारे खले सार्थे पुरे ग्रामे वसद्गृहे[3] ।
न वसेत यतिः षट्सु स्थानेष्वेतेषु कर्हिचित् ॥
रागं द्वेषं मदं मायां दम्भं मोहं परात्मसु ।
षडेतानि यतिर्नित्यं मनसाऽपि न चिन्तयेत् ॥
मञ्चकं शुक्लवस्त्रं च स्त्रीकथां लौल्यमेव च ।
दिवा स्वापं च यानं च यतीनां पतनानि षट् ॥
संयोगं च वियोगं च वियोगस्य[4] च साधनम् ।
जीवेश्वरप्रधानानां स्वरूपाणि विचिन्तयेत् ॥
आसनं पात्रलोपश्च सञ्चयः[5] शिष्यसङ्ग्रहः ।
दिवा स्वापो वृथाजल्पो यतेर्बन्धकराणि षट् ॥
एकाहात्परतो ग्रामे पञ्चाहात् परतः पुरे ।
वर्षाभ्यो ऽन्यत्र यत्स्थानमासनं[6] तदुदाहृतम् ॥
उक्तानां यतिपात्राणामेकस्यापि न सङ्ग्रहः ।
भिक्षोर्भैक्षभुजश्चापि पात्रलोपः स उच्यते ॥
[7]गृहीतस्य त्रिदण्डादेर्द्वितीयस्य परिग्रहः ।
[8]कालान्तरोपभोगार्थं सञ्चयः परिकीर्तितः ॥

१. B. C. and F. read न यतिप्रेक्षणं घुष्टं for नटादिप्रेक्षणं द्यूतं. This seems the writer's mistake. G. substitutes नरादि- for नटादि-. २. H. reads घुष्टं instead of द्यूतं. ३. B. C. and F. read च सद्गृहे; while D. reads वसन्गृहे through mistake. ४. B. C. F. and H. read विभोगस्य. ५. I. reads सञ्चयाः. ६. A. reads तद्वासः for यत्स्थानं. ७. This and the following three verses are omitted by B. C. and F.; E. also omits three verses including this verse. G. omits only the first गृहीतस्य त्रिदण्डादेः &c. ८. H. reads कालान्तरेऽपि.

शुश्रूषा-लाभ[1]-पूजाऽर्थं यशो[2]ऽर्थं वा परिग्रहः।
शिष्याणां, न[3] तु कारुण्यात्, स स्नेहः शिष्यसङ्ग्रहः॥
विद्या दिनं[4] प्रकाशत्वादविद्या रात्रिरुच्यते।
विद्या[5]ऽभ्यासे प्रमादो यः स दिवास्वाप उच्यते॥
आ[6]ध्यात्मिकीं कथां मुक्त्वा भैक्षचर्यां सुरस्तुतिम्।
अ[7]नुग्रहपरः प्रश्नो वृथा जल्पः स उच्यते॥
अजिह्वः ष[8]ण्ढकः पङ्गुरन्धो बधिर एव च।
मुग्धश्च मुच्यते भिक्षुः षड्भिरेतैर्न संशयः॥
इदं मृष्टमिदं नेति यो ऽश्नन्नपि न सज्जति।
हितं सत्यं मितं वक्ति तमजिह्वं प्रचक्षते॥
स[9]द्योजातां यथा नारीं तथा षोडशवार्षिकीम्।
शतवर्षां च यो दृष्ट्वा निर्विकारः स षण्ढकः[10]॥
भिक्षार्थमटनं यस्य विण्मूत्रकरणाय च।
योजनान्न परं याति सर्वथा पङ्गुरेव सः॥
तिष्ठतो व्रजतो वाऽपि यस्य चक्षुर्न दूरे[11]गम्।
यु[12]गाद्वयं त्यक्त्वा परिव्राट् सो ऽन्ध उच्यते॥

१. H. reads -लोभ-. २. H. reads शौचार्थं वा; while G. substitutes च for वा. ३. D. reads तु च for न तु, and for the same H. reads जातु. ४. I. reads दिवा; while D. and H. read विद्यादीनां. ५. H. reads विद्याऽऽभासो प्रमोदो. ६. This and the following line are omitted by. A and H. ७. D. omits this line, and I. reads अनुग्रहप्रद-. ८. B. C. and F. read पण्डकः. ९. B. C. and F. read सद्यजातां and D. अथ जातां; while A. reads अद्यजातां. १०. B. C. and F. read पण्डकः. ११. H. reads दूरतः. १२. I. reads चतुर्युगद्वयं, but the expression seems to be meaningless.

हिताहितं मनोरामं वचः शोकावहं तु यत् ।
श्रुत्वा यो न शृणोतीव बधिरः स प्रकीर्त्तितः ॥
सान्निध्ये विषयाणां यः समर्थोऽविकलेन्द्रियः ।
सुप्तवद्वर्त्तते नित्यं स भिक्षुर्मुग्ध उच्यते'॥

इति । भिक्षाऽटनविधिमाह मनुः—

'एककालं चरेद्भैक्षं न प्रसज्ज्येत विस्तरे ।
भैक्षेप्रसक्तो हि यतिर्विषयेष्वपि सज्जते ॥
विधूमे सन्नमुसले व्यङ्गारे भुक्तवज्जने ।
वृत्ते शरावसम्पाते भिक्षां नित्यं यतिश्चरेत् ॥
*अलाभे न विषादी स्याल्लाभे चैव न हर्षयेत् ।
प्राणयात्रिकमात्रः स्यान्मात्रासङ्गाद्विनिर्गतः ॥
(म. स्मृ. ६. ५५–५७)

इति । मीयन्ते इति मात्रा विषयास्तेषां सङ्गाद्विनिर्गतः । यतनस्तो न हर्ष-विषादौ कार्यौ इत्यर्थः । यमो ऽपि—

'स्नात्वा शुचिः शुचौ देशे कृतजप्यः समाहितः ।
भिक्षार्थी प्रविशेद्ग्रामं राग-द्वेषविवर्जितः ॥
चरेन्माधूकरं भैक्षं यतिर्म्लेच्छकुलादपि ।
एकान्नं न तु भुञ्जीत बृहस्पतिसमो यदि ॥

* श्लोको ऽयमुपलभ्यते वासिष्ठधर्मशास्त्रे (१०–२१) परिव्राजकधर्मप्रकरणे ।

१. I. substitutes यतिः for यत्. २. D. substitutes च for यः, ३. The text reads भैक्षे प्रसक्तः. ४. All, except A. and I. read सज्जति. ५. D. reads भक्तवर्जिते; while H. reads भुक्तवर्जिते. ६. D. reads वा न च हर्षवान् for चैव न हर्षयेत्. ७. Except A. I. and the text all read -मात्रं. ८. except A. all omit this. ९. except D. H. and I. read माधुकरं, १०. D. and I. read यतिः for यति.

मेध्यं भैक्षं चरेन्नित्यं सायाह्ने वाग्यतः शुचिः।
एकवासा विशुद्धात्मा मन्दगामी युगान्तदृक्॥
यथालब्धं तथा[१] ऽश्नीयादाज्यसंस्कारवर्जितम्।
भैक्षं[२] माधूकरं नाम सर्वपातकनाशनम्'॥

इति। बौधायनो ऽपि—

'विधूमे सन्नमुसले व्यङ्गारे भुक्त[३]वज्जने।
कालेऽपराह्णभूयिष्ठे भिक्षाऽटणमथाचरेत्॥
ऊर्ध्वं जान्वोरधो नाभेः परिधायैकमम्बरम्।
द्वितीयमान्तरं वासः पात्री दण्डी च वाग्यतः॥
सव्ये चादाय पात्रं तु त्रिदण्डं दक्षिणे करे।
उपतिष्ठेत सूर्यं तु ध्यात्वा चैकत्वमात्मना॥
उक्त्वा विरजसं[४] मन्त्रमाकृष्णेन प्रदक्षिणम्।
कृत्वा पुनर्जपित्वा च ये ते पन्थान इत्यपि॥
योऽसौ विष्णवाख्य[५] आदित्ये पुरुषोऽन्तर्हृदि स्थितः।
सोऽहं नारायणो देव इति ध्यात्वा प्रणम्य तम्॥
भिक्षापात्रादिशुद्ध्यर्थमवमुच्याऽप्युपानहौ।
ततो ग्रामं व्रजेन्मदं युगमात्रावलोककः॥
ध्यायन् हरिं च तच्चित्त इदं च समुदीरयेत्।
विष्णुस्तिर्यगधोर्ध्वं मे वैकुण्ठो विदिशां दिशाम्॥
पातु मां सर्वतो रामो धन्वी चक्री च केशवः।
अभिगम्य गृहाद्भिक्षां भवत्पूर्वं प्रचोदयेत्॥

---

१. All, except A. and I. substitute तत् for तथा. २. except D. H. and I. read माधुकरं. ३. D. and I. read भुक्तवर्जिते. ४. B. C. F. G. and H. read विराजसं; while I. reads विराजनं through mistake. ५. D. reads विश्वाक्षः.

गोदोहमात्रं तिष्ठेच्च वाग्यतो ऽधोमुखस्ततः ।
दृष्ट्वा भिक्षां दृष्टिपूतां[1] दातुश्च करसंस्थिताम् ॥
त्रिदण्डं दक्षिणे त्वङ्के ततः सन्धाय बाहुना ।
उत्पाटयेच्च कवचं दक्षिणेन करेण सः ॥
पात्रं वामकरे क्षिप्त्वा श्लेषयेद् दक्षिणेन तु ।
प्राणयात्रिकमन्नं तु भिक्षेत विगतस्पृहः' ॥

इति[2] । भैक्षस्य पञ्चविधत्वमाहोशनाः—

'माधूकरमसंक्लृप्तं[3] प्राक्प्रणीतमयाचितम् ।
तात्कालिकोपपन्नं च भैक्षं पञ्चविधं स्मृतम् ॥
मनःसङ्कल्परहितान् गृहांस्त्रीन् सप्त पञ्चकान् ।
मधुवदाहरणं यत्तु माधूकरमिति स्मृतम् ॥
शयनोत्थापनात् प्राग् यत् प्रार्थितं भक्तिसंयुतैः ।
तत् प्राक्प्रणीतमित्याह भगवानुशना मुनिः ॥
भिक्षाऽटनसमुद्योगात् प्राक् केनापि निमन्त्रितम् ।
अयाचितं हि तद्भैक्षं भोक्तव्यं मनुरब्रवीत् ॥
उपस्थाने च यत् प्रोक्तं भिक्षार्थं ब्राह्मणेन ह ।
तात्कालिकमिति ख्यातं तदत्तव्यं[4] मुमुक्षुणा ॥
सिद्धमन्नं भक्तजनैरानीतं यन्मठम्प्रति ।
उपपन्नं तदित्याहुर्मुनयो मोक्षकाङ्क्षिणः' ॥

इति । भिक्षान्नं प्रशंसति यमः—

'चरेत् सर्ववर्णेषु भैक्षमभ्यवहारतः ।
न स किञ्चिदुपाश्नीयादापो भैक्षमिति स्थितिः ॥

---

१. D. reads दृष्टिपातां मातुश्च करसंयुताम्; while B. C. F. and G. read दृष्टियुतां for दृष्टिपूतां. २ D. omits इति. ३. H. reads असंज्ञप्तं; while I. reads असन्तसं. ४. D. reads तद्गन्तव्यं.

अब्बिन्दुं यः कुशाग्रेण मासिमासि त्रयं पिबेत्।
न्यायतो यस्तु भिक्षाशी पूर्वोक्तात्तु विशिष्यते॥
तप्तकाञ्चनवर्णेन गवां मूत्रेण यावकम्।
पिबेत् द्वादश वर्षाणि न तद्भैक्षसमं भवेत्॥
शाकभक्षाः पयोभक्षा ये ऽन्ये यावकभक्षकाः।
सर्वे भैक्षभुजस्तस्य कलां नार्हन्ति षोडशीम्॥
न भैक्षं परपाकान्नं न च भैक्षं प्रतिग्रहः।
सोमपानसमं भैक्षं तस्माद्भैक्षेण वर्त्तयेत्'॥

इति। अत्र सर्ववर्णेष्वित्यापद्विषयम्। अत एव बौधायनः—

'ब्राह्मण-क्षत्रिय-विशां मेध्यानामन्नमाहरेत्।
असम्भवे तु पूर्वस्याप्याददीतोत्तरोत्तरम्॥
सर्वेषामप्यभावे तु भैक्षद्वयमनश्नता।
भैक्षं शूद्रादपि ग्राह्यं रक्ष्याः प्राणा विजानता'॥

इति। नच—भिक्षां लब्धुमुल्कापाताद्युत्पातकथनं ग्रहदौस्थ्यादिकथनमन्यं वा कञ्चिदुपाधिं सम्पादयेत्। तदाह मनुः—

'न चोत्पात-निमित्ताभ्यां न नक्षत्राङ्गविद्यया।
नाऽनुशासन-वादाभ्यां भिक्षां लिप्सेत कर्हिचित्'॥
(म. स्मृ. ६. ५०; व. स्मृ. १०. २१)

इति। वर्ज्यमन्नमाहाऽत्रिः—

'हितं मितं सदाऽश्नीयाद्यत् सुखेनैव जीर्यति।
धातुः प्रकुप्यते येन तदन्नं वर्जयेद्यतिः॥

---

१. D. and G. read यत्तु for यस्तु, and B. C. and F. read यस्तु भिक्षार्थी for यस्तु भिक्षाशी; while H. reads यः सुभिक्षार्थं for the same. २. D. reads पाचक- for यावक-. ३. I. adds ऽपि to बौधायनः. ४. I. reads बौधायनः instead of मनुः through mistake.

उदक्या चोदितं चान्नं द्विजान्नं शूद्रचोदितम् ।
प्राण्यङ्गे वाऽऽयसे क्लृप्तं तदन्नं वर्जयेद्यतिः ॥
पित्रर्थं कल्पितं पूर्वमन्नं देवादिकारणात् ।
वर्जयेत्तादृशीं भिक्षां परबाधाकरीं तथा' ॥

इति । परबाधाप्रसक्तिमेवाभिप्रेत्य मनुराह–

'न तापसैर्ब्राह्मणैर्वा वयोभिरथ वा श्वभिः ।
आकीर्णं भिक्षुकैर्वा ऽन्यैरगारमुपसंव्रजेत्' ॥
(म. स्मृ. ६. ५१)

इति । यस्तु भिक्षां दातुं शक्तो ऽपि नास्तिक्यान्न प्रयच्छति तद्गृहं वर्जयेदित्याह बौधायनः–

'भिक्षां न दद्युः पञ्चाहं सप्ताहं वा कदाचन ।
यस्मिन् गृहे जना मौर्ख्यात्त्यजेच्चाण्डालवेश्मवत्' ॥

इति । अनिन्द्यगृहस्य वर्जने बाधमाह स एव–

'साधुं चाऽपतितं विप्रं यो यतिः परिवर्जयेत् ।
स तस्य सुकृतं दत्वा दुष्कृतं प्रतिपद्यते' ॥

इति । यस्तु दरिद्रः श्रद्धालुतया स्वयमुपोष्यापि भिक्षां प्रयच्छति तस्य भिक्षा न ग्राह्या । तदुक्तं स्मृत्यन्तरे–

'आत्मानं पीडयित्वाऽपि भिक्षां यः सम्प्रयच्छति ।
सा भिक्षा हिंसिता ज्ञेया नादद्यात्तादृशीं यतिः' ॥

---

१. C. and F. omit this verse. २. G. and I. read यज्ञान्नं for द्विजान्नं; while H. reads विज्ञातं for the same. ३. D. reads प्राण्यङ्गे तापसे क्लृप्तं, G. reads प्राण्यङ्गे तापसे क्लृप्तं and H. and I. read प्राण्यङ्गे चापि संक्लृप्तं. ४. The text reads अपि वा for अथ वा. ५. D. reads बाधकम् for बाधम्. ६. D. reads साधुं न पतितं वीरं.

इति। भिक्षार्थं बहुषु गृहेषु पर्यटितुमलसम्प्रत्याह बौधायनः—

'एकत्र लोभाद्यो भिक्षुः पात्रपूरणमिच्छति।
दाता स्वर्गमवाप्नोति भोक्ता भुञ्जीत किल्बिषम्'॥

इति। यतिपात्रं विविनक्ति मनुः—

'अतैजसानि पात्राणि तस्य स्युर्निर्व्रणानि च।
तेषामद्भिः स्मृतं शौचं चमसानामिवाध्वरे॥
अलाबुं दारुपात्रं वा मृण्मयं वैदलं तथा।
एतानि यतिपात्राणि मनुः स्वायम्भुवोऽब्रवीत्॥
(म. स्मृ. ६. ५३–५४)

इति। यमोऽपि—

'हिरण्मयानि पात्राणि कृष्णायसमयानि च।
यतीनां तान्यपात्राणि वर्जयेत्तानि भिक्षुकः'॥

इति। बौधायनोऽपि—

'स्वयमाहृतपर्णेषु स्वयं शीर्णेषु वा पुनः।
भुञ्जीत न वटाऽश्वत्थ-करञ्जानां तु पर्णके॥
कुम्भी-तिन्दुकयोर्वाऽपि कोविदारार्कयोस्तथा।
आपद्यपि न कांस्ये तु मलाशी कांस्यभोजनः॥
सौवर्णे राजते ताम्रमये वा त्रपु-सीसयोः'।

इति। भोजननियममाह स एव—

भैक्षचर्यादुपावृत्य......हस्तौ पादौ च प्रक्षाल्य

१. D. G. H. and I. read वैणवं. २ All, except A. omit इति. ३. D. reads जीर्णेषु. ४. When this quotation is compared with the original it seems that the author has formed it himself by borrowing words from the Sûtras Nos. 7, 11 and 12. All, except A. D. and the text read भिक्षाचर्यादुपावृत्तो. ५. The text reads हस्तपादान्; while B. C. D. F. G. and H. read हस्त-पादौ. ६. The text omits च.

आचम्यादित्यस्याग्रे निवेदयन् उदुत्यं चित्रमिति ।
......ब्रह्मजज्ञानमिति च ।(७)......उद्वयं तम-
सस्परीति च...जपित्वा।(११)...भुञ्जीत'।(१२)

(बौ. स्मृ. २. १०. १८. ७-१२)

इति । नृसिंहपुराणेऽपि—

'ततो निवृत्य तत्पात्रं संस्थाप्याचम्य संयमी ॥(१३)
चतुरङ्गुलेन प्रक्षाल्य ग्रासमात्रं समाहितः ।
सर्वव्यञ्जनसंयुक्तं पृथक् पात्रे निवेदयेत् ॥
सूर्यादिदेव-भूतेभ्यो दत्त्वाऽन्नं प्रोक्ष्य वारिणा ।
भुञ्जीत पर्णपुटके पात्रे वा वाग्यतो यतिः ॥(१४)
भुक्त्वा पात्रं यतिर्नित्यं क्षालयेन्मन्त्रपूर्वकम् । (१८)
न दुष्येत्तस्य तत्पात्रं यज्ञेषु चमसा इव ॥(१९)
अथाचम्य निरुद्धासुरुपतिष्ठेत भास्करम् ॥
जपध्यानविशेषेण दिनशेषं नयेद्बुधः । (१६)
कृतसन्ध्यस्ततो रात्रिं नयेद्देवगृहादिषु ॥ (१९)

१. The text has the word आचम्य, but in the 11th Sûtra. २. The text reads आदित्यस्याग्रं निवेदयेत्. ३. B. E. D. F. G. and I. read निवर्त्य, H. reads निर्वर्त्य and the text reads निवेद्य. ४. This and the following line are not found in the text, but they appear in the Laghu Hârîta Smriti. This Smriti reads चतुर्भिरङ्गुलैश्छाद्य; while I. reads चतुरङ्गुलेषु प्रक्षाल्य. ५. The L. H.-Smriti reads नियोजयेत्. ६. The text reads सूर्यादिदेवताभ्यो हि; while B. C. and F. read सूर्यादिदेवदेवेभ्यः. ७. For this line the text substitutes the following one—भुक्तपात्रे यतिर्नित्यं भक्षयेन्मन्त्रपूर्वकम् । ८. F. and the text read भुक्त्वाचम्य. ९. The text reads -ध्यानेतिहासैस्तु.

हृत्पुण्डरीकनिलये ध्यात्वाऽऽत्मानमकल्मषम् ।
[१]यतिर्धर्मरतः शान्तः सर्वभूतसमो वशी ॥ ( २० )
[२]प्राप्नोति परमं स्थानं यत् प्राप्य न निवर्तते' ।

( नृ. पु. ६०. १३–२० )

इति । कूर्मपुराणे ऽपि[३]–

' आदित्ये दर्शयित्वाऽन्नं भुञ्जीत प्राङ्मुखोऽवरैः[४] ॥ ( ७ )
हुत्वा प्राणाहुतीः पञ्च ग्रासानष्टौ समाहितः ।
आचम्य देवं ब्रह्माणं ध्यायीत परमेश्वरम् ॥ ( ८ )
प्राग्रात्रे ऽपररात्रे च मध्यरात्रे तथैव च ।
[५]सन्ध्यास्वह्नि विशेषेण चिन्तयेन्नित्यमीश्वरम्' ॥ ( १० )

( कू. पु. १. २. २९. ७–१० )

इति । अथान्ये ऽपि[६] यतिधर्माः । तत्राहा[७]ऽत्रिः–

'अतःपरं प्रवक्ष्यामि आचारो यो यतेः स्मृतः ।
अभ्युत्थान-प्रियालापैर्गुरुवत् प्रतिपूजनम् ॥
यतीनां व्रतवृद्धानां स्वधर्ममनुवर्त्तिनाम् ।
विष्णुरूपेण वै कुर्यान्नमस्कारं विधानतः' ॥

इति । मनुरपि–

'[८]कृत्तकेश-नख-श्मश्रुः पात्री दण्डी कुसुम्भवान् ।
विचरेन्नियतो नित्यं सर्वभूतान्यपीडयन् ॥ ( ५२ )

---

१. This line does not appear in the text, but it is found in the Laghuhârîtasmṛiti. २. The text reads तत्पदं समवाप्नोति, but Laghuharîta reads as we have done. ३. D. omits ऽपि. ४. D. and G. read नरः for ऽवरः, and I. substitutes यतिः for the same. ५. The text reads सन्ध्यास्वग्नि-. ६. All, except A. omit ऽपि. ७. D. omits आह. ८. The text reads क्लृप्त-; while D. and G. read कृत्तं.

कपालं वृक्षमूलानि कुचेलमसहायता ।
सम[1]ता चैव सर्वस्मिन्नेतन्मुक्तस्य लक्षणम् ॥ ( ४४ )
नाभिनन्देत मरणं नाभिनन्देत जीवितम् ।
कालमेव प्रतीक्षेत निदे[2]शं भृतको यथा ॥ ( ४५ )
दृष्टिपूतं न्यसेत् पादं वस्त्रपूतं जलं पिबेत् ।
सत्यपूतां वदेद्वाचं मनःपूतं समाचरेत् ॥ ( ४६ )
अतिवादांस्तितिक्षेत नावमन्येत कञ्चन ।
न चेमं देहमाश्रित्य वैरं कुर्वीत केनचित् ॥ ( ४७ )
क्रुद्ध्यन्तं न प्रतिक्रुद्ध्येदाक्रुष्टः कुशलं वदेत् ।
सप्तद्वारावकीर्णां च न वाचमनृतां वदेत् ॥ ( ४८ )
अध्यात्मरतिरासीनो निरपेक्षो नि[3]रामिषः ।
आत्मनैव सहायेन सुखार्थी विचरेदिह ॥ ( ४९ )
संरक्षणार्थं ज[4]न्तूनां रात्रावहनि स[5]न्ध्ययोः ।
[6]शरीरस्यात्यये चैव समीक्ष्य वसुधां चरेत् ॥ ( ६८ )
अ[7]ल्पान्नाभ्यवहारेण रहःस्थानासनेन च ।
ह्रियमाणानि विषयैरिन्द्रियाणि निवर्त्तयेत् ॥ ( ५९ )
इन्द्रियाणां निरोधेन राग-द्वेषक्षयेण च ।
अहिंसया च भूतानाममृतत्त्वाय कल्पते' ॥ ( ६० )

( म. स्मृ. ६. ४४–६८ )

---

१. D. reads ममता. २. I. and the text read निर्देशं, and D. reads निर्वेशं. ३. I. reads निरामयः; while A. reads निराश्रयः. ४. I. reads भूतानां. ५. I. reads वा सदा for सन्ध्ययोः. ६. B. C. D. G. and H. read शरीरस्यात्ययं. ७. B. C. F. and H. read अत्यन्ताभ्यवहारेण; while D. reads अल्पेनाऽभ्यवहारेण.

इति। दक्षोऽपि—

‘नाध्येतव्यं न वक्तव्यं न श्रोतव्यं कथञ्चन।
एतैः सर्वैः सुनिष्पन्नो यतिर्भवति नेतरः’॥

(द. स्मृ. ७. ३३)

इति। बृहस्पतिरपि—

‘न किञ्चिद्भेषजादन्यदन्यैर्वा[1] दन्तधावनात्।
विना भोजनकालं तु भक्षयेदात्मवान् यतिः॥
नैवाददीत पाथेयं यतिः किञ्चिदनापदि।
पक्कमापत्सु गृह्णीयाद्यावदन्नोपभुज्यते[2]॥
न तीर्थवासी नित्यं स्यान्नोपवासपरो यतिः।
न चाध्ययनशीलः स्यान्न व्याख्यानपरो भवेत्’॥

इति। नाध्येतव्यमित्येतत्कर्मकाण्डविषयम्। अन्यथा—

‘उपनिषदमावर्त्तयेत्’।

(आ. उ. २)

इति श्रुतिर्बाध्येत। न श्रोतव्यमित्येतद्ब्रह्ममीमांसाव्यतिरिक्तविषयम्।

‘श्रोतव्यो मन्तव्यो निदिध्यासितव्यः’।

इति तन्मीमांसाया विहितत्वात्। उपपन्नश्च तीर्थोपवासाध्ययन-व्याख्यान-तात्पर्यनिषेधो निवृत्तिधर्मप्रधानत्वात्कैवल्याश्रमस्य। यतः स *एवाह—

* अत्र ‘स एवाह’ इत्यनेन दक्ष एवाहेति ग्राह्यमिति प्रतिभाति। यतो ‘नाध्येतव्यं’ इत्येतस्य पूर्वोक्तस्य दक्षवचनस्य व्याख्यानमुपक्रम्य तच्छब्देन तस्यैव परामर्शः क्रियत इति स्पष्टमेव प्रतिभाति।

१. All, except A. and I. are mistaken here. I. reads -दन्याद्वा दन्तधावनात्. २. A. D. and G. read -युज्यते.

'यस्मिन्वाचः प्रविष्टाः स्युः कूपे प्रास्ताः शिला इव ।
न वक्तारं पुनर्यान्ति स कैवल्याश्रमे वसेत् ॥
यस्मिन् कामाः प्रविशन्ति विषयेभ्योपसंहृताः ।
विषयान् न पुनर्यान्ति स कैवल्याश्रमे वसेत् ॥
यस्मिन् क्रोधः शमं याति विफलः सम्यगुत्थितः ।
आकाशे ऽसिर्यथा क्षिप्तः स कैवल्याश्रमे वसेत् ॥
यस्मिन् क्षान्तिः शमः शौचं सत्यं सन्तोष आर्जवम् ।
आकिञ्चन्यमदम्भश्च स कैवल्याश्रमे वसेत् ॥
वृथा प्रलापी यो न स्यान्न लोकाराधने रतः ।
नान्यविद्याऽभियुक्तश्च स कैवल्याश्रमे वसेत् ॥
अतीतान्न स्मरेद्भोगांस्तथैवाऽनागतानपि ।
प्राप्तांश्च नाभिनन्देत स कैवल्याश्रमे वसेत् ॥
अन्धवन्मूकवत् पङ्गु-बधिर-क्लीबवच्च यः ।
आस्ते व्रजति यो नित्यं स कैवल्याश्रमे वसेत्' ॥

इति । उक्तधर्मोपेतं यतिं प्रशंसति दक्षः—

'सञ्चितं यद्गृहस्थस्य पापमामरणान्तिकम् ।
निर्दहिष्यति तत् सर्वमेकरात्रोषितो यतिः ॥
संन्यस्यन्तं द्विजं दृष्ट्वा स्थानाच्चलति भास्करः ।
एष मे मण्डलं भित्वा परं स्थानं प्रयास्यति' ॥

(द. स्मृ. ७. ४५–४६)

इति ।

## ॥ तदेवं यतिधर्मा निरूपिताः ॥

उक्तानां ब्रह्मचर्यादीनां संन्यासान्तानां चतुर्णामाश्रमाणां प्रत्येकमवान्तरभेदाश्चतुर्विधाः । तदुक्तं महाभारते—

---

१. I. reads प्राप्ताः. २. The text reads संमितं यद्गृहस्थेन; while D. G. and H. read सञ्चितं यद् गृहस्थेन. ३. This and the following one line are not found in the text.

'ब्रह्मचारी गृहस्थश्च वानप्रस्थो ऽथ भिक्षुकः ।
चत्वार आश्रमाः प्रोक्ता एकैकस्य चतुर्विधाः' ॥

इति । तत्र चातुर्विध्यं कात्यायनस्मृति[1]र्व्याचचक्षे—

[2]ब्रह्मचारि-गृहस्थ-वानप्रस्थ-परिव्राजकाश्चत्वार आश्रमाः षोडशभेदा भवन्ति । तत्र ब्रह्मचारिणश्चतुर्विधा भवन्ति । (१) गायत्रो ब्राह्मः[3] प्राजापत्यो बृहन्निति । (२) [4]उपनयनादूर्ध्वं त्रिरात्रमक्षारलवणाशी गायत्री[5]मधीते स गायत्रः । (३) [6]अष्टाचत्वारिंशद्वर्षाणि वेदब्रह्मचर्यं चरेत् प्रतिवेदं द्वादश द्वादश वा यावद्ग्रहणान्तं वा वेदस्य स ब्राह्मः[7] । (४) स्वदारनिरतो ऋतुकालगामी सदा परदारवर्जी[8] स[9] प्राजापत्यः । (५) [10]अथवा चतुर्विंशतिवर्षाणि गुरुकुलवासी ब्राह्मः[11] । अष्टाचत्वारिंशद्वर्षवासी च प्राजापत्यः ।

---

१. D. reads -स्मृतिर्व्याचक्षते, G. -स्मृतिर्व्याचष्टे and I. -स्मृतेर्व्याचक्षते. २. The author says that he quotes the following four paragraphs from the Kâtyâyanasmriti, but this guotation appears in Âśramopanishad, which is the fifty-second Upanishad of the Atharva Veda, with the difference that the said Upanishad reads अथातश्चत्वार आश्रमाः षोडश भेदा भवन्ति for ब्रह्मचारि-गृहस्थ-वानप्रस्थपरिव्राजकाः चत्वार आश्रमाः षोडश भेदा भवन्ति. In the Kâtyâyana Smriti the quotation is not found. ३. The text (B. S. S. Edition, by Col. Jacob) reads ब्राह्मणः through mistake. ४. The text inserts यः before this word. ५. The text reads -मन्त्रे for -मधीते through mistake. ६. The text inserts यो before this word. ७. The text reads ब्राह्मणः through mistake. ८. I. reads-वर्जितः. ९. The text omits स. १०. B. C. D. E. F. G. H. and I. omit the following portion :—

अथवा चतुर्विंशति वर्षाणि गुरुकुलवासी ब्राह्मः
अष्टाचत्वारिंशद्वर्षवासी च प्राजापत्यः.

११. The text reads ब्राह्मणः through mistake.

(६) आ प्रायणाद्गुरोरपरित्यागी स नैष्ठिको बृहन्निति । (७)

( आ. उ. १ )

गृहस्था अपि चतुर्विधा भवन्ति । (१) वार्त्ताकवृत्तयः शालीनवृत्तयो[1] यायावरा घोरसंन्यासिकाश्चेति । (२) तत्र वार्त्ताकवृत्तयः कृषि-गोरक्ष-वाणिज्यमगर्हितमुपयुञ्जानाः शतसंवत्सराभिः क्रियाभिर्यजन्त आत्मानं प्रार्थयन्ते । (३) शालीनवृत्तयो यजन्तो न याजयन्तोऽधीयाना नाऽध्यापयन्तो ददतो न प्रतिगृह्णतः शतसंवत्सराभिः क्रियाभिर्यजन्त आत्मानं प्रार्थयन्ते । ( ४ ) यायावरा यजन्तो याजयन्तोऽधीयाना अध्यापयन्तो ददतः प्रतिगृह्णन्तः शतसंवत्सराभिः क्रियाभिर्यजन्त आत्मानं प्रार्थयन्ते । ( ५ ) घोरसंन्यासिका उद्धृतपरिपूताभिरद्भिः कार्यं कुर्वन्तः प्रतिदिवसमाहृतोञ्छवृत्तिमुपयुञ्जानाः[2] शतसंवत्सराभिः क्रियाभिर्यजन्त आत्मानं प्रार्थयन्ते । (६)

( आ. उ. २ )

वानप्रस्था अपि चतुर्विधा भवन्ति । ( १ ) वैखानसा औदुम्बरा वालखिल्याः फेनपाश्चेति । (२) तत्र वैखानसा अकृष्टपच्यौषधि-वनस्पतिभिर्ग्रामबहिष्कृताभिरग्निपरिचरणं कृत्वा पञ्च[3]-

१. B. C. and F. read शीलीनवृत्तयो. २. D. G. and H. read आस्टृतोञ्छ- for आहृतोञ्छ-. In other places we find आहृत्योञ्छ-. ३. I. reads पञ्चमहायज्ञक्रियां, B. C. and F. read पञ्चमहायज्ञक्रियाभिः; while the text substitutes क्रियां for क्रियाः.

महायज्ञक्रिया निर्वर्त्तयन्त आत्मानं प्रार्थयन्ते। (३) औदुम्बरा[1]: प्रातरुत्थाय यां दिशमभिप्रेक्षन्ते तदाहृतोदुम्बर-बदर-नीवार-श्यामाकैरग्निपरिचरणं कृत्वा पञ्चम[2]हायज्ञक्रिया निर्वर्तयन्त आत्मानं प्रार्थयन्ते। (४) वालखिल्या जटाधराश्चीर-चर्म-वल्कल-परिवृताः कार्तिक्यां पौर्णमास्यां पुष्पफ[3]लमुत्सृजन्तः शेषानष्टौ मासान् वृत्त्युपार्जनं कृत्वा ऽग्निपरिचरणं कृत्वा पञ्चमहायज्ञक्रिया निर्वर्त्तयन्त आत्मानं प्रार्थयन्ते। (५) फेनपा उन्मत्तकाः शी[4]र्णपर्ण-फलभोजिनो यत्र तत्र[5] वा वसन्तो [6]ऽग्निपरिचरणं कृत्वा पञ्चमहायज्ञक्रिया[7] निर्वर्तयन्त आत्मानं प्रार्थयन्ते। (६)

( आ. उ. ३ )

परिव्राजका अपि चतुर्विधा भवन्ति। (१) कुटीचका बहूदका हंसाः परमहंसाश्चेति। (२)

१. The text reads उदुम्बराः and D. omits the whole sentence औदुम्बराः प्रातरुत्थाय यां दिशमभिप्रेक्षन्ते तदाहृतोदुम्बर बदर-नीवार-श्यामाकैरग्निपरिचरणं कृत्वा पञ्चमहायज्ञक्रिया निर्वर्तयन्त आत्मानं प्रार्थयन्ते. B. C. F. G. and H. omit प्रातरुत्थाय यां दिशमभिप्रेक्षन्ते तदाहृतोदुम्बर-बदर-, I. also omits this portion except the last word -बदर-. २. All, except A. and the text omit -महा-; while I. and the text read -क्रियां for -क्रियाः. ३. This word does not appear except in A. and the text. ४. B. C. F. G. H. and I. read जीर्ण-. ५. The text substitutes यत्र for तत्र and omits वा. ६. B. C. D. F. G. H. and I. omit अग्निपरिचरणं कृत्वा पञ्चमहायज्ञक्रिया निर्वर्तयन्त आत्मानं प्रार्थयन्ते. ७. The text reads -क्रियां.

कुटीचकाः स्वपुत्रगृहेषु[१] भैक्षचर्यं चरन्त आत्मानं प्रार्थयन्ते । ( ३ ) बहूदकास्त्रिदण्ड-कमण्डलु-शिक्य[२]-पद्म-जलपवित्र-पादुका-ऽऽसन-शिखा-यज्ञोपवीत-कौपीन[३]-काषायवेषधारिणः साधु[४]वृत्तेषु ब्राह्मणकुलेषु भैक्ष[५]चर्यं चरन्त आत्मानं प्रार्थयन्ते । ( ४ ) हंसा[६] एकदण्डधराः शिखावर्जिता[७] यज्ञोपवीतधारिणः शिक्य[८]-कमण्डलुहस्ता ग्रामैकरात्रवासिनो नगरे तीर्थेषु पञ्चरात्रं[९] वसन्त एकरात्र-द्विरात्रं[१०]-कृच्छ्र-चान्द्रायणादि चरन्त आत्मानं प्रार्थयन्ते । (५) परमहंसा न दण्डधरो[११] मुण्डाः कन्था-कौपीन-वाससो ऽव्यक्तलिङ्गा[१२] अव्यक्ताचारा अनुन्मत्ता[१३] उन्मत्तवदाचरन्तस्त्रिदण्ड-कमण्डलु-शिक्य-पद्म[१४]-जलपवित्र-पादुका-ऽऽसन-शिखा-यज्ञोपवी[१५]-

---

१. I. reads -गृहे तु for -गृहेषु, and the text reads भिक्षाचर्यं for भैक्षचर्यं; while I. substitutes भैक्षचर्या for the same. २. D. G. and I. omit -शिक्य-पद्म-; while H. omits only -पद्म-. The text reads -पक्ष- for -पद्म-. ३. D. G. H. and I. omit -कौपीन-. ४. D omits the following portion through mistake:—साधुवृत्तेषु ब्राह्मणकुलेषु भैक्षचर्यं चरन्त आत्मानं प्रार्थयन्ते । हंसा एकदण्डधराः शिखावर्जिता यज्ञोपवीतधारिणः शिक्य-. ५. I. reads भैक्षं for भैक्षचर्यं, and for the same the text substitutes भैक्षाचर्यं. ६. B. C. and F. insert तत्र before हंसाः. ७. I. omits -वर्जिताः. ८. I. omits शिक्य-. ९. I. inserts एकरात्रं द्विरात्रं after पञ्चरात्रं and omits वसन्तः. १०. H. omits -द्विरात्र-. ११. B. C. D. F. G. H. and I. read परमहंसा नाम एकदण्डधराः, But they are wrong here, as a दण्ड is not required by a परमहंस. १२. I omits अव्यक्ताचाराः and reads व्यक्ताव्यक्तलिङ्गाः. १३. The text reads ऽननुमत्ताः. १४. The text reads -प्रक्ष- through mistake. Also B. C. and F. have the same reading. १५. The text reads -पवीतानां त्यागिनः.

तत्यागिनः शून्यागार-देवगृहवासिनो न तेषां धर्मो[१] नाधर्मो न सत्यं[२] ना[३]पि चानृतं सर्वसहाः सर्व-समाः समलोष्टा-ऽश्म-काञ्चना यथोपपन्नचातुर्वर्ण्ये भै[४]क्षचर्यं चरन्त आत्मानं मो[५]क्षयन्ते'।

(आ. उ. ४)

[६]। कात्यायनो ऽपि—

'तेषामुपशमो धर्मो नियमो वनवासिनाम्।
दानमेकं गृहस्थानां शुश्रूषा ब्रह्मचारिणाम्'॥

इति। युक्तं च परिव्राजकाणामात्ममोक्षणम्। तत्त्वज्ञानपर्यवसायित्वात् पारिव्रज्यस्य। एतदेवाभिप्रेत्य त[७]न्निर्वचनं स्मृत्यन्तरे दर्शितम्—

'परिबोधात् परिच्छेदात् परिपूर्णावलोकनात्।
परिपूर्णफलत्वाच्च परिव्राजक उच्यते॥
परितो व्रजते नित्यं परं वा व्रजते पुनः।
हित्वा चैवाऽपरं जन्म परिव्राजक उच्यते'॥

इति। तदेवमध्यायादौ मूलवचने 'चातुर्वर्ण्याश्रमागतम्' इत्याश्रमशब्देन बुद्धिस्था आश्रमचतुष्टयधर्माः परिसमापिता इति।

[८]द्वितीये त्वध्याये स्फुटमभिहितो जीवनकृते-
रुपायः कृष्यादिः पुनरथ समस्ताश्रमगताः।

१. I. adds वा to -धर्मो. २. The text does not insert सत्यं. ३. B. C. F. and the text omit न; while G. and H. substitute वा for च. ४. The text reads चातुर्वर्ण्यभैक्षाचर्यं. ५. B. C. and F. read मोचयन्ते; while D. omits the portion between परमहंसा न दण्डधराः and मोक्षयन्ते both inclusive. ६. All, except A., omit इति। कात्यायनो ऽपि. ७. I. substitutes एवं for तत्. ८. G. omits this verse. H. also omits it, but it appears in its marginal correction. D. reads द्वितीयाध्याये ऽस्मिन्.

गरीयांसो धर्माः किमपि विवृतास्त्वाश्रमपदाः[1]
तमेवं व्याकार्षीन्महितधिषणो माधवविभुः ॥

इति श्रीमहाराजाधिराज-परमेश्वर[2]-वैदिकमार्गप्रवर्त्तक-श्री-वीरबुक्कभूपालसाम्राज्यधुरन्धरस्य माधवामात्यस्य कृतौ पराशरस्मृतिव्याख्यायां माधवीयायां[3] द्वितीयोऽध्यायः ॥ २ ॥

१. I. reads स्वाश्रमपदात्. २. B. C. F. and H. read परम- for परमेश्वर-. ३. G. reads इति श्रीवृद्धपाराशरस्मृतिव्याख्यायां माधवीयायां for इति श्रीमहाराजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्तक-श्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरस्य माधवामात्यस्य कृतौ पराशरस्मृतिव्याख्यायां माधवीयायां.

ॐ नमः शिवाय ।

# पराशरसंहिता

## अथ तृतीयोऽध्यायः ।



प्रथम-द्वितीयाभ्यामध्यायाभ्यां चातुर्वर्ण्याश्रमाः[१] साक्षात् प्रतिपादिताः । आश्रमधर्माश्च सूचिताः । तेषु च[२] धर्मेषु शुद्ध-स्यैवाधिकारः ।

'शुचिना कर्म कर्त्तव्यम्' ।

इति स्मृतेः[३] । सा च शुद्धिर्यद्यपि पुरुषस्य स्वाभाविकी तथापि केनचिदागन्तुकेनाऽऽशौचाख्येन दोषरूपेण[४] पुरुषगता-तिशयेन कञ्चित्कालं प्रतिबद्धयते । तच्चाशौचं कालेयत्ता-स्ना-नाद्यपनोद्यम् । अतस्तृतीये ऽध्याये तत् प्रतिपिपादयिषुरादौ प्रतिबन्धापगमेनोत्तम्भितां[५] शुद्धिं प्रतिजानीते–

**अतः शुद्धिं[६] प्रवक्ष्यामि जनने मरणे तथा ।**

इति । यतो[७] जनन-मरणयोर्धर्माधिकारपरिपन्थिन्यशुद्धिः

---

१. B. C. and F. read चातुर्वर्ण्यधर्माः for चातुर्वर्ण्याश्रमाः. २. D. and G. omit च, and D. substitutes धर्मस्य for धर्मेषु. ३. I. substitutes श्रुतः for स्मृतेः, but we follow the majority. ४. B. reads दोषनिरूपणेन for दोषरूपेण. ५. B. C. F. and H. read उत्तम्भिकां, but it seems in-correct. ६. D. G. and J. substitute परं शुद्धिं. We follow the author here, but Nandapandita uses परं for अतः ७. D. omits जनन-मरणयो-र्धर्माधिकारपरिपन्थिन्यशुद्धिः प्राप्नोति अतस्तन्निवर्त्तकोपायप्रतिबोधनेन शुद्धिं प्रवक्ष्यामि ।.

प्राप्नोति अतस्तन्निवर्त्तकोपायप्रतिबोधनेन शुद्धिं प्रवक्ष्यामि। जनन-मरणयोश्च अशुद्धिप्रापकत्वं मनुना दर्शितम्—

'दन्तजाते[1] ऽनुजाते च कृतचौले[2] च संस्थिते।
अशुद्धा बान्धवाः सर्वे सूतके च[3] तथोच्यते'॥

(म. स्मृ. ५. ५८)

इति॥

प्रतिज्ञातां शुद्धिं वर्णानुक्रमेण दर्शयति—

**दिनत्रयेण शुद्ध्यन्ति ब्राह्मणाः प्रेतसूतके॥१॥**
**क्षत्रियो[4] द्वादशाहेन वैश्यः पञ्चदशाहकैः।**
**शूद्रः शुद्ध्यति मासेन पराशरवचो यथा॥२॥**

ननु—दिनत्रयेण शुद्ध्यन्ति ब्राह्मणाः इत्येतद्बहुस्मृतिविरुद्धम्। तथाच दक्षः—

'शुद्ध्येद्विप्रो दशाहेन द्वादशाहेन भूमिपः।
वैश्यः पञ्चदशाहेन शूद्रो मासेन शुद्ध्यति'॥

(द. स्मृ. ६. ७)

इति। देवलोऽपि—

'दशाहं ब्राह्मणानां तु क्षत्रियाणां त्रिपञ्चकम्।
विंशद्रात्रं तु वैश्यानां शूद्राणां मासमेव तु[5]'॥

इति। वसिष्ठोऽपि—

१. B. C. F. and H. read दन्तजातानुजाते. २. A. and the text of Manu read कृतचूडे. ३. D. and G. substitute अपि for च. ४. B. C. and F. read क्षत्रियाः वैश्याः and शूद्राः instead of their respective singular form. ५. I. substitutes हि for तु.

'ब्राह्मणो दशरात्रेण । (२७) पञ्चदशरात्रेण क्षत्रियः । (२८) वैश्यो विंशतिरात्रेण । (२९) शूद्रो मासेन शुद्ध्यति' । (३०)

( व. स्मृ. ४. २७–३० )

इति । नैष दोषः । विप्रेषु त्र्यहाशौचस्य समानोदकविषयत्वात् । तथा च मनुः–

'त्र्यहात्तूदकदायिनः' ।

(म. स्मृ. ५. ६४)

इति । दशाहाशौचप्रतिपादकानि दक्षादिवचनानि सपिण्डविषयाणि ।

'दशाहं शावमाशौचं सपिण्डेषु विधीयते' ।

(म. स्मृ. ५. ५९. व. स्मृ. ४. १६)

इति मनुस्मरणात् । कूर्मपुराणेऽपि'–

'दशाहमाहुराशौचं सपिण्डेषु विपश्चितः' ।

(कू. पु. १. २. २३. १)

इति । बृहस्पतिरपि–

'दशाहेन सपिण्डास्तु शुद्ध्यन्ति प्रेतसूतके ।
त्रिरात्रेण सकुल्यास्तु स्नात्वा शुद्ध्यन्ति गोत्रजाः' ॥

---

१. In I. these four Sûtras from Vasishtha are rendered in verse by means of some additions and alterations, but in the second line the Chhanda is not correct. २. The text (B. S. S. Edition ) reads राजन्यः, and interchanges the places of वैश्यः and विंशतिरात्रेण. ३. B. C. and F. read शूद्रास्तु मासेन, D. G. and H. शूद्रस्य मासेन, and all of them omit शुद्ध्यति. ४. Except A. and the text all read शावमाशौचं, but our reading gives a better sense when the following line of the text is noticed. ५. D. reads विधीयते.

इति । ननु—'क्षत्रियो द्वादशाहेन'-इत्येतदप्यनेकस्मृतिविरुद्धम् । तत्र वसिष्ठ-देवलाभ्यां क्षत्रियस्य पञ्चदशाहाशौचमुक्तम् । तद्वचनं चोदाहृतम् । शातातपस्त्वेकादशाहमाह—

'एकादशाहाद्राजन्यो वैश्यो द्वादशभिस्तथा ।
शूद्रो विंशतिरात्रेण शुद्ध्यते मृतसूतके'॥

इति । वृद्धपराशरोऽपि—

'क्षत्रियस्तु दशाहेन स्वकर्मनिरतः शुचिः ।
तथैव द्वादशाहेन वैश्यः शुद्धिमवाप्नुयात्' ॥

इति । अत्रोच्यते—विद्या-तपसोस्तारतम्येन विरोधः समाधेयः । यावद्यावद्विद्या-तपसी विवर्धेते तावत्तावदाशौचं संकुच्यते । अत एव याज्ञवल्क्यो न्यायवर्तिनः शूद्रस्याप्यर्धमाशौचमाह—

'क्षत्रस्य द्वादशाहानि विशः पञ्चदशैव तु ।
त्रिंशद्दिनानि शूद्रस्य तदर्धं* न्यायवर्त्तिनः'॥

( या. स्मृ. ३. २२ )

इति । देवलोऽप्येतदेवाभिप्रेत्य विप्रादीनामाशौचतारतम्यमाह—

'चत्वार्यधीतवेदानामहान्याशौचमिष्यते ।
वेदाग्नियुक्तविप्रस्य त्र्यहमाशौचमिष्यते ॥

* न्यायवर्तिनः—'पाकयज्ञ-द्विजशुश्रूषादिरतस्य'—इति विज्ञानेश्वरः।

१. D. reads एकस्मृति-. २. D. and G. read विचार्येते for विवर्धेते. ३. C. F. and G. substitute क्षत्रियस्य for क्षत्रस्य; while D. reads the whole line as follows :—

क्षत्रियस्य द्वादशाहा विशः पञ्चदशैव तु ।.

४. Except A. D. and I. all read विशाम् for विशः. The text also reads the same.

एताभ्यां श्रुतयुक्तस्य दिनमेकं विधीयते ।
एतैः साकं कर्मयुक्तः सद्यः शुचिरसंशयः ॥
एतैर्युक्तस्य राज्ञस्तु द्वादशैकादशा दश ।
वैश्यस्यैवं पञ्चदश-द्वादशैकादश क्रमात् ॥
अर्धमासं तु शुश्रूषोः शूद्रस्याशौचमिष्यते'।

इति । यत्तु क्षत्रियादेस्त्रि-पञ्चकादिकं तेनैवोक्तं[२] तद्विद्या-तपोरहितविषयम् ।

'प्राकृतानां तु वर्णानामाशौचं सम्प्रकीर्त्तितम्' ।

इति वाक्यशेषात् । दक्षोऽपि दश पक्षानुपन्यस्य गुणोत्कर्षापकर्षाभ्यां व्यवस्थामाह—

'सद्यःशौचं तथैकाहं त्र्यहश्चतुरहस्तथा[३] ।
[४]षड्-दश-द्वादशाहं च पक्षो मासस्तथैव च ॥
मरणान्तं तथा चान्यत् पक्षाश्च[५] दश सूतके ।
उपन्यासक्रमेणैव वक्ष्याम्यहमशेषतः ॥
[६]ग्रन्थार्थतो विजानाति वेदमङ्गैः[७] समन्वितम् ।
सकल्पं सरहस्यं च क्रियावांश्चेन्न सूतकम्[८] ॥
राजर्त्विग्दीक्षितानां च बाले देशान्तरे तथा ।
व्रतिनां सत्रिणां चैव सद्यःशौचं विधीयते ॥

---

१. D. reads वेदाभ्यां श्रुतमुक्तस्य. २. D. substitutes तत्रैव for तेनैव. ३. D. and G. read द्व्यहः for त्र्यहः; while the text reads तथैकाहो द्वि-त्रि-चतुरहस्तथा. The latter reading seems to be more corrects, but Aparârka follows our reading (See Âśauchaprakaraṇam ). ४. The text reads दशाहो द्वादशाहश्च. ५. The text reads दशपक्षं तु. ६. B. C. and F. read यथार्थतो for ग्रन्थार्थतो. ७. I. reads अङ्गसमन्वितम्. ८. The text reads सूतकी.

[1]एकाहाच्छुद्ध्यते विप्रो योऽग्नि-वेदसमन्वितः ।
हीने हीनतरे वा[2]ऽपि त्र्यहश्चतुरहस्तथा ॥
[3]तथा हीनतमे चैव षडहः परिकीर्त्तितः ।
ये दशाहादयः प्रोक्ता वर्णानां ते यथाक्रमम् ॥
अस्नात्वा चाप्यहुत्वा च [4]अदत्वाऽश्नंस्तथा द्विजः ।
एवंविधस्य वि[5]प्रस्य सर्वदा सूतकं भवेत्' ॥

( द. स्मृ. ६. २–९ )

इति । अत्र 'चत्वार्यधीतवेदानाम्'–इत्यादिनोक्तो ऽघसंकोचो युगान्तरविषयः ।

'[6]वृत्त-स्वाध्यायसापेक्षमघसंकोचनं तथा'।

इत्याद्यनुक्रम्य–

'कलौ युगे त्विमान् धर्मान् वर्ज्यानाहुर्मनीषिणः'।

इति स्मृत्यन्तरे ऽभिधानात् ।

'दशाह एव विप्रस्य सपिण्डमरणे सति ।
कल्पान्तराणि कुर्वाणः कलौ व्यामोहकिल्बिषी'॥

( हा. स्मृ. १८. ३२ )

इति हारीतवचनाच्च । उक्तरी[7]त्या क्षत्रियवद्द्वैश्ये ऽपि वचनान्तरविरोधः परिहर्त्तव्यः । एवं च सति विप्रस्य समानोदकेषु

१. D. substitutes दशाहात् for एकाहात्; while the text reads एकाहस्तु समाख्यातो for एकाहाच्छुद्ध्यते विप्रो. २. The text reads चैव द्वि-त्रि-चतुरहस्तथा. ३. This and the following line do not appear in the text. ४. The text reads भुङ्क्ते ऽहुत्वा च यः पुनः for अदत्वाऽश्नंस्तथा द्विजः. ५. The text reads सर्वस्य सूतकं समुदाहृतम्. This and the previous reading of the text convey quite a different sense. ६. I. interchanges the places of वृत्त-and-स्वाध्याय-. ७. B. C. D. and F. read -नीत्या for -रीत्या.

त्रिरात्रं सपिण्डेषु दशरात्रम् । क्षत्रियादीनां द्वादशाहादि यन्मूलवचनोक्तं तदेव स्थितम् । यद्यपि क्षत्रिय-वैश्ययोः पञ्चदशाह-विंशतिरात्रवचनानुसारेण द्वादशाह-पञ्चदशाहाशौचवचनं गुणवदघसंकोचपरमिवाभाति देवलश्च गुणवद्विषयत्वेनैवोदाजहार तथापि शिष्टाचाराद्बहुस्मृत्यनुग्रहाच्च क्षत्रिय-वैश्ययोर्मूलवचनोक्त एव मुख्यः कल्पः । अत एव मनु-कूर्म-दक्षाः—

'शुद्ध्येद्विप्रो दशाहेन द्वादशाहेन भूमिपः ।
वैश्यः पञ्चदशाहेन शूद्रो मासेन शुद्ध्यति' ॥
(म. स्मृ. ५. ८३; कू. पु. १. २. २३. ३८; द. स्मृ. ६. ७)

इति । मार्कण्डेयो ऽपि—

'दशाहं ब्राह्मणस्तिष्ठेद्दानहोमादिवर्जितः ।
क्षत्रियो द्वादशाहं तु वैश्यो मासार्धमेव च ॥
शूद्रस्तु मासमासीत निजकर्मविवर्जितः' ।

इति । बृहस्पतिरपि—

'क्षत्रियो द्वादशाहेन शुद्ध्यते मृतसूतके ।
वैश्यः पञ्चदशाहेन शूद्रो मासेन शुद्ध्यति' ॥

इति । विष्णुरपि—

'ब्राह्मणस्य सपिण्डानां जनन-मरणयोर्दशाहमाशौचम् । (१) द्वादशाहं राजन्यस्य । (२) पञ्चदशाहं वैश्यस्य । (३) मासं शूद्रस्य' । (४)
(वि. स्मृ. २२. १–४)

इति । पञ्चदशाह-विंशतिरात्रवचनं तु यावज्जीवाशौच-

---

१. All, except H. show that the author quotes this verse from three different works. The readings of Manu and Kûrmapurâṇam are quite similar, but Daksha reads जातिविप्रो for शुद्ध्येद्विप्रो. H. makes no mention of Daksha. २. D. and G. omit मार्कण्डेयो ऽपि, and the following three lines do not appear also in that Purâṇam. ३. I. reads मासः.

वाक्यमिव निन्दापरत्वेन युगान्तरविषयत्वेन वा व्याख्येयम् । 'पराशरवचो यथा'—इत्यनेन स्वमतत्वं दर्शयन् मतान्तरेष्वघ-संकोच-विकासपराणि वचनानि सन्तीति सूचयति । तानि चास्माभिर्व्यवस्थापितानि ॥ २ ॥

उक्तस्याशौचस्य कर्माधिकारपरिपन्थित्वात् सन्ध्याद्युपासनस्यापि निवृत्तिप्राप्तावपवादमाह—

उपासने तु विप्राणामङ्गशुद्धिश्च जायते ।

इति । उपासनं सन्ध्यावन्दना-ऽग्निहोत्राद्यनुष्ठानं तस्मिन् प्रसक्ते तात्कालिकी शरीरशुद्धिर्भवति । तदाह गोभिलः—

'अग्निहोत्रादिहोमार्थं शुद्धिस्तात्कालिकी स्मृता ।
पञ्चयज्ञान्न कुर्वीत ह्यशुद्धः पुनरेव सः' ॥

इति । यावत्कालेनाग्निहोत्रं निष्पद्यते तावदेव शुद्धिर्न तूपरि । पुलस्त्यो ऽपि—

'सन्ध्यामिष्टिं चरुं होमं यावज्जीवं समाचरेत् ।
न त्यजेत् सूतके वाऽपि त्यजन् गच्छेदधो द्विजः ॥
सूतके मृतके चैव सन्ध्याकर्म न सन्त्यजेत् ।
मनसोच्चारयेन् मन्त्रान् प्राणायाममृते द्विजः' ॥

इति । अञ्जलिप्रक्षेपे तु वाचोच्चारणमभिप्रेत्य पैठीनसिराह—

'सूतके सावित्र्याऽञ्जलिं प्रक्षिप्य प्रदक्षिणं
कृत्वा सूर्यं ध्यायन्नमस्कुर्यात्' ।

---

१. Except A. and I. all do not insert युगान्तरविषयत्वेन वा. २. D. E. G. K. L. and M. read -मङ्गः शुद्धिस्तु, which H. and I. read -मङ्गः शुद्धिश्च ३. G. reads इष्टं for इष्टिं. ४. I. reads गच्छति for गच्छेत्. ५. I. reads. वाचिको-. ६. D. omits प्रक्षिप्य.

इति। मनसोच्चारणस्य मार्जनादिमन्त्रेष्वपि सिद्धत्वादञ्जलौ विशेषविधानं वाचिकाभिप्रायम्। यत्तु मनुनोक्तम्–

'उभयत्र दशाहानि कुलस्यान्नं न भुज्यते।
दानं प्रतिग्रहो होमः स्वाध्यायश्च निवर्त्तते'॥
(म. स्मृ. ५. ६२)

इति तत् स्मार्त्तवैश्वदेवादिविषयम्। तदाह जातूकर्ण्यः–

'पञ्चयज्ञविधानं च न कुर्यान् मृत्यु-जन्मनोः'।

इति। यत्तु जाबालेनोक्तम्–

'सन्ध्यां पञ्चमहायज्ञान्नैत्यकं स्मृतिकर्म च।
तन्मध्ये हापयेदेव आशौचान्ते तु तत्क्रिया'॥

इति तद्वाचिकसन्ध्याऽभिप्रायम्। स्मार्त्तकर्मवर्जनं स्वयं-कर्तृकविषयम्। अन्येन तु कारयेदेव। तदाह बृहस्पतिः–

'सूतके मृतके चैव ह्यशक्तौ श्राद्धभोजने।
प्रवासादि-निमित्तेषु हावयेन्न तु हापयेत्'॥

इति। जातूकर्ण्योऽपि–

'सूतके तु समुत्पन्ने स्मार्तं कर्म कथं भवेत्?।
पिण्डयज्ञं चरुं होममसगोत्रेण कारयेत्'॥

इति। मूलवचने विप्रग्रहणं क्षत्रियादीनामुपलक्षणम्।

---

१. This verse does not appear in MS. of Manu. The oldest commentator मेधातिथि and others except सर्वज्ञनारायण and रामचन्द्र have also omitted this verse. But it is quoted by Hârîta under the name of Manu (see, chapter 19; Fol 32, Hârîtadharmaśâstra). Aparârka also quotes it under the same name (see A. P. F. E. 17). २. The text reads यज्ञः. ३. D. and I. read जातूकर्णः here and there, but it is incorrect. ४. D. substitutes अपि for तु. ५. A. reads अन्यगोत्रेण for असगोत्रेण.

द्विविधं चाशुचित्वं कर्मानधिकारलक्षणमस्पृश्यत्वलक्षणं च। तत्राङ्गशुद्धिरित्यनेनैकस्य निवृत्तिरुक्ता चकारेणापरस्यापि ॥

यथा[1] शावे तात्कालिकी द्विविधाऽशुद्धिस्तथा जननेऽपि तत्प्राप्तौ विशेषमाह—

**ब्राह्मणानां प्रसूतौ[2] तु देहस्पर्शो विधीयते ॥ ३ ॥**

इति। जनने सपिण्डानां सार्वकालिकोऽङ्गस्पर्शः। न तु शाववत्तात्कालिकः। अत एवाङ्गिराः[3]—

'सूतके सूतिकावर्जं संस्पर्शो न निषिद्ध्यते।
संस्पर्शे सूतिकायास्तु स्नानमेव विधीयते'॥

इति। कौर्मेऽपि—

'सूतके तु सपिण्डानां संस्पर्शो नैव दुष्यति'।
(कू. पु. १. २. २३. ९)

इति। पैठीनसिरपि—

'जनौ सपिण्डाः शुचयो माता-पित्रोस्तु सूतकम्।
सूतकं मातुरेव स्यादुपस्पृश्य पिता शुचिः'॥

इति। जनने माता-पितृव्यतिरिक्ताः सर्वे सपिण्डाः स्पृश्याः। माता-पित्रोस्तु नास्ति स्पृश्यत्वम्। तत्रापि पिता स्नानेन स्पृश्यो भवति। दशाहमस्पृश्यत्वं मातुरेव। तथा च वसिष्ठः—

'नाशौचं विद्यते पुंसः संसर्गं चेन्न गच्छति।
रजस्तत्राऽशुचि ज्ञेयं तच्च पुंसि न विद्यते'॥
(व. स्मृ. ४. २३)

---

१. I reads यथाऽऽशौचे for यथा शावे. The word आशौच is applicable to both birth and death. २. D. reads प्रशस्तौ वै, E. प्रशस्तौ तु, and K. and M. read विशुद्धौ तु. ३. I. substitutes आपस्तम्बः for अङ्गिराः.

इति। संवर्त्तो ऽपि—

'जाते पुत्रे पितुः स्नानं सचैलं तु विधीयते।
माता शुद्ध्येद्दशाहेन स्नानात्तु स्पर्शनं पितुः' ॥
(सं. स्मृ. १. ४३)

इति ॥ ३ ॥

मरणे वर्णानुक्रमेण शुद्धिर्दर्शिता। इदानीं जनने ऽपि वर्णक्रमेण शुद्धिं दर्शयति—

**जातौ विप्रो दशाहेन द्वादशाहेन भूमिपः।**
**वैश्यः पञ्चदशाहेन शूद्रो मासेन शुद्ध्यति ॥ ४ ॥**

इति। जातौ जनने। स्पष्टमन्यत्। इयं च शुद्धिः कर्माधिकारविषया। समनन्तरातीतेन वचनेन स्पर्शविषयायाः शुद्धेरुक्तत्वात्। जन्मदिवसे तु नास्त्यशुद्धिर्दानादिविषये। अत एव मनुः—

'[२]जाते कुमारे तदहः कामं कुर्यात् प्रतिग्रहम्।
हिरण्य-धान्य-गो-वासस्तिलानां गुड-सर्पिषाम्' ॥
(औ. स्मृ. ६. ४)

इति। शङ्ख-लिखितौ—

'कुमारप्रसवे नाभ्यामच्छिन्नायां गुड-
तिलहिरण्य-वस्त्रप्रावरण-गो-धान्यानां
प्रतिग्रहेष्वदोषः। तदहरित्येके'।

१. The text reads स्नातस्य for स्नानात्तु. २. This verse is not found in the text of Manu. I have searched seven commentaries on the same, but nowhere this verse is seen. Not only the author, but Aparârka also quotes this verse under the name of Manu. (see A. P. Fol: 17. Aparârk). ३. B. C. D. E. and F. read नाड्यां for नाभ्यां; while I. reads प्राङ्नाभिच्छेदनात्, but other MSS. and also Aparârka do not follow this reading.

इति । वृद्धयाज्ञवल्क्यः—

'कुमारजन्मदिवसे विप्रैः कार्यः प्रतिग्रहः ।
हिरण्य-भू-गवाश्वाज-वासः-शय्याऽऽसनादिषु ॥
तत्र सर्वं प्रतिग्राह्यं कृतान्नं तु न भक्षयेत् ।
भक्षयित्वा तु तन्मोहाद् द्विजश्चान्द्रायणं चरेत्' ॥

इति । बौधायनोऽपि—

'गुड-तैल-हिरण्यानां गो-धान्यानां च वाससाम् ।
तस्मिन्नहनि दानं च कार्यं विप्रैः प्रतिग्रहः ।
प्राङ्नाभिच्छेदनाद् ग्राह्याण्येतानीत्यपरे जगुः' ॥

इति । यास्तु जन्मदाख्याः सूतिकागृहाभिमानिन्यो देवताः तासां पूजायां प्रथम-षष्ठ-दशमदिवसेष्वशुद्धिर्नास्ति । तथा च व्यासः—

'सूतिकाऽऽवासनिलया जन्मदा नाम देवताः ।
तासां यागनिमित्तं तु शुद्धिर्जन्मनि कीर्त्तिता ॥
प्रथमे दिवसे षष्ठे दशमे चैव सर्वदा ।
त्रिष्वेतेषु न कुर्वीत सूतकं पुत्रजन्मनि' ॥

इति । मार्कण्डेयोऽपि—

'रक्षणीया तथा षष्ठी निशा तत्र विशेषतः ।
रात्रौ जागरणं कुर्याज्जन्मदानां तथा बलिम् ॥

१. B. C. D. and F. read नाडि–for नाभि–. २. These two verses do not appear in Mârkandeyapurâṇa. Aparârka, however, quotes them under the name of Mârkandeya A. P. F. L. 18. (see). ३. Aparârka reads तिथिः. ४. D. omits.—

‥‥‥‥ ‥‥‥‥जन्मदानां तथा बलिम् ।
पुरुषाः शस्त्रहस्ताश्च नृत्य-गीतैश्च योषितः ॥
रात्रौ जागरणं कुर्युः ‥‥‥‥‥‥‥‥‥' ।,

but it seems the copyist's mistake.

पुरुषाः शस्त्रहस्ताश्च नृत्य-गीतैश्च योषितः।
रात्रौ जागरणं कुर्युर्दशम्यां चैव सूतके' ॥

इति। यत्त्वङ्गिरसोक्तम्—

'नाशौचं सूतके प्रोक्तं सपिण्डानां क्रियावताम्'।

इति तत्[1] पूर्वोक्ताग्निहोत्रादिविषयत्वेन वा समनन्तरोक्तजन्मदानां बलिविषयत्वेन वा नेतव्यम्। अन्यथा—

'जातौ विप्रो दशाहेन'।

इत्येतद्वचनं निर्विषयं स्यात् ॥ ४ ॥

उक्तस्य प्रेताशौचस्य जाताशौचस्य च क्वचित् संकोचमाह—

एकाहाच्छुद्ध्यते विप्रो योऽग्नि-वेदसमन्वितः।
[2]त्र्यहात् केवलवेदस्तु द्विहीनो[3] दशभिर्दिनैः ॥ ५ ॥

इति। अत्राग्निशब्देनाहवनीयादयो गृह्यन्ते। तैश्च तत्साध्या दर्श-पूर्णमासादय उपलक्ष्यन्ते। द्विहीनो द्वाभ्यामग्नि-वेदाभ्यां हीनः। अयमाशौचसंकोचः स्वाध्यायदुर्मेधसो बहुतरसपिण्डस्य संकुचितवृत्तेश्च प्रतिग्रहादौ द्रष्टव्यः। न तु सर्वकर्मसु। तथा च गौतमः—

'[4]ब्राह्मणस्य स्वाध्यायाऽनिवृत्त्यर्थम्'।

(गौ. स्मृ. १४. २१.)

इति। अयमर्थः—ब्राह्मणस्य सम्पूर्णाशौचे स्वीक्रियमाणे

---

१. D. G. and H. read पूर्वाग्निहोत्रादि-, and I. is mistaken here.
२. D. reads अहात् for त्र्यहात्. ३. Aparârka quotes this verse (see A. P. F. E. 16) and reads निर्गुणो दशभिर्दिनैः. ४. The text inserts च after ब्राह्मणस्य.

स्वाध्यायो निवर्त्तेत तन्माभूदिति । स्वाध्यायानिवृत्तिग्रहणं प्रतिग्रहस्याप्युपलक्षणार्थम् । अन्यथा अश्वस्तनिकादीनां संकुचितवृत्तीनां सम्पूर्णाशौचे स्वीक्रियमाणे जीवनमेव न स्यात् । एवं च सति एकाहविधानमश्वस्तनिकविषयं त्र्यहविधानं त्र्याहिकविषयं असंकुचितवृत्तेस्तु दशाहम्—इति व्यवस्था । एवमुक्तरीत्या—

'सद्यःशौचं तथैकाहं त्र्यहश्चतुरहस्तथा ।
षड्-दश-द्वादशाहं च पक्षो मासस्तथैव च' ॥

(द. स्मृ. ६. २)

इति दक्षोक्ताः पक्षा व्यवस्थापनीयाः । वृत्तिसंकोचेनाऽऽशौचसंकोचमाह संग्रहकारः—

'शिलोञ्छा-ऽयाचितैर्जीवन् सद्यः शुद्ध्येद् द्विजोत्तमः'।

इति । ननु—विद्वदविद्वद्विषयत्वेनैवायमाशौचसंकोचः सर्वकर्मसु किं नेष्यते? 'यो ऽग्नि-वेदसमन्वितः'—इति विशेषणसामर्थ्यात् । तन्न ।

'दशाहं शावमाशौचं सपिण्डेषु विधीयते' ।

(म. स्मृ. ५. ५९)

इत्यविशेषेण दशाहाशौचविधानात् । न च—सामान्यप्राप्तस्य दशाहाशौचस्य विद्वद्विषये बाधः—इति शङ्कनीयम् । बाधस्यानुपपत्तिहेतुकत्वात् । यावत्यबाधिते ऽनुपपत्तिर्न शाम्यति

---

१. For the different readings of this verse see P. 207 L. 20. २. D. reads इति विशेषेण दशाहाशौचविधानात् and omits विशेषणसामर्थ्यात् । तन्न ।
'दशाहं शावमाशौचं सपिण्डेषु विधीयते' ।
इत्य-. ३. D. omits न च सामान्यप्राप्तस्य दशाहाशौचस्य विद्वद्विषये बाधः—इति शङ्कनीयम् । बाधस्याऽनुपपत्तिहेतुकत्वात्.

तावद्बाधनीयम् । अत्र चाध्ययन-प्रतिग्रहादिमात्र एव । दशाहाशौचबाधेनैकाहाशौचविधानस्य चरितार्थत्वान्न सर्वत्र दशाहाशौचबाधः । अग्नि-वेदसमन्वितत्वमश्वस्तनिकस्यैकाहाशौचविधिस्तुत्यर्थम् । न त्वेकाहाशौचविध्यधिकारिविशेषणम् । यत्तु—

'उभयत्र दशाहानि कुलस्यान्नं न भुज्यते ।
दानं प्रतिग्रहो होमः* स्वाध्यायश्च निवर्त्तते' ॥
( म. स्मृ. ५. ६२ )

इति मनुना प्रतिग्रहादिनिषेधनं कृतं तदसंकुचितवृत्तिविषयम् । यद्वा[2] उक्तापवादप्रतिप्रसवाभिप्रायेण वा नेयम् ॥ ५ ॥

यदि वृत्तिसंकोचा-ऽसंकोचावेवाशौचसंकोचा-ऽसंकोचयोः कारणं तर्ह्यत्यन्ताऽसंकुचितवृत्तेर्निर्गुणस्यामरणमाशौचं प्राप्नोतीत्याशंक्य आशौचावधिं[3] दर्शयति—

**जन्म-कर्मपरिभ्रष्टः सन्ध्योपासनवर्जितः ।**
**नामधारकविप्रस्तु[4] दशाहं सूतकी भवेत् ॥ ६ ॥**

इति । जन्म-कर्मपरिभ्रष्टः गर्भाधानादिसंस्काररहितः । सन्ध्योपासनवर्जितः सन्ध्योपासनादिनित्य-नैमित्तिककर्माण्यकु-

* 'होमः स्मार्तः'—इति सर्वज्ञनारायणः । अयं होमस्त्वन्यद्वारा कार्यः । रामचन्द्रेण तु—'यज्ञाहुतिं तत्र हावयेत् न तु हापयेत्' इत्युक्तम् ।

१. For the different readings of this verse see P. 211, L. 19 of this part. २. Except A. and I. all omit यद्वा उक्तापवादप्रतिप्रसवाभिप्रायेण वा नेयम्. ३. D. reads आशौचविधिं for आशौचावधिं. ४. D. omits नामधारकविप्रस्तु दशाहं सूतकी भवेत् ॥ ६ ॥ इति । जन्मकर्मपरिभ्रष्टः गर्भाधानादिसंस्काररहितः । सन्ध्योपासनवर्जितः.

र्णः अत एवासौ नामधारकविप्रो भवति। तस्यापि दशाह-मेवाशौचम्। नामधारकविप्रस्वरूपं दर्शयति व्यासः—

'ब्रह्मबीजसमुत्पन्नो मन्त्रसंस्कारवर्जितः।
जातिमात्रोपजीवी च स भवेन्नामधारकः॥
गर्भाधानादिभिर्युक्तस्तथोपनयनेन च।
न कर्मवित् न वाऽधीते स भवेन्नामधारकः'॥
(व्या. स्मृ. ४. ४२–४३)

इति। ननु—संस्काररहितस्य नामधारकविप्रस्य मरणान्तिकमाशौचं कूर्मपुराणेऽभिहितम्—

'क्रियाहीनस्य मूर्खस्य महारोगिण एव च।
यथेष्टाचरणस्याहुर्मरणान्तमशौचकम्'॥
(कू. पु. १. २. २३. ९)

इति। दक्षोऽपि—

'व्याधितस्य कदर्यस्य ऋणग्रस्तस्य सर्वदा।
क्रियाहीनस्य मूर्खस्य स्त्रीजितस्य विशेषतः॥
व्यसनासक्तचित्तस्य पराधीनस्य नित्यशः।
श्रद्धा-त्यागविहीनस्य भस्मान्तं* सूतकं भवेत्॥
नाऽसूतकं कदाचित्स्याद् यावज्जीवं तु सूतकम्'।
(द. स्मृ. ६. ९–११)

* 'भस्मान्तं' शरीरदाहपर्यन्तमित्यर्थः।

१. The text substitutes ब्राह्मणः समः for नामधारकः and the following verse runs as follows :—

'गर्भाधानादिभिर्मन्त्रैर्वेदोपनयनेन च।
नाध्यापयति नाधीते स भवेद् ब्राह्मणब्रुवः'॥.

२. The text reads -स्येह for -स्याहुः. ३. Except A. and the text all read श्राद्ध-कर्मविहीनस्य for श्रद्धा-त्यागविहीनस्य. Aparârka, who quotes these verses, follows the text (See Â. P.). ४. The text and Aparârka read न सूतकं for नाऽसूतकम्.

तत् कथं दशाहाशौचम्?—इति। उच्यते। निन्दार्थवादत्वादेतेषां वचनानां न यावज्जीवाशौचविधिपरत्वम्। अन्यथा—

'नामधारकविप्रस्तु दशाहं सूतकी भवेत्' ॥

(प. स्मृ. ३. ६)

इत्येतद्वचनं विरुद्ध्येत ॥ ६ ॥

चतुर्णामपि वर्णानामाशौचमभिधाय अधुनोत्तमवर्णेन हीनवर्णासूत्पन्नानामुत्तमवर्णसम्बन्धिनि जनने मरणे चाशौचमाह—

**एकपिण्डास्तु दायादाः पृथग्दार-निकेतनाः।**
**जन्मन्यपि विपत्तौ च तेषां तत्सूतकं भवेत् ॥ ७ ॥**

इति। एकः पिण्ड उत्तमवर्णदेहः उत्पादको येषां ते तथा। पृथग्दार-निकेतनाः हीनवर्णाः स्त्रियः निकेतनानि उत्पत्तिस्थानानि येषां ते तथा। दायादाः पुत्राः। तेषामुत्तमवर्णसम्बन्धिनि जनने मरणे च सति तत्सूतकमुत्तमवर्णसम्बन्ध्याशौचं भवेत्। तथा च मनुः—

'सर्वेषूत्तमवर्णानामाशौचं कुर्युरादृताः।
तद्वर्णविधिदृष्टेन स्वाशौचं तु स्वयोनिषु' ॥

(म. स्मृ. ९. ८७.)

इति। अयमर्थः—सर्वे हीनवर्णा उत्तमवर्णानां सम्बन्धिनि जनने मरणे वा उत्तमवर्णविधिदृष्टेन दशरात्रादिकाशौचं कुर्युः। स्वयोनिषु जातेषु मृतेषु च स्वाशौचं कुर्युः। कौर्मेऽपि—

---

१. This line does not appear in D., and the following portion up to निकेतनः is also omitted. २. D. reads गेहः. ३. D. omits उत्पत्तिस्थानानि. ४. B. C. and F. read सर्वेऽपि for सर्वेषु. ५. D. reads प्रतियोनिषु.

'शूद्र-विट्-क्षत्रियाणां तु ब्राह्मणे संस्थिते सति ।
दशरात्रेण शुद्धिः स्यादित्याह कमलोद्भवः' ॥

( कू. पू. १. २. २३. ४९ )

इति । देवलोऽपि–

'सर्ववर्णेषु दायादा ये स्युर्विप्रस्य बान्धवाः ।
तेषां दशाहमाशौचं विप्राशौचे विधीयते' ॥

इति । एतच्चाशौचमविभक्तविषयम् । तथा ऽऽचापस्तम्बः–

'क्षत्र-विट्-शूद्र-जातीनां[२] यदि स्तो मृत-सूतके ।
तेषां तु पैतृकाशौचं विभक्तानां त्वपैतृकम्' ॥

इति । अपैतृकं मातृजातीयमित्यर्थः । अधमवर्णसम्बन्धिनि जननादौ उत्तमवर्णस्य यदाशौचं तत् उक्तं कूर्मपुराणे–

'षड्रात्रं वा[३] त्रिरात्रं स्यादेकरात्रं क्रमेण तु ।
वैश्य-क्षत्रिय-विप्राणां शूद्रे चाशौचमेवं[४] हि' ॥

( कू. पु. १. २. २३. ४२ )

इति । विष्णुरपि–

'ब्राह्मणस्य क्षत्रिय-विट्-शूद्रेषु सपिण्डेषु
षड्रात्र-त्रिरात्रैकरात्रैः । (२२) क्षत्रियस्य
विट्[५]-शूद्रेषु षड्रात्र-त्रिरात्राभ्याम् । (२३)
वैश्यस्य शूद्रेषु षड्रात्रेण' । (२४)

( वि. स्मृ. २२. २२–२४ )

इति । बृहस्पतिस्तु प्रकारान्तरेणाशौचमाह–

---

१. The text reads ब्राह्मणस्य तथैव च, and also in the second line कमलापतिः is substituted for कमलोद्भवः. २. B. C. and F. read -जातानां. ३. All, except A. and the text substitute वा for स्यात्. ४. All, except A. and the text read इष्यते for एव हि. ५. The text reads विट्-शूद्रयोः.

'दशाहाच्छुद्ध्यते विप्रो जन्म-हान्योः स्वयोनिषु ।
सप्त-पञ्च-त्रिरात्रैस्तु क्षत्र-विट्-शूद्रयोनिषु' ॥

इति । अत्र षड्रात्र-सप्तरात्रादिपक्षयोर्विकल्पः । स्नेहादिना वा व्यवस्था ॥ ६ ॥

उक्तस्य भिन्नजातीयविषयस्याशौचस्य सजातीयेष्विव साप्तपुरुषत्वप्राप्तौ तदवधिमाह—

**तावत्तत् सूतकं गोत्रे चतुर्थपुरुषेण तु[1] ।**

इति । तत् सूतकं भिन्नजातीयसन्ततिविषयोक्तमाशौचम् । तावत् यावत् त्रिपुरुषम् । चतुर्थपुरुषेण तु निवर्त्तते । तत्र सापिण्ड्यनिवृत्तेः ।

'सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते ।
सजातीयेषु वर्णेषु चतुर्थे भिन्नजातिषु' ॥

इति वृद्धपराशरवचनात् । शातातपोऽपि—

'यद्येकजाता बहवः पृथक्क्षेत्राः पृथग्धनाः[2] ।
एकपिण्डाः पृथक्शौचाः पिण्डस्त्वावर्त्तते त्रिषु' ॥

इति ॥

सजातीयेषु पञ्चमादिष्वाशौचतारतम्यं वक्तुं सापिण्ड्यनिवृत्तिमाह—

**दायाद्विच्छेदमाप्नोति पञ्चमो वाऽऽत्मवंशजः ॥ ८ ॥**

इति । दायशब्देन पिण्डो लक्ष्यते । तस्माद्विच्छेदम्[3]वाप्नोति[4] । आत्मवंशजः पञ्चमः । वाशब्दात् षष्ठ-सप्तमौ वा । तत्र सापिण्ड्यं निवर्त्तते—इति । तदुक्तं गौतमेन—

१. B. C. D. E. F. G. and H. read चतुर्थे पुरुषेण तु. २. Except A. and I. all read पृथग्जनाः. The word does not render good sense. This verse Medhâtithi quotes under the name of Śankha (see 5. 60). ३. B. C. E. F. and G. read च्छेदम् for विच्छेदम्. H. also reads the same, but corrects the reading in the margin. ४. I. reads आप्नोति.

'पिण्डनिवृत्तिः पञ्चमे सप्तमे वा' ।

( गौ. स्मृ. १४. ७ )

इति । वाशब्दात् षष्ठे ॥ ८ ॥

यदर्थं सापिण्ड्यनिवृत्तिरभिहिता तदिदानीमाह—

**चतुर्थे दशरात्रं स्यात् षण्णिशाः पुंसि पञ्चमे ।**
**षष्ठे चतुरहाच्छुद्धिः सप्तमे तु दिनत्रयात् ॥ ९ ॥**

इति । पितृपक्षे कूटस्थमारभ्य गणनायां चतुर्थे दशरात्रमाशौचम् । पञ्चमे षड्रात्रं षष्ठे चतूरात्रं सप्तमे त्रिरात्रमिति । ननु—सापिण्ड्यस्य सप्तपुरुषपर्यन्तत्वात् सपिण्डेषु चाविशेषेण दशाहाशौचविधानादाशौचस्य संकोचविधानमनुपपन्नम् । साणिड्यस्य सप्तपुरुषपर्यन्तत्वं मत्स्यपुराणेऽभिहितम्—

'लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः ।
पिण्डदः सप्तमस्तेषां[१] सापिण्ड्यं साप्तपौरुषम्'[२] ॥

( म. पु. १८. २९ )

इति । मनुरपि—

'सपिण्डता तु पुरुषे सप्तमे*विनिवर्त्तते ।
समानोदकभावस्तु जन्म-नाम्नोरवेदने' ॥

( म. स्मृ. ५. ६० )

---

* सप्तमः पुरुषो मर्यादा । षट्पुरुषाः सपिण्डाः । सप्तमे प्राप्ते साापिण्ड्यं निवर्तते इति ज्ञेयम् । अत्र मेधातिथिः—'यत एव भेदस्तमुपादाय गणना कर्तव्या यावत्सप्तमावधि । यथा—पितामहो येषामेकः तत आरभ्य सप्तमावधयः सपिण्डा इत्येव सर्वत्र तदन्वयजत्वे चोपलक्षणे जातेरनाश्रयणात् विजातीया अपि क्षत्रियादयो ब्राह्मणादीनां सपिण्डा भवन्ति'—इति ।

---

१. Except A. and I. all substitute तु for च. २. Except A. and the text all read चैषां for तेषां. ३. We follow here A. and the text. The reading in others is साप्तपूरुषम्, and I. shortens the पू in साप्तपूरुषम्.

इति। सत्यम्। तथापि पञ्चमादिषु सापिण्ड्यनिवृत्तेर्विकल्पेन स्मृतत्वात् तदनुरोधेनाशौचसंकोचविधानं विकल्पेन युज्यते। उदाहृतं च गौतमवचनम्—

'पिण्डनिवृत्तिः पञ्चमे सप्तमे वा'।

(गौ. स्मृ. १४. ७)

इति। पैठीनसिरपि—

'त्रीनतीत्य मातृतः पञ्चातीत्य पितृतः'।

इति। ननु—एवं तर्हि पञ्चमादीनां समानोदकत्वेन

'त्र्यहात्तूदकदायिनः'।

इति त्रिरात्रमाशौचं प्राप्नुयात् अतः षड्रात्रादिविधानमनुपपन्नमिति। सत्यम्। पञ्चमादिषु त्रिरात्राशौचं प्राप्नोति तथापि विशेषविधानादपोद्यते। सामान्यशास्त्रस्य विशेषशास्त्रविषयेतरपरत्वस्य[१] युक्तत्वात्॥ ९॥

उक्तस्य[२] प्रेताशौचस्य क्वचिदपवादमाह—

**भृग्वग्निमरणे चैव देशान्तरमृते तथा[३]।**
**बाले प्रेते च संन्यस्ते सद्यःशौचं विधीयते॥ १०॥**

इति। भृगुः प्रपातः। अग्निः प्रसिद्धः। भृग्वग्निमरणं प्रमादादिना विना[४] दुर्मरणमात्रोपलक्षणम्। प्रायश्चित्तानुरोधात्[५]। एतन्निमित्ते

---

१. I. reads -विषयत्वस्य for -विषयेतरपरत्वस्य; while E. -विषयेतरत्वस्य. २. From this word to (P. 225; L. 10) गच्छतो मरणे ऽयमाशौचादिनिषेधः the intermediate portion does not appear in D. Probably this omission has been effected through the copyist's mistake. ३. K. reads मृतेऽथ वा for मृते तथा. ४. B. C. and F. omit विना, and in E. this word is struck off; while G. reads दुर्मरणानिमित्त- for दुर्मरणनिमित्त-. ५. Except A. and I. all omit प्रायश्चित्तानुरोधात्.

मरणे सति तत्सम्बन्धिनां [1]सर्वेषां सपिण्डानां सद्यःशौचं न तु दशाहाशौचमिति । तथा च याज्ञवल्क्यः—

‘ हतानां नृप-गो-विप्रैरन्वक्षं चात्मघातिनाम्’।

( या. स्मृ. ३. २१ )

इति । नृपोऽभिषिक्तः क्षत्रियः । गोशब्दः शृङ्गि-दंष्ट्र्यादीनां सर्वेषां [2]तिरश्चामुपलक्षकः । विप्रग्रहणं चण्डालाद्युप[3]लक्षणार्थम् । एतैर्नृपादिभिर्हतानां विधिमन्तरेणात्मत्यागकारिणां च[4] ये सम्बन्धिनः सपिण्डाः तेषामन्वक्षं यावच्छवदर्शनमाशौचं न तु [5]दशाहादिपर्यन्तमित्यर्थः । दुर्मृतानामुदकदानादिकमपि नास्ति । तथा च य[6]मः—

‘चण्डालादुदकात् सर्पाद् ब्राह्मणाद्वैद्युतादपि ।
दंष्ट्रिभ्यश्च पशुभ्यश्च मरणं पापकर्मणाम् ॥
उदकं पिण्डदानं च प्रेतेभ्यो यत् प्रदीयते ।
नोपतिष्ठति तत् सर्वमन्तरिक्षे विनश्यति ॥
नाशौचं नोदकं नाश्रु न दाहाद्यन्तकर्म च ।
ब्रह्मदण्डहतानां च न कुर्यात् कटधारणम्’ ॥

इति । ब्रह्मदण्डो ब्राह्मणशापः अभिचारो वा । कटशब्देन शववहनोपयोगिकटादिकमभिधीयते । आपस्तम्बोऽपि—

‘व्यापादयेद् य आत्मानं [7]स्वयमग्न्युदकादिभिः ।
विहितं तस्य नाशौचं नापि कार्योदकक्रिया’॥

---

१. This word is omitted by A. and I. २. I. omits तिरश्चाम्. ३. I. reads -लक्षकम् for -लक्षणार्थम्. ४. G. H. and I. omit च. ५. I. reads दशाहपर्यन्तम्. ६. In I. the following six lines have been quoted under the name of Manu, but none of them appears in that work. The ancient commentator Medhâtithi quotes them under the head तथान्यत्र and Kamalâkar Bhatta under the name of Angirah (see Nirṇayasindhu Vol. III. Â. P.), but these quotations however do not appear in the copies we have of Yama and Angirah. ७. B. C. and F. read स्वं पयो-ऽग्न्युदकादिभिः; while E. G. and H. स्वयं योऽग्न्युदकादिभिः.

इति । एतच्च बुद्धिपूर्वकमरणविषयम् । अत एव गौतमः—

'गो-ब्राह्मणहतानामन्वक्षम्*। (६) राजक्रोधाच्च[1](७)
युद्धे[2]† ।(८)प्रायो-ऽनाशक[3]-शस्त्रा-ऽग्नि-विषोदको-
द्बन्धन-प्रपतनैश्चेच्छताम्'। (९)

( गौ. स्मृ. १४. ६–९ )

इति । प्रायो महाप्रस्थानम् । अनाशकमनशनम् । प्रपतनं भृगुपतनम् । एतैर्बुद्धिपूर्वकं हतानां सपिण्डस्यान्वक्षमाशौचमित्यर्थः । अतश्चैतदुक्तं भवति । सर्पादिना चण्डालादिना वा विग्रहं कुर्वन् यस्तैर्हतः तस्यैवायं पिण्डदानादिनिषेधः । एवं दुष्टदंष्ट्र्यादीन् ग्रहीतुमाभिमुख्येन गच्छतो मरणे ऽप्यमाशौचादिनिषेधः । एवं राज्ञः प्रातिकूल्यमाचरतो मरणे । एवं बाहुभ्यां नदीतरणे ऽपि । एवं सर्वत्रानुसन्धेयम् । अत एव ब्रह्मपुराणम्—

'शृङ्गि-दंष्ट्रि-नखि-व्याल-विष-वह्नि-महाजलैः ।
सुदूरात् परिहर्त्तव्यैः[4] कुर्वन् क्रीडां मृतस्तु यः ॥

* 'अन्वक्षं' अनु अक्ष्यते प्रत्यक्ष्यते शवः यावत् तावदेव । तत्संस्कारानन्तरं स्नात्वा शुद्ध्येरन्नित्यर्थः ।

† विज्ञानेश्वरस्तु—'अयुद्धे' इति पाठमाश्रित्य—'अयुद्धग्रहणं युद्धहतस्यैकाहमाशौचमस्तीति ज्ञापनार्थम्'–इत्याह । नैतत् वृत्तिकृतो हरदत्तस्य सम्मतम् । यथाह स एव—'अप्रकृतं पाठान्तरम् । तत्त्वसभ्यं न रोचते । यदि वा स एव पाठः अयुद्धमायोधनं सङ्ग्राम इति'।

---

१. B. C. F. and G. substitute वा for च. The text substitutes चा- for च. २. I. inserts अश्व- before युद्धे, but the word अश्व is present neither in the text nor in any other MS. ३. I. reads ऽनाशनं here and there for अनाशकं. ४. D. and I. read परिहर्तव्यः.

नागानां विप्रियं कुर्वन् दग्धश्चाप्यथ विद्युता ।
निगृहीताश्च ये राज्ञा चौर्यदोषेण कुत्रचित् ॥
परदारान् हरन्तश्च रोषात्तत्पतिभिर्हताः ।
असमानैश्च सङ्कीर्णैश्चण्डालाद्यैश्च विग्रहम् ॥
कृत्वा तैर्निहतास्तद्वच्चण्डालादीन् समाश्रिताः ।
क्रोधात् प्रायं विषं वह्निं शस्त्रमुद्बन्धनं जलम् ॥
गिरि-वृक्षप्रपातं च ये कुर्वन्ति नराधमाः ।
महापातकिनो ये च पतितास्ते प्रकीर्तिताः ॥
पतितानां न दाहः स्यान्नान्त्येष्टिर्नास्थिसञ्चयः ।
न वाऽश्रुपातः पिण्डो वा कार्यं श्राद्धादिकं क्वचित्' ॥

इति । ननु—अयं चण्डालादिहतानामग्निसंस्कारनिषेधोऽनाहिताग्निविषयः । आहिताग्निविषयत्वे—

'आहिताग्निमग्निभिर्यज्ञपात्रैश्च दहेत्' ।

इति श्रुतिविहिताग्नि-यज्ञपात्रादिप्रतिपत्तिलोपप्रसङ्गादिति । मैवम् । स्मृत्यन्तरे चण्डालादिहताहिताग्निसम्बन्धिनामग्नीनां यज्ञपात्राणां च प्रतिपत्त्यन्तरविधानात् ।

'वैतानं प्रक्षिपेदप्सु आवसथ्यं चतुष्पथे ।
पात्राणि तु दहेदग्नौ यजमाने वृथा मृते ॥
आत्मनस्त्यागिनां नास्ति पतितानां तथा क्रिया ।
तेषामपि तथा गङ्गातोये संस्थापनं हितम्' ॥

इति । तस्मात् सर्वेषां दुर्मृतानामविशेषेण दाहादिनिषेधः । अयमाशौच-श्राद्धादिनिषेधो यावत्संवत्सरम् । पूर्णे तु संव-

१. D. reads ऽत्यग्नि-विद्युता. २. I. reads पिण्डोऽस्य. ३. I. reads दहेत्.

त्सरे प्रेतस्य श्राद्धादिसम्प्रदानयोग्यतासिद्ध्यर्थं नारायणबलिं कृत्वा सर्वमौर्ध्वदैहिकं कार्यमेव । तदुक्तं षट्त्रिंशन्मते—

'गो-ब्राह्मणहतानां च पतितानां तथैव च ।
ऊर्ध्वं संवत्सरात् कार्यं सर्वमेवौर्ध्वदैहिकम्' ॥

इति । नारायणबलेश्च प्रेतशुद्ध्यापादकत्वं व्यासेनोक्तम्—

'नारायणं समुद्दिश्य शिवं वा यत् प्रदीयते ।
तस्य शुद्धिकरं कर्म तद्भवेन्न तदन्यथा' ॥

इति । सर्पहते त्वयं विशेषः—संवत्सरपर्यन्तं पञ्चम्यां नागपूजां कृत्वा संवत्सरानन्तरं नारायणबलिं कृत्वा सौवर्णं नागं दद्यात् [1]प्रत्यक्षां च गाम् । तदुक्तं [2]भविष्योत्तरपुराणे—

'सुवर्णाकारनिष्पन्नं नागं कृत्वा तथैव गाम् ।
[3]विप्राय दत्त्वा विधिवत् पितुरानृण्यमाप्नुयात्[4]' ॥

इति । प्रमादमरणे [5]त्वाशौचमस्त्येव । तथा चाङ्गिराः—

'यदि कश्चित् प्रमादेन म्रियतेऽग्न्युदकादिभिः ।
[6]तस्याशौचं विधातव्यं कर्तव्या चोदकक्रिया' ॥

( औ. स्मृ. ६. ३. )

इति । ब्रह्मपुराणेऽपि—

'प्रमादादथ निःशंकमकस्मात् विधिचोदितः ।
शृङ्गि-दंष्ट्रि-नखि-व्याल-वि[7]ष-विद्युज्जलाग्निभिः ॥

---

१. I. reads प्रत्यक्षं. २. D. reads भविष्यत्पुराणे. ३. D. E. G. H. and I. substitute व्यासाय for विप्राय. ४. H. reads आप्तवान् for आप्नुयात्. ५. H. reads त्वसौ नास्त्येव । तथैवाङ्गिराः. ६. H. and I. read this line as follows :—

विहितं तस्य चाशौचं कार्या चैवोदकक्रिया ॥.

७. I. reads -विप्र- for -विष-, but it does not give good sense.

चण्डालैरथ वा चौरैर्निहतो यत्रकुत्रचित् ।
तस्य दाहादिकं कार्यं यस्मान्न पतितस्तु सः' ॥

इति । विधितो भृग्वग्निमरणे तु अस्ति विशेषः । तथा च शातातपः[१]—

'वृद्धः शौचक्रियालुप्तः[२] प्रत्याख्यातभिषक्क्रियः ।
आत्मानं घातयेद्यस्तु भृग्वग्न्यनशनादिभिः ॥
तत्र[३] त्रिरात्रमाशौचं द्वितीये त्वस्थिसञ्चयः ।
तृतीये तूदकं कृत्वा चतुर्थे[४] श्राद्धमाचरेत्' ॥
( आत्रे. स्मृ. २१६–२१८ )

इति । अस्ति च भृग्वादौ[५] विधिः । तथा चादित्यपुराणम्[६]—

'दुश्चिकित्स्यैर्महारोगैः पीडितस्तु पुमान् यदि ।
प्रविशेज्ज्वलनं दीप्तं कुर्यादनशनं तथा ॥
अगाधतोयराशिं वा भृगोः पतनमेव वा ।
गच्छेन्महापथं वाऽपि तुषारगिरिमादरात् ॥
प्रयागवटशाखायां *देहत्यागं करोति वा ।
उत्तमानाप्नुयाल्लोकान् नात्मघाती भवेत् क्वचित् ॥

* एतच्च प्रयागमरणं मोक्षप्राप्तिरूपफलकथनद्वारा श्रुत्यापि विहितम् । तथाच मन्त्रवर्णः—

सितासिते सरिते यत्र सङ्गथे
तत्राप्लुतासो दिवमुत्पतन्ति ।
ये वै तन्वां १ विसृजन्ति धीरा-
स्ते जनासो अमृतत्वं भजन्ते ॥
(ऋ. सं. परि. ८. ३. ७. १)

१. The following quotation appears in Aparârka A. P., but he gives it under the name of Angirah. However, the quotation appears neither in Sâtâtapa nor in Angirah. २. A. and Aparárka read शौचस्मृतेर्लुप्तः. ३. A. and Aparárka read तस्य. ४. D. reads चतुर्थ्यां. ५. I. reads भृग्वग्नि- for भृग्वादौ. ६. B. C. and F. read आदिपुराणम्. E. also the same, but it gives आदित्य- in the margin as correction.

वाराणस्यां मृतो यस्तु प्रत्याख्यातभिषक्क्रियः।
काष्ठ-पाषाणमध्यस्थो जाह्नवीजलमध्यगः॥
अविमुक्तोन्मुखस्तस्य[1] कर्णमूलगतो हरः।
प्रणवं तारकं ब्रूते नान्यथा कुत्रचित् क्वचित्'॥

इति। ब्रह्मगर्भः—

'यो ऽनुष्ठातुं न शक्नोति महाव्याध्युपपीडितः[2]।
सो ऽग्नि-वारिमहायात्रां कुर्वन्नामुत्र दुष्यति'॥

इति। 'देशान्तरमृत' इति असपिण्डे देशान्तरमृते सद्यः शौचमित्यर्थः। तदाह मनुः—

'बाले देशान्तरस्थे च पृथक्पिण्डे च संस्थिते।
सवासा जलमाप्लुत्य सद्य एव विशुद्ध्यति'॥

(म. स्मृ. ५. ७८.)

इति। देशान्तरस्थत्वेन वा सपिण्डो विशिष्यते[3]। देशान्तरलक्षणं वृद्धमनुनोक्तम्—

'महानद्यन्तरं यत्र गिरिर्वा व्यवधायकः।
वाचो यत्र विभिद्यन्ते तद्देशान्तरमुच्यते'॥

इति। बृहस्पतिनाऽपि—

'देशान्तरं वदन्त्येके षष्टियोजनमायतम्।
चत्वारिंशद्वदन्त्येके अन्ये त्रिंशत्तथैव च'॥

इति। योजनलक्षणं तु स्मृत्यन्तरे ऽभिहितम्—

'तिर्यग्यवोदराण्यष्टौ ऊर्ध्वा[4] वा व्रीहयस्त्रयः।

---

१. I. reads अविमुक्तोन्मुखस्थस्य; while D. reads अविमुक्तो मुखस्तस्य. २. H. and I. read मोहाद्व्याध्युप-. ३. G. reads च सपिण्डो विशेष्यते; while H. reads देशान्तरत्वेन for देशान्तरस्थत्वेन. ४. I. reads पूर्वा for ऊर्ध्वा, but it does not give any sense.

प्रमाणमङ्गुलस्योक्तं वितस्तिर्द्वादशाङ्गुलम् ॥

वितस्तेर्द्विगुणोऽरत्निस्तस्मात् किष्कुस्ततो धनुः ।

धनुःसहस्रे द्वे क्रोशश्चतुःक्रोशं तु योजनम्' ॥

इति । बालोऽत्राकृतनामा । तस्मिन् मृते सति तत्सपिण्डानां मरणनिमित्ते सद्यः शौचमित्यर्थः । तथा च शङ्खः—

'प्राङ्नामकरणात्सद्यः शुद्धिः' ।

इति । कात्यायनोऽपि—

'अनिवृत्ते दशाहे तु पञ्चत्वं यदि गच्छति ।

सद्य एव विशुद्धिः स्यात् न प्रेतं नोदकक्रिया' ॥

इति । माता-पितृ-सहोदरव्यतिरिक्तविषयमेतत् । तथा च व्याघ्रः—

'बाले मृते सपिण्डानां सद्यःशौचं विधीयते ।

दशाहेनैव दम्पत्योः सोदराणां तथैव च' ॥

इति । जातेमृते मृतजाते वा सपिण्डानां सद्यःशौचम् । जन्मदिवसे शिशुमरणे मात्रादीनां दशाहेनैव शुद्धिः । दिवसान्तरमरणे तु शेषाहोभिर्विशुद्धिः । तथा च व्याघ्रः—

'अन्तर्दशाहे जातस्य शिशोर्निष्क्रमणं यदा ।

सूतकेनैव शुद्धिः स्यात् पित्रोः शातातपोऽब्रवीत्' ॥

इति । स्मृत्यन्तरमपि—

'अन्तर्दशाहोपरतस्य यत् पित्रादीनां

मरणाशौचं तत् सूतकाहोभिः' ।

१. The following quotation appears in Nirṇaya Sindhu A. P., under the name of विष्णुः. २. From this word G. omits 16 lines and reads कर्तव्यं सूत्याशौचं विधीयते इति and inserts there after नवमिश्रेत्राद्यनुष्ठानार्थं सद्यःशौचप्रतिपादनपरम्.

इति। गच्छतीति शेषः। जननिमित्तं त्वाशौचं सर्वेषामस्त्येव। तथा च हारीतः—

'जातमृते मृतजाते वा सपिण्डानां दशाहः'।

इति। बृहन्मनुरपि[1]—

'दशाहाभ्यन्तरे बाले प्रमीते तस्य बान्धवैः।
शावाशौचं न कर्त्तव्यं सूत्याशौचं समाचरेत्'॥

इति। एतच्च नाभिच्छेदादूर्ध्वं वेदितव्यम्। तथा च जैमिनिः—

'यावन्न छिद्यते नालं तावन्नाप्नोति सूतकम्।
छिन्ने नाले ततः पश्चात् सूतकं तु विधीयते'॥

इति। नाभिच्छेदात् प्राग्बृहन्मनुराह—

'जीवन् जातो यदि ततो मृतः सूतक एव तु।
सूतकं सकलं मातुः पित्रादीनां त्रिरात्रकम्'॥

इति। यत्तु बृहत्प्रचेतोवचनम्—

'मुहूर्त्तं जीवितो बालः पञ्चत्वं यदि गच्छति।
मातुः शौचं दशाहेन सद्यःशौचास्तु गोत्रिणः'॥

इति तदग्निहोत्रार्थं सद्यःशौचप्रतिपादनपरम्। तथा च शङ्खः[2]—

'अग्निहोत्राद्यनुष्ठानार्थं[3] स्नात्वोपस्पर्शनात्तत्कालं[4] शौचम्'।

इति। संन्यस्ते मृते सति तत्सपिण्डानां सद्यःशौचम्। तथा च वामनपुराणम्—

१. I. substitutes बृहस्पतिः for बृहन्मनुः. २. D. omits this line through mistake. ३. I. reads अग्निहोत्राद्यनुष्ठानार्थम्. ४. D. and G. read उपसर्पणात्.

'बाले प्रव्रजिते[1] चैव देशान्तरमृते तथा ।
सद्यःशौचं समाख्यातं विद्युत्पातमृते तथा'॥
(वा. पु. १४. ९९-१००)

इति । स्मृत्यन्तरमपि—

'सर्वसङ्गनिवृत्तस्य ध्यानयोगरतस्य च ।
न तस्य दहनं कार्यं नाशौचं नोदकक्रिया'[2] ॥

इति ॥ १० ॥

पूर्वमसपिण्डस्य[3] देशान्तरगतस्य मरणश्रवणे तत्सपिण्डानां सद्यःशौचमभिधाय अधुना देशान्तरगतस्य सपिण्डस्य संवत्सरादूर्ध्वं मरणश्रवणेऽपि तत्सपिण्डानां सद्यःशौचं विदधाति—

**देशान्तरमृतः कश्चित् सगोत्रः श्रूयते यदि ।**
**न त्रिरात्रमहोरात्रं सद्यः स्नात्वा शुचिर्भवेत् ॥११॥**

इति । सगोत्रः सपिण्डः । तस्य देशान्तरगतस्य संवत्सरादूर्ध्वं मरणश्रवणे तत्सपिण्डानां न त्रिरात्रमहोरात्रं वाऽऽशौचं किं तु सद्यःशौचम् । दशाहादूर्ध्वमर्वाक् त्रिपक्षात् त्रिरात्रं षण्मासादर्वाक् पक्षिणी अर्वाक् संवत्सरादेकाहमित्यर्थः । तथा च देवलः—

'आ त्रिपक्षात् त्रिरात्रं स्यात् षण्मासात् पक्षिणी ततः ।
परमेकाहमावर्षादूर्ध्वं स्नातो विशुद्ध्यति' ॥

इति । विष्णुरपि[4]—

---

१. The text reads प्रव्राजसंन्यासे. २. The text reads भवेद्वीर तच्चाप्युक्तं चतुर्विधम्. ३. D. E. and G. read सपिण्डस्य for असपिण्डस्य. ४. Kamalâkara Bhatta also quotes the following verse under the name of Vishnu, but the quotation does not appear in the copy we have. A. has सुमन्तुरपि as marginal correction, but we have not the book in our possession.

'अर्वाक् त्रिपक्षात् त्रिनिशं षण्मासाच्च दिवानिशम् ।
अहः संवत्सरादर्वाग् देशान्तरमृतेष्वपि' ॥

इति । अत्र दिवाशब्देनाहर्द्वयमुच्यते—

'षण्मासात् पक्षिणी' ।

इति वचनान्तरात् । याज्ञवल्क्यो ऽपि—

'प्रोषिते कालशेषः स्यात् पूर्णे दत्त्वोदकं शुचिः' ।

(या. स्मृ. ३. २१)

इति । प्रोषिते देशान्तरस्थे सपिण्डे मृते[1] आशौचमध्ये श्रुते सति तत्कालशेषेणैव शुद्धिः। पूर्णे संवत्सरे व्यतीते तन्मरणश्रवणे स्नात्वोदकं दत्त्वा शुचिर्भवतीत्यर्थः । तथा च मनुः—

'संवत्सरे व्यतीते तु स्पृष्ट्वैवापो विशुद्ध्यति' ।

(म. स्मृ. ५. ७६)

इति । यत्तु गौतमेनोक्तम्—

'श्रुत्वा चोर्ध्वं दशम्याः पक्षिणी' ।

(गौ. स्मृ. १४. ११)

इति तत् त्रिपक्षादूर्ध्वमर्वाक् षण्मासाद्वेदितव्यम् ।

'षण्मासात् पक्षिणी' ।

इति देवलस्मरणात् । यत् पुनर्वसिष्ठवचनम्—

'देशान्तरस्थे मृते ऊर्ध्वं दशाहात् श्रुत्वा ऐकरात्रम्[2]' ।

(व. स्मृ. ४. ३६)

इति यच्च गद्यविष्णुवचनम्—

---

१. The text reads प्रेते for मृते. २. The text inserts आशौचम् afte एकरात्रम्.

'व्यतीते त्वाशौचे संवत्सरस्यान्तस्त्वेक-
रात्रेण। (४०) ततः परं स्नानेन' (४१)
(वि. स्मृ. २२. ४०-४१)

इति तत् ऊर्ध्वं षण्मासादर्वाक् संवत्सराद्वेदितव्यम्।

'परमेकाहमा वर्षात्'।

इति स्मरणात्। यदपि शङ्खवचनम्—

'अतीते दशरात्रे तु त्रिरात्रमशुचिर्भवेत्'॥
(शं. स्मृ. १५. १२)

इति तत् त्रिपक्षादर्वाग् द्रष्टव्यम्।

'अर्वाक् त्रिपक्षात्त्रिणिशाम्'।
(औ. स्मृ. ६. ११)

इति विष्णुस्मरणात्। अत्र मूलवचनोक्तं सद्यःशौचविधानं ज्ञातिमात्रविषयम्। पित्रादिविषये तु अस्ति विशेषः। तथा च पैठीनसिः—

'पितरौ चेन्मृतौ स्यातां दूरस्थो ऽपि हि पुत्रकः।
श्रुत्वा तद्दिनमारभ्य दशाहं सूतकी भवेत्'॥

इति। दक्षो ऽपि—

'महागुरुनिपाते तु आर्द्रवस्त्रोपवासिना।
अतीते ऽब्दे ऽपि कर्त्तव्यं प्रेतकार्यं यथाविधि'॥

इति। संवत्सरादूर्ध्वमप्याशौचोदकदानादिकं कार्यं न पुनः स्नानमात्राच्छुद्धिरित्यर्थः। पितृपत्न्यां मातृव्यतिरिक्तायां विशेषो दक्षेण दर्शितः—

१. The text omits तु. २. We follow here A. and the text. All others read अतः for ततः. ३. The text reads तावदेवाशुचिर्भवेत्. ४. The following verse does not appear in the text we have.

'पितृपत्न्यामतीतायां मातृवर्जं द्विजोत्तमः।
संवत्सरे व्यतीते ऽपि त्रिरात्रमशुचिर्भवेत्' ॥

इति। इदं चातिक्रान्ताशौचमुपनीतोपरमविषयम्। तथा च व्याघ्रपात्—

'तुल्यं वयसि सर्वेषामतिक्रान्ते तथैव च।
उपनीते तु विषमं तस्मिन्नेवातिकालजम्' ॥

इति। अयमर्थः—षण्मासादिरूपे वयसि यदाशौचं 'आदन्तजन्मनः सद्यः'—इत्यादिवचनविहितं तत्सर्वेषां ब्राह्मणादीनां तुल्यमविशिष्टम्। अतिक्रान्ते दशाहादिके त्रिरात्राद्याशौचं यत् तत् सर्वेषां समानम्। उपनीते तु मृते दश-द्वादश-पञ्चदश-त्रिंशद्दिनानीत्येवं विषममाशौचं ब्राह्मणादीनाम्। अतिकालजं अतिक्रान्ताशौचं तस्मिन्नेव उपनीतोपरम एव। नानुपनीतोपरमे—इति। जनने त्वतिक्रान्ताशौचं नास्ति। तदाह देवलः—

'नाशुद्धिः प्रसवाशौचे व्यतीतेषु दिनेष्वपि'।

इति। मनुरपि—

'निर्दशं ज्ञातिमरणं श्रुत्वा पुत्रस्य जन्म च।
सवासा जलमाप्लुत्य शुद्धो भवति मानवः' ॥

(म. स्मृ. ५. ७७)

इति। अत्र पुत्रग्रहणात् निर्दशे ऽपि पितुः स्नानेन शुद्धिः। सपिण्डानां त्वतिक्रान्ताशौचं नास्तीत्यर्थः। अन्तर्दशाहे तु शेषाहोभिर्विशुद्धिः। तथा च शङ्खः—

१. B. C. and F. insert अपि after तत्.

'देशान्तरगतं श्रुत्वा कल्याणं मरणं तथा ।
यच्छेषं दशरात्रस्य तावदेवाशुचिर्भवेत्' ॥
(शं. स्मृ. १९. ११)

इति । द्विविधो हि देशान्तरमृतः । कृतसंस्कारो ऽकृतसंस्कारश्च । तत्र कृतसंस्कारस्य मरणश्रवणे संवत्सरादर्वागूर्ध्वं वाऽऽशौचं वचनद्वये व्यवस्थापितम् । अकृतसंस्कारस्य मरणश्रवणे त्वाशौचग्रहणपिण्डदानादेः कालविशेषो विविच्यते । अकृतसंस्कारो ऽपि द्विविधः । मरणदिवसज्ञानाज्ञानभेदात् । यस्य हि मरणदिवसो विज्ञातः तस्य प्रत्याब्दिकादिश्राद्धं तद्दिवस एव कर्त्तव्यम् । आशौचग्रहण-पिण्डोदकदानं त्वनिषिद्धनक्षत्रादिकं पर्यालोच्य तत्रानुष्ठेयम् । शिष्टाचारस्य तथा प्रवृत्तत्वात्[२] ॥ ११ ॥

यस्य तु दिवसो न विज्ञातः तम्प्रत्येतदुच्यते—

[३]देशान्तरगतो विप्रः प्रयासात् कालकारितात् ।
देहनाशमनुप्राप्तस्तिथिर्न ज्ञायते यदि ॥ १२ ॥
[४]कृष्णाष्टमी त्वमावास्या कृष्णा चैकादशी च या ।
उदकं पिण्डदानं च तत्र श्राद्धं च कारयेत् ॥ १३ ॥

तीर्थयात्राऽऽदिना केनचिन्निमित्तेन देशान्तरगतस्य विप्र-

१. The text reads this line as follows:—
देशान्तरगतः श्रुत्वा सत्त्वानां मरणोद्भवौ ।
२. B. C. and F. read वृत्तत्वात्. ३. M. omits the following three lines and substitutes for them—
आ त्रिपक्षात् त्रिरात्रं स्यात् आ षण्मासाच्च पक्षिणी ।
अहः संवत्सरादर्वाक् सद्यःशौचं विधीयते ॥,
but the author has quoted these lines with a slight difference under the name of Vishṇu (P. 233; L. 1). ४. This and the following line do not appear in D.

स्य चिरकालबहुदेशपर्यटनादिसम्पादितादायासबाहुल्याद्यत्र क्वापि देहनाशो भवति। अत एव तन्मरणतिथिर्न ज्ञायते। मरणवार्त्ता च यदा कदाचित् श्रुता भवति। तत्र तदीयाशौचस्वीकारस्तिलोदक-पिण्डदानोपक्रमादिकं चेत्येतदुभयं कृष्णाष्टम्यादिषु तिसृषु तिथिष्विच्छया कस्यांचित्तिथौ कर्त्तव्यम्। तस्यामेव तिथावाब्दिकश्राद्धं च कर्त्तव्यम्।

यद्यप्यस्मिन् वचने आशौचस्वीकारः साक्षान्नोपात्तः तथापि पूर्वोत्तरवचनयोराशौचविषयत्वेन तत्प्रकरणत्वादाशौचस्वीकारमन्तरेण तिलोदक-पिण्डदानासम्भवाच्चाशौचस्वीकारोऽप्यत्र विवक्षितः—इति गम्यते। उदकादिबहुकर्त्तव्योपन्यासेन श्राद्धप्रकरणस्य कृत्स्नस्याप्यत्र सङ्ग्रहो विवक्षितः। संगृहीतं च तत् प्रकरणमुपरिष्टादस्माभिः प्रपञ्चयिष्यते ॥ १२-१३ ॥

पूर्वमकृतनाम्नो बालस्य मरणे सपिण्डानां सद्यःशुद्धिरभिहिता। इदानीं कृतनाम्नोऽप्यजातदन्तस्य बालस्य मरणे सह संस्कारेणाशौचं निषेधति—

अजातदन्ता ये बाला ये च गर्भाद्विनिःसृताः[1]।
न तेषामग्निसंस्कारो नाशौचं नोदकक्रिया ॥१४॥

अजातदन्ता अनुत्पन्नदन्ताः कृतनामानो ये बाला मृताः ये च गर्भाद्विनिःसृताः[2] पतिताः तेषां तत्सपिण्डैर्नाग्निसंस्कारादिकं कर्त्तव्यमित्यर्थः। तथा च ब्रह्मपुराणम्—

---

१. H. reads विनिश्च्युताः; while I. reads विनिःस्रुताः. Both the forms are correct. २. H. here does not read विनिश्च्युताः. I. has its former reading.

'स्त्रीणां तु पतितो गर्भः सद्योजातोऽथ वा मृतः ।
अजातदन्तो मासैर्वा मृतः षड्भिर्गतस्तथा ॥
वस्त्राद्यैर्भूषितं[२] कृत्वा त्यक्तव्यस्तु स काष्ठवत् ।
खनित्वा तु शनैर्भूमिं सद्यःशौचं विधीयते' ॥

इति । स्त्रीणां यो गर्भः पतितः यश्च जननक्षण एव मृतः यश्च षण्मासात् प्राक् मृतः यश्च षण्मासादूर्ध्वमप्यजातदन्तः सन् मृतः स काष्ठवद्भूमिं खनित्वा निक्षेप्तव्यः । मात्रादिव्यतिरिक्तैः सपिण्डैर्नाशौचादिकं कर्त्तव्यमित्यर्थः । विष्णुरपि—

'अजातदन्ते बाले प्रेते सद्य एव । (२७)
नाग्निसंस्कारो नोदकक्रिया' । (२८)

(वि. स्मृ. २२. २७–२८)

इति ॥ १४ ॥

पूर्वत्र गर्भपाते सपिण्डानां बन्धूनां सद्यःशुद्धिमभिधायाधुना मातुस्तन्निमित्तमाशौचमस्तीत्याह—

**यदि गर्भो विपद्येत स्रवते वाऽपि योषितः ।**
**यावन्मासं स्थितो गर्भो दिनं तावत्तु सूतकम् ॥१५॥**

यदि गर्भस्य स्राव-पातौ स्यातां तदा यावत्सु मासेषु गर्भः स्थितस्तन्माससङ्ख्यासमदिनं योषितो मातुः सूतकं सूत्याशौचमित्यर्थः । तथा च याज्ञवल्क्यः—

'गर्भस्रावे मासतुल्या निशाः शुद्धेस्तु कारणम्' ।

(या. स्मृ. ३. २०)

१. I. reads सद्यो यातो मृतोऽथ वा. This edition is published in Bengal and the Bengalis do not treat ज and य as different letters. D. reads सद्योजातस्तथा मृतः. २. D. E. and H. read भूषणम् for भूषितम्. ३. I. reads न्युप्तव्यः for त्यक्तव्यः. ४. The text of Vishnu inserts अस्य after न. ५. M. reads योषिताम्.

इति। 'मासतुल्या निशाः'—इति चतुर्थमासप्रभृत्या सप्तमाद्वेदितव्यम्। अर्वाक् तु यथावर्णं त्रिरात्रादयः। तथा च मरीचिः—

'गर्भस्रुत्यां यथामासमचिरे तूत्तमे त्र्यहम्।
राजन्ये तु चतूरात्रं वैश्ये पञ्चाहमेव तु॥
अष्टाहेन तु शूद्रस्य शुद्धिरेषा प्रकीर्त्तिता'।

इति। अचिरे मासत्रये गर्भस्रावे उत्तमे ब्राह्मणे त्र्यहम्। गौतमोऽपि—

'गर्भमाससमा रात्रीः संस्रवे गर्भस्य। (१०)
त्र्यहं वा'। (११)

(गौ. स्मृ. १४. १०–११)

इति। अत्र गर्भमाससमरात्रि-त्र्यहयोर्व्यवस्थितो विकल्पः। मासत्रयं यावत् त्र्यहं ततः परं माससमा रात्रय इति। आदिपुराणेऽपि—

'षण्मासाभ्यन्तरं यावद्गर्भस्रावो भवेद्यदि।
तदा माससमैस्तासां दिवसैः शुद्धिरिष्यते'॥

इति। एतच्च स्रावनिमित्ताशौचं मातुरेव। पातनिमित्तं तु पित्रादीनामप्यस्ति। तथा च मरीचिः—

'स्रावे मातुस्त्रिरात्रं स्यात् सपिण्डाशौचवर्जनम्।
पाते मातुर्यथामासं सपिण्डानां दिनत्रयम्'॥

इति। वसिष्ठोऽपि—

'ऊनद्विवर्षे प्रेते गर्भपतने वा सपिण्डानां त्रिरात्रम्'।

(व. स्मृ. ४. ३४)

---

१. D. and I. read रात्रिः. २. I. reads स्रंसने. ३. D. and G. read आदित्यपुराणे and E. reads आदिपुराणे but -त्य- is found in marginal correction. I. omits अपि. ४. The text of Vaisishtha adds आशौचम् to त्रिरात्रम्.

इति। स्रावे पितुर्विशेषमाह वृद्धवसिष्ठः[1]—

'गर्भस्रावे मासतुल्या रात्रयः स्त्रीणाम्।
स्नानमात्रमेव पुरुषस्य'।

इति॥ १९॥

ननु—स्राव-पातयोरप्राप्तप्रसवकालत्वाविशेषादनयोः को विशेष इत्यत आह—

आ चतुर्थाद्भवेत् स्रावः पातः पञ्चम-षष्ठयोः।
अत[2] ऊर्ध्वं प्रसूतिः स्याद्दशाहं सूतकं भवेत्॥ १६॥

इति। चतुर्थमासाभ्यन्तरे गर्भनाशः स्रावः। पञ्चम-षष्ठयोर्गर्भनाशः पातः। तत्र माससङ्ख्यया विहितमाशौचं मातुर्भवेत्। अत ऊर्ध्वं सप्तममासप्रभृति गर्भनिर्गमः प्रसवः। तत्र मातुः प्रसवनिमित्तमाशौचं दशाहं भवेदित्यर्थः। यत्तु चतुर्विंशतिमते[3]—

'अधस्तान्नवमान्मासाच्छुद्धिः स्यात् प्रसवे कथम्?।
मृते जीवति वा तस्मिन् अहोभिर्माससङ्ख्यया[4]'॥

इति। अस्यायमर्थः—नवमान्मासादर्वाक् सप्तममासादारभ्य प्रसवे सति तन्निमित्तमाशौचं सूतिकाव्यतिरिक्तसर्वसपिण्डानां माससङ्ख्याकैरहोभिर्विधीयत इति। सूतिकाविषयत्वे दशाहविधिविरोधः प्रसज्येत। ननु—एवं तर्हि—

'जातौ विप्रो दशाहेन'।

इति सर्वसपिण्डानां जननिमित्तदशाहाशौचविधायकव-

१. D. omits वृद्ध—. २. K. and L. read अतःपरं; while J. reads इत ऊर्ध्वं. ३. D. G. and H. add इत्युक्तम् after चतुर्विंशतिमते, E. and I. उक्तम् only. ४. D. and H. read समसङ्ख्यया.

चनं विरुद्ध्येत। तन्न। तस्य नवम-दशममासप्रसवविषयत्वेनोपपत्तेः। अथवा एकविषयत्वे ऽपि विकल्पेन व्यवस्थाऽस्तु॥१५॥

बालस्याग्निसंस्कारे सत्याशौचं दर्शयति—

[१]दन्तजातेऽ[२]नुजाते च कृतचूडे च संस्थिते।
अग्निसं[३]स्करणे तेषां त्रिरात्रमशुचिर्भवेत्॥१६॥

इति। जाता दन्ता यस्यासौ दन्तजातः। तदनु पश्चाज्जातो ऽनुजातः अनुत्पन्नदन्त इति यावत्। कृतं चूडाख्यं कर्म यस्यासौ कृतचूडः। तत्र जातदन्तस्याकृतचूडस्यानुजातस्य च सत्यग्निसंस्कारे तृतीयवर्षकृतचूडे च संस्थिते तेषां सपिण्डस्त्रिरात्रमशुचिर्भवेदित्यर्थः। तत्राकृतचूडस्य जातदन्तस्य दाहपक्षे त्रिरात्राशौचमङ्गिरसोक्तम्—

'यद्यप्यकृतचूडो वै जातदन्तस्तु संस्थितः।
दाहयित्वा तथाप्येनमाशौचं त्र्यहमाचरेत्'॥

इति। पुराणे ऽपि—

'अनतीतद्विवर्षस्तु प्रेतो यत्रापि दह्यते।
आशौचं बान्धवानां तु त्रिरात्रं त्व[४]त्र विद्यते'॥

इति। यत्तु विष्णुवचनम्—

'दन्तजाते त्वकृतचूडे त्वहोरात्रेण'।

(वि. स्मृ. २२. २९)

१. Before this verse M. inserts the following lines:—

प्रसूतिकाले सम्प्राप्ते प्रसवेद्यदि योषिताम्।
जीवापत्तेस्तु गोत्रस्य मृते मातुश्च सूतकम्॥
रात्रावेव समुत्पन्ने मृते रजसि सूतके।
पूर्वमेव दिनं ग्राह्यं यावन्नोदयते रविः॥.

२. B. C. and F. read सुजाते for ऽनुजाते. ३. M. reads -संस्करणं
४. I. reads तत्र.

इति । तत् खननपक्षे वेदितव्यम् । अजातदन्तस्य कृतचूडस्य दहने त्रिरात्राशौचं षट्त्रिंशन्मते ऽभिहितम्—

'यद्यप्यजातदन्तः स्यात् कृतचूडस्तु संस्थितः ।
तथापि दाहयेदेनं त्र्यहं चाशौचमाचरेत्' ॥

इति । यत्तु यमेनोक्तम्[1]—

'अजातदन्ते तनये शिशौ गर्भच्युते तथा ।
सपिण्डानां तु सर्वेषामहोरात्रमशौचकम्' ॥

इति तदकृतचूडविषयम् । ननु[2]—अजातदन्तस्य कृतचूडत्वं कथं? तस्य तृतीये विहितत्वादिति चेत् । न ।

'चूडाकर्म द्विजातीनां सर्वेषामेव धर्मतः ।
प्रथमे ऽब्दे तृतीये वा कर्त्तव्यं श्रुतिचोदनात्' ॥
(म. स्मृ. २. ३५)

इति मनुना विकल्पेन स्मृतत्वात् । 'अग्निसंस्करणे'—इत्येतद्विकल्पेनाभिधानं जातदन्तानुजातयोरेव । न[3] त्रिवर्षकृतचूडे । तत्राग्निसंस्कारस्य नियतत्वात् । इतरत्राग्निसंस्कारविकल्पो मनुना दर्शितः—

'नाऽत्रिवर्षस्य कर्त्तव्या बान्धवैरुदकक्रिया ।
जातदन्तस्य वा कुर्यान्नाग्नि[4] वाऽपि कृते सति' ॥
(म. स्मृ. ५. ७०)

---

१. A. and D. read मनुनोक्तम् for यमेनोक्तम्. २. D. and H. read अननुजातस्य; while B. C. and F. read जातदन्तस्य. ३. B. C. and F. omit the following portion:—न त्रिवर्षकृतचूडे । तत्राग्निसंस्कारस्य नियतत्वात् । इतरत्राग्निसंस्कारविकल्पो मनुना दर्शितः. ४. The text reads कुर्युर्नाग्नि and B. substitutes च for वा. This verse appears in Manu between ślokas 67 and 68 of chapter 5. The commentator Govindarâja quotes this verse under the name of Yâjnyavalkya; Medhatithi quotes it under Smrityantare.

इति। उदकक्रियेति अग्निसंस्कारोपलक्षणार्थम् ॥ १६ ॥

वयोऽवस्थाविशेषेणाशौचविशेषं दर्शयति—

आ दन्तजन्मनः[1] सद्य आ चूडान्नैशिकी स्मृता।
त्रिरात्रमा व्रतादेशाद्[2] दशरात्रमतः परम् ॥ १७॥

इति। दन्तजननात् प्रागतीतस्य बालस्य सम्बन्धिनां सपिण्डानां सद्यःशौचम्। दन्तजननादूर्ध्वं प्राक् चूडाकरणादतीतस्य सम्बन्धिनां नैशिकी निशायां भवा अहोरात्रमशुद्धिः। व्रतादेश उपनयनम्। ततोऽर्वाक् चूडायाश्चोर्ध्वमतीतस्य सम्बन्धिनां[3] त्रिरात्रमशुद्धिः। ततः परं दशरात्रमित्यर्थः। तथा च संग्रहकारः—

'नाग्नो दन्तोद्भवाच्चौडा[4]दुपनीतेरधः क्रमात्।
सद्यः शौचमहस्त्र्यहो नियताग्न्युदकः परः' ॥

इति। शङ्खोऽपि—

'अजातदन्ते तनये[5] सद्यःशौचं विधीयते। (४)
अहोरात्रात्तथा शुद्धिर्बाले त्वकृतचूडके ॥
तथैवानुपनीते तु त्र्यहाच्छुद्ध्यन्ति बान्धवाः[6]।

(शं. स्मृ. १९. ४—९)

इति। यत्तु काश्यपवचनम्—

'बालानामजातदन्तानां त्रिरात्रेण शुद्धिः'।

(का. स्मृ. ६. ८)

१. M, reads -जननात्. २. M. reads आ व्रतात्तेषां. ३. B. C. and F. insert सपिण्डानां after सम्बन्धिनां. ४. D. reads चूडात्. ५. The text substitutes बाले तु for तनये. ६. The text reads मानवाः.

इति तन्माता-पितृविषयम् । अत एव मनुः—

'निरस्य तु पुमान् शुक्रमुपस्पृश्य विशुद्ध्यति ।
बैजिकाद[1]भिसम्बन्धाद[2]नुरुन्ध्यादघं त्र्यहम्' ॥

(म. स्मृ. ५. ६३)

इति । बैजिकसम्बन्धो जन्य-जनकभावः । यत्तु स्मृत्यन्तरम्—

'प्राङ् नामकरणात्सद्य एकाहो दन्तजन्मनः' ।

इति तद्दहने वेदितव्यम् । खनने तु सद्यः शुद्धिः ।

'अजातदन्ते बाले प्रेते सद्य एव । (२७)
नास्त्यग्निसंस्कारो नोदकक्रिया' ।(२८)

(वि. स्मृ. २२. २७–२८) ।

इति विष्णुस्मरणात् । यत्तु वसिष्ठवचनम्—

'ऊनद्विवर्षे प्रेते गर्भपतने वा सपिण्डानां त्रिरात्रम्'[3] ।

(व. स्मृ. ४. ३४)

इति तज्जातदन्तस्याग्निसंस्कारे द्रष्टव्यम् । ततश्चैवं व्यवस्था—नामकरणात् प्राक् सद्यः[4]शौचं नियतम् । तदूर्ध्वं प्राक् दन्तजननादग्निसंस्कारक्रियायामेकाहः । अन्यथा सद्यः शुद्धिः । तस्याप्यजातदन्तस्य चूडाकरणे त्रिरात्रम् । दन्तजननादूर्ध्वमर्वाक् चूडाकरणादेकाहं खनने । अग्निसंस्कारे तु त्र्यहः । ऊर्ध्वं चूडायाः प्रागुपनयनात् त्र्यहः । उपनयनादूर्ध्वं ब्राह्मणा-

१. D. E. G. and I. read अपि for अभि-. २. D. and I. read अनिरुन्ध्यात्. ३. The text inserts आशौचम् after त्रिरात्रम्. ४. B. C. and F. omit the following:—सद्यःशौचं नियतम् । तदूर्ध्वं प्राक् दन्तजननादग्निसंस्कारक्रियायामेकाहः । अन्यथा.

दीनां दशाहादिकमिति । इयं व्यवस्था पुमपत्यमरणे द्रष्टव्या । स्त्र्यपत्ये तु विशेषो वृद्धमनुना दर्शितः—

'अप्रौढायां च[1] कन्यायां सद्यःशौचं विधीयते ।
अहस्त्वदत्तकन्यासु दत्तासु च त्र्यहं तथा' ॥

इति । अप्रौढायां अकृतचूडायामित्यर्थः ।

'अचूडायां तु कन्यायां सद्यःशौचं विधीयते'।

इत्यापस्तम्बस्मरणात् । अदत्तकन्यासु वाचाऽदत्तासु अहोरात्रम् । दत्तासु वाग्दत्तासु त्र्यहम् । तथा च मरीचिः—

'चूडाकरणे सद्यःशौचम् । प्राग् वाग्दानादेकाहः[2] ।
दत्तानां प्राक् परिणयनात् त्र्यहम्' ।

इति । ब्रह्मपुराणेऽपि—

'आ जन्मनस्तु चौलान्तं[3] कन्या यदि विपद्यते ।
सद्यःशौचं भवेत्तत्र सर्ववर्णेषु नित्यशः ॥
ततो वाग्दानपर्यन्तं यावदेकाहमेव हि ।
ततः परं प्रवृद्धायां त्रिरात्रमिति निश्चयः ॥
वाक्प्रदाने कृते तत्र ज्ञेयं चोभयतस्त्र्यहम् ।
पितुर्वरस्य च ततो दत्तानां भर्त्तुरेव हि ॥
स्वजात्युक्तमशौचं[4] स्यान्मृतके जातके तथा' ।

इति । पुलस्त्योऽपि—

'सद्यस्त्वप्रौढकन्यायां प्रौढायां वासराच्छुचिः ।
प्रदत्तायां त्रिरात्रेण दत्तायां पक्षिणी भवेत्' ॥

---

१. D. and I. substitute तु for च. २. C. D. and F. read प्राग्दानात्. for वाग्दानात्. ३. I. reads चौडान्तं. ४. A. reads -माशौचं.

इति । प्रदत्तायां प्रक्रान्तदानायां वाचादत्तायामिति यावत् । वाग्दानानन्तरं मृतायां त्रिरात्रम् । मनुरप्याह—

'स्त्रीणामसंस्कृतानां तु त्र्यहाच्छुद्ध्यन्ति बान्धवाः ।
यथोक्तेनैव कल्पेन शुद्ध्यन्ति तु सनाभयः' ॥

( म. स्मृ. ५. ७२ )

इति । बान्धवाः पतिसपिण्डाः । सनाभयः पितृसपिण्डाः । यथोक्तेन कल्पेन त्रिरात्रेण । अत एव मरीचिः—

'अवारिपूर्वं प्रत्ता तु या नैव प्रतिपादिता ।
असंस्कृता तु सा ज्ञेया त्रिरात्रमुभयोः स्मृतम्' ॥

इति । उभयोर्वर-पितृपक्षयोः । अकृतचूडायां यत् सद्यःशौचविधानं कृतचूडायां च यदेकाहविधानं तन्माता-पितृव्यतिरिक्तविषयम् ।

'प्रत्ता ऽप्रत्तासु योषित्सु संस्कृताऽसंस्कृतासु च ।
माता-पित्रोस्त्रिरात्रं स्यादितरेषां यथाविधि' ॥

इति ।

'अजातदन्तासु पित्रोरेकरात्रम्' ।

इति शङ्ख-कार्ष्णाजिनिभ्यां विशेषस्मरणात् । अदत्तासु त्रिरात्रविधानं जातदन्तविषयम् । अजातदन्तास्वेकाहविधानात् । संस्कृतासु पित्रोस्त्रिरात्रं तद्गृहमरणे वेदितव्यम् । तथा च विष्णुः—

'संस्कृतासु स्त्रीषु नाऽशौचं पितृपक्षे । (३३)

---

१. B. C. and F. omit प्रक्रान्तदानायां. २. B. C. D. E. F. G. and H. read कालेन. ३. B. C. and F. read कालेन. ४. D. reads प्रत्तासु. ५. I. reads एकाहम् for एकरात्रम्.

तत्प्रसवमरणे च बन्धुवर्गस्यैकरात्रं
पित्रोस्त्रिरात्रमिति व्यवस्था'। (३४)
(वि. स्मृ. २२. ३१-३४)

इति। ब्रह्मपुराणेऽपि—

'दत्ता नारी[1] पितुर्गेहे सूयेताथ म्रियेत वा[2]।
तद्बन्धुवर्गस्त्वेकेन शुचिस्तज्जनकस्त्रिभिः'॥

इति। पित्रोरुपरमे संस्कृतानां स्त्रीणां त्रिरात्रम्। तथा च वृद्धमनुः—

'पित्रोरुपरमे[3] स्त्रीणामूढानां तु कथं भवेत्।
त्रिरात्रेणैव शुद्धिः स्यादित्याह भगवान् यमः'॥

इति। पित्रोर्माता-पित्रोरुपरमे विवाहसंस्कारसंस्कृतानां दुहितॄणां त्रिरात्रेण शुद्धिरिति। दौहित्र-भगिनीसुतयोरसंस्कृतयोः पक्षिण्याशौचम् संस्कृतयोस्त्रिरात्रम्। तथा च वृद्धमनुः—

'संस्थिते पक्षिणीं[4] रात्रिं दौहित्रे भगिनीसुते।
संस्कृते तु त्रिरात्रं स्यादिति धर्मो व्यवस्थितः'॥

इति। दौहित्रे भगिनीसुते वाऽनुपनीते मृते सति पक्षिणीमागामिवर्त्तमानाहर्द्वययुक्तां रात्रिं मातामहादिः क्षपयेत्। उपनीते तु तस्मिन् मृते सति मातामहादीनां त्रिरात्रमाशौचं भवेदित्यर्थः। मातामहादीनां मरणे दौहित्रादीनां त्रिरात्रमाशौचम्। तथा च बृहस्पतिः—

'त्र्यहं मातामहाचार्य-श्रोत्रियेष्वशुचिर्भवेत्'।

इति। आचार्यो ऽत्रासपिण्डः सन्नुपनयनादिकर्त्ता। श्रोत्रिय-

१. D. reads वाचा for नारी. The reading is correct and gives a quite different sense. २. I. substitutes च for वा. ३. D. reads उपशमे. ४. H. reads पक्षिणी रात्रिः.

स्त्वेकशाखाध्यायी मैत्री-प्रातिवैश्यत्वादिनोपसम्पन्नः । एतेषु मातामहादिषु मृतेषु त्रिरात्रमिति । विष्णुरपि—

'आचार्ये मातामहे च व्यतीते त्रिरात्रेण' ।

( वि. स्मृ. २२. ४२ )

इति । मनुरपि—

'श्रोत्रिये तूपसम्पन्ने त्रिरात्रमशुचिर्भवेत्' ।

( म. स्मृ. ५. ८१ )

इति । एतत्त्रिरात्राशौचं परकर्तृकदहनादौ वेदितव्यम् ।

'गुरोः प्रेतस्य शिष्यस्तु पितृमेधं समाचरन् ।
प्रेतहारैः समं तत्र दशरात्रेण शुद्ध्यति' ॥

( म. स्मृ. ५. ६५ )

इति स्वकर्तृकदाहादौ मनुना विशेषस्मरणात् । मातृष्वस्रादिषु त्रिरात्रमाशौचम् । तदाह प्रचेताः—

'मातृष्वसा-मातुलयोः श्वश्रू-श्वशुरयोर्गुरोः ।
मृते चर्त्विजि याज्ये च त्रिरात्रेण विशुद्ध्यति ॥

इति । गुरुराचार्यः । ऋत्विक् कुलपरम्पराऽऽयातः । याज्योऽपि तथाविधः । यत्तु याज्ञवल्क्यवचनम्—

'गुर्वन्ते वास्यनूचान-मातुल-श्रोत्रियेषु च' ।

( या. स्मृ. ३. २४ )

इति । यच्च विष्णुवचनम्—

१. Except A. and the text all read प्रेताहारैः, but the reading seems to be incorrect. २. From this word to विशुद्ध्यति ॥ the intermediate portion does not appear in D. ३. I. reads मातृष्वसृ-मातुलयोः. This reading is grammatically correct, but it procures an incorrect Chhanda.

'आचार्य-पत्नी-पुत्रोपाध्याय-मातुल-श्वशुर-श्वश्रू-
श्वशुर्य-सहाध्यायि-शिष्येष्वतीतेष्वेकरात्रेण'।

(वि. स्मृ. २२. ४४)

इति। तत्र गुरुरुपाध्यायः। अन्तेवासी अन्योपनीतः शिष्यः। स्वोपनीते तु—

'शिष्य-सतीर्थ्य-सब्रह्मचारिषु त्रिरात्रमहोरात्रमेकाहः'।

(बौ. स्मृ. १. ५. ११. ३०)

इति बौधायनेन त्रिरात्रविधानात्। मातुलः अनुपकारी विदेशस्थो वा। श्रोत्रियोऽनुपसम्पन्नः। श्वश्रू-श्वशुरावप्यनुपकारिणौ विदेशस्थौ वा। एकस्मिन् गुरुकुले ऽल्पकालं सहाध्यायी। एतेष्वेकरात्रमिति व्यवस्था। यत्तु मनुनोक्तम्—

'मातुले पक्षिणी रात्रिः शिष्यर्त्विग्बान्धवेषु च'।

(म. स्मृ. ५. ८१)

इति तस्यायमर्थः—स्वल्पोपकारके मातुले शिष्यो ऽन्योपनीतसाङ्गवेदाध्यायी ऋत्विक् आधानप्रभृति यावज्जीवमार्त्विज्यकारी बान्धवाः मातृ-पितृबान्धवाः एतेषु पक्षिण्याशौचमिति। अनौरसपुत्रादिषु त्रिरात्रमाशौचम्। तदाह विष्णुः—

'अनौरसेषु पुत्रेषु जातेषु च मृतेषु च।
परपूर्वासु भार्यासु प्रसूतासु मृतासु च'॥

(वि. स्मृ. २२. ४३)

इति। त्रिरात्रमित्यनुवर्त्तते। हारीतो ऽपि—

---

१. The text omits श्वश्रू-. २. The text reads एकाहं and adds इति कुर्वीत at the end. ३. Except A. D. and the text all read पक्षिणीं रात्रिम्.

'परपूर्वासु भार्यासु पुत्रेषु कृतकेषु च ।
मातामहे त्रिरात्रं स्यादेकाहं तु सपिण्डतः' ॥

इति । शङ्खो ऽपि—

'अनौरसेषु पुत्रेषु भार्यास्वन्यगतासु च ।
परपूर्वासु च स्त्रीषु[१] त्रिरात्राच्छुद्धिरिष्यते'[२] ॥

( शं. स्मृ. १९. १३. )

इति । अनौरसाः क्षेत्रजादयः । परपूर्वाः पुनर्भुवः । अन्यगताः स्वैरिण्यः । एतेष्वनौरसादिषु यत्प्रतियोगिकं भार्यात्वं पुत्रत्वं च तस्यैवेदं त्रिरात्रमाशौचमित्यर्थः । यत्त्वेकाहविधानम्—

'अनौरसेषु पुत्रेषु भार्यास्वन्यगतासु च' ।

( या. स्मृ. ३. २९ )

इति तदसन्निधिविषयम् । सन्निधावपि पितृसपिण्डानामेकाह एव । तथा च मरीचिः—

' एकाहस्तु सपिण्डानां त्रिरात्रं यत्र[३] वै पितुः' ।

इति । यत्तु प्रजापतिनोक्तम्—

'अन्याश्रितेषु दारेषु परपत्नीसुतेषु च ।
गोत्रिणः स्नानशुद्धाः स्युस्त्रिरात्रेणैव तत्पिता' ॥

इति स्नानादेव शुद्धिरिति[४] तत्समानोदकविषयं असन्निधिविषयं वा । एकस्यां मातरि पितृद्वयोत्पादितयोर्भ्रात्रोरन्यतरस्मिन्मृते ऽन्यतरस्य त्रिरात्रमाशौचं भवति । तथा च मरीचिः—

---

१. Except A. and the text all read स्वासु. २. The text reads ऽयहाच्छुद्धिरिहेष्यते. ३. B. C. and F. read यत्तु for यत्र. ४. I. inserts यत् after इति.

'मात्रैकया द्विपितृकौ भ्रातरावन्यगोत्रजौ[1] ।
एकाहं सूतकं तत्र त्रिरात्रं मृतके तयोः'॥

इति । असपिण्डयोनिसम्बन्धिमरणे पक्षिण्याशौचम् । तदाह गौतमः—

'पक्षिण्यसपिण्डे[2] योनिसम्बन्धे सहाध्यायिनि च[3]'।
(गौ. स्मृ. १४. १२)

इति । अयमर्थः—असपिण्डः स्ववेश्मनि मृतः । योनिसम्बन्धा मातृष्वस्रीय-पितृष्वस्रीयादयः । सहाध्यायी गुरुकुले[4] सह कृत्स्नवेदाध्यायी । चकाराद्गुर्वङ्गनादयो[5]ऽपि संगृह्यन्ते । तेषु पक्षिणीं तत्सम्बन्धप्रतियोगी क्षपयेदिति । तथा च वृद्धमनुः[6]—

'मातुले श्वशुरे मित्रे गुरौ गुर्वङ्गनासु च ।
आशौचं पक्षिणीं रात्रिं मृता मातामही यदि ॥
श्वशुरयोश्च[7] भगिन्यां च मातुलान्यां च मातुले ।
पित्रोः स्वसरि तद्वच्च पक्षिणीं क्षपयेन्निशाम्' ॥

इति । यत्तु विष्णुनोक्तम्—

'असपिण्डे स्ववेश्मनि[8] मृते एकरात्रम्'।
(वि. स्मृ. २२. ४६)

इति तदप्रधानगृहमरणे वेदितव्यम् । यदप्यङ्गिरसोक्तम्—

---

१. B. C. D. E. and F. read अन्यगोचरौ. H. also reads the same, but gives अन्यगोत्रजौ in the margin. I. reads -गोत्रकौ. २. Except A. and the text all read पक्षिणीमसपिण्डे. It seems from the following explanation that the author prefers पक्षिणीं to पक्षिणी, but the reading in the text is not similar to this. ३. I. reads वा for च. ४. D. omits गुरुकुले सह कृत्स्नवेदाध्यायी. ५. D. and G. omit ऽपि. ६. I. reads बृहन्मनुः. ७. H. and I. read श्वशुरयोर्भगिन्यां च. ८. B. C. D. E. F. and G. read स्ववेश्ममृते; while the text omits एकरात्रम् and inserts च after मृते.

‘गृहे [1]यस्य मृतः कश्चिदसपिण्डः कथञ्चन ।
तस्याप्यशौचं विज्ञेयं त्रिरात्रं नात्र संशयः’ ॥

इति । तदसपिण्डश्रोत्रियविषयम् । यत्तु बृहन्मनु[2]नोक्तम्—

‘भगिन्यां संस्थितायां तु भ्रातर्यपि च संस्थिते ।
मित्रे जामातरि प्रेते दौहित्रे भगिनीसुते ॥
श्यालके तत्सुते चैव सद्यः स्नानेन शुद्धयति’।

इति तत्र भगिन्यादौ सद्यःशुद्धयभिधानं देशान्तरमरणविषयम् । जामातृ-श्यालकसुतयोः सन्निधावेव सद्यःशुद्धिरिति । निवासराजन्यहनि मृतेऽहराशौचं रात्रौ चेद्रात्रिमात्रमिति । [3]तदाह याज्ञवल्क्यः—

‘निवासराजनि प्रेते तदहः शुद्धिकारणम्’ ।

(या. स्मृ. ३. २९)

इति । यस्मिन् देशे निवसति स निवासः स्वदेश उच्यते । तस्य राजनि मृते तद्देशनिवासिनां यस्मिन्नहन्यसौ मृतस्तदहर्मात्रं शुद्धिकारणं रात्रौ चेद्रात्रिमात्रमिति । अत एव मनुः—

‘प्रेते राजनि सज्योतिर्यस्य स्याद्विषये स्थितः’।

(म. स्मृ. ९. ८२)

इति । ज्योतिषा सौरेण नाक्षत्रेण वा सह वर्त्तते यदाशौचं तत् सज्योतिः । अहनि चेद्यावत्सूर्यदर्शनं रात्रौ चेद्यावन्नक्षत्रदर्शनमित्यर्थः । ग्राममध्ये शवे स्थिते ग्रामस्य तावदाशौचम् । तदाह वृद्धमनुः—

---

१. D. reads यश्च for यस्य. २. G. H. and I. add एव to मनुना. ३. I. does not insert the portion from तदाह to रात्रिमात्रमिति, both inclusive. H. also omits the same, but it appears in the marginal correction.

'ग्राममध्यगतो यावच्छवस्तिष्ठति कस्यचित्।
ग्रामस्य तावदाशौचं निर्गते शुचितामियात्'॥

इति। ग्रामेश्वरादावपि सज्योतिराशौचम्। तदाह स एव—

'ग्रामेश्वरे कुलपतौ श्रोत्रिये च तपस्विनि।
शिष्ये पञ्चत्वमापन्ने शुद्धिर्नक्षत्रदर्शनात्'॥

इति। कुलपतिः समूहपतिः*। श्रोत्रियो देशान्तरस्थः॥१७॥

उक्तस्याशौचस्याग्निहोत्रि-ब्रह्मचारिणोरपवादमाह—

ब्रह्मचारी गृहे येषां हूयते च हुताशनः॥
सम्पर्कं न च कुर्वन्ति न तेषां सूतकं भवेत्॥१८॥

इति। ब्रह्मचारी उपकुर्वाणको नैष्ठिकश्च। येषां गृहे हुताश-

---

* पौराणिकास्तु कुलपतिशब्दनिर्वचनमेवमाहुः—

'एको दशसहस्राणि बिभृयाद्यः कुटुम्बिनाम्।
अध्यापयेच्च वेदादीन् स वै कुलपतिः स्मृतः'॥

इति। स्वकुलपोषक इत्यपि केचित्।

---

१. D. omits :—

............ वच्छवस्तिष्ठति कस्यचित्।
ग्रामस्य ता ... ... ... ...,

and reads :—

ग्राममध्ये गतो यावदाशौचं निर्गते शुचिः।.

This reading is not incorrect and moreover gives a complete sense. २. D. omits this line. ३. Before 2nd line there appears in M. the following:—

गर्भे यदि विपत्तिः स्यात् दशाहं सूतकं भवेत्।
जीवञ्जातो यदि प्रेतः सद्य एव विशुद्ध्यति॥
स्त्रीणां चूडान्न आदानात् संक्रमात्तदधः क्रमात्।
सद्यःशौचमथैकाहं त्रिरहः पितृबन्धुषु॥,

But I have no doubt in saying that these four lines do not belong to Parâsara. ४. J. K. L. and M. read हुताशने. ५. K. L. and M. read चेन्न कुर्वन्ति न प्रेतं न च सूतकम्. This reading renders a good sense, but the author does not follow it. The commentator Dharaṇîdhara (L). does not define the word प्रेतम्. Also Nanda Paṇdita does the same.

नो हूयते अग्निहोत्रमनुष्ठीयते तेषामग्निहोत्रानुष्ठानकाले नास्त्याशौचं यदि ते सूतकिभिः सह संसर्गं न कुर्युः। तदुक्तं कौर्मे—

'नैष्ठिकानां वनस्थानां यतीनां ब्रह्मचारिणाम् ।
नाशौचं कीर्तितं[1] सद्भिः पतिते च तथा मृते' ॥
(कू. पु. १. २. २३. ७१)

इति। देवलोऽपि—

'नैष्ठिकानां वनस्थानां यतीनां ब्रह्मचारिणाम् ।
नाशौचं सूतके प्रोक्तं शावे वापि तथैव च' ॥

इति। बृहस्पतिरपि—

'स्वाध्यायः क्रियते यत्र होमश्चोभयकालिकः ।
सायम्प्रातर्वैश्वदेवं न तेषां सूतकं भवेत्' ॥

इति ॥ १८ ॥

संसर्गस्यास्पृश्यत्व-कर्मानाधिकारलक्षणाशौचापादकत्वमन्वय-व्यतिरेकाभ्यामुपपादयति—

सम्पर्काद्दुष्यते विप्रो जनने[2] मरणे तथा ।
सम्पर्काच्च निवृत्तस्य न प्रेतं नैव सूतकम् ॥१९॥

इति। स्पष्टार्थमेतत् ॥ १९ ॥ किञ्च—

शिल्पिनः कारुका[3] वैद्या दासी-दासाश्च नापिताः ।
राजानः श्रोत्रियाश्चैव सद्यःशौचाः प्रकीर्त्तिताः ॥२०॥
सव्रतः[4] सत्रपूतश्च आहिताग्निश्च यो द्विजः ।

---

१. The text reads कीर्त्यते. २. M. reads नान्यो दोषोऽस्ति ब्राह्मणे. This reading is better than what we follow. ३. K. and L. read कारवो for कारुकाः. ४. M. reads सव्रती मन्त्रपूतश्च.

राज्ञश्च सूतकं नास्ति यस्य चेच्छति पार्थिवः ॥२१॥
उद्यतो निधने दाने आर्त्तो विप्रो निमन्त्रितः।
तदैव ऋषिभिर्दृष्टं यथाकालेन शुद्ध्यति ॥ २२ ॥

इति। शिल्पिनश्चित्रकाराद्याः। कारुकाः सूपकारप्रभृतयः। वैद्याश्चिकित्सकाः। श्रोत्रियाः सद्यःप्रक्षालिकाः। व्रतेन चान्द्रायणादिनियमेन सह वर्त्तते इति सव्रतः। सत्रपूतो गवामयनाद्यधिकृतः। एते स्वस्वकर्मणि सद्यःशौचाः। राज्ञः, राजसम्बन्धिनो मान्यस्य, यस्य च पुरोहितस्यानन्यसाद्ध्यमन्त्राभिचारादिकर्मसिद्ध्यर्थमाशौचाभावमिच्छति, तयोरपि तत्तत्कर्मणि सूतकं नास्ति। निधनशब्देन तत्साधनभूतः सङ्ग्रामो लक्ष्यते। तत्र अन्नादिदाने चोद्यतः कृतोपक्रमः आर्त्तः आपदं प्राप्तः श्राद्धादौ निमन्त्रितो विप्रश्च तदैव सद्य एव शुद्ध्यतीति ऋषिभिर्दृष्टम्। यथाकालेन द्वादशरात्रादिना तथेत्यर्थः। तथा चादिपुराणे[2]—

'शिल्पिनश्चित्रकाराद्याः कर्म यत्साधयन्त्यलम्।
तत्कर्म नान्यो जानाति तस्माच्छुद्धाः स्वकर्मणि[3] ॥
सूपकारेण यत्कर्म करणीयं नरेष्विह।
तदन्यो नैव जानाति तस्माच्छुद्धः स सूपकृत् ॥
चिकित्सको यत्कुरुते तदन्येन न शक्यते।
तस्माच्चिकित्सकः स्पर्शे शुद्धो भवति नित्यशः ॥
दास्यो दासाश्च यत्किञ्चित् कुर्वन्त्यपि च लीलया।

१. K. and L. read तथैव, B. C. D. F. and M. तदेव. २. D. and G. read आदित्यपुराणे. ३. D. reads स्वकर्मभिः and G. च कर्माणि.

तदन्यो न क्षमः कर्त्तुं तस्मात्ते शुचयः सदा ॥
राजा करोति यत्कर्म स्वर्गेऽप्यन्यस्य तत् कथम् ।
एवं सति नृपः शुद्धः संस्पर्शे मृत-सूतके ॥
यत्कर्म राजभृत्यानां हस्त्यश्वगमनादिकम् ।
तन्नास्ति यस्मादन्यस्य तस्मात्ते शुचयः स्मृताः' ॥

इति । विष्णुरपि—

'—आशौचम् । (४७) न राज्ञां राजकर्मणि ।
(४८) न व्रतिनां व्रते । (४९) न सत्त्रिणां
सत्त्रे । (५०) न कारूणां कारुकर्मणि । (५१)
न राजाज्ञाकारिणां तदिच्छायाम्[१] । (५२)

(वि. स्मृ. २२.४७–५२)

इति । प्रचेता अपि—

'कारवः शिल्पिनो वैद्या दासी-दासास्तथैव च ।
राजानो राजभृत्याश्च सद्यःशौचाः प्रकीर्त्तिताः' ॥

इति । वृद्धपराशरोऽपि—

'राज्ञां तु सूतकं नास्ति व्रतिनां न च सत्त्रिणाम् ।
दीक्षितानां च सर्वेषां यस्य चेच्छति पार्थिवः ॥
तपो-दानप्रवृत्तेषु[२] नाशौचं मृत-सूतके' ।

इति । स्मृत्यन्तरमपि—

'नित्यमन्नप्रदस्यापि कृच्छ्र-चान्द्रायणादिषु ।
प्रवृत्ते कृच्छ्रहोमादौ ब्राह्मणादिषु भोजने ॥

---

१. The text reads तदिच्छया. २. D. and G. read निवृत्तेषु.

गृहीतनियमस्यापि न स्यादन्यस्य कस्यचित् ।
निमन्त्रितेषु विप्रेषु प्रारब्धे श्राद्धकर्मणि' ॥

इति । ब्रह्मपुराणे ऽपि–

'निमन्त्रितस्य विप्रस्य स्वाध्यायनिरतस्य च ।
देहे पितृषु तिष्ठत्सु नाशौचं विद्यते क्वचित् ॥
प्रायश्चित्तप्रवृत्तानां दातृ-ब्रह्मविदां तथा' ।

इति । मनुरपि–

'न राज्ञामघदोषोऽस्ति व्रतिनां न च सत्त्रिणाम् ।
ऐन्द्रं स्थानमुपासीना ब्रह्मभूता हि ते सदा ॥
राज्ञो माहात्मिके स्थाने सद्यःशौचं विधीयते ।
प्रजानां परिरक्षार्थमासनं तत्र कारणम्' ॥

(म. स्मृ. ५. ९३–९४)

इति । याज्ञवल्क्यो ऽपि–

'ऋत्विजां दीक्षितानां च यज्ञियं कर्म कुर्वताम् ।
सत्त्रि-व्रति-ब्रह्मचारि-दातृ-ब्रह्मविदां तथा ॥
दाने विवाहे यज्ञे च संग्रामे देशविप्लवे ।
आपद्यपि च कष्टायां सद्यःशौचं विधीयते' ॥

(या. स्मृ. ३. २८–२९)

---

१. H. inserts after this word the following :—

मदनपारिजाते यमः—

'शिव-विष्ण्वर्चने दीक्षा यस्य वाऽग्निपरिग्रहः ।
ब्रह्मचारी यतिश्चैव शरीरे नास्ति सूतकम्' ॥

इति । मन्त्रमुक्तावल्याम्—

'जपो देवार्चनविधिः कार्यो दीक्षान्वितैर्नरैः ।
नास्ति पापं यतस्तेषां सूतकं वा यतात्मनाम्' ॥.

Though this portion is present in H. it has been struck off. २. Except A. and D. all omit इति । ब्रह्मपुराणे ऽपि. ३. H. reads -विरतस्य for -निरतस्य. ४. The text reads चात्र for तत्र. ५. The text substitutes हि for च.

इति । हारीतो ऽपि—

'संग्रामस्थश्च राजन्यो वैश्यो मध्ये गवां स्थितः ।
सत्त्री च ब्राह्मणो नित्यं ब्रह्मचारी च वै शुचिः' ॥

इति । पैठीनसिरपि—

'विवाह-यज्ञ-दुर्गेषु यात्रायां तीर्थकर्मणि ।
न तत्र सूतकं तद्वत् कर्म यज्ञादि कारयेत्' ॥

इति । ब्रह्मपुराणे ऽपि—

'अथ देवप्रतिष्ठायां गणयागादिकर्मणि ।
श्राद्धादौ पितृयज्ञे च कन्यादाने च नो भवेत्' ॥

इति । अङ्गिरा अपि—

'जनने मरणे चैव त्रिष्वाशौचं न विद्यते ।
यज्ञे विवाहकाले च देवयागे तथैव च' ॥

इति । अत्र विवाहादौ सद्यः शौचमुपक्रान्तविवाहादिविषयम् । अत्र नृपादीनामसाधारणकृत्यव्यतिरिक्तविषयेष्वाशौचमस्त्येव । तथा च ब्राह्मे पुराणे—

'राज्यनाशस्तु येन स्याद्विना राज्ञा स्वमण्डले ।
प्रयास्यतश्च संग्रामे होमे प्रास्थानिके सति ॥
मन्त्रादितर्पणैर्वाऽपि प्रजानां शान्तिकर्मणि ।
गोमङ्गलादौ वैश्यानां कृषिकालात्ययेष्वपि ॥
आशौचं न भवेल्लोके सर्वत्रान्यत्र विद्यते' ।

इति ॥ २०—२१—२२ ॥

---

१. D. omits this whole verse and also इति । पैठीनसिरपि. २. D. reads राज्यं for राज्ञा. ३. D. reads प्रायश्चित्तस्य.

किञ्च—

प्रसवे गृहमेधी तु न कुर्यात् सङ्करं यदि ।
दशाहाच्छुद्ध्यते माता त्ववगाह्य पिता शुचिः ॥२३॥

इति । प्रसवे जनने । गृहमेधी गृहस्थः । पिता सूतिकया सह यदि संसर्गं न कुर्यात् तदा स्नानेन शुद्धो भवति । माता तु दशाहेन शुद्धा भवतीत्यर्थः ॥ २३ ॥

नन्वेवं तर्हि पितुः कर्मानधिकारलक्षणमप्याशौचं न स्यादित्यत आह—

सर्वेषां शावमाशौचं[1] माता-पित्रोस्तु सूतकम्[2] ।
सूतकं मातुरेव स्यात् उपस्पृश्य पिता शुचिः ॥२४॥

इति । यथा सपिण्डानां कर्मानधिकारलक्षणमाशौचं सम्पूर्णं तद्वत्पितुरपि । माता-पित्रोस्तु सूतकमस्पृश्यत्वलक्षणमाशौचम् । तत्रापि दशाहमस्पृश्यत्वं मातुरेव । पितुस्तु स्नानपर्यन्तमेवेत्यर्थः । तथा च पैठीनसिः—

'जनौ सपिण्डाः शुचयो माता-पित्रोस्तु सूतकम् ।
सूतकं मातुरेव स्यादुपस्पृश्य पिता शुचिः'॥

इति । अयमर्थः—जनने माता-पितृव्यतिरिक्ताः सर्वे सपिण्डाः स्पृश्याः । माता-पित्रोस्तु नास्ति स्पृश्यत्वम् । तत्रापि पिता स्नानेन स्पृश्यो भवति । दशाहं त्वस्पृश्यत्वं मातुरेव । तथा च वसिष्ठः—

---

१. M. reads स्नावम्. २. M. reads माता-पित्रोर्दशाहिकम्.

'नाशौचं विद्यते[1] पुंसः संसर्गं चेन्न गच्छति ।
रजश्चात्राशुचि[2] ज्ञेयं तच्च पुंसि न विद्यते'॥

(व. स्मृ. ४. २३)

इति । संवर्त्तोऽपि—

'जाते पुत्रे पितुः स्नानं सचैलं तु विधीयते ।
माता शुद्ध्येद्दशाहेन स्नानात्तु स्पर्शनं पितुः'॥

(सं. स्मृ. १४३)

इति । बृहस्पतिरपि—

'जाताशौचं[3] तु सर्वेषां सूतकं मातुरेव च ।
स्नानं प्रकुर्यात्तु पिता ज्ञातयो न सचैलिनः[4]'॥

इति । गौतमोऽपि—

'माता-पित्रोस्तु सूतकमुपस्पृश्य पिता शुचिः' ।

( गौ. स्मृ. १४. २३. )

इति । आदिपुराणे[5]ऽपि—

'सूतकी तु मुखं दृष्ट्वा जातस्य जनकस्ततः ।
कृत्वा सचैलं स्नानं तु शुद्धो भवति तत्क्षणात्' ॥

इति ॥ २४ ॥

सूतिकया सह-संसर्गकरणे तन्निमित्तमस्पृश्यत्वं दशाहमस्तीत्याह—

**यदि पत्न्यां प्रसूतायां सम्पर्कं कुरुते द्विजः ।**
**सूतकं तु भवेत्तस्य यदि विप्रः षडङ्गवित् ॥ २५॥**

इति । सूतिकया पत्न्या सह पतिः संसर्गं यदि कुर्यात्तदा

---

१. The text reads सूतकं for विद्यते. २. The text reads रजस्तत्राशुचि for रजश्चात्राशुचि. ३. Except B. C. and F. all read शावाशौचं through mistake. ४. D. reads सचैलकम्. ५. D. and G. read आदित्यपुराणे.

विद्या-कर्मयुक्तस्य विप्रस्याप्यस्पृश्यत्वलक्षणं सूतकं भवेत् किमुतान्यस्येत्यर्थः। तथा च सुमन्तुः—

'मातुरेव सूतकम्। तां स्पृशतश्च। नेतरेषाम्'।

इति। सूतिकां स्पृशतो जनकस्यास्पृश्यत्वलक्षणं सूतकं भवति नान्येषामित्यर्थः ॥ २५ ॥

ननु—जननिमित्तमेवास्पृश्यत्वं भर्त्तुः स्नानानन्तरमपि किं न स्यात्? अत आह—

**सम्पर्काज्जायते दोषो नान्यो दोषोऽस्ति वै[1] द्विजे।**
**तस्मात्सर्वप्रयत्नेन सम्पर्कं वर्जयेद्बुधः ॥ २६ ॥**

इति। स्नानानन्तरं भर्त्तुः संसर्गनिमित्तक एव दोषोऽस्पृश्यत्वापादको जायते न जननिमित्तको दोषोऽस्ति। तस्माद्विद्वान् सम्पर्कं सहशयनासन-भोजनादिकं वर्जयेदित्यर्थः। तथा च बृहस्पतिः—

'यस्तैः सह[2] सपिण्डोऽपि प्रकुर्याच्छयनाशनम्।
बान्धवो वा परो वापि स दशाहेन शुद्ध्यति'॥

इति। विष्णुरपि—

'ब्राह्मणादीनामाशौचे यः सकृदेवान्नमश्नी-
यात्तस्य तावदाशौचं यावत्तेषाम्[4]'।

(वि. स्मृ. २२. ८)

इति। अत्रिरपि—

'सम्पर्काज्जायते दोषः पारक्ये मृतजन्मनि।
तद्वर्जनात्पितुरपि सद्यःशौचं विधीयते'॥

---

१. M. reads ब्राह्मणे for द्विजे. २. I. reads सहा- for सह. ३. The text reads अश्नाति. ४. Except A. all insert आशौचव्यपगमे for आशौचव्यपगमः after तेषाम्; but this renders the sentence incomplete and is of no use here. ६.

इति ॥२६॥

प्रारब्धे यज्ञादौ कर्त्तुः शुद्धिरुक्ता। इदानीं कल्पितद्रव्यस्यापि शुद्धिरस्तीत्याह—

विवाहोत्सव-यज्ञेषु त्वन्तरा मृत-सूतके।
पूर्वसङ्कल्पितं द्रव्यं दीयमानं न दुष्यति ॥२७॥

इति। अत्र विवाहग्रहणं पूर्वप्रवृत्तचौलोपनयनादिसंस्कारकर्मोपलक्षणार्थम्। उत्सवो देवतोत्सवः। तेन च देवप्रतिष्ठादिकमुपलक्ष्यते। यज्ञो ज्योतिष्टोमादिः। तेषु प्रारब्धेषु अन्तरा मध्ये यदि मृत-सूतके मरण-जनने स्यातां तदा पूर्वसङ्कल्पितं द्रव्यं देवतायै ब्राह्मणेभ्यो दीयमानं न दुष्यतीत्यर्थः। तथा च क्रतुः—

'पूर्वसङ्कल्पितं द्रव्यं दीयमानं न दुष्यति'।

इति। पक्के तु विशेषः स्मृत्यन्तरे दर्शितः—

'विवाहोत्सव-यज्ञादिष्वन्तरा मृत-सूतके।
शृतमन्नं परैर्देयं दातॄन् भोक्तॄंश्च न स्पृशेत्'॥

इति। कृतान्नमसूतकिभिर्देयम्। सूतकी तु दातॄन् भोक्तॄंश्च न स्पृशेदित्यर्थः। यत्तु स्मृत्यन्तरम्—

'द्रव्याणि स्वामिसम्बन्धादघानि त्वशुचीनि च।
स्वामिशुद्ध्यैव शुद्ध्यन्ति वारिणा प्रोक्षितान्यपि'॥

इति। तदसङ्कल्पितद्रव्यविषयम्। कानिचिदसङ्कल्पितान्यपि द्रव्याणि सर्वदा शुद्धानि। तथा च मरीचिः—

१. We follow here A. and I. All others read शेषमन्नं for शृतमन्नं. The latter reading renders a better sense. २. D. reads स्वानि for स्वामि-.

'लवणे मधु-मांसे च पुष्प-मूल-फलेषु च।
शाक-काष्ठ-तृणेष्वप्सु दधि-सर्पिः-पयःसु च॥
तैलौषध्यजिने चैव पक्वापक्वे स्वयङ्ग्रहः।
'पेण्येषु चैव सर्वेषु नाशौचं मृतसूतके'॥

इति। ॥ २७ ॥

²अनेकनिमित्ताशौचसन्निपाते प्रतिनिमित्तं नैमित्तिकावृत्तौ तां निवारयति—

**अन्तरा तु दशाहस्य पुनर्मरण-जन्मनी।**
**तावत्स्यादशुचिर्विप्रो यावत्तत्स्यादनिर्दशम्॥२८॥**

इति। यदा दशाहाशौचकालमध्ये तत्तुल्यस्य ततोऽल्पस्य वाऽऽशौचस्य निमित्ते जनन-मरणे स्यातां तदा पूर्वप्रवृत्तं तदाशौचं यावदनिर्दशमनिर्गतदशाहं स्यात् विप्रस्तावदेवाशुचिर्भवति न पुनर्मध्योत्पन्नमरणादिनिमित्तकदशाहाद्याशौचवानित्यर्थः। तथा च मनुः—

'अन्तर्दशाहे स्यातां चेत् पुनर्मरण-जन्मनी।
तावत्स्यादशुचिर्विप्रो यावत्तत्स्यादनिर्दशम्'॥

(म. स्मृ. ५. ७९)

इति। याज्ञवल्क्योऽपि—

'अन्तरा जन्म-मरणे शेषाहोभिर्विशुद्ध्यति'।

(या. स्मृ. ३. २०)

इति। विष्णुरपि—

---

१. D. reads पुण्येषु. A. reads the same, but it has पण्येषु in the margin. २. I. reads अनेकाशौचनिमित्तसन्निपाते. ३. G. reads यावन्न स्यात्.

'जननाशौचमध्ये यद्यपरं जननाशौचं स्यात्तदा
पूर्वाशौचव्यपगमे शुद्धिः (३७) मरणाशौ-
चमध्ये ज्ञातिमरणे ऽप्येवम्'। (३८)

(वि. स्मृ. २२. ३७–३८)

इति। अपिशब्दाज्जनने ऽपि मरणाशौचकालेनैव शुद्धि-
रित्यर्थः। यदा जननिमित्तदशाहाशौचमध्ये मरणमापतति
तदा मरणादारभ्य दशाहं कार्यम्। तथा चाङ्गिराः—

'सूतके मृतकं चेत्स्यान्मृतके त्वथ सूतकम्।
तत्राधिकृत्य मृतकं शौचं कुर्यान्न सूतकम्'॥

इति। षट्त्रिंशन्मते ऽपि—

'शावाशौचे समुत्पन्ने सूतकं तु यदा भवेत्।
शावेन शुद्ध्यते सूतिर्न सूतिः शावशोधिनी'॥

इति। चतुर्विंशतिमते ऽपि—

'मृत-जातकयोर्योगे या शुद्धिः सा तु कथ्यते।
मृतेन शुद्ध्यते जातं न मृतं जातकेन तु'॥

इति। अल्पाशौचमध्ये दीर्घकालाशौचप्राप्तौ न पूर्वेण शुद्धिः।
तदुक्तमुशनसा—

'स्वल्पाशौचस्य मध्ये तु दीर्घाशौचं भवेद्यदि।
न पूर्वेण विशुद्धिः स्यात् स्वकालेनैव शुद्ध्यति'॥

इति। यमेनापि—

'अघवृद्धिमदाशौचं पश्चिमेन समापयेत्।

१. Except A. and the text all substitute जननं for जननाशौचं and तत्र for तदा. २. D. omits इति. ३. D. reads यमो ऽपि.

यथा त्रिरात्रे प्रक्रान्ते दशाहं प्रविशेद्यदि ॥
आशौचं पुनरागच्छेत् तत्समाप्य विशुद्ध्यति'।

इति। प्रथमप्रवृत्ताशौचकालापेक्षया दीर्घकालानुवर्त्तनेन वृद्धिमदाशौचं[1] यदि मध्ये समुत्पद्येत तदा पश्चिमेन स्वकालेनैव समापयेदित्यर्थः। शङ्खो ऽपि—

'समानाशौचसम्पाते[2] प्रथमेन समापयेत्।
असमानं द्वितीयेन धर्मराजवचो यथा'॥

(शं. स्मृ. १९. १०)

इति। असमानं दीर्घकालाशौचमित्यर्थः। हारीतो ऽपि—

'शावान्तः शाव आयाते पूर्वाशौचेन शुद्ध्यति।
गुरुणा लघु शुद्ध्येत्तु लघुना नैव तद्गुरु'॥

इति[3]। कौर्मे ऽपि—

'अघानां यौगपद्ये तु ज्ञेया शुद्धिर्गरीयसा'।

(कू. पू. १. २. २३. २४)

इति। गुरु-लघुत्वे तु समानजातीययोः कालापेक्षया। विजातीययोः स्वरूपेणैव। तदुक्तं तेनैव—

'मरणोत्पत्तियोगे तु गरीयो मरणं भवेत्'।

(कू. पु. १. २. २३. ६)

इति। क्वचित् कालापेक्षया लघ्वाशौचमध्यवर्त्तिनो गुर्वाशौचस्य पूर्वाशौचकालेनापगमो ऽस्ति। तदाह देवलः—

'परतः परतोऽशुद्धिरघवृद्धौ विधीयते।
स्याच्चेत्तत्पञ्चमादह्नः[4] पूर्वेणैवात्र शिष्यते'॥

---

१. I. reads विवृद्धाघवदाशौचं; while G. reads विवृद्धाद्याशौचं and H. विवृद्धिमदाशौचं. २. The text reads समानं खल्वशौचं तु प्रथमे तु. ३. Except A. B. C. and F. others omit इति। कौर्मेऽपि. G. and H. have only इति. ४. G. reads तस्याच्चेत्पञ्चमात्; while H. and I. read स्याच्चेत्पञ्चतमात्.

इति। वर्त्तमानाशौचमध्यवर्त्तिनि जननादौ यदा ऽघवृद्धि-र्दीर्घकालमाशौचं तदा परतः प्राप्तं जननादिकमारभ्याशुद्धि-र्विधीयते। तद्यदि पूर्वप्रवृत्तमाशौचं पञ्चमदिनात्परतोऽप्य-नुवर्त्तेत तदा पूर्वेणैव पूर्वाशौचकालेनैव दशाहाशौचस्यापि शुद्धिर्विशिष्यते विधीयते। एतदुक्तं भवति—अन्तरा पति-तस्याशौचस्य दीर्घकालत्वेऽपि यदि पूर्वप्रवृत्तमाशौचमुत्त-राशौचकालादर्धाधिककालं स्यात् तदा पूर्वप्रवृत्ताशौचका-लेनैवोत्तरस्यापि शुद्धिर्भवति। तद्यथा—गर्भपातनिमित्तषडहा-शौचमध्ये यदि दशाहाशौचमापतेत् तदा षडहाशौचशेषेणैव दशाहाशौचस्यापि निवृत्तिरिति। एवमन्यत्रापि अर्धाधिकका-लाशौचशेषेणैवाधिककालाशौचस्यापि निवृत्तिरवगन्तव्या।

अन्तरा पतितस्याशौचस्य शेषेण शुद्धिरित्यत्र विशेषो गौतमेनोक्तः—

'रात्रिशेषे[1] द्वाभ्याम् (७) प्रभाते तिसृभिः'।

(गौ. स्मृ. १४. ७–८)

इति। रात्रिशब्देनाहोरात्रं लक्ष्यते। रात्रिः शेषो यस्या-शौचस्य तस्मिन्विद्यमाने यदा ऽऽशौचान्तरमापतेत् तदा पूर्वा-शौचकालानन्तरं द्वाभ्यां रात्रिभ्यां शुद्धिः। प्रभाते तस्या रात्रे-श्चरमे यामे पुरा सूर्योदयादाशौचसन्निपाते तिसृभी रात्रिभिः शुद्धिः। न तु पूर्वाशौचकालशेषेणेति। तथा शङ्ख-लिखिताभ्या-मपि—

'अथ चेदन्तरा प्रमीयेत जायेत वा शिष्टैरेव दिवसैः शुद्ध्येत्। अहःशेषे द्वाभ्याम्। प्रभाते तिसृभिः'।

---

१. D. inserts सति after रात्रिशेषे.

इति। शातातपेनापि—

'रात्रिशेषे द्व्यहाच्छुद्धिर्यामशेषे त्र्यहाच्छुचिः'।

इति। बौधायनेनापि[1]—

'अथ यदि दशरात्रसन्निपाते यदाद्यं
दशरात्रसमाशौचमानवमाद्दिवसात्'।

(बौ. स्मृ. १. ५. ११. १८)

इति। अस्यार्थः—यावन्नवमदिवसपरिसमाप्तिस्तावत् न पूर्वाशौचकालशेषेणोत्तराशौचस्य निवृत्तिरिति। नवमशब्देनोपान्त्यदिवस उपलक्ष्यते। ततश्च क्षत्रियादीनामप्यन्त्यदिवसाशौचसन्निपाते द्विरात्रं प्रभाते त्रिरात्रमित्यवगन्तव्यम्। देवलेनापि—

'पुनः पाते दशाहात्प्राक् पूर्वेण सह गच्छति।
दशमेऽह्नि पतेद्यस्य द्व्यहात्तु[2] स विशुद्ध्यति॥
प्रभाते तु त्रिरात्रेण दशरात्रेष्वयं विधिः'।

इति। दशाहात्प्रागित्यत्र दशाहशब्दोऽन्त्यदिवसोपलक्षकः। दशरात्रेष्वित्येतदपि[3] द्वादशरात्राद्युपलक्षणम्। समानाशौचयोः सन्निपाते पूर्वशेषेण शुद्धिरित्यस्य क्वचिदपवादः शङ्खेन दर्शितः—

'मातर्यग्रे प्रमीतायामशुद्धौ म्रियते पिता।
पितुः शेषेण शुद्धिः स्यान्मातुः कुर्यात्तु पक्षिणीम्'।

(शं. स्मृ. १५. १४)

इति। मातरि पूर्वं मृतायां यदि तन्निमित्ताशौचमध्ये पिता म्रियेत तदा न पूर्वाशौचशेषेण शुद्धिः। किं तु पित्राशौचकालेनैव शुद्धिः। तथा पूर्वं पितरि मृते तन्निमित्ताशौचमध्ये मातरि

---

१. D. and H. read देवलोऽपि. २. D. and G read द्व्यहात्सर्वं; while I. reads द्व्यहतः स. ३. D. omits अपि.

प्रमीतायामपि न पित्राशौचकालशेषेण शुद्धिः । किं तु पित्राशौचं समाप्य पक्षिणीं कुर्यादित्यर्थः ॥ २८ ॥

उक्तस्य दशाहाद्याशौचस्य विषयान्तरेऽप्यपवादमाह—

ब्राह्मणार्थे विपन्नानां बन्दि[1]-गोग्रहणे तथा ।
आहवेषु विपन्नानामेकरात्रमशौचकम्[2] ॥ २९ ॥

इति । ब्राह्मणप्राणरक्षणार्थं बन्दिग्रहणे गोग्रहे च सति तद्विमोचनार्थं हतानां आहवेष्वाभिमुख्येन हतानां ये सपिण्डास्तेषामेकरात्रमेवाशौचं न दशरात्रादिकमित्यर्थः । यत्तु 'सद्यःशौचं' इत्यनुवृत्तौ मनुनोक्तम्—

'डिम्भाहवहतानां च विद्युता पार्थिवेन च ।
गो-ब्राह्मणस्य चैवार्थे यस्य चेच्छति भूमिपः' ॥
(म. स्मृ. ५.९५)

इति तदसन्निधिविषयम् ॥ २९ ॥

रणहतसपिण्डानामेकाहाशौचविधिशेषतया नवभिः श्लोकैराहवे हतं प्रशंसति । तत्र प्रथमं परिव्राजकदृष्टान्तेनादित्यमण्डलभेदित्वं दर्शयन्नर्थाद्ब्रह्मलोकप्राप्तिं दर्शयति—

द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ[3] ।
परिव्राड् योगयुक्तश्च रणे चाभिमुखो[4] हतः ॥ ३० ॥

इति । योगाभ्यासेनेश्वरमुपासीनः परिव्राजकोऽर्चिरादिमार्गेण ब्रह्मलोकं गच्छन् मार्गमध्ये वाय्वादित्य-चन्द्राणां मण्ड-

१. G. reads बन्दिनो. २. M. reads एकरात्रं तु सूतकम्. ३. M. reads सूर्यमण्डलभेदकौ. ४. M. reads -मुखे. E. omits from रणेचाभि- to -ति-संन्यस्तं ब्राह्मणं (P. 270, L. 11 ).

लानि क्रमेण भित्त्वा तत्र तेभ्य उत्तरोत्तराधिकेभ्यः छिद्रेभ्यो निर्गत्य क्रमेण विद्युदादिलोकान् सञ्चरन् ब्रह्मलोकं प्राप्नोति। छिद्रनिर्गमनं च वाजसनेयिब्राह्मणे श्रुतम्—

'स वायुमागच्छति तस्मै स तत्र विजिहीते
यथा रथचक्रस्य खं तेन स ऊर्ध्व[१] आक्रमते
स आदित्यमागच्छति तस्मै स तत्र विजिहीते
यथा लम्बरस्य[२] खं तेन स ऊर्ध्व[३] आक्रमते
स चन्द्रमसमागच्छति तस्मै स तत्र विजिहीते
यथा दुन्दुभेः खं तेन स ऊर्ध्व आक्रमते'।

(बृ. उ. ९. १०. १)

इति ॥ ३० ॥

तत्र—चिरकालं महता प्रयासेन योगमभ्यस्यता परिव्राजकेन सह समानगतित्वं रणहतस्यायुक्तम्। तस्मादल्पकालप्रयासत्वादित्याशङ्क्य कालाल्पत्वेऽपि धैर्यातिशयेन प्रयाससाम्यं सूचयितुमभिमुख इत्युक्तम्। तमेव सूचितमर्थं विशदीकरोति—

**यत्र यत्र हतः शूरः शत्रुभिः परिवेष्टितः।**
**अक्षयान् लभते लोकान् यदि क्लीबं न भाषते[४] ॥३१॥**

इति। लोके शस्त्रधारिणमेकमपि दृष्ट्वा महती प्राणभीतिर्जायते। युद्धकाले तु प्रतिसैन्यगताः सर्वेऽपि शत्रवः शस्त्रधारिणो

---

१. Except A. D. and the text others read ऊर्ध्वम्. २. B. C. F. and I. read उदुम्बरस्य, But the reading is not correct. D. G. and H. substitute ड for ल, but there is no difference between ड. and ल. ३. Except A. D. and the text others read ऊर्ध्वम्. ४. D. reads बाधते.

मारणोद्यता एनं परिवेष्टयन्ति । तदानीमुत्पद्यमानाया भीतेरियत्तैव नास्ति । तादृशीं भीतिं सोढ्वा प्रतिभटाभिमुख्यं गच्छतः शूरस्य धैर्यं योगिधैर्यादप्याधिकम् । न हि योगिनो यम-नियमादिषु क्वचित्प्राणभीतिः सम्भाविता । ततो यथा जागरणे बहुषु वत्सरेषु अनुभवनीयस्य भोगस्य मुहूर्त्तमात्रवर्त्तिनि स्वप्ने साकल्यं दृश्यते तथा चिरभावियोगसाम्यं रणे धैर्यवतः किं न स्यात्? धैर्यातिशयेन साम्यमत्र विवक्षितमिति दर्शयितुं 'यदि क्लीबं न भाषते' इत्युक्तम् । क्लीबं नपुंसकत्वं विकलता तत्सूचकं भीत्याविष्कारि वाक्यं यदि न भाषते तदानीं योगिसाम्यादक्षयान् ब्रह्मलोकावान्तरविशेषान् सालोक्यादीन् लभते ॥ ३१ ॥

परिव्राजकदृष्टान्ते सूर्यमण्डलभेदित्वं सम्भावयति—

**संन्यस्तं ब्राह्मणं दृष्ट्वा स्थानाच्चलति भास्करः ।**
**एष मे मण्डलं भित्त्वा परं स्थानं प्रयास्यति ॥३२॥**

इति । यद्यपि मण्डलस्याचेतनरश्मिसमूहरूपत्वात्तद्भेदेऽपि नास्ति काचिदादित्यस्य वेदना तथापि पूर्वमत्यन्तनीचपदे वर्त्तमानस्येदानीमुच्चपदप्राप्तिश्चित्तक्लेशहेतुर्भवति । अत एव भित्त्वा परं स्थानं प्रयास्यतीत्युक्तम् । एतदेवाभिप्रेत्य व्यास आह—

'क्रियावद्भिर्हि कौन्तेय देवलोकः समावृतः ।
न चैतदिष्टं देवानां मर्त्यैरुपरि वर्त्तनम्' ॥

१. I. adds -काल to चिर-. २. I. reads भीत्याविष्कारक-. ३. Except A. and I. others read यास्यति for प्रयास्यति. ४. D. reads समावृत:. ५. D, G. and H. read मर्त्यै न परिवर्त्तनम्.

इति। मुमु[1]क्षुपरिव्राजकदर्शनमात्रेण निष्पन्नस्य भास्करचलनस्योपन्यासाद्योगिनो यथोक्तफलं दृढीकृतं भवति॥ ३२॥

रणे चाभिमुखो हत इति दार्ष्टान्तिकेऽभिहितं तच्च हतत्वं धैर्यातिशयस्योपलक्षणम्। असत्यपि स्ववधे परत्राणप्रवृत्तस्य धीरस्य यथोक्तफलसद्भावादित्याह—

यस्तु भग्नेषु सैन्येषु विद्रवत्सु समन्ततः।
परि[2]त्राता य[3]दा गच्छेत् स च क्रतुफलं लभेत्॥३३॥

इति। क्रतुरत्राश्वमेधः। ब्रह्मलोकप्राप्तिफलत्वात्। अश्वमेधस्य च तत्फलत्वं वाजसनेयिशाखायां भुज्युब्राह्मणे—

'क्व न्वश्वमेधयाजिनो गच्छन्ति?'।

(बृ. उ. ३. ३. २)

इत्यादिप्रश्न[4]-प्रतिवचनयोर्विस्पष्टमवगम्यते॥ ३३॥

य[5]ः परित्राणार्थं प्रवृत्तः तस्य प्रवृत्तिमात्रेण क्रतुफलमुक्तम्। प्रवृत्तस्य गात्रच्छेदे सति हतत्वाभावेऽपि फलातिशयोऽस्तीत्याह—

यस्य च्छेदक्षतं गात्रं शर[6]-मुद्गर-यष्टिभिः।
देवकन्यास्तु तं वीरं ह[7]रन्ति रमयन्ति च॥ ३४॥

इति। गात्रं शरीरम्। छेदक्षतं हस्त-पाद्यवयवच्छेदेनोपद्रुतम्॥ ३४॥

१. A. reads मुमुक्षोः परिव्राजकस्य for मुमुक्षुपरिव्राजक-. २. I. reads परित्रातुं. ३. G. reads सदा for यदा. ४. Except A. and I. all read -प्रजापतिवचनयोः for प्रश्न-प्रतिवचनयोः. ५. B. C. and F. substitute यत्र for यः. ६. M. reads शर-शक्त्यृष्टि-मुद्गरैः. ७. M. reads गायन्ति.

परित्राणाय प्रवृत्तस्य गात्रच्छेदे यत्फलं ततो ऽप्यतिशयं मरणे दर्शयति—

देवाङ्गनासहस्राणि[1] शूरमायोधने हतम् ।
त्वरमाणाः[2] प्रधावन्ति मम भर्त्ता ममेति च ॥ ३५ ॥

इति ॥ (३५) ॥

यद्यपि यज्ञसङ्घादिकं युद्धमरणं चोभयमप्येकविधस्य फलस्य समानं साधनं तथापि युद्धमरणस्यात्यल्पकालसाध्यत्वेन वैकल्यासम्भवादुत्तमसाधनत्वमित्याह—

यं यज्ञसङ्घैस्तपसा च विप्राः[3]
स्वर्गैषिणो वाऽत्र यथैव यान्ति[4] ।
क्षणेन[5] यान्त्येव हि तत्र वीराः
प्राणान् सुयुद्धेन परित्यजन्तः ॥ ३६ ॥

इति । विप्रशब्देन निष्कामा विवक्षिताः । तथा च स्वर्गैषिणो वेति विकल्प उपपद्यते । अत्र पुण्यलोकेषु यं लोकविशेषं यथैव येन प्रकारविशेषेण देवकन्यावरणादिना युक्ताः सन्तो यान्ति तत्र तेषु[6] पुण्यलोकेषु तमेव लोकविशेषं तेनैव प्रकारेण युद्धहता वीराश्च यान्ति । क्षणेनेत्युक्तं तेन कालाल्पत्वमेतेष्वतिशयः ॥ ३६ ॥

---

१. I. reads देवाङ्गनाः; while M. वराङ्गना-. २. M. reads—
नागकन्याश्च धावन्ति मम भर्ता भवेदिति ॥.

३. M. reads विद्यया for विप्राः. ४. M. reads विप्राः for यान्ति. ५. M. reads तथैव for क्षणेन, and also changes the place of this verse, which appears as the 38th sloka. ६. D. substitutes ते for तेषु.

ननु—कालस्याल्पत्वेऽपि प्राणभीतेर्दुष्परिहरत्वात् पूर्वोक्तं युद्धधैर्यं दुर्लभमित्याशङ्क्य विचारवतः पुरुषस्य तत् सुलभमित्यभिप्रेत्य तं विचारं दर्शयति—

जितेन लभ्यते[1] लक्ष्मीर्मृतेनापि सुराङ्गनाः।
क्षणध्वंसिनि[2] कायेऽस्मिन् का चिन्ता मरणे रणे[3] ॥३७॥

इति। जितेनेति कर्त्तरि निष्ठा। यतो जयेन[4] लक्ष्मीलाभः। मरणेन सुराङ्गनालाभः ततो यदि कायजीवनलोभाल्लक्ष्मी-देवांगनालाभौ न पर्यालोच्येते तदा लाभपरित्यागमात्रं तस्य केवलमवशिष्यते[5]। कायस्तु सर्वथा न चिरं जीवति। तस्य कर्मप्रापितायुष्यवशवर्तित्वेन क्षणप्रध्वंसिस्वभावत्वात्॥३७॥

अत्यन्तनिषिद्धमपि रुधिरपानं यत्र निरतिशयसुकृतत्वेन परिणमते तत्र पुण्यलोकप्राप्तौ को विस्मयः? इत्याह—

ललाटदेशे[6] रुधिरं स्रवच्च
यस्याहवे तु[7] प्रविशेच्च वक्त्रम्।
तत् सोमपानेन किलास्य तुल्यं[8]
संग्रामयज्ञे[9] विधिवच्च दृष्टम् ॥ ३८ ॥

इति। संग्रामयज्ञप्रतिपादके नीतिशास्त्रादौ पुरोभागे प्रहा-

---

१. M. reads लभते. २. M. reads क्षणविध्वंसिके ऽस्मिन्. ३. This couplet is the 36th Śloka in M. ४. Except A. and I. all read जयभाजः for जयेन, and omit मरणेन सुराङ्गनालाभः. ५. I. reads अविशिष्यते. ६. M. reads.—

ललाटदेशाद्रुधिरं हि यस्य
तस्य जन्तोः प्रविशेच्च वक्त्रे।

७. L. substitutes न for तु. ८. M. reads हि तस्य तुल्यम्. ९. L. substitutes -देशे for -यज्ञे.

रो वीरलक्षणत्वेनोपवर्णित इति विवक्षितत्वात् विधिवद्दृष्टमित्युक्तम् ।

तदेवं नवभिः श्लोकैराशौचविधिस्तावकत्वेन युद्धमरणस्य प्रशंसा कृता । यस्माद्रणहतो ऽत्यन्तपुण्यात्मा तस्मात्तन्मृतौ परिव्राजकमरण इवाधिकाशौचाभाव उपपद्यते । अथवा त एते नव श्लोकाः प्रकरणादुत्कृष्य राजधर्मेषु स्थापनीयाः । युद्धस्य क्षत्रियधर्मत्वात् । यथा दर्श-पूर्णमासप्रकरणे श्रूयमाणो रजस्वलाव्रतकलापः प्रकरणादुत्कृष्य क्रत्वर्थपरिहारेण पुरुषार्थतयोपवर्णितस्तद्वत् ॥ ३८ ॥

धर्मार्थमनाथब्राह्मणशववहनादौ प्रशंसापूर्वकं सद्यःशौचं विदधाति—

अनाथं ब्राह्मणं प्रेतं ये वहन्ति द्विजातयः ।
पदेपदे यज्ञफलमानुपूर्व्याल्लभन्ति ते ॥ ३९ ॥
न[१] तेषामशुभं किञ्चित् पापं[२] वा शुभकर्मणाम् ।
जलावगाहनात्तेषां सद्यः[३]शौचं विधीयते ॥ ४० ॥

इति । अनाथं बन्धुरहितमसपिण्डं ब्राह्मणमदृष्टार्थं ये द्विजातयो वहन्ति स्पृशन्ति दहन्ति च ते पदेपदे यज्ञफलानि क्रमेण प्राप्नुवन्ति ।

तथा तेषामशुभादिकमपि नास्ति । तेषां स्नानादेव सद्यःशुद्धिर्विधीयत इत्यर्थः । तथा च वृद्धपराशरः—

१. Between these two verses M. inserts the 41st verse, असगोत्रं &c. २. M. reads द्विजानां for पापं वा. ३. M. शुद्धिः स्मृतिभिरीरिता.

'प्रेतस्पर्शनसंस्कारे ब्राह्मणो नैव दुष्यति।
वोढा चैवाग्निदाता च सद्यः स्नात्वा विशुद्ध्यति' ॥

इति। यत्तु हारीतेनोक्तम्—

'प्रेतस्पृशो ग्रामं न [1]विशेयुरा नक्षत्रद-
र्शनात्। रात्रौ चेदादित्यस्य'।

इति। यच्च देवलेनोक्तम्—

'अह्नि चेद्दहनं कुर्यात् ऊर्ध्वमस्तमयाद्रवेः।
स्नात्वा गृहं विशेद्विप्रो रात्रौ चेदुदयाद्रवेः' ॥

इति तत् स्नेहादिनाऽकरणीयनि[2]र्हारकरणे वेदितव्यम् ॥ ३९–४० ॥

न[3] केवलं स्नानं किं तु प्राणायामोऽपि कर्त्तव्य इत्याह—

**असगोत्रमबन्धुं च प्रेतीभूतं द्वि[4]जोत्तमम्।**
**[5]वहित्वा च दहित्वा च प्राणायामेन शुद्ध्यति ॥४१॥**

इति। असगोत्रमसपिण्डमबन्धुं बन्धुरहितं प्रेतं ब्राह्मणं ये वहन्ति [6]दहन्ति च तेषां प्राणायामेन शुद्धिरित्यर्थः। न केवलं स्नान-प्राणायामौ। अग्निस्पर्शोऽपि कर्त्तव्यः। तदुक्तमाङ्गिरसा—

'यः कश्चिन्निर्हरेत् प्रेत[7]मसपिण्डः कथञ्चन।
स्नात्वा सचैलं स्पृष्ट्वाऽग्निं तस्मिन्नेवाह्नि वै शुचिः' ॥

इति। स्नेहादिना प्रेतनिर्हरणं कुर्वतोऽसपिण्डस्याशौचमस्ति। तथा च मनुः—

१. I. reads प्रविशेयुः. २. I. reads -निर्हरणे for -निर्हारकरणे. ३. D. H. and I. omit न केवलं स्नानं. ४. M. reads च ब्राह्मणम् for द्विजोत्तमम्. ५. M. reads नीत्वा च दाहयित्वा च. ६. D. omits दहन्ति च. ७. I. reads असपिण्डं.

'असपिण्डं द्विजं प्रेतं विप्रो निर्हृत्य बन्धुवत् ।
विशुद्ध्यति त्रिरात्रेण मातुराप्तांश्च बान्धवान् ॥
यद्यन्नमत्ति तेषां तु दशाहेनैव शुद्ध्यति ।
अनदन्नन्नमह्नैव न चेत्तस्मिन् गृहे वसेत्' ॥

(म. स्मृ. ५. १०१–१०२)

इति । यस्तु प्रेतनिर्हरणं कृत्वा तद्गृहे वसति न च तदन्नमश्नाति तस्य त्रिरात्रमाशौचम् । यस्तु तद्गृहे वसन् तदन्नमश्नाति तस्य दशरात्रम् । यः पुनः प्रेतं निर्हृत्य तद्गृहवासं तदन्नं च परित्यजति तस्यैकाहमित्यर्थः । एतत्सवर्णविषयम् । असवर्णशवनिर्हारे तु तज्जातीयमाशौचं कार्यम् । तदाह गौतमः—

'अपरश्चेद्वर्णः पूर्ववर्णमुपस्पृशेत् पूर्वो वाऽपरं तच्छवोक्तमाशौचम्' ।

(गौ. स्मृ. १४. १६)

इति । उपस्पर्शनं निर्हरणम् । ब्राह्मणस्य शूद्रशवनिर्हारे मासमाशौचम् । शूद्रस्य ब्राह्मणशवनिर्हारे दशाहमाशौचं भवतीत्यर्थः । यस्त्वर्थलोभादसवर्णशवनिर्हरणं करोति तस्य द्विगुणमाशौचं भवतीति । तथा च व्याघ्रः—

'अवरश्चेद्वरं वर्णं वरो वाऽप्यवरं यदि ।
वहेच्छवं तदाशौचं वृत्त्यर्थे द्विगुणं भवेत्' ॥

---

१. Except A. and the text, all read स्यः स दशाहेन for तु दशाहेनैव. २. Except A. and the text all read न च तस्मिन् for न चेत्तस्मिन्. ३. D. G. H. and the text read अवरः for अपरः. ४. D. G. H. and the text read ऽवरं for ऽपरं. ५. The text reads तत्र शावोक्तम्. ६. B. C. and F. read दशरात्रमित्यर्थः for दशाहमाशौचं भवतीत्यर्थः. ७. B. C. E. and F. read वृष्टार्थे, D. and G. वृद्धयर्थे.

इति। असवर्णप्रेतनिर्हारे तदुक्तमाशौचम्। तत्र वेतनाश्रयणे द्विगुणमाशौचं भवतीत्यर्थः। यत्तु विष्णुपुराणे—

'यो ऽसवर्णं तु मूल्येन नीत्वा चैव दहेन्नरः।
आशौचं तु भवेत्तस्य प्रेतजातिसमं सदा'॥

इति तदापदि द्रष्टव्यम्। अर्थलोभात्सवर्णशववहनादौ स्वजात्युक्तमाशौचं कार्यम्। तथा च कौर्मे[2]—

'यदि निर्हरति प्रेतं प्रलोभाक्रान्तमानसः[3]।
दशाहेन द्विजः शुद्ध्येद्द्वादशाहेन भूमिपः॥
अर्धमासेन वैश्यस्तु शूद्रो मासेन शुद्ध्यति'।

(कू. पु. १. २. २३. ४९–५०)

इति। यस्तु सपिण्ड एव प्रेतं निर्हरति न तस्याशौचाधिक्यम्। प्रेतनिर्हरणस्य विहितत्वात्। तदाह देवलः—

'विहितं तु सपिण्डानां प्रेतनिर्हरणादिकम्।
तेषां करोति यः कश्चित् तस्याधिक्यं न विद्यते'॥

इति। आधिक्यमाशौचाधिक्यमित्यर्थः। समानोदकप्रेतनिर्हरणे दशाहम्। तदाह स एव—

'यः समानोदकं प्रेतं वहेद्वा ऽथ दहेत[1] वा।
तस्याशौचं दशाहं तु धर्मज्ञा मुनयो[4] विदुः'॥

इति। ब्रह्मचारिणः प्रेतवहनकरणे व्रतलोपः। तदाह देवलः—

---

१. H. and I. read वहेत् for दहेत्. २. All, except A. and H. read कूर्मे. ३. The text reads लोभादाक्रान्तमानसः. ४. B. and E. substitute अन्येषां तु त्र्यहं for धर्मज्ञा मुनयो; while E. F. and G. read अन्येषां तु अहं for the same.

'ब्रह्मचारी न कुर्वीत शववाहादिकाः[1] क्रियाः ।
यदि कुर्याच्चरेत्कृच्छ्रं पुनः संस्कारमेव च' ॥

इति । पित्रादिशववहने तु न दोषः । तथा च मनु-देवलौ—

'आचार्यं स्वमुपाध्यायं पितरं मातरं गुरुम् ।
निर्हृत्य तु व्रती प्रेतान् न[2] व्रतेन वियुज्यते' ॥

(म. स्मृ. ५. ९१)

इति । वसिष्ठो ऽपि—

'ब्रह्मचारिणः शवकर्मणो[3] व्रतनिवृत्तिः । (७)
अन्यत्र माता-पित्रोर्गुरोर्वा[4]' । (८)

(व. स्मृ. २३. ७–८)

इति । याज्ञवल्क्यो ऽपि—

'आचार्य-पित्रुपाध्यायान् निर्हृत्यापि व्रती व्रती ।
*संकटान्नं च नाश्नीयान्न च[5] तैः सह संवसेत्' ॥

(या. स्मृ. ३. १५)

इति । व्रती ब्रह्मचारी पित्रादीनां निर्हरणादिकं कृत्वा यद्याशौचिभिः सह वासं तदन्नं च परित्यजति तदा व्रती व्रतचर्याया न वियुज्यते इत्यर्थः । ब्रह्मपुराणे ऽपि—

---

* 'कटशब्देनाशौचं लक्ष्यते । तत्सहचरितमन्नं सकटान्नम् । तत् ब्रह्मचारी नाश्नीयात्'–इति विज्ञानेश्वरः ।

१. H. and I. read शवदाहादिकाः, B. C. and F. शवयानादिकाः, and G. reads क्रियाम् for क्रियाः. २. D. reads न व्रतं न विशुद्ध्यते. ३. The text reads शवकर्मणो. Vijnâneśvara reads शवकर्मिणो (see 3. 15 commentary). ४. The text and Vijnâneśvara (see 3.15 commentary) omit गुरोर्वा. ५. I. reads स तदन्नं च.

'आचार्यं वाऽप्युपाध्यायं गुरुं वा पितरं तथा[1]।
मातरं वा स्वयं दग्ध्वा व्रतस्थस्तत्र भोजनम्॥
कृत्वा पतति वै[2] तस्मात् प्रेतान्नं न तु भक्षयेत्।
अन्यत्र भोजनं कुर्यान्न च तैः सह संवसेत्॥
एकाहमशुचिर्भूत्वा द्वितीये ऽहनि शुद्ध्यति'।

इति। ब्राह्मणशववहनादौ शूद्रं न नियोजयेत्। तदाह मनुः—

'न विप्रं स्वेषु तिष्ठत्सु मृतं शूद्रेण हारयेत्[3]।
अस्वर्ग्या ह्याहुतिः सा स्याच्छूद्रसंस्पर्शदूषिता'॥

(म. स्मृ. ५. १०४)

इति। अत्र स्वेषु* तिष्ठत्स्वित्यविवक्षितम्। अस्वर्ग्यत्वदोषश्रवणात्। विष्णुरपि—

'मृतं द्विजं न शूद्रेण निर्हारयेत्। (१) न शूद्रं द्विजेन'।

(वि. स्मृ. १९. १–२)

---

* गोविन्दराजो ऽप्येवमेव मन्यते। तथापि 'अविवक्षितम्' इत्येतन्न मेधातिथ्यादिसम्मतम्। कुल्लूकभट्टस्त्वेवमाह—'सम्भवादर्थपदद्वयोच्चारणवैयर्थ्यप्रसङ्गात् उपक्रमावगतेश्च वेदोदितन्यायेनानुबोध्यत्वात्, गुणभूतशुद्ध्यनुरोधेन प्रधानभूताया जातेरुपेक्षायां 'गुणलोपे च मुख्यस्य' (पू. मी. १०. २. ६३) इत्यपि न्यायो बाध्येत। तस्मात्स्वेषु तिष्ठत्सु इति पदद्वितयं न विवक्षितं इतीमां गोविन्दराजस्य राजाज्ञां नाद्रियामहे' इति।

---

१. Except A. and I. all read च वा for तथा. २. E. and H. substitute नो for वै. ३. The text reads नाययेत् for हारयेत्. The commentator Medhâtithi also follows the text. It cannot be ascertained what reading Sarva- in Nârâyaṇa, Nandana and Râmchandra approve of. Kullûka and Govindarâja seem to choose हारयेत् and Râghavânaanda हापयेत्.

इति । यमो ऽपि[1]–

'न शूद्रो यजमानं वै प्रेतीभूतं समुद्वहेत्[2] ।

यस्याऽऽनयति शूद्रो ऽग्निं तृणं काष्ठं हवींषि च ॥

प्रेतत्वं हि सदा तस्य स चाधर्मेण लिप्यते' ।

इति । ब्राह्मणादिशवनिर्हारे दिङ्नियमो[3] दर्शितो मनुना–

'दक्षिणेन मृतं शूद्रं पुरद्वारेण निर्हरेत् ।

पश्चिमोत्तर-पूर्वैस्तु यथायोगं द्विजन्मनः' ॥

(म. स्मृ. ५. ९२)

इति । हारीतो ऽपि–

'न ग्रामाभिमुखं प्रेतं हरेयुः' ।

(हा. स्मृ. १९. १३)

इति ॥ ४१ ॥

अनुगमनाशौचमाह–

[अ]नुगम्येच्छया प्रेतं ज्ञातिमज्ञातिमेव[4] वा ।

[स्ना]त्वा सचैलं[5] स्पृष्ट्वाऽग्निं घृतं प्राश्य विशुद्ध्यति ॥ ४२ ॥

इति । ज्ञातिं सापिण्ड्यातिरिक्तं बन्धुम् । सापिण्डानुगम-स्य विहितत्वात् । अज्ञातिमबन्धुं वा समानोत्कृष्टजातिप्रेतं [इच्छ]ामनयाऽनुगम्य सचैलं स्नात्वाऽग्निं स्पृष्ट्वा घृतभुक् शुद्ध्यति [इ]त्यर्थः । तथा च याज्ञवल्क्यः–

'अनुगम्याम्भसि स्नात्वा स्पृष्ट्वाऽग्निं घृतभुक् शुचिः' ।

(या. स्मृ. ३. २६)

---

१. A. reads देवलोऽपि for यमोऽपि. २. C. and F. read समुद्धरेत्. ३. C. [an]d F. add अपि to नियमो. ४. This verse appears in Manu. I. and [th]e text of Manu substitute च for वा. ५. M. reads चैव तु for सचैलं.

इति । कौर्मेऽपि–

'प्रेतीभूतं द्विजं विप्रो यो ऽनुगच्छेत कामतः ।
स्नात्वा सचैलं स्पृष्ट्वाऽग्निं घृतं प्राश्य विशुद्ध्यति' ॥
(कू. पु. १. २. २३. ९३)

इति । अत्र च विशेषः कावषेयेणोक्तः–

'अनुगम्य शवं बुद्ध्या स्नात्वा स्पृष्ट्वा हुताशनम् ।
सर्पिः प्राश्य पुनः स्नात्वा प्राणायामैर्विशुद्ध्यति' ॥

इति । न च–घृतप्राशनस्य भोजनकार्ये विधानाद्भोजननिवृत्तिरिति वाच्यम् । तस्य प्रायश्चित्तत्वेन विधानात् । प्राणायामैरिति बहुवचनस्य कपिञ्जलन्यायेन* त्रित्वे पर्यवसानात् त्रिभिः प्राणायामैः शुद्ध्यति– इत्यर्थः ॥ ४२ ॥

निकृष्टजात्यनुगमनाशौचमाह–

**क्षत्रियं मृतमज्ञानाद् ब्राह्मणो योऽनुगच्छति ।**
**एकाहमशुचिर्भूत्वा पञ्चगव्येन शुद्ध्यति ॥ ४३ ॥**

---

* 'कपिञ्जलानालभेत' इत्यस्मिन् विधिवाक्ये 'कपिञ्जलान्' इति बहुवचननिर्देशेन आलभनीयकपिञ्जलबहुत्वे स्पष्टेऽपि तेषां सङ्ख्या नोक्ता अतस्तत्र 'अनिर्धारितसंख्याविशेषं बहुवचनं त्रित्वे पर्यवस्यति'– इति वाक्यशेषेण कपिञ्जलत्रयालभनं विधीयते तद्वदत्रापीति भावः ।

---

१. The text reads ह्यनुगच्छेत. २. We follow here A. and D. The readings in others are quite different from one another. B. C. E. F. and G. read कवषेण, H. also reads the same, but there appears कण्वेन as marginal correction. I. reads कश्यपेन. We are unable to trace to what author this verse belongs. The names कावषेय, कवष, कण्व and कश्यप are found in some ancient works, but the name कवष is nowhere met with as that of the author of a smriti.

शवं च[1] वैश्यमज्ञानाद् ब्राह्मणो योऽनु[2]गच्छति।
कृत्वाऽऽशौचं द्विरात्रं च प्राणायामान् षडाचरेत्॥४४॥
प्रेतीभूतं तु यः शूद्रं ब्राह्मणो ज्ञानदुर्बलः।
अ[3]नुगच्छेन्नीयमानं त्रिरात्रमशुचिर्भवेत् ॥ ४५ ॥
त्रिरात्रे तु ततः पूर्णे नदीं गत्वा समुद्रगाम् ।
प्राणायामशतं कृत्वा घृतं प्राश्य विशुद्ध्यति ॥४६[5]॥

इति। यो ब्राह्मणः अज्ञानान्मौर्ख्यात् क्षत्रियं प्रेतम[4]नुगच्छति स एकाहमाशौचं कृत्वा पञ्चगव्येन शुद्ध्यति। ब्राह्मणो वैश्यशवानुगमनं कृत्वा द्विरात्राशौ[6]चानन्तरं षड्भिः प्राणायामैः शुद्ध्यति। शूद्रशवानुगमनं कृत्वा त्रिरात्रमाशौचं समाप्य महानद्यां स्नात्वा शतं प्राणायामान् कृत्वा घृतप्राशनेन शुद्ध्यति। उपक्रमोपसंहारपर्यालोचनया क्षत्रियादिशवानुगमनेऽपि सचैलस्नानाग्निस्पर्श-घृतप्राशनान्यनुसन्धेयानि। एवं च सति क्षत्रियस्य वैश्यशवानुगमने एकाहं, शूद्रशवानुगमने द्व्यहं, वैश्यस्य शूद्रशवानुगमने एकाहमाशौचमित्यूहनीयम्। तथा च कौर्मे—

'एकाहात् क्षत्रिये शुद्धिर्वैश्ये स्याच्च[7] द्व्यहेन तु।
शूद्रे दिनत्रयं प्रोक्तं प्राणायामशतं पुनः'॥
(कू. पु. १.२. २३. ९४)

१. M. reads तद्वैश्यम् for च वैश्यम्, and K. and L. substitute तु for च. २. J. K. and L. read ह्यनु- for योऽनु-. ३. M. reads नयन्तमनुगच्छेत. ४. D. G. and H. add इति to अनुगच्छति. ५. D. and G. add इति to शुद्ध्यति. ६. G. reads द्विरात्रमाशौचानन्तरं. ७. B. C. and F. read तु स्याद्व्यहेन, D. वैश्यस्य द्वितयेन and I. reads वैश्ये स्यात्सा द्व्यहेन.

इति ॥ ४३-४४-४५-४६ ॥

द्विजानां शूद्रशवानुगमननिषेधे कदा तैः शूद्रा अनुसर्त्तव्या इत्यत आह-

विनिर्वर्त्य[1] यदा शूद्रा उदकान्तमुपस्थिताः ।
द्विजैस्तदाऽनुगन्तव्या एष धर्मः सनातनः[2][3] ॥४७॥

इति। उदकशब्देनोदकक्रियोच्यते । तस्या अन्तः समाप्तिः तां निर्वर्त्य आशौचं परिसमाप्य यदा स्थिताः तदा द्विजैरनुगन्तव्याः अनुसर्तव्याः इति । एवं ब्राह्मणस्यातुरक्षत्रियवैश्यानुसरणं क्षत्रियस्याप्यातुरवैश्यानुसरणमाशौचानन्तरमेवेत्यूहनीयम् । आशौचमध्ये[4] आतुरव्यञ्जने त्वाशौचमस्ति । तत्र ब्राह्मणमरणविषयातुरव्यञ्जने[5] पारस्करः-

'अस्थिसञ्चयनादर्वाग् रुदित्वा स्नानमाचरेत् ।
अन्तर्दशाहे विप्रस्य ऊर्ध्वमाचमनं स्मृतम्'॥

इति । विप्रस्य मृतस्य दशाहाभ्यन्तरे ऽस्थिसञ्चयनादर्वाग् ब्राह्मणः क्षत्रियादिर्वाऽऽतुरव्यञ्जनं कृत्वा स्नानमाचरेत् । तत ऊर्ध्वमाचमनमाचरेदिति । क्षत्रियमरणविषयातुरव्यञ्जने क्षत्रियादीनां वैश्यमरणविषयातुरव्यञ्जने वैश्य-शूद्रयोश्च प्रागस्थिसञ्चयनात् सचैलं स्नानम् । तत ऊर्ध्वं स्नानमात्रमेव । एतत्सर्वं ब्रह्मपुराणे ऽभिहितम्'-

---

१. Aparârka reads विनिवृत्ताः. २. M. reads इति धर्मविदो विदुः for एष धर्मः सनातनः. ३. M. has the following verse after this couplet—

तस्मात् द्विजो मृतं शूद्रं न स्पृशेन्न च दाहयेत् ।
दृष्टे सूर्यविलोकेन शुद्धिरेषा पुरातनी ॥

However neither any one of the commentaries nor the MSS. contains this verse. ४. C. and F. insert तु after -मध्ये. ५. D. reads -अनुरञ्जने for -व्यञ्जने.

'मृतस्य यावदस्थीनि ब्राह्मणस्याहृतानि तु ।
तावद्यो ऽबान्धवस्तत्र रौति तद्बान्धवैः सह ॥
तस्य स्नानाद्भवेच्छुद्धिस्ततस्त्वाचमनं स्मृतम् ।
सचैलं स्नानमन्येषामकृते त्वस्थिसञ्चये ॥
कृते तु केवलं स्नानं क्षत्र-विट्-शूद्रजन्मनाम्' ।

इति । ब्राह्मणस्य क्षत्रिय-वैश्यमरणविषयाश्रुव्यञ्जने अस्थिसञ्चयनादर्वागेकाहमाशौचं सचैलं स्नानं च । तत ऊर्ध्वं सचैलं स्नानमात्रम् । तथा च ब्रह्मपुराणम्—

'अस्थिसञ्चयने विप्रो रौति चेत् क्षत्र-वैश्ययोः ।
तदा स्नातः सचैलस्तु द्वितीये ऽहनि शुद्ध्यति ॥
कृते तु सञ्चये विप्रः स्नानेनैव शुचिर्भवेत्' ।

इति । क्षत्रियस्य वैश्यमरणविषयाश्रुव्यञ्जने विशेषाश्रवणे ऽपि ब्राह्मणस्य[1] समनन्तरक्षत्रियमरणविषयाश्रुव्यञ्जने[2] यदाशौचं विवक्षितं तदेवात्रेति न्यायतो ऽवगम्यते[3] । शूद्रमरणविषयाश्रुव्यञ्जने ऽस्थिसञ्चयनात् प्राक् ब्राह्मणस्य त्रिरात्रमाशौचम् । क्षत्रिय-वैश्ययोर्द्विरात्रम् । तत ऊर्ध्वं द्विजातीनामेकरात्रमेव । शूद्रस्य[4] स्पर्शं विनाऽऽश्रुव्यञ्जने ऽस्थिसञ्चयनादर्वागेकरात्रमाशौचम् । तत ऊर्ध्वं सज्ज्योतिराशौचमिति । तथा च पारस्करः—

'अस्थिसञ्चयनादर्वाग्यदि विप्रो ऽश्रु पातयेत् ।
मृते शूद्रे गृहं गत्वा त्रिरात्रेण विशुद्ध्यति ॥

---

१. H. reads ब्राह्मणसमनन्तर–. २. E. omits -विषयाश्रुव्यञ्जने यदाशौचं.
३. B C. and F. read वा गम्यते, and for the same I. reads ऽत्रावगम्यते.
४. All, except A. B. and E., read शूद्रस्पर्शं.

अस्थिसञ्चयनादूर्ध्वं मासो[1] यावद्द्विजातयः ।
अहोरात्रेण शुद्ध्यन्ति वाससः[2] क्षालनेन च ॥
संजातेर्दिवसेनैव[3] व्यहात् क्षत्रिय-वैश्ययोः ।
स्पर्शं विनाऽनुगमने शूद्रो नक्तेन शुद्ध्यति' ॥

इति[4] । अत्राश्रुपात आतुरव्यञ्जनमात्रोपलक्षणार्थः । सजातेः शूद्रस्यास्थिसञ्चयनादर्वाक् स्पर्शं विनाऽनुगमने आतुरव्यञ्जने दिवसेनाहोरात्रेण शुद्धिः । तत ऊर्ध्वं नक्तेन । रात्रौ चेद्राऽऽत्र्या अहनि चेदह्ना शुद्धिरिति । एतच्च[5] शवनिर्हरणानुगमन-सहातुरव्यञ्जनादिनिमित्तमाशौचमसपिण्डानाम् । सपिण्डानां तु विहितत्वात् नास्ति । तथा च हारीतः—

'विहितं हि सपिण्डस्य प्रेतनिर्हरणादिकम् ।
दोषः स्यादसपिण्डस्य[6] तत्रानाथक्रियां[7] विना' ॥

इति । प्रेतनिर्हरणादिकमित्यत्रादिशब्देन दाहोदकदानादिकमुच्यते । अनुगमादिविधिस्तु[8] याज्ञवल्क्येन दर्शितः—

'आ श्मशानादनुव्रज्य इतरो ज्ञातिभिर्वृतः ॥ (१)
यमसूक्तं तथा गाथा[9] जपद्भिर्लौकिकाग्निना ।
स[10] दग्धव्य उपेतश्चेदाहिताग्न्यावृतार्थवत्*' ॥
(या. स्मृ. ३. १–२)

* आवृतिः प्रक्रिया । 'आहिताग्न्यावृता आहिताग्नेर्दानप्रक्रियया'–इति विज्ञानेश्वरः ।

१. I. reads मासं. २. A. reads वाससां. ३. B. reads स जातदिवसेनैव. ४. A. and D. omit इति. ५. I. reads एवं. ६. H. and I. read स्यात्त्वसपिण्डस्य. ७. I. reads तच्च. ८. I. omits तु. ९. Except A. and the text all read गाथां. १०. I. reads this line as follows:—
सद्यःशौचा उपेतश्चेदाहिताग्निर्यथार्थवत् ।

इति। ऊनद्विवर्षादितरः सम्पूर्णद्विवर्षो मृतो ज्ञातिभिः सपिण्डैः श्मशानभूमिं यावदनुगन्तव्यः। तथा यमसूक्तं परेयुवांसमिति षोडशर्चं तथा यमदैवत्या[१] गाथाश्च जपद्भिर्लौकिकाग्निना स दग्धव्यः[२]। उपेत उपनीतश्चेन्मृतः तदा आहिताग्निसंस्कारप्रकारेणार्थवत् प्रयोजनवद्यथा भवति तथा[३] दग्धव्यः। अयमभिप्रायः—येषां भूशोधन-प्रोक्षणादीनामाहिताग्निविहितसंस्काराणां करणमर्थवत्[४] द्वारकार्यरूपं[५] प्रयोजनमस्ति तान्यननुष्ठेयानि। यानि तु लुप्तार्थानि पात्र-प्रयोजनादीनि[६] तान्यनुष्ठेयानि। यथा कृष्णलेष्वतिदेशप्राप्तेष्ववघात-प्रोक्षणादिषु द्वारलोपादवघातादीनामननुष्ठानं प्रोक्षणादीनां त्वनुष्ठानमिति। अत्र लौकिकाग्निग्रहणं जातारणेरभावे। तत्सद्भावे तु तन्मथितो[७]ऽग्निर्ग्राह्यः। न तु लौकिकाग्निः। तस्याग्निसम्पाद्यकार्यमात्रार्थत्वेनोपपत्तेः। लौकिकाग्निश्चण्डालाग्न्यादिव्यतिरिक्तो ग्राह्यः। तेषां निषिद्धत्वात्। तथा च देवलः—

'चण्डालाग्निरमेध्याग्निः सूतिकाग्निश्च[८] कर्हिचित्।
पतिताग्निश्चिताग्निश्च न शिष्टग्रहणोचिताः' ॥

इति। आहिताग्निस्तु श्रौताग्निना[९] दग्धव्यः। अनाहिताग्निर्गृह्याग्निना। इतरो लौकिकेन। तदाह वृद्धयाज्ञवल्क्यः—

'आहिताग्निर्यथान्यायं दग्धव्यस्त्रिभिरग्निभिः।
अनाहिताग्निरेकेन लौकिकेनेतरो जनः' ॥

---

१. I. reads -दैवत्यां गाथां च. २. B. C. E. F. G. and H. add च to दग्धव्यः. ३. B. C. and F. insert च after तथा. ४. Except A. and I. all omit करणमर्थवत्. ५. B. C. E. F. G. and H. read द्वारं कार्यरूपं; while H. reads द्वारं कार्यरूपप्रयोजनम्. ६. H. reads पात्रप्रयोजनादीनि. ७. I. reads तस्मिन् मथितो; while G. omits तत्. ८. D. G. and I. read सूतकाग्निः. ९. D. reads वैतानाग्निना.

इति। एकेन गृह्याग्निना। दाहश्च स्नपनाद्यनन्तरं कर्त्तव्यः। तथा च कात्यायनः—

'दुर्बलं स्नापयित्वा च[1] शुद्धचैलाभिसंवृतम्।
दक्षिणाशिरसं भूमौ बर्हिष्मत्यां निवेशयेत्॥ (३)
घृतेनाभ्यक्तमाप्लाव्य[2] सवस्त्रं चो[3]पवीतिनम्।
चन्दनोक्षितसर्वाङ्गं सुमनोभि[4]र्विभूषयेत्॥ (४)
हिरण्यशकलान्यस्य क्षिप्त्वा छिद्रेषु सप्तसु।
मुखे[5] वस्त्रं निधायैनं निर्हरेयुः सुतादयः॥ (५)
आमपात्रेऽन्नमादाय प्रेतमग्निपुरःसरम्।
एकोऽनुगच्छन् तस्यार्धमर्धपथ्युत्सृजेद्भुवि॥ (६)
अर्धमादहनं प्राप्तमासीनो दक्षिणामुखः।
सव्यं जान्वाच्य शनकैः सतिलं पिण्डदानवत्'॥ (७)
(का॰ स्मृ॰ ३. २१. ३–७)

इति। पिण्डदानविधिना आदहनं श्मशानपर्यन्तमानीतमन्नं प्रक्षिपेदित्यर्थः। दाहानन्तरं चितिमनवेक्षमाणा ज्ञातयो जलसमीपं गत्वा स्नात्वोदकं सकृत् त्रिर्वा दद्युः। तथा च कात्यायनः—

'अथानवेक्षमेत्यापः सर्व एव शवस्पृशः।
स्नात्वा सचैलमाचम्य दद्युरस्योदकं स्थले॥
गोत्र[6]-नामपदान्ते च तर्पयामीत्यनन्तरम्।
दक्षिणाग्रान् कुशान् कृत्वा सतिलं तु पृथक् स[7]कृत्॥
(का॰ स्मृ॰ ३. २२. १–२)

१. The text has तु for च. २. We follow here A. and the text. Others read आप्लुत्य. ३. The text omits च. ४. The text reads विभूषितम्. ५. The text reads मुखेष्वथापिधायैनं. ६. The text reads -नामानुवादान्ते. ७. The text reads पृथक् for सकृत्.

इति । पैठीनसिरपि—

'प्रेतं मनसा ध्यायन् दक्षिणाभि-
मुखस्त्रीनुदकाञ्जलीन्निनयेत्' ।

इति । एतच्चायुग्मतिथिषु कार्यम् ।

'प्रथम-तृतीय-पञ्चम-सप्तम-नवमेषूदकक्रिया' ।
(गौ. स्मृ. १४. १९)

इति गौतमस्मरणात् । प्रेतोपकारविशेषापेक्षया तु यावन्त्याशौचदिनानि तावदुदकदानावृत्तिः कार्या । तथा च प्रचेताः—

'दिने दिनेऽञ्जलीन् पूर्णान् प्रदद्यात् प्रेतकारणात् ।
तावद्वृद्धिश्च कर्त्तव्या यावत्पिण्डः समाप्यते'॥

इति । यावद्दशमः पिण्डः समाप्यते तावदञ्जलिवृद्धिः कार्येत्यर्थः । अत्रापरो विशेषस्तेनैवोक्तः—

'नदीकूलं ततो गत्वा शौचं कृत्वा यथार्थवत् ।
वस्त्रं संशोधयेदादौ ततः स्नानं समाचरेत् ॥
सचैलस्तु ततः स्नात्वा शुचिः प्रयतमानसः ।
पाषाणं तत आदाय विप्रे दद्यात् दशाञ्जलीन् ॥
द्वादश क्षत्रिये दद्याद्वैश्ये पञ्चदश स्मृताः ।
त्रिंशच्छूद्राय दातव्यास्ततः सम्प्रविशेद्गृहम् ॥
ततः स्नानं पुनः कार्यं गृहशौचं च कारयेत्' ।

इति । अज्ञातिभिरपि क्वचित् उदकदानं कर्तव्यम् । तदाह याज्ञवल्क्यः—

१. D. reads युग्म- for अयुग्म -through mistake.

'एवं मातामहाचार्यप्रेतानामुदकक्रिया।
कामोदकं सखि-प्रत्ता-स्वस्रीय-श्वशुरर्त्विजाम्'॥
(या. स्मृ. ३. ४)

इति। प्रत्ता परिणीतदुहितृभगिन्यादिः। स्वस्रीयो भागिनेयः। अत्र प्रेतानां मातामहादीनां सपिण्डवदुदकदानं नित्यं कार्यम्। सख्यादीनां तु कामतः। न नित्यतया। अकरणे प्रत्यवायाभावादिति। उदकदानानन्तरं पिण्डदानमपि कर्त्तव्यम्। तथा च विष्णुः—

'प्रेतस्योदकनिर्वपणं कृत्वा एकं च पिण्डं कुशेषु दद्युः'।
( वि. स्मृ. १९. ७ )

इति। पिण्डोदकदानं च यावदाशौचं कार्यम्। तदाह स एव—

'यावदाशौचं तावत्प्रेतस्योदकं पिण्डमेकं च दद्युः'।
(वि. स्मृ. १९. १३)

इति। वर्णानुक्रमेण पिण्डसङ्ख्यानियमः पारस्करेणोक्तः—

'ब्राह्मणे दश पिण्डास्तु क्षत्रिये द्वादश स्मृताः।
वैश्ये पञ्चदश प्रोक्ताः शूद्रे त्रिंशत् प्रकीर्तिताः'॥

इति। आशौचह्रासे 'यावदाशौचम्'-इति विष्णुवचनात् पिण्डस[illegible] शातातपः—

'आशौचस्य च ह्रासे ऽपि पिण्डान् दद्यात् दशैव तु'।

इति। त्रिरात्राशौचपक्षे दशपिण्डदानप्रकारः पारस्करेण दर्शितः—

१. The text omits च. H. inserts this च after पिण्डम्. २. Except A. and the text all omit एकं. H. omits the same with the following च. ३. I. reads स्युः for तु.

'प्रथमे दिवसे देयास्त्रयः पिण्डाः समाहितैः।
द्वितीये चतुरो दद्यादस्थिसञ्चयनं तथा॥
त्रींस्तु दद्यात् तृतीये ऽह्नि वस्त्रादीन् क्षालयेत् तथा'।

इति। उदकदानवत्पिण्डदानं न सर्वैः कर्त्तव्यम्। अपि तु पुत्रेणैव। तदभावे सन्निहितेन सपिण्डेन। तदभावे मातृसपिण्डादिना। तदाह गौतमः—

'पुत्राभावे सपिण्डा मातृसपिण्डाः शिष्याश्च दद्युः। (२५) तदभावे ऋत्विगाचार्यौ'। (२६)

(गौ. स्मृ. १५. २५–२६)

इति। पुत्रेष्वपि ज्येष्ठ एव पिण्डं दद्यात्। तथा च मरीचिः—

'सर्वैरनुमतिं कृत्वा ज्येष्ठेनैव तु यत्कृतम्।
द्रव्येण वाऽविभक्तेन[1] सर्वैरेव कृतं भवेत्'॥

इति। यदा तु पुत्राऽसन्निधानादिनाऽन्यः पिण्डदानं करोति तदा दशाहमध्ये पुत्रसान्निध्ये ऽपि स एव दशाहं पिण्डं दद्यात्। तदुक्तं गृह्यपरिशिष्टे—

'असगोत्रः सगोत्रो वा यदि स्त्री यदि वा पुमान्।
प्रथमे ऽहनि यः कुर्यात् स दशाहं समापयेत्'॥

इति। यथा दशाहं पिण्डदाने कर्तृनियमः तथा द्रव्यनियमो ऽपि। तदाह शुनःपुच्छः—

'शालिना सक्तुभिर्वाऽपि शाकैर्वाऽप्यथ निर्वपेत्।
प्रथमे ऽहनि यद्द्रव्यं तदेव स्याद्दशाहिकम्'॥

---

१. B. C. and F. read चाऽविभक्तेन; while H. reads द्रव्येणैवाऽविभक्तेन.
२. I. omits तु

इति । यदा तु दशाहमध्ये दर्शपातस्तदा दर्श एवोत्तरं तन्त्रं पिण्डोदकदानरूपं समापयेत् । तदाह ऋष्यशृङ्गः—

'आशौचमन्तरा दर्शो यदि स्यात् सर्ववर्णिनः ।
समाप्तिं प्रेततन्त्रस्य कुर्युरित्याह गौतमः' ॥

इति । भविष्यपुराणे ऽपि—

'प्रवृत्ताशौचतन्त्रस्तु यदि दर्शं प्रपद्यते ।
समाप्य चोदकं पिण्डान् स्नानमात्रं समाचरेत्' ॥

इति । पैठीनसिरपि—

'आद्यैन्दाविव कर्त्तव्या प्रेतपिण्डोदकक्रिया ।
द्वैरैन्दवे तु कुर्वाणः पुनः शावं समश्नुते' ॥

इति । माता-पितृविषये तु विशेषो गालवेनोक्तः—

'पित्रोराशौचमध्ये तु यदि दर्शः समापतेत् ।
तावदेवोत्तरं तन्त्रं पर्यवस्येत् त्र्यहात् परम्' ॥

इति । पित्रोराशौचमध्ये तु त्रिरात्रात्परं यदि दर्शः समापतेत् तदैवोत्तरं तन्त्रं दर्शे समापयेत् नार्वाग्दर्शपाते । यत्तु श्लोक-गौतमेनोक्तम्—

'अन्तर्दशाहे दर्शे तु तत्र सर्वं समापयेत् ।
पित्रोस्तु यावदाशौचं दद्यात् पिण्डान् जलाञ्जलीन्' ॥

( श्लो. गौ. स्मृ. ८. ३० )

इति तत् त्रिरात्रादर्वाग्दर्शपाते वेदितव्यम् । त्र्यहात्परमिति गालवेन विशेषितत्वात् । पिण्डोदकदानानन्तरं बान्धवैरातुराश्वासनं कार्यम् । तथा च याज्ञवल्क्यः—

१. D. reads भविष्यत्पुराणे ऽपि. २. H. reads दर्शः. ३. H. and I. read पिण्डं. ४. D. and I. read दर्शपाते.

'कृतोदकान्समुत्तीर्णान् मृदुशाद्वलसंस्थितान् ।
स्नातानपवदेयुस्तानितिहासैः पुरातनैः' ॥

( या. स्मृ. ३. ७ )

इतिहासस्तु तेनैव दर्शितः—

'मानुष्ये कदलीस्तम्भनिःसारे सारमार्गणम् ।
करोति यः स सम्मूढो जलबुद्बुदसन्निभे ॥
पञ्चधा सम्भृतः कायो यदि पञ्चत्वमागतः ।
कर्मभिः स्वशरीरोत्थैस्तत्र का परिदेवना ॥
गन्त्री वसुमती नाशमुदधिर्दैवतानि च ।
फेनप्रख्यः कथं नाम मर्त्यलोको[2] न यास्यति'॥

( या. स्मृ. ३. ८–१० )

इति । कात्यायनो ऽपि—

'एवं कृतोदकान् सम्यक् सर्वान् शाद्वलसंस्थितान् ।
आप्लुतान् पुनराचान्तान्वदेयुस्ते ऽनुयायिनः ॥
मा शोकं कुरुताऽनित्ये सर्वस्मिन् प्राणधर्मिणि ।
धर्मं कुरुत यत्नेन यो वः सहगमिष्यति' ॥

(का. स्मृ. ३. २२. ३–४ )

इति । शोके दोषो ऽपि याज्ञवल्क्येन दर्शितः—

'श्लेष्माश्रु बान्धवैर्मुक्तं प्रेतो भुङ्क्ते यतो ऽवशः ।
अतो न रोदितव्यं हि क्रियाः कार्याः स्वशक्तितः'[4] ॥

( या. स्मृ. ३. ११ )

---

१. I. reads कदलीस्तम्भे. २. D. reads मर्त्यलोके. ३. B. C. D. E. F. G. and H. read मरिष्यति; while I. reads करिष्यति. ४. Except A. and the text all read प्रयत्नतः.

इति। आतुराश्वासनानन्तरकृत्यं याज्ञवल्क्येनोक्तम्–

'इति सञ्चिन्त्य गच्छेयुर्गृहं बालपुरःसराः।
विदश्य[1] निम्बपत्राणि नियता द्वारि वेश्मनः[2]॥
आचम्याग्न्यादि सलिलं गोमयं गौरसर्षपान्।
प्रविशेयुः समालभ्य कृत्वाऽश्मनि पदं शनैः'॥

(या. स्मृ. ३.१२-१३)

इति। अत्रापरो विशेषः शङ्खेन दर्शितः–

'दूर्वाप्रवालमग्निं वृषभं चालभ्य गृहद्वारे
प्रेताय पिण्डं दत्त्वा पश्चात् प्रविशेयुः'।

इति। आशौचनियमा मनुना दर्शिताः–

'अक्षारलवणान्नाः स्युर्[3]निमज्जेयुश्च ते त्र्यहम्[4]।
मांसाशनं च नाश्नीयुः शयीरंश्च पृथक् क्षितौ'॥

(म. स्मृ. ५. ७३)

इति[5]। मार्कण्डेयेनापि[6]–

'क्रीत-लब्धाशनाश्चैव भवेयुः सुसमाहिताः।
न चैव मांसमश्नीयुर्व्रजेयुर्न च योषितम्'॥

इति। गौतमेनापि–

'अधःशय्यासना ब्रह्मचारिणः[7] सर्वे समासीरन्।(२७)
मांसं न भक्षयेयुरा[8]प्रदानात्। (२८) प्रथम-

---

१. D. substitutes निर्दिश्य for विदश्य. २. B. C. F. and I. read द्वारवेश्मनः. ३. D. and H. read -लवणान्वा स्युः, but H. has the marginal reading लवणान्नाः स्युः. ४. We follow here A. and the text. All others read ऽन्वहम् for त्र्यहम्. ५. D. omits इति. ६. D. reads मार्कण्डेयोऽपि. ७. The text reads अधःशय्यासनिनः. ८. The text reads न मार्जयेरन्.

तृतीये-पञ्चम-सप्तम-नवमेषूदककर्म। (२९) नवमे वाससां त्यागः। (३०) अन्त्ये त्वन्त्यानाम्'। (३१)

(गौ. स्मृ. १४. २७-३१)

इति। प्रदानं महैकोद्दिष्टश्राद्धम्। वाससां त्यागस्तु प्रक्षालनार्थं रजकार्पणम्। अन्त्यं दशममहः। तत्र अन्त्यानामत्यन्तपरित्याज्यानां वाससां त्याग इत्यर्थः। प्रथमेऽहनि प्रेतमुद्दिश्य जले क्षीरं चाकाशे शिक्यादौ पात्रद्वये स्थापनीयम्। तदाह याज्ञवल्क्यः—

'जलमेकाहमाकाशे स्थाप्यं क्षीरं च मृण्मये'।

(या. स्मृ. ३. १७)

इति। प्रथम-तृतीय-सप्तम-नवमदिवसानामन्यतमस्मिन्नस्थिसञ्चयनं कार्यम्। तदाह संवर्त्तः—

'प्रथमेऽह्नि तृतीये वा सप्तमे नवमे तथा।
अस्थिसञ्चयनं कार्यं दिने तद्गोत्रजैः सह'॥

(सं. स्मृ. १३९-४०)

---

१. Except A. and the text all omit -पञ्चम-, but this is a mistake. The word पंचम does not appear in four of the manuscripts of the text I am not able to say whether the commentator हरदत्त takes this word or not. His comment is quite doubtful, but विज्ञानेश्वर takes this word (see 3. 3 commentary of याज्ञवल्क्य). २. The text reads -नवमेषूदकक्रिया वाससां च त्यागः for नवमेषूदककर्म। नवमे वाससां त्यागः. D. omits-षूदककर्म। नवमे. ३. I. reads प्रेतैकोद्दिष्ट-. ४. D. omits the following:– वाससां त्यागस्तु प्रक्षालनार्थं रजकार्पणम्। अंत्यं दशममहः। तत्र अंत्यानामत्यन्तपरित्याज्यानां. ५. The text substitutes च for वा. ६. F. omits the following:—

* * * * कार्यं दिने तद्गोत्रजैः सह॥

इति। चतुर्थे दिवसेऽस्थिसञ्चयनमाह विष्णुः—

चतुर्थे दिवसेऽस्थिसञ्चयनम्।.

The text reads this line as follows:—

चतुर्थे सञ्चयं कुर्यात् सर्वैस्तु गोत्रजैः सह॥.

इति। चतुर्थे दिवसे ऽस्थिसञ्चयनमाह विष्णुः—

'चतुर्थे दिवसे ऽस्थिसञ्चयनं कुर्युः। (१०)

तेषां गङ्गाम्भसि प्रक्षेपः'। (११)

(वि. स्मृ. १९. १०–११)

इति। अस्थिसञ्चयने तिथि-वार-नक्षत्रनिषेधो यमेनोक्तः—

'भौमार्क-मन्दवारेषु तिथियुग्मेषु वर्जयेत्।

वर्जयेदेकपादर्क्षे द्विपादर्क्षे ऽस्थिसञ्चयम्॥

प्रदातृजन्मनक्षत्रे त्रिपादर्क्षे विशेषतः'।

इति। वृद्धमनुः—

'वस्वन्ताधादितः पञ्चनक्षत्रेषु त्रिजन्मसु।

द्वि-त्रिपादृक्षयोश्चैव नन्दायां च विशेषतः॥

अजचरणादिद्वितीये ह्याषाढाद्वयमेव च।

पुष्ये च हस्तनक्षत्रे फल्गुनीद्वयमेव च॥

भानु-भौमार्कि-भृगुषु अयुग्मतिथि-सन्ध्ययोः।

चतुर्दश्यां त्रयोदश्यां नैधने च विवर्जयेत्॥

अस्थिसञ्चयनं कार्यं कुलक्षयकरं भवेत्'।

१. D. omits चतुर्थे दिवसे ऽस्थिसञ्चयनं कुर्युः. २. Except A. and I. all omit तिथि-. ३ Except A. D. E. and H. all read -ऽप्यनेनोक्तः for यमेनोक्तः. Kamalâkara Bhatta quotes the following lines as from माधवीये यमः. (vide Nirṇaya Sindhu, Aurdhvadehikaprakaraṇam). ४. The following quotation appears only in A. and I., It does not appear even in Aparârka, Vijnâneśvara Kamalâkara Bhatta &c.. ५. A. reads विशेषतः for विवर्जयेत्.

इति । वापनं दशमे ऽहनि कार्यम् । तदाह देवलः—

'दशमे ऽहनि सम्प्राप्ते स्नानं ग्रामाद्बहिर्भवेत् ।
तत्र त्याज्यानि वासांसि केश-श्मश्रु-नखानि च' ॥

इति । स्मृत्यन्तरे तु एकादशाहादर्वागनियमेन वापनं कार्यमित्युक्तम्—

'द्वितीये ऽहनि कर्त्तव्यं क्षुरकर्म प्रयत्नतः ।
तृतीये पञ्चमे वाऽपि सप्तमे वा ऽऽप्रदानतः' ॥

इति । प्रदानमेकादशाहिकं श्राद्धम् । अत्र 'आप्रदानतः'—इति वचनात् अनियमोऽवगम्यते । बौधायनेनापि—

'अलुप्तकेशो यः पूर्वं सोऽत्र केशान् प्रवापयेत् ।
द्वितीये ऽह्नि तृतीये ऽह्नि पञ्चमे सप्तमे ऽपि वा ॥
यावच्छ्राद्धं प्रदीयेत तावदित्यपरं मतम्' ।

इति । वापनं च पुत्राणां कनिष्ठभ्रातॄणां च । तथा चापस्तम्बः—

'अनुभाविनां च परिवापनम्' ।

( आ. ध. सू. १. ३. १०. ६ )

इति । अनु पश्चाद्भवन्ति जायन्ते इति पुत्राः कनिष्ठभ्रातरश्च । अथवा । अनुभाविन इति पुत्रा एव निर्दिश्यन्ते—

'गङ्गायां भास्करक्षेत्रे माता-पित्रोर्गुरोर्मृतौ ।
आधानकाले सोमे च वपनं सप्तसु स्मृतम्' ॥

---

१. G. reads वपनं. २. D. reads बौधायनोऽपि. ३. G. reads प्रवापयेत

इत्यत्र 'माता-पित्रोर्मृतौ' इति विशेषेणोपादानात् । एवं हि[1] नियतः सन् सर्वो ऽपि स्वाशौचान्ते पिण्डोदकदानं समापयेत् । तदेकोद्दिष्टं तु श्राद्धमेकादशे ऽह्नि कुर्यात्[2] । तथा च मरीचिः—

'अशौचान्ते ततः सम्यक् पिण्डदानं समाप्यते ।
ततः श्राद्धं प्रदातव्यं सर्ववर्णेष्वयं विधिः' ॥

इति । आशौचानन्तरमेकादशे ऽह्नि ब्राह्मणः एकोद्दिष्टश्राद्धं कुर्यात् । एकोद्दिष्टमेकादशे ऽहनि कुर्यादित्ययं विधिः सर्ववर्णेषु क्षत्रियादिषु समान इत्यर्थः ।

ननु—आशौचसमाप्त्यनन्तरमेवैकोद्दिष्टविधिः सर्वेष्वपि वर्णेषु किं न स्यात् ? । एकादशे ऽह्नि अधिककालाशौचिनां क्षत्रियादीनां शुद्ध्यभावात् ।

'शुचिना कर्म कर्त्तव्यम्' ।

इति शुद्धेः कर्माङ्गत्वेन विधानात् ।

'अथाऽऽशौचापगमे'[3] ।

( वि. स्मृ. २१. १ )

इति साधारण्येनोपक्रम्यैकोद्दिष्टस्य विष्णुनाऽभिहितत्वाच्च[4] ।

'आद्यश्राद्धमशुद्धो ऽपि कुर्यादेकादशे ऽहनि ।
कर्त्तुस्तात्कालिकी शुद्धिरशुद्धः पुनरेव सः' ॥

इति शङ्खवचनेनाशौचमध्ये एकादशे ऽह्नि एकोद्दिष्टविधानान्मैवमिति[5] चेत् । न । मातर्यग्रे प्रमीतायां तदाशौचमध्ये यदि

१. D. G. and I. omit हि. २. B. C. and F. read यदेकोद्दिष्टं श्राद्धं तदेकादशेऽह्नि. ३. The text reads ऽऽशौचव्यपगमे for ऽऽशौचापगमे. ४. I. reads विहितत्वात् for ऽभिहितत्वात्. ५. B. C. and F. read नैवम् for मैवम्.

पिता त्रियेत ततो मातुरेकोद्दिष्टश्राद्धमेकादशेऽह्नि अशुद्धोऽपि कुर्यादिति विषयान्तरसम्भवात्। यत्तु—

'एकादशेऽह्नि यच्छ्राद्धं तत्सामान्यमुदाहृतम्।
चतुर्णामपि वर्णानां सूतकं तु पृथक् पृथक्' ॥

इति पैठीनसिवचनं तस्यायमर्थः—आशौचानन्तरदिने यच्छ्राद्धं विहितं तच्चतुर्णामपि वर्णानां साधारणम्। न ब्राह्मणस्यैवेति। कथं तर्ह्येकादशाहशब्दस्योपपत्तिः? इति चेत्। न। लक्षणया तस्याशौचानन्तरदिनपरत्वेनोपपत्तेः।

अत्रोच्यते—एकादशाहकालविशिष्टमेकोद्दिष्टश्राद्धं चतुर्णां वर्णानां विधीयते।

'न विधौ परः शब्दार्थः'।

इति न्यायेनैकादशाहशब्दस्य लक्षणयाऽऽशौचानन्तरदिनपरत्वानुपपत्तेः। सति मुख्ये वृत्त्यन्तरकल्पनाया अन्याय्यत्वाच्च एकादशाह एव क्षत्रियादिभिरप्येकोद्दिष्टश्राद्धं कर्त्तव्यम्। ननु-एकादशेऽह्नि क्षत्रियादीनां शुद्ध्यभावाच्छ्राद्धेऽधिकारो नास्ति इत्युक्तमिति चेत्। न।

'कर्त्तुस्तात्कालिकी शुद्धिः'।

इति वचनात्तात्कालिक्याः शुद्धेः सत्त्वात्। यत्तु शङ्खवचनस्याशौचमध्ये आशौचान्तरप्राप्तावेकोद्दिष्टमेकादशेऽह्नि अशुद्धोऽपि[1] कुर्यादिति विषयविशेषे तात्पर्यमुक्तम्। तन्न। तत्रापि शुद्ध्यभावादित्यस्य चोद्यस्य समानत्वात्। सामान्येन प्रवृत्तस्य शङ्खवचनस्य विना कारणं विशेषपरत्वेन सङ्कोचायोगाच्च। यत्तूक्तं अथाशौचापगम—इति सामान्येनोपक्रम्य विष्णुनैकोद्दिष्टवि-

१. D. reads अशुद्धेऽपि.

धानादाशौचानन्तरमेव सर्वैरेकोद्दिष्टं कर्त्तव्यमिति। तन्न। विष्णुवचनस्य दशाहाशौचिब्राह्मणविषयत्वेनोपपत्तेः। तस्मादेकादशाह एव क्षत्रियादिभिरप्येकोद्दिष्टं कर्त्तव्यमिति सुष्ठूक्तम्।

## अथ संगृहीतश्राद्धनिर्णयः प्रपञ्च्यते।

प्रेतोद्देशेन श्रद्धया द्रव्यत्यागः श्राद्धम्। तदुक्तं ब्रह्मपुराणे—

'देशे काले च पात्रे च श्रद्धया विधिना च यत्।
पितॄनुद्दिश्य विप्रेभ्यो दत्तं श्राद्धमुदाहृतम्'॥

इति। तच्च पार्वणैकोद्दिष्टभेदेन द्विविधम्। पुरुषत्रयमुद्दिश्य यत् क्रियते तत्पार्वणम्। [1]एकपुरुषोद्देशेन यत्क्रियते तदेकोद्दिष्टम्। [2]एवं द्विविधमपि श्राद्धं [3]नित्य-नैमित्तिक-काम्यभेदेन त्रिधा भिद्यते[4]। तत्र जीवनोपाधौ[5] चोदितं नित्यम्। यथा [6]अमावास्यादौ चोदितम्। अनियतनिमित्तकं नैमित्तिकम्। यथोपरागादौ। कामनोपाधिकं काम्यम्। यथा तिथि-नक्षत्रादिषु। यत्तु विश्वामित्रेण द्वादशविधत्वमुक्तम्—

'नित्यं नैमित्तिकं काम्यं वृद्धिश्राद्धं सपिण्डनम्।
पार्वणं चेति विज्ञेयं गोष्ठ्यां शुद्ध्यर्थमष्टमम्॥
कर्माङ्गं नवमं प्रोक्तं दैविकं दशमं स्मृतम्।
यात्रास्वेकादशं प्रोक्तं पुष्ट्यर्थं द्वादशं मतम्'॥

१. B. C. E. F. and H. read एकोद्देशेन यत्तदेकोद्दिष्टम् for एकपुरुषोद्देशेन यत्क्रियते तदेकोद्दिष्टम्. २. G. substitutes तत् for एवं. ३. E. reads प्रत्येकं त्रिविधम् for नित्य-नैमित्तिक-काम्यभेदेन त्रिधा भिद्यते. ४. B. C. D. F. and H. omit भिद्यते. ५. E. reads अहरहः क्रियमाणं श्राद्धं नित्यम् for जीवनोपाधौ चोदितं नित्यम्. ६. E. omits अमावास्यादौ चोदितम्. B. C. D. F. and H. read अमावास्यादौ श्राद्धम् and I. adds श्राद्धं to चोदितम्. G. reads एवंविधमपि श्राद्धम् after चोदितम्.

इति तन्नित्य-नैमित्तिक-काम्यावान्तरभेदविवक्षयैव। न तु ततः पार्थक्यविवक्षया। तथाहि—तत्र नित्यमित्यहरहः श्राद्धमुच्यते। नैमित्तिकमित्येकोद्दिष्टम्। तदाह पारस्करः—

'अहन्यहनि यच्छ्राद्धं तन्नित्यमिति कीर्त्तितम्।
वैश्वदेवविहीनं तु अशक्तावुदकेन तु॥
एकोद्दिष्टं तु यच्छ्राद्धं तन्नैमित्तिकमुच्यते।
तदप्यदैवं कर्त्तव्यमयुग्मानाशयेद् द्विजान्'॥

इति। काम्यमित्यभिमतार्थसिद्ध्यर्थम्। वृद्धिश्राद्धमिति पुत्रजन्म-विवाहादौ क्रियमाणम्। सपिण्डनं सपिण्डीकरणम्। पार्वणमिति प्रतिपर्व क्रियमाणम्। गोष्ठ्यामिति गोष्ठ्यां क्रियमाणं श्राद्धम्। तदाह वृद्धवसिष्ठः—

'अभिप्रेतार्थसिद्ध्यर्थं काम्यं पार्वणवत् स्मृतम्।
पुत्रजन्म-विवाहादौ वृद्धिश्राद्धमुदाहृतम्॥
नवानीतार्घपात्रं च पिण्डश्च परिकीर्य्यते।
पितृपात्रेषु पिण्डेषु सपिण्डीकरणं तु तत्॥
प्रतिपर्व भवेद्यस्मात् प्रोच्यते पार्वणं तु तत्।
गोष्ठ्यां यत्क्रियते श्राद्धं गोष्ठीश्राद्धं तदुच्यते॥
बहूनां विदुषां प्राप्तौ सुखार्थं पितृतृप्तये'।

इति। शुद्ध्यर्थमिति शुद्धये क्रियमाणम्। तदाह प्रचेताः—

---

१. G. omits the following portion:—
क्रियमाणम्। सपिण्डनं सपिण्डीकरणम्। पार्वणमिति प्रतिपर्व क्रियमाणम्। गोष्ठ्यामिति गोष्ठ्यां क्रियमाणं श्राद्धम्। तदाह वृद्धवसिष्ठः—
अभिप्रेतार्थसिद्ध्यर्थं काम्यं पार्वणवत् स्मृतम्।
पुत्रजन्म-विवाहादौ * * * * *॥.

२. D. reads वसिष्ठः for वृद्धवसिष्ठः. ३. D. reads -कीर्तयेत् for -कीर्य्यते.

'क्रियते शुद्धये यत्तु ब्राह्मणानां तु भोजनम्।
शुद्ध्यर्थमिति तत् प्रोक्तं श्राद्धं पार्वणवत् स्मृतम्' ॥

इति[1]। कर्माङ्गमिति यागादौ क्रियमाणम्। दैविकमिति देवानुद्दिश्य क्रियमाणम्। यात्राश्राद्धमिति प्रवेश-निर्गमयोः क्रियमाणम्। तदाह पारस्करः—

'निषेककाले सोमे च सीमन्तोन्नयने तथा।
ज्ञेयं पुंसवने श्राद्धं कर्माङ्गं वृद्धिवत्कृतम्॥
देवानुद्दिश्य क्रियते यत्तद्दैविकमुच्यते।
तन्नित्यश्राद्धवत्कुर्यात् द्वादश्यादिषु यत्नतः॥
गच्छन् देशान्तरं यद्धि श्राद्धं कुर्यात्तु सर्पिषा।
तद्यात्रार्थमिति प्रोक्तं प्रवेशे च न संशयः' ॥

इति। अत्र[2] कर्माङ्गमिति वचनमकरणे कर्मवैगुण्यज्ञापनार्थम्। सर्पिषा सर्पिः प्रधानकेनेत्यर्थः। अन्वर्थे केवलेन तृप्तेरसम्भवात्॥

## अथ[3] देशकथनम्।

श्राद्धं च दक्षिणाप्रवणे गोमयाद्युपलिप्ते देशे कार्यम्। तथा च विष्णुधर्मोत्तरे—

'दक्षिणाप्रवणे देशे तीर्थादौ वा गृहेऽपि वा।
भूसंस्कारादिसंयुक्ते श्राद्धं कुर्यात्प्रयत्नतः' ॥

(वि. ध. १.१४४.१३)

१. I. omits इति. २. Except A. and I. all omit the following:— अत्र कर्माङ्गमिति वचनमकरणे कर्मवैगुण्यज्ञापनार्थम्। सर्पिषा सर्पिःप्रधानकेनेत्यर्थः। अन्वर्थे केवलेन तृप्तेरसम्भवात्॥.

३. All except A. H. and I. omit अथ देशकथनम.

इति । तीर्थं देवर्षिसेवितं जलम्[1] । आदिशब्देन पुण्याश्रमादि गृह्यते । भूसंस्कारो गोमयादिनोपलेपः । आदिशब्देनाशुचिद्रव्यापसारणम् । याज्ञवल्क्योऽपि—

'परिस्तृते[2] शुचौ देशे दक्षिणाप्रवणे तथा' ।

(या. स्मृ. १. २२७)

इति । परिस्तृते परितः प्रच्छादिते । शुचौ गोमयादिनोपलिप्ते । दक्षिणाप्रवणे दक्षिणोपनते देशे श्राद्धं कुर्यादित्यर्थः । स्वतो दक्षिणाप्रवणत्वासम्भवे देशस्य यत्नतो दक्षिणाप्रवणत्वं कार्यम् । तथा च मनुः—

'शुचिं देशं विविक्तं तु गोमयेनोपलेपयेत्[3] ।
दक्षिणाप्रवणं चैव प्रयत्नेनोपपादयेत्' ॥

(म. स्मृ. ३. २०६)

इति । क्रिमि-कीटाद्युपहतं देशं श्राद्धे विवर्जयेत् । तदाह यमः—

'रूक्षं क्रिमिहतं क्लिन्नं सङ्कीर्णानिष्टगन्धिकम् ।
देशं त्वनिष्टशब्दं च वर्जयेच्छ्राद्धकर्मणि' ॥

इति । क्लिन्नं[4] सपङ्कम् । सङ्कीर्णमन्यैः सङ्कीर्णम् । मार्कण्डेयोऽपि—

---

१. G. H. and I. substitute कुलम् for जलम्. २. Except A. and the text all read परिश्रिते for परिस्तृते everywhere. ३. G. reads—

'शुचौ देशे विविक्तं तु गोमयेनोपलिप्य च ।',

and B. C. E. F. and H. read -लिप्य च for -लेपयेत्. ४. G. omits the following :—

क्लिन्नं सपङ्कम् । सङ्कीर्णमन्यैः सङ्कीर्णम् । मार्कण्डेयोऽपि—
'वर्ज्या जन्तुमयी रूक्षा क्षितिः प्लुष्टा तथाग्निना ।
अनिष्ट-दुष्ट-शब्दोग्रा दुर्गन्धा श्राद्धकर्मणि' ॥.

'वर्ज्या जन्तुमयी[1] रूक्षा क्षितिः प्लुष्टा तथाऽग्निना ।
अनिष्ट-दुष्टशब्दोग्रा[2] दुर्गन्धा श्राद्धकर्मणि' ॥

(मा. पु. ३२. १९.)

इति । कृत्रिमादिदेशेष्वपि श्राद्धं न कार्यम् । तदाह शङ्खः—

'गो-गजाश्वादिपृष्ठेषु[3] कृत्रिमायां तथा भुवि ।
न कुर्याच्छ्राद्धमेतेषु पारक्यासु[4] च भूमिषु' ॥

इति । कृत्रिमायां वेदिकादौ । पारक्यासु परपरिगृहीतासु । ताश्च गृह-गोष्ठारामादयः । न पुनस्तीर्थादिस्थानानि । तथा-चादिपुराणम्[5]—

'अटवी पर्वताः पुण्या नदीतीराणि यानि च ।
सर्वाण्यस्वामिकान्याहुर्न हि तेषु परिग्रहः ॥
वनानि गिरयो नद्यस्तीर्थान्यायतनानि च ।
देवखाताश्च[6] गर्त्ताश्च न स्वामी तेषु विद्यते' ॥

(कू. पु. १. २. २२. १७)

इति । तीर्थ-क्षेत्रविशेषेषु कृतं श्राद्धमतिशयफलप्रदं भवति[7] । तदाह देवलः—

'श्राद्धस्य पूजितो देशो गया गङ्गा सरस्वती ।
कुरुक्षेत्रं प्रयागश्च नैमिषं पुष्करं[8] तथा ॥

---

१. The text reads जन्तुमती for जन्तुमयी. २. The text reads शब्दोग्र-दुर्गन्धा चात्र for -शब्दोग्रा दुर्गन्धा श्राद्ध-. I. reads दुर्गन्धिः for दुर्गन्धा. ३. I. reads गो-गजाश्वाजपृष्ठेषु. ४. I. reads पारक्याशुचि- for पारक्यासु च. ५. D. and G. read आदित्यपुराणम्, but the following quotation appears in Kûrmapurâṇam. ६. G. and I. read देवखताश्च. ७. D. reads अतिशयफलं भवति. ८. Except A. and D. all read पुष्कराणि च, but the plural form is unnecessary here.

नदीतटेषु तीर्थेषु शैलेषु पुलिनेषु च ।
विविक्तेष्वेव तुष्यन्ति दत्तेनेह पितामहाः' ॥

इति । व्यासोऽपि—

'पुष्करे ऽप्यक्षयं श्राद्धं जप-होम-तपांसि च ।
महोदधौ प्रयागे च काश्यां च कुरुजाङ्गले' ॥

इति । शङ्खोऽपि—

'गङ्गा-यमुनयोस्तीरे पयोष्ण्यमरकण्टके ।
नर्मदा-बाहुदातीरे भृगुतुङ्गे हिमालये ॥
गङ्गाद्वारे प्रयागे च नैमिषे पुष्करे तथा ।
सन्निहत्यां गयायां च दत्तमक्षयतां व्रजेत्' ॥
( शं. स्मृ. १४. २–३ )

इति । ब्रह्माण्डपुराणेऽपि—

'नदी-समुद्रतीरे वा ह्रदे गोष्ठेऽथ पर्वते ।
समुद्रगानदीतीरे सिन्धु-सागरसङ्गमे ॥
नद्योर्वा सङ्गमे शस्तं शालग्रामशिलान्तिके ।
पुष्करे वा कुरुक्षेत्रे प्रयागे नैमिषेऽपि वा ॥
शालग्रामे च गोकर्णे गयायां च विशेषतः ।

१. Except A. all read पुष्करेष्वक्षयम्. २. These verses appear in Śankha Samhitā, but the readings are quite different. They run as follows :—

'गङ्गा-यमुनयोस्तीरे तीर्थे वाऽमरकण्टके ।
नर्मदायां गयातीरे सर्वमानन्त्यमुच्यते ॥
वाराणस्यां कुरुक्षेत्रे भृगुतुङ्गे महालये ।
सप्तारण्येऽसिकूपे च यत्तदक्षयमुच्यते' ॥

३. I. reads पयोष्ण्यमरकण्टके. ४. I. reads भृगुतुङ्गहिमालये. ५. D. and G. substitute नद्यां for शस्तं. II. reads शस्तं, but its marginal reading is राजन्.

क्षेत्रेष्वेतेषु यः श्राद्धं पितृभक्तिसमन्वितः ॥
करोति विधिवन्[1] मर्त्यः कृतकृत्यो विधीयते' ।

इति । बृहस्पतिरपि—

'कांक्षन्ति पितरः पुत्रान्नरकाऽऽपातभीरवः ।
गयां यास्यति यः कश्चित् सोऽस्मान् सन्तारयिष्यति ॥
करिष्यति वृषोत्सर्गमिष्टापूर्त्तं तथैव च ।
पालयिष्यति वृद्धत्वे श्राद्धं दास्यति चान्वहम् ॥
गयायां धर्मपृष्ठे च सदसि ब्रह्मणस्तथा ।
गयाशीर्षे वटे चैव पितॄणां दत्तमक्षयम्' ॥

इति । विष्णुरपि—

'[2]गयाशीर्षे । (४) वटे । (५) अमरकण्टकपर्वते ।
(६) यत्र क्वचन नर्मदातीरे । (८) यमुनातीरे । (९)
गङ्गायां विशेषतः ।(१०) गङ्गाद्वारे[3] ।(११) प्रयागे ।
(१२) गङ्गा-सागरसङ्गमे ।(१३) कुशावर्त्ते । (१४)
बिल्वके[4] । (१५) नीलपर्वते । (१६) कनखले[5] ।
(१७) कुब्जाम्रे[6] । (१८) भृगुतुङ्गे । (१९) केदारे ।

---

१. H. and I. read विधिना for विधिवत्. २. All, except A. and the text have rendered these Sûtrâs into a line of poetry with some slight modifications. B. C. and F. read the line as follows:—

गयातीर्थे वटे चैवाऽमरकण्टकपर्वते ।,

G. and H. have the same reading excepting -शीर्षे which they substitute for -तीर्थे, and D. differs only in reading अथ for चैव, and I. reads

गयाशीर्षे वटे चैव तीर्थे वाऽमरकण्टके ।.

३. The text omits गङ्गाद्वारे । (११) प्रयागे । (१२) गङ्गा-सागरसङ्गमे । (१३), This omitted portion appears, however, after the 2nd Sûtra. ४. The text reads बिन्दुके. for बिल्वके. ५. This Sûtrâ is not found except A. and the text. ६. D. reads कुब्जाश्रमे for कुब्जाम्रे.

(२०) महालये । (२१) नडेन्तिकायाम् । (२२) सुगन्धायाम् । (२३) शाकम्भर्याम् । (२४) फल्गुतीर्थे । (२५) महागङ्गायाम् । (२६) तन्दुलिकाश्रमे । (२७) कुमारधारायाम् । (२८) प्रभासे । (२९) यत्र क्वचन सरस्वत्यां । (३०) विशेषतो नैमिषारण्ये । (३१) वाराणस्याम् । (३२) अगस्त्याश्रमे । (३३) कण्वाश्रमे । (३४) कौशिक्याम् । (३५) शरयूतीरे । (३६) शोणस्य ज्योतीरथ्यायाश्च सङ्गमे । (३७) श्रीपर्वते । (३८) कालोदके । (३९) उत्तरमानसे । (४०) वडवायाम् । (४१) मतङ्गवाप्याम् । (४२) सप्तार्षे । (४३) विष्णुपदे । (४४) स्वर्गमार्गप्रदेशे । (४५) गोदावर्याम् । (४६) गोमत्याम् । (४७) वेत्रवत्याम् । (४८) विपाशायाम् । (४९) वितस्तायाम् । (५०) शतद्रुतीरे । (५१) चन्द्रभागायाम् । (५२) इरावत्याम् । (५३)

१. B. C. E. F. G. H. and I. read नन्दिकायाम; while D. reads ललितायाम्. २. The Calcutta edition of the text reads त्रिहलिकाग्रामे; while the Bombay edition reads त्रिहलिकाश्रमे. The commentator Nanda Pandita follows the former and also gives the Sûtrâ तन्दुलिकाश्रमे. ३. The text by adding the omitted portion shewn in footnote to these two Sûtrâs forms a couplet which runs as follows:—

गङ्गाद्वारे प्रयागे च गङ्गा-सागरसङ्गमे ।
सततं नैमिषारण्ये वाराणस्यां विशेषतः ॥

४. The text reads ज्योतिषायाः for ज्योतीरथ्यायाः, Nanda Pandita follows the former, but also alludes to the latter. ५. This Sûtrâ appears only in A. and the text. ६. All except A. and the text read सप्तर्षे. H. compounds this with the following Sûtrâ and reads सप्तार्षविष्णुपदे. ७. The text reads -पदे for -प्रदेशे.

सिन्धोस्तीरे। (५४) दक्षिणे पञ्चनदे। (५५) औजसे[1]। (५६) एवमादिष्वथान्येषु[2] तीर्थेषु। (५७) सरिद्वरासु। (५८) सङ्गमेषु[3]। (५९) प्रभवेषु[4]। (६०) पुलिनेषु। (६१) प्रस्रवणेषु। (६२) पर्वतनिकुञ्जेषु[5]। (६३) वनेषूपवनेषु[6] च। (६४) गोमयेनोपलिप्तेषु गृहेषु। (६५) मनोज्ञेषु[7] च। (६६) अत्रापि पितृगीता[8] गाथा भवन्ति। (६७)

कुलेऽस्माकं स जन्तुः स्याद्यो नो दद्याज्जलाञ्जलिम्।
नदीषु बहुतोयासु शीतलासु विशेषतः॥ (६८)
अपि जायेत सोऽस्माकं कुले कश्चिन्नरोत्तमः।
गयाशीर्षे वटे श्राद्धं यो नो दद्यात्[9]समाहितः॥ (६९)
एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत्।
यजेत वाऽश्वमेधेन नीलं वा वृषमुत्सृजेत्'॥ (७०)

(वि. स्मृ. ८५. ४–७०)

इति। गयाशीर्षप्रमाणं चादिपुराणे[10]ऽभिहितम्—

'पञ्चक्रोशं गयाक्षेत्रं क्रोशमेकं[11] गयाशिरः।
महानद्याः पश्चिमेन यावद्गृध्रेश्वरो गिरिः॥

१. The text (Calcutta edition) reads औसजे. २. All, except A. insert च before एवमा-. ३. This Sûtrâ does not appear in the text. ४. The text reads सर्वेष्वपि स्वभावेषु in the place of प्रभवेषु. ५. The text divides this Sûtrâ into two पर्वतेषु and निकुञ्जेषु. ६. D. omits उपवनेषु and the text breaks this into two Sûtrâs, वनेषु and उपवनेषु, and omits the following च. ७. I. omits मनोज्ञेषु and adds इति to च. ८. Except A. and the text all omit -गीताः; while the text reads अत्र च for अत्रापि. ९. The text reads नः कुर्यात् for नो दद्यात्. १०. D. and G. read आदित्यपुराणे. ११. E. H. and I. read क्रोशमात्रं.

उत्तरे ब्रह्मयूपस्य यावद्दक्षिणमानसम् ।
एतद्गयाशिरो नाम त्रिषु लोकेषु विश्रुतम्' ॥

इति ॥

## अथ श्राद्धकालाः ।

श्राद्धकालास्त्वमावास्याऽष्टकादयः । तदाह याज्ञवल्क्यः—

'अमावास्याऽष्टका वृद्धिः कृष्णपक्षोऽयनद्वयम् ।
द्रव्यं ब्राह्मणसम्पत्तिर्विषुवत्सूर्यसङ्क्रमः ॥
व्यतीपातो गजच्छाया ग्रहणं चन्द्र-सूर्ययोः ।
श्राद्धम्प्रति रुचिश्चैव श्राद्धकालाः प्रकीर्त्तिताः' ॥
(या. स्मृ. १. २१७–१८)

इति । यस्मिन्दिने चन्द्रमा न दृश्यते सा अमावास्या । तत्र श्राद्धं नित्यम् । तथा च लौगाक्षिः—

'श्राद्धं कुर्यादवश्यं तु प्रमीतपितृको द्विजः ।
इन्दुक्षये मासिमासि वृद्धौ प्रत्यब्दमेव च' ॥

इति । अष्टकाश्चतस्रः मार्गशीर्षादिचतुष्टयापरपक्षाष्टम्यः ।

'हेमन्त-शिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टकाः' ।

इति शौनकस्मरणात् । तत्रापि श्राद्धं नित्यम् । तदाह पितामहः—

'अमावास्या-व्यतीपात-पौर्णमास्यष्टकासु च ।
विद्वान् श्राद्धमकुर्वाणः प्रायश्चित्तीयते तु सः' ॥

इति । वृद्धिः पुत्रजन्मादिः । तेन तद्विशिष्टः कालो लक्ष्यते । कृष्णपक्षोऽपरपक्षः । अयनद्वयं दक्षिणायनमुत्तरायणं

१. Except A. and L. all read विष्णुलोकेषु for त्रिषु लोकेषु. २. G. L. द्रव्य-ब्राह्मण॰.

च। द्रव्यं कृसर-मांसादि। ब्राह्मणः श्रुताध्ययनसम्पन्नः। तयोः सम्पत्तिर्लाभो यस्मिन् काले स तथोक्तः। विषुवन्मेष-तुला-संक्रान्ती। सूर्यसंक्रमः सूर्यस्य राशे राश्यन्तरप्राप्तिः। सूर्यसंक्रमशब्देनैवायन-विषुवतोरुपादाने सिद्धे पृथगुपादानं फलातिशयज्ञापनार्थम्। व्यतीपातो योगविशेषः। महाव्यतीपातो वा।

'सिंहस्थौ गुरु-भौमौ चेन्मेषस्थे च रवौ हि वा।
द्वादशी हस्तसंयुक्ता व्यतीपातो महान्हि सः॥
श्रवणाश्वि-धनिष्ठार्द्रा-नागदैवत-मस्तकैः* ।
यद्यमा रविवारेण व्यतीपातः स उच्यते'॥

इति वृद्धमनुवचनात्। नागदैवतमाश्लेषानक्षत्रम्। मस्तकं मृगशिरः। यद्यमा अमावास्या रविवारेण श्रवणादीनामन्यतमेन नक्षत्रेण युक्ता स व्यतीपात इत्यर्थः। गजच्छायालक्षणं स्मृत्यन्तर दर्शितम्—

'यदेन्दुः पितृदैवत्ये हंसश्चैव करे स्थितः।
याम्या तिथिर्भवेत्सा हि गजच्छाया प्रकीर्तिता'॥

इति। पितृदैवत्यं मघानक्षत्रम्। हंसः सूर्यः। करो हस्तनक्षत्रम्। याम्या तिथिस्त्रयोदशी। पुराणेऽपि—

---

*अपरार्कस्तु—'नागदैवतमस्तके' इति पठित्वा 'नागदैवतं आश्लेषा। मस्तके प्रथमपादे यदि चन्द्र इत्यर्थः'—इति व्याचकार (अ. श्रा. प्रकरणं द्रष्टव्यम्)।

---

१. The first two lines of this quotation do not appear in all, except A. and I.; the last two lines are quoted by Aparârka under the name of Gârgya. २. H. reads श्रवणश्व. ३. B. C. D. E. F. and G. omit वृद्धमनुवचनात्. ४. D. reads यथा for यदा.

'हंसे हस्तस्थिते या तु मघायुक्ता त्रयोदशी ।
तिथिर्वैवस्वती नाम सा च्छाया कुञ्जरस्य तु' ॥

इति । 'ग्रहणं चंद्र-सूर्ययोः' इति ग्रहणमुपरागः । अत्रापि कालविशेषः श्राद्धाङ्गत्वेन स्वीकार्यः । तदाह वृद्धवसिष्ठः—

'त्रिदशाः स्पर्शसमये तृप्यन्ति पितरस्तथा ।
मनुष्या मध्यकाले तु मोक्षकाले तु राक्षसाः' ॥

इति । 'श्राद्धम्प्रतिरुचिः'–इति यदा श्राद्धं प्रतीच्छा तदैव कर्त्तव्यमिति । चकारेणान्ये ऽपि श्राद्धकालाः संगृह्यन्ते । अत एव यमः—

'आषाढ्यामथ कार्त्तिक्यां माघ्यां त्रीन् पञ्च वा द्विजान् ।
तर्पयेत्पितृपूर्वं तु तदस्याक्षयमुच्यते' ॥

इति । देवलो ऽपि—

'तृतीया रोहिणीयुक्ता वैशाखस्य सिता तु या ।
मघाभिः सहिता कृष्णा नभस्ये तु त्रयोदशी ॥
तथा शतभिषग्युक्ता कार्त्तिके नवमी तथा ।
इन्दुक्षय-गजच्छाया वैधृतेषु युगादिषु ॥
एते कालाः समुद्दिष्टाः पितॄणां प्रीतिवर्धनाः' ।

इति । युगादयो ऽपि श्राद्धकालाः । ते च मत्स्यपुराणे दर्शिताः—

'वैशाखस्य तृतीया तु नवमी कार्त्तिकस्य तु ।
माघे पञ्चदशी चैव नभस्ये च त्रयोदशी ॥
युगादयः स्मृता ह्येता दत्तस्याक्षयकारकाः' ।
(म. पु. १७. ४–६)

१. The text reads पञ्चदशी च माघस्य for माघे पञ्चदशी चैव.

इति । विष्णुपुराणे ऽपि–

'वैशाखमासस्य च[1] या तृतीया
नवम्यसौ कार्त्तिकशुक्ल[2]पक्षे ।
नभस्यमासस्य च कृष्ण[3]पक्षे
त्रयोदशी पञ्चदशी च माघे ॥
पानीयमप्यत्र तिलैर्विमिश्रं
दद्यात् पितृभ्यः प्रयतो मनुष्यः ।
श्राद्धं कृतं तेन समाः सहस्रं
रहस्यमेतत् पितरो वदन्ति' ॥

(वि. पु. ३. १४. १२-१४)

इति । मन्वादयो ऽपि श्राद्धकालाः । तदुक्तं मत्स्यपुराणे–

'अश्वयुक्शुक्लनवमी कार्त्तिके[4] द्वादशी सिता ।
तृतीया चैत्र[5]मासस्य सिता भाद्रपदस्य च ॥
फाल्गुनस्य त्वमावास्या पौषस्यैकादशी सिता[6] ।
आषाढस्यापि दशमी माघमासस्य सप्तमी ॥
श्रावणस्याष्टमी कृष्णा तथाऽऽषाढी च पूर्णिमा ।
कार्त्तिकी फाल्गुनी चैत्री ज्यैष्ठी पञ्चदशी सिता[7] ॥
मन्वन्तरादयश्चैता[8] दत्तस्याक्षयकारकाः' ।

(म. पु. १७. ६–९)

इति । कृत्तिकादिनक्षत्राणि काम्यश्राद्धकालाः । तथाह याज्ञवल्क्यः–

१. The text substitutes तु for च. २. The text substitutes -शुक्ल- for -शुक्ल-. ३. The text reads तमिस्र- for च कृष्ण-. ४. The text reads द्वादशी कार्तिके तथा for कार्तिके द्वादशी सिता. ५. H. and I. read चैव माघस्य. ६. The text reads तथा for सिता. ७. The text reads तथा for सिता. ८. Except A. and the text all read चैतं for चैताः.

'स्वर्गं ह्यपत्यमोजश्च शौर्यं क्षेत्रं बलं तथा ।
पुत्रं श्रैष्ठ्यं च सौभाग्यं समृद्धिं मुख्यतां शुभाम् ॥
प्रवृत्तचक्रतां चैव वाणिज्यप्रभृतीनपि ।
अरोगित्वं यशो वीतशोकतां परमां गतिम् ॥
धनं वेदान् भिषक्सिद्धिं कुप्यं गामप्यजाविकम् ।
अश्वानायुश्च विधिवद्यः श्राद्धं सम्प्रयच्छति ॥
कृत्तिकादिभरण्यन्तं स कामानाप्नुयादिमान्' ।

(या. स्मृ. १. २६५-६८)

इति । मार्कण्डेयोऽपि—

'कृत्तिकासु पितॄनर्च्य स्वर्गमाप्नोति मानवः ।
अपत्यकामो रोहिण्यां सौम्ये स्वौजस्वितां लभेत् ॥
आर्द्रायां शौर्यमाप्नोति क्षेत्रादि तु पुनर्वसौ ।
पुष्टिं पुष्ये पितॄनर्चन्नाश्लेषासु वरान् सुतान् ॥
मघासु स्वजनश्रैष्ठ्यं सौभाग्यं फल्गुनीषु च ।
प्रदानशीलो भवति सापत्यश्चोत्तरासु च ॥
प्राप्नोति श्रेष्ठतां सत्सु हस्ते श्राद्धप्रदो नरः ।
रूपवन्ति च चित्रासु तथापत्यान्यवाप्नुयात् ॥
वाणिज्यलाभदा स्वातिर्विशाखा पुत्रकामदा ।
कुर्वतां चानुराधाश्च दद्युश्चक्रप्रवर्तनम् ॥

१. Except A. and the text all read पुत्रश्रैष्ठ्यं and the text substitutes स for च. २. D. G. and the text read शुभम्. ३. The text substitutes च for तु; while I. reads तेजस्वितां for स्वौजस्वितां. ४. The text reads शौर्यमार्द्रासु च for आर्द्रायां शौर्यम्. ५. D. reads क्षेत्राणीति for क्षेत्रादि तु; while the text substitutes च for तु. ६. The text reads सदा for पितॄन्. ७. The text reads प्रयाति for प्राप्नोति and सत्यं for सत्सु. ८. The text reads रूपयुक्तश्च for रूपवन्ति च. ९. Some MSS. use the plural forms of वाणिज्यलाभदा स्वातिः &c. १०. A. and the text read—

कुर्वन्तश्चानुराधासु लभन्ते चक्रवर्तिताम् ।.

ज्येष्ठास्वर्थाधिपत्यं च मूले चारोग्यमुत्तमम्।
आषाढासु यशःप्राप्तिरुत्तरासु विशोकता॥
श्रवणे च शुभाँल्लोकान् धनिष्ठासु धनं महत्।
वेदवित्त्वमभिजिति भिषक्सिद्धिं च वारुणे॥
अजाविकं प्रौष्ठपदे विन्देद्गावीं तथोत्तरे।
रेवतीषु तथा रौप्यमश्विनीषु तुरङ्गमान्॥
श्राद्धं कुर्वंस्तथाऽऽप्नोति भरणीष्वायुरुत्तमम्।
तस्मात्काम्यानि कुर्वीत ऋक्षेष्वेतेषु तत्त्ववित्'॥

(मा. पु. ३३. ८-१६)

इति। सौम्यं सोमदैवत्यं मृगशीर्षमित्यर्थः। चक्रप्रवर्त्तनं सर्वत्राज्ञायाः प्रतिघाताभावेन प्रवर्त्तनम्। अभिजित् अभिजित्संज्ञकं नक्षत्रम्। तथा च श्रुतिः—

'उपरिष्टादाषाढानामधस्तात् श्रोणायाः'।

इति। एतत्तु वेधनिरूपणम्। भिषक्सिद्धिरौषधफलावाप्तिः। वारुणं शतभिषङ् नक्षत्रम्। कुप्यं त्रपु-सीसादिकम्। विष्णुरपि—

'स्वर्गं कृत्तिकासु। (८) अपत्यं रोहिणीषु। (९)
ब्रह्मवर्चसं सौम्ये। (१०) कर्मणां सिद्धिः रौद्रे।
(११) ध्रुवं पुनर्वसौ। (१२) पुष्टिं पुष्ये।
(१३) श्रियं सार्पे। (१४) सर्वान् कामान्

१. The text reads आधिपत्यं च ज्येष्ठासु for ज्येष्ठास्वर्थाधिपत्यं च. २. B. C. D. E. F. and G. read वेदविद्याऽभिजिति तु; while H. and I. read वेदवेत्ताऽभिजिति तु. ३. The text reads कुप्यम् for रौप्यम्. ४. The following portion is found in all except A. and I. :—

श्रुतिः— 'उपरिष्टादाषाढानामधस्तात् श्रोणायाः'।
इति। एतत्तु वेधनिरूपणम। भिषक्सिद्धिरौषधफलावाप्तिः।
वारुणं शतभिषङ् नक्षत्रम्। कुप्यं त्रपु-सीसादिकम्।

पैत्र्ये[1] (१५) सौभाग्यं फल्गुनीषु[2] (१६) धनमार्यम्णे। (१७) ज्ञातिश्रैष्ठ्यं हस्ते। (१८) रूपवतः सुतांस्त्वाष्ट्रे। (१९) वाणिज्यवृद्धिं[3] स्वातौ। (२०) कनकं विशाखासु। (२१) मित्राणि मैत्रे। (२२) शाक्रे राज्यम्। (२३) कृषिं मूले। (२४) समुद्रयानसिद्धिमाप्ये[4]। (२५) सर्वान् कामान् वैश्वदेवे। (२६) श्रैष्ठ्यमभिजिति। (२७) सर्वान् कामाञ्छ्रवणे। (२८) बलं[5] वासवे। (२९) आरोग्यं वारुणे। (३०) कुप्यद्रव्यमाजे। (३१) गृहमाहिर्बुध्न्ये। (३२) गाः पौष्णे। (३३) तुरङ्गममाश्विने। (३४) जीवितं याम्ये'। (३५)

(वि. स्मृ. ७८. ८–३५)

इति। आदित्यादिवाराश्च काम्यश्राद्धकालाः। तदाह विष्णुः—

'सततमादित्ये ऽह्नि श्राद्धं कुर्वन्नारोग्यमाप्नोति। (१) सौभाग्यं चान्द्रे। (२) समरविजयं कौजे। (३) सर्वान् कामान् बौधे। (४) विद्यामभीष्टां जैवे। (५) धनं शौक्रे। (६) जीवितं शनैश्चरे'। (७)

( वि. स्मृ. ७८. १–७ ).

इति। कूर्मपुराणे ऽपि—

---

१. We follow here A. and the text. All others read पित्र्ये. २. The text substitutes भाग्ये for फल्गुनीषु. ३. H. reads वृष्टिं for वृद्धिं, and the text reads सिद्धिं for the same. ४. I. reads साप्ये for आप्ये. ५. The text reads लवणं for बलं.

‘आदित्यवारे त्वारोग्यं चन्द्रे सौभाग्यमेव च ।
कुजे सर्वत्र विजयं सर्वान् कामान् बुधस्य तु ॥
विद्यां विशिष्टां च गुरौ धनं वै भार्गवे पुनः ।
शनैश्चरे भवेदायुरारोग्यं च सुदुर्लभम्’ ॥
(कू. पु. १. २. २०. १६–१७)

इति। विष्णुधर्मोत्तरे–
‘अतः काम्यानि वक्ष्यामि श्राद्धानि तव पार्थिव ।(३०)
आरोग्यमथ सौभाग्यं समरे विजयं तथा ।
सर्वकामांस्तथा विद्यां धनं जीवितमेव च ॥
आदित्यादिदिनेष्वेवं श्राद्धं कुर्वन् सदा नरः ।
क्रमेणैतान्यवाप्नोति नात्र कार्या विचारणा’ ॥
(वि. ध. १. १४२. ३०–३२)

इति। प्रतिपदादितिथयोऽपि काम्यश्राद्धकालाः।तदाह मनुः–
‘[१]कुर्वन् प्रतिपदि श्राद्धं सुरूपान्विन्दते सुतान् ।
कन्यकां[२] तु द्वितीयायां तृतीयायां तु बन्दिनः ॥
पशून् क्षुद्रांश्चतुर्थ्यां तु पञ्चम्यां शोभनान् सुतान् ।
षष्ठ्यां द्यू[३]तमवाप्नोति सप्तम्यां लभते कृषिम् ॥
अष्टम्यामपि वाणिज्यं लभते श्राद्धदः [४]सदा ।
[५]स्यान्नवम्यामेकखुरं दशम्यां द्विखुरं बहु ॥

१. This and the following lines of Manu can be traced in Râmachandrâ's commentary alone. The text reads स्वरूपां लभते प्रजाम् for सुरूपान् विन्दते सुतान्. २. The text reads कन्यकाश्च for कन्यकां तु, and वाजिनः for बन्दिनः. ३. We follow here A. and the text. All others read

षष्ठ्यां द्यूतं कृषिं चैव सप्तम्यां लभते नरः ।.

४. The text substitutes नरः for सदा. ५. The text reads this line as follows:—

नवम्यां वै चैकशफान्दशम्यां द्विखुरान्बहून् ।.

एकादश्यां तथा रूप्यं ब्रह्मवर्चस्विनः सुतान्।
द्वादश्यां जातरूपं तु रजतं कुप्यमेव च ॥
ज्ञातिश्रैष्ठ्यं त्रयोदश्यां चतुर्दश्यां तु सुप्रजाः।
प्रीयन्ते पितरश्चास्य ये शस्त्रेण रणे हताः ॥
श्राद्धदः पञ्चदश्यां तु सर्वान् कामान् समश्नुते'।
(म. स्मृ. ३. २८१–२८६)

इति। याज्ञवल्क्योऽपि–

'कन्यां कन्यावेदिनश्च पशून् क्षुद्रान सुतानपि।
द्यूतं कृषिं च वाणिज्यं द्विशफैकशफानपि ॥(२६२)
ब्रह्मवर्चस्विनः पुत्रान् स्वर्ण-रूप्ये सकुप्यके।
ज्ञातिश्रैष्ठ्यं सर्वकामानाप्नोति श्राद्धदः सदा ॥(२६३)
प्रतिपत्प्रभृतिष्वेकां वर्जयित्वा चतुर्दशीम्।
शस्त्रेण तु हता ये वै तेभ्यस्तत्र प्रदीयते'॥ (२६४)
(या. स्मृ. १. २६२ ६४)

इति। कन्यावेदिनो जामातारः। एतानि फलानि कृष्णपक्षप्रतिपत्प्रभृतिष्वमावास्यापर्यन्तासु तिथिषु श्राद्धदः क्रमेण प्राप्नोति। अत एव कात्यायनः–

'स्त्रियो प्रतिरूपाः प्रतिपदि। द्वितीयायां स्त्रीजन्म।
अश्वस्तृतीयायाम्। चतुर्थ्यां क्षुद्रपशवः। पुत्राः
पञ्चम्याम्। द्यूतं षष्ठ्याम्। कृषिः सप्तम्याम्।

१. All, except A. and the text read रूप्यम् for कुप्यम्. २. B. C. F. and the text read कुप्रजाः for सुप्रजाः. ३. The text reads पशून्वै सत्सुतानपि for पशून् क्षुद्रान् सुतानपि. Vijnanesvara follows the text. ४. The text reads द्विशफैकशफं तथा. ५. Except A. and the text all read -प्रभृति ष्वेकां for -प्रभृतिष्वेकां. ६. I. reads स्त्रियाः प्रतिरूपाः. ७. D. E. G. H. and I. omit स्त्रीजन्म। अश्वः.

वाणिज्यमष्टम्याम्। एकशफं नवम्याम्। दशम्यां गावः। परिचारका एकादश्याम्। द्वादश्यां धन-धान्य-रूप्यम्। ज्ञातिश्रैष्ठ्यं हिरण्यानि त्रयोदश्याम्। युवानस्तत्र म्रियन्ते शस्त्रहताश्चतुर्दश्याम्। अमावास्यायां सर्वम्'।

इति। अयं च कृष्णपक्षप्रतिपदादितिथिषु श्राद्धविधिः सर्वेष्वेवाऽपरपक्षेषु। न भाद्रपदाऽपरपक्ष एव। अत एव शौनकः—

'प्रौष्ठपदाऽपरपक्षे मासि मासि चैवम्'।

इति। आपस्तम्बोऽपि—

'सर्वेष्वेवापरपक्षस्याहःसु क्रियमाणे पितॄन् प्रीणाति। कर्त्तुस्तु कालाभिनियमात्फलविशेषः। (७) प्रथमेऽहनि क्रियमाणे स्त्रीप्रायमपत्यं जायते। (८) द्वितीये स्तेनाः। (९) तृतीये ब्रह्मवर्चस्विनः। (१०) चतुर्थे क्षुद्रपशुमान्। (११) पञ्चमे पुमांसः। बह्वपत्यो न चानपत्यः प्रमीयते। (१२) षष्ठेऽध्वशीलोऽक्षशीलश्च। (१३) सप्तमे कर्षे राद्धिः। (१४) अष्टमे पुष्टिः। (१५) नवम एकखुराः। (१६) दशमे व्यवहारे राद्धिः। (१७) एकादशे कृष्णायसं त्रपु-सीसम्। (१८) द्वादशे पशुमान्। (१९) त्रयोदशे बहुपुत्रो

१. I. reads पुत्रास्तत्र for युवानस्तत्र. It is not necessary to repeat the word पुत्र. २. Except A. and the text all read कालनियमात् for कालाभिनियमात्. ३. All, except A. and the text read अपत्यं. ४. A. and the text read वर्चसिनः. ५. Except A. and the text all omit क्षुद्र-.

बहुमित्रो दर्शनीयापत्यः युवमारिणस्तु भव-
न्ति । ( २० ) चतुर्दशे आयुधराद्धिः ।(२१)
पञ्चदशे पुष्टिः' । (२२)

(आ. ध. सू. २. ७.१६.७–२२)

इति । भाद्रपदापरपक्षविषये मार्कण्डेयः–

'कन्यागते सवितरि दिनानि दश पञ्च च ।
पार्वणेनैव विधिना तत्र श्राद्धं विधीयते[2] ॥
प्रतिपद्धनलाभाय द्वितीया द्विपदप्रदा[3] ।
वैरार्थिनां[4] तृतीया च चतुर्थी शत्रुनाशना ॥
[1]श्रियं प्राप्नोति पञ्चम्यां षष्ठ्यां पूज्यो भवेन्नरः ।
गणाधिपत्यं सप्तम्यामष्टम्यां बुद्धिमुत्तमाम्[5] ॥
स्त्रियो नवम्यां प्राप्नोति दशम्यां पूर्णकामताम् ।
वेदांस्तथाऽऽप्नुयात्सर्वानेकादश्यां क्रियापरः ॥
द्वादश्यां हेमलाभं[6] च प्राप्नोति पितृपूजकः ।
प्रजां मेधां पशुं पुष्टिं स्वातन्त्र्यं वृद्धिमुत्तमाम् ॥
दीर्घमायुरथैश्वर्यं कुर्वाणस्तु त्रयोदशीम् ।
अवाप्नोति न सन्देहः श्राद्धं श्रद्धापरो नरः ॥
युवानः पितरो यस्य मृताः शस्त्रेण वै हताः ।
तेन कार्यं चतुर्दश्यां तेषामृद्धिमभीप्सता[7] ॥

१. The first two lines do not appear in the text. २. H. reads विविच्यते for विधीयते. ३. Except A. H. and the text all read हि प्रजाप्रदा for द्विपदप्रदा. ४. The text reads वरार्थिनी. ५. The text reads वृद्धिम् for बुद्धिम्. ६. The text substitutes जय- for हेम-. ७. The text substitutes प्रीतिम् for ऋद्धिम्.

श्राद्धं कुर्वन्नमावास्यामन्नेन पुरुषः शुचिः।
सर्वान् कामानवाप्नोति स्वर्यं चानन्त्यमश्नुते' ॥
(मा. पु. ३३. १-८)

इति। नभस्यकृष्णपक्षप्रतिपत्प्रभृतिदश-पञ्चदिनानि कृत्स्नोऽपि पक्षः सवितरि कन्यागते सति महालय इति प्रोक्तः। तत्र पार्वणेनैव विधिना श्राद्धं कुर्यात्। तदाह वृद्धमनुः—

'नभस्यस्यापरः पक्षो यत्र कन्यां व्रजेद्रविः।
स महालयसंज्ञः स्याद्गजच्छायाऽऽह्वयस्तथा' ॥

इति। यत्तु शाठ्यायनिनोक्तम्—

'नभस्यस्यापरे पक्षे तिथिषोडशकं तु यत्।
कन्यास्थार्कान्वितं चेत् स्यात् स कालः श्राद्धकर्मणि' ॥

इति तत्तिथिवृद्धावधिकदिवसेऽपि श्राद्धं कुर्यान्न तु पञ्चदशदिनेष्वेवेत्यनेनाभिप्रायेण। अथवा। आश्वयुजः शुक्लप्रतिपदा सह नभस्यापरपक्षस्य षोडशदिनात्मकत्वम्। तस्या अपि क्षीणचन्द्रत्वाविशेषेणापरपक्षानुप्रवेशसम्भवात्। तदाह देवलः—

'अहःषोडशकं यत्तु शुक्लप्रतिपदा सह।
चन्द्रक्षयाविशेषेण साऽपि दर्शात्मिका स्मृता' ॥

इति। ननु—एतस्मिन्पक्षे—

'दिनानि दश पञ्च च'।

इति वचनस्य का गतिः?। उच्यते। द्वादशसु कपालेष्वष्टाकपालवत् षोडशसु दिवसेषु पञ्चदशदिनवचनमवयुत्यानु-

---

१. D. reads स्वयं चात्यन्नम्, E. and G. स्वर्गं चात्यन्तम् and H. and I. स्वर्गवासं समश्नुते. २. H. substitutes तेन तस्य for नभस्य-. ३. I. reads कृत्स्नोऽपर-. ४. B. C. D. E. F. and G. read-ऽन्वितं. ५. I. reads -कर्मणः. ६. B. C. and F. read तस्य for नभस्य-.

वादौ* भविष्यन्ति । अथवा । पञ्चदशादित्रम-षोडशादित्रमाविष्यो-र्मोद्धिह-यत्रवद्विकल्पोऽस्तु । नभस्यापरपक्षस्य कन्यास्थार्का-न्वितत्वेन प्रशस्ततरतोच्यते । तदभावेऽपि तस्य प्रशस्तत्वात् । तदाह जाबालिः—

'अगतेऽपि रवौ कन्यां श्राद्धं कुर्वीत सर्वथा ।
आषाढ्याः पञ्चमः पक्षः प्रशस्तः पितृकर्मसु ॥
पुत्रानायुस्तथाऽऽरोग्यमैश्वर्यमतुलं तथा ।
प्राप्नोति पञ्चमे दत्त्वा श्राद्धं कामांस्तथाऽपरान्' ॥

* काम्येष्टिकाण्डे श्रूयते—

'वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते' ।

इति । अत्रेदमाम्नायते—

'यदष्टाकपालो भवति गायत्र्यैवैनं ब्रह्मवर्चसेन पुनाति । यन्नव-कपालस्त्रिवृतैवास्मिंस्तेजो दधाति । यद्दशकपालो विराजैवास्मिन्न-न्नाद्यं दधाति । यदेकादशकपालस्त्रिष्टुभैवास्मिन्निन्द्रियं दधाति । यद्द्वादशकपालो जगत्यैवास्मिन् पशून् दधाति । यस्मिन् जात एतामिष्टिं निर्वपति पूत एव स तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवति' ।

इति । अत्र अष्टत्वादिसंख्यासामान्यात् पुरोडाशादीनां गायत्र्यादि-रूपत्वकल्पना । इष्टिविधायके वाक्ये येयं द्वादशसंख्या तस्यामष्टत्वात् ताः संख्या निमित्तीकृत्य अग्निहोत्रशब्दवदष्टाकपालादिशब्दाः कर्मनाम-धेयानि इत्येकः पक्षः । ब्रह्मवर्चसादिफलाय तद्विध्युपपत्तेरित्यपरः पक्षः ।

अयमभिसन्धिः—यद्यप्यत्र वाक्यभेदभयात् अष्टाकपालादिविध्यन्त-राणि न सन्ति तथापि द्वादशकपालान्तर्वर्तिनामष्टाकपालादीनां अवगु-त्यानुवादेन फलकीर्तनद्वारेण प्रकृता द्वादशकपालेष्टिरेव स्तूयते इति ।

१. B. C. and F. read प्रशस्तता for प्रशस्ततरता. २. D. omits the following :—

-ऽपि तस्य प्रशस्तत्वात् । तदाह जाबालिः-
'अगतेऽपि रवौ कन्यां श्राद्धं कुर्वीत सर्वथा ।
आषाढ्याः पञ्चमः पक्षः प्रशस्तः * * * ॥

इति। बृहन्मनुरपि—

'आषाढीमवधिं कृत्वा पञ्चमं पक्षमाश्रिताः।
काङ्क्षन्ति पितरः क्लिष्टा अन्नमप्यन्वहं जलम्[1]॥
तस्मात्तत्रैव दातव्यं दत्तमन्यत्र निष्फलम्।
आषाढीमवधिं कृत्वा यः पक्षः पञ्चमो भवेत्॥
तत्र श्राद्धं प्रकुर्वीत कन्यास्थोऽर्को भवेन्न वा'।

इति। अस्य पक्षस्य रवेः कन्यागतत्वेन प्रशस्ततरत्वं च[2]आदिपुराणे दर्शितम्—

'पक्षान्तरेऽपि कन्यास्थे रवौ श्राद्धं प्रशस्यते।
कन्यागते पञ्चमे तु विशेषेणैव कारयेत्'॥

इति। श्लोकगौतमोऽपि—

'कन्यागते सवितरि यान्यहानि तु षोडश।
क्रतुभिस्तानि तुल्यानि सम्पूर्णवरदक्षिणैः'॥
(श्लो. गौ. स्मृ. ८. १९.)

इति। शाठ्यायनिरपि—

'पुण्यः कन्यागतः सूर्यः पुण्यः पक्षश्च पञ्चमः।
कन्यास्थार्कान्वितः पक्षः सोऽत्यन्तं पुण्य उच्यते'॥

इति। आदिमध्यावसानेषु यत्र क्वचन कन्यार्कान्वितत्वेन कृत्स्नः पक्षः पुण्य इत्यर्थः। अत एव कार्ष्णाजिनिः—

'आदौ मध्येऽवसाने वा यत्र कन्यां व्रजेद्रविः।
स पक्षः सकलः पुण्यः श्राद्धषोडशकम्प्रति'॥

इति। प्रतिपदादिदर्शान्तं श्राद्धं कर्तुमसमर्थश्चेत् पञ्च-

---

१. D. reads अन्नं तिलयुतं जलम् for अन्नमप्यन्वहं जलम्. २. D. and G. read आदित्यपुराणे and H. आदिपुराणे, but the marginal correction is वायुपुराणे.

यदहः सम्पद्यते सप्तम्या ऊर्ध्वं यदहः सम्पद्यते
ऋते चतुर्दशीम्। शाकेनाप्यपरपक्षं नातिक्रामेत्' ।

इति । मनुरपि—

'कृष्णपक्षे दशम्यादौ वर्जयित्वा चतुर्दशीम् ।
श्राद्धे प्रशस्तास्तिथयो यथैता न तथेतराः' ॥

इति । तत्राप्यसामर्थ्ये पञ्चमपक्षस्य पञ्चमीमारभ्यानन्तरपक्षपञ्चमीपर्यन्तासु तिथिष्वनिषिद्धायामेकस्यां तिथौ यथासम्भवं गृही श्राद्धं कुर्यात् । तदाह यमः—

'हंसे वर्षासु कन्यास्थे शाकेनापि गृहे वसन् ।
पञ्चम्योरन्तरे[1] दद्यात् उभयोरपि पक्षयोः' ॥

इति । अशक्त्यादिना पञ्चमपक्षे श्राद्धाकरणे यावत् कन्याराशौ सूर्यस्तिष्ठति तावच्छ्राद्धं दद्यात् । तत्राप्यकरणे यावद् वृश्चिकदर्शनमिति । तदाह सुमन्तुः—

'कन्याराशौ महाराज यावत्तिष्ठद्विभावसुः ।
तस्मात्कालाद्वदेद्देयं वृश्चिकं यावदागतम्' ॥

इति । पुराणेऽपि—

'कन्यागते[3] सवितरि पितरो यान्ति वै सुतान् ।
शून्या प्रेतपुरी सर्वा यावद्वृश्चिकदर्शनम् ॥
ततो वृश्चिकसम्प्राप्तौ निराशाः पितरो गताः ।
पुनः स्वभवनं यान्ति शापं दत्त्वा सुदारुणम् ॥
सूर्ये कन्यागते श्राद्धं यो न कुर्याद्गृहाश्रमी ।
धनं[4] पुत्राः कुतस्तस्य पितृनिःश्वासपीडनात् ॥

१. D. and G. read अन्तरं for अन्तरे. २. I. reads यावत्. ३. The first four lines of this quotation appear in Atrismṛiti. ४. D. reads धर्मः पुत्रः for धनं पुत्राः

वृश्चिके समतिक्रान्ते पितरो दैवतैः सह ।
निःश्वस्य प्रतिगच्छन्ति शापं दत्त्वा सुदारुणम्' ॥

इति । आदिपुराणे ऽपि—

'प्रावृट्टतौ यमः प्रेतान् पितॄंश्चाथ यमालयात् ।
विसर्जयित्वा मानुष्ये कृत्वा शून्यं स्वकं पुरम् ॥
क्षुधार्त्ताः कीर्त्तयन्तश्च दुष्कृतं च स्वयं कृतम् ।
काङ्क्षन्तः पुत्र-पौत्रेभ्यः पायसं मधुसंयुतम् ॥
तस्मात्तांस्तत्र विधिना तर्पयेत्पायसेन तु ।
मध्वाज्य-तिलमिश्रेण तथा शीतेन चाम्भसा ॥
ग्रासमात्रं परगृहादन्नं यः प्राप्नुयान्नरः ।
भिक्षामात्रेण यः प्राणान् सन्धारयति वा स्वयम् ॥
यो वा संवर्धते देहं प्रत्यक्षं स्वात्मविक्रयात् ।
श्राद्धं तेनापि कर्त्तव्यं तैस्तैर्द्रव्यैः सुसञ्चितैः' ॥

इति । यमालयाद्विसर्जयित्वा स्वकं पुरं शून्यं कृत्वा मनुष्यलोके पितॄन् वासयतीत्यध्याहृत्य योजना । पायसं काङ्क्षन्तः पितरस्तिष्ठन्तीत्यध्याहारः । तत्र वर्ज्यानाह गार्ग्यः—

'नन्दायां भार्गवदिने त्रयोदश्यां त्रिजन्मनि ।
एषु श्राद्धं न कुर्वीत गृही पुत्र-धनक्षयात्' ॥

इति । त्रिजन्मनि जन्मनक्षत्रं तत्पूर्वोत्तरं चेत्यर्थः । वृद्ध-गार्ग्यो ऽपि—

---

१. C. D. F. and G. read भविष्यपुराणे ऽपि. २. F. omits the following:—
* * * * कृत्वा शून्यं स्वकं पुरम् ॥
क्षुधार्त्ताः कीर्त्तयन्तश्च दुष्कृतं च स्वयं * *।.
३. C. reads स्वकं for स्वयं. ४. D. reads भिक्षापात्रेण. ५. B. C. and F. read संवर्धयेत्. ६. D. omits this verse and इति । वृद्धगार्ग्यो ऽपि. ७. except H. all omit त्रिजन्मनि जन्मनक्षत्रं तत्पूर्वोत्तरं चेत्यर्थः ।.

'प्राजापत्ये तु पौष्णे च पित्र्यर्क्षे भार्गवे तथा।
यस्तु श्राद्धं प्रकुर्वीत तस्य पुत्रो विनश्यति'॥

इति। प्राजापत्यं रोहिणी। पौष्णं रेवती। पित्र्यर्क्षं मघा। अङ्गिरा अपि—

'त्रयोदश्यां कृष्णपक्षे यः श्राद्धं कुरुते नरः।
पञ्चत्वं तस्य जानीयात् ज्येष्ठपुत्रस्य निश्चितम्॥
मघासु कुर्वतः श्राद्धं ज्येष्ठः पुत्रो विनश्यति'।

इति। अत्र मघात्रयोदश्यां श्राद्धनिषेधः केवलपितृवर्गो[1]द्देशेन श्राद्धविषयः। न तु केवलश्राद्धनिषेधः। [2]ननु—केवलपितृवर्गोद्देशेन श्राद्धप्राप्तौ सत्यां तन्निषेधो युक्तः—

'पितरो यत्र पूज्यन्ते तत्र मातामहा ध्रुवम्।
अविशेषेण कर्त्तव्यं विशेषान्नरकं व्रजेत्'॥

इति धौम्यवचनेन केवलैकवर्गोद्देशश्राद्धनिषेधात्प्राप्तिरेव नास्ति। अतो नैवं व्यवस्था विवक्ष्यते—इति। मैवम्। सत्यामपि धौम्यस्मृतौ व्यामोहादेव प्राप्तस्यैकवर्गश्राद्धस्य निषेधात्। यथा रागप्राप्तस्य कलञ्जभक्षणस्य—

'न कलञ्जं भक्षयेत्'।

इति निषेधस्तद्वत्। अत एव कार्ष्णाजिनिः—

'श्राद्धं तु नैकवर्गस्य त्रयोदश्यामुपक्रमेत्।
[3]अतृप्तास्तत्र ये ऽस्य स्युः प्रजां हिंसन्ति तत्र ते'॥

इति। स्मृत्यन्तरमपि—

---

१. All except A. and E. read -पितृवर्गविषयः for -पितृवर्गोद्देशेन श्राद्धविषयः, and omit केवलश्राद्धनिषेधः. २. H. substitutes न च for ननु. ३. I. reads अतृप्तस्तत्र यस्य.

'इच्छेत् त्रयोदशीश्राद्धं पुत्रवान् यः सुताऽऽयुषोः ।
एकस्यैव तु नो दद्यात्पार्वणं तु समाचरेत्' ॥

इति । यः पुत्रवान् सुताऽऽयुषोरभिवृद्धिमिच्छेत् स एकस्यै-कवर्गस्यैव श्राद्धं नो दद्यात् । अपि तु मातामहवर्गोद्देशेनापि पार्वणं समाचरेदित्यर्थः । तस्मादेकवर्गोद्देशेनैव मघात्रयो-दश्यां श्राद्धनिषेधो न तु श्राद्धस्यैव । तत्र श्राद्धस्य प्रशस्त-त्वात् । तथा च शङ्खः--

'प्रौष्ठपद्यामतीतायां मघायुक्तां त्रयोदशीम् ।
प्राप्य श्राद्धं तु कर्त्तव्यं मधुना पायसेन च ॥
प्रजामिष्टां यशः स्वर्गमारोग्यं च धनं तथा ।
नृणां श्राद्धे सदा प्रीताः प्रयच्छन्ति पितामहाः' ॥
(शं. स्मृ. १४. ६–७)

इति । महाभारतेऽपि--

'ज्ञातीनां तु भवेच्छ्रेष्ठः कुर्वन् श्राद्धं त्रयोदशीम् ।
नावश्यं तु युवानोऽस्य प्रमीयन्ते नरा गृहे' ॥

इति । अत्र मघात्रयोदश्यां श्राद्धे पिण्डनिर्वपणं न कुर्यात् । तस्यां युगादित्वेन पिण्डनिर्वपणनिषेधात् । तथा च पुलस्त्यः--

'अयनद्वितये श्राद्धं विषुवद्वितये तथा ।
युगादिषु च सर्वासु पिण्डनिर्वपणादृते' ॥

इति । कर्तव्यमित्यध्याहारः । मघाऽन्वितत्वेनापि पिण्ड-निर्वपणं नास्ति । तथा चादिपुराणे--

१. The text reads पुष्टिं तथा for इष्टां यशः २. The text reads प्राप्य सदा प्रीतिं for श्राद्धे सदा प्रीताः. ३. D. reads उत्तरेच्छ्रेयः for तु भवेच्छ्रेष्ठः, and for the same G. H. and I. read उत्तरेच्छ्रेष्ठः. G. substitutes कुर्वात for कुर्वन्. ४. D. G. and H. read आदित्यपुराणे.

'संक्रान्तावुपवासेन पारणेन च भारत ।
मघायां पिण्डदानेन ज्येष्ठः पुत्रो विनश्यति' ॥

इति । चतुर्दश्यां श्राद्धनिषेधोऽप्यशस्त्रहतविषयः । अपमृत्युहतानां तु चतुर्दश्यामपि श्राद्धं कार्यम् । तदाह मरीचिः—

'विष-शस्त्र-श्वापदा-ऽहि-तिर्यग्-ब्राह्मणघातिनाम्* ।
चतुर्दश्यां क्रिया कार्या अन्येषां तु विगर्हिता' ॥

इति । प्रचेता अपि—

'वृक्षारोहण-लोहादि-विद्युज्जल-विषादिभिः[1] ।
नखि-दंष्ट्रिविपन्नानामेषां शस्ता चतुर्दशी' ॥

इति । याज्ञवल्क्योऽपि—

'शस्त्रेण तु हता ये वै तेभ्यस्तत्र प्रदीयते' ।
(या. स्मृ. १. २६४)

इति । अत्र चतुर्दश्यां शस्त्रादिहतानामेवेति नियम्यते । न पुनश्चतुर्दश्यामेवेति । एवं च सति दिनान्तरेऽपि पितामहादितृप्तिसिद्ध्यर्थं महालयश्राद्धं कार्यम् । चतुर्दश्यां महालयश्राद्धस्यैकोद्दिष्टत्वेन विहितत्वात् तेनात्र पितामहादितृप्तेरभावात् । तस्य चैकोद्दिष्टरूपत्वं[2] सुमन्तुराह—

*'ब्राह्मणघातिनां' ब्राह्मणेन घातितानामित्यर्थः । ब्राह्मणादिहतानां चतुर्दश्यां श्राद्धं कार्यमित्येतन्न विज्ञानेश्वरस्याभिमतमिति प्रतिभाति । यतः—'ये केचन शस्त्रहतास्तेभ्यः कृष्णचतुर्दश्यामेकोद्दिष्टविधिना श्राद्धं दद्यात् । यदि ब्राह्मणादिहता न भवन्ति'—इति तेनोक्तत्वात् । (या. स्मृ. १. २६४ टीका द्रष्टव्या) ।

१. D. reads -तिर्यक्-सर्प-विषादिभिः for -विद्युज्जल-विषादिभिः, E. विपन्नानां विषादिभिः and G. -तिर्यक्-सर्पवधादिभिः for the same. २. B. C. and F. read तथैकोद्दिष्टत्वं for तस्य चैकोद्दिष्टरूपत्वं, and for the same D. reads ततश्चैकोद्दिष्टं रूपं and E. G. H. तस्य चैकोद्दिष्टरूपं.

'समत्वमागतस्यापि पितुः शस्त्रहतस्य तु ।
एकोद्दिष्टं सुतैः कार्यं चतुर्दश्यां महालये'॥

इति । समत्वमागतस्य सपिण्डीकृतस्य शस्त्रहतस्य पितुश्चतुर्दश्यां महालये सुतैरेकोद्दिष्टश्राद्धं कार्यमित्यर्थः । यस्य पितामहोऽपि शस्त्रादिना हतः तेन द्वयोरपि चतुर्दश्यामेकोद्दिष्टश्राद्धं कार्यम् । तथा च स्मृत्यन्तरम्—

'एकस्मिन् द्वयोर्वैकोद्दिष्टविधिः'।

इति । अयमर्थः एकस्मिन पितरि शस्त्रादिना हते द्वयोर्वा पितृ-पितामहयोः शस्त्रादिना हतयोश्चतुर्दश्यां पुत्रेण तयोः प्रत्येकमेकोद्दिष्टं श्राद्धं कार्यमिति । यस्य पितृ-पितामह-प्रपितामहास्त्रयोऽपि शस्त्रहताः तेन चतुर्दश्यां पार्वणेनैव विधिना श्राद्धं कार्यम् । एकस्मिन् द्वयोर्वैकोद्दिष्टविधिरिति विशेषोपादानात् । इदं च चन्द्रिकाकारा-ऽपरार्कयोर्मतम्* । त्रिष्वपि पित्रादिषु शस्त्रहतेषु त्रयाणामपि पृथक् पृथगेकोद्दिष्टमेव कार्यमिति देवस्वामिमतम् । अत्र -त्रयाणां शस्त्रहतत्वे पार्वणश्राद्धस्य

* यथोक्तमपरार्के—

'सपिण्डीकरणादूर्ध्वं मृते कृष्णचतुर्दशीम् ।
प्रतिसंवत्सरादन्यदेकोद्दिष्टं न पार्वणम् ॥

अत्रैकस्य शस्त्रहतत्वे एकोद्दिष्टविधानम् । न तु त्रयाणाम् । तथात्वे तत्र तु पार्वणमेव'—इति ।

१. D. reads समत्वावगतस्यापि. २. B. C. and F. read शस्त्रादिहताः. ३. I. reads चण्डिकाकाराऽपरार्कयोः through mistake. 'चण्डिका is not a name of any Sanskrit work on Dharmaśâstra. It is a name of a portion of Mârkaṇḍeya Purâṇam.

साक्षाद्विधायकवचनाभावादेकस्मिन्द्वयोर्वेत्यस्योपलक्षणार्थत्वे-नाप्युपपत्तेरेकोद्दिष्टत्रयमेव कार्यम्—इति देवस्वामिमतं युक्त-मिति प्रतिभाति। शस्त्रादिहतानां दिनान्तरे पार्वणविधिनैव श्राद्धं कार्यम्। अत एव प्रजापतिः—

'संक्रान्तावुपरागे च वर्षोत्सव-महालये।
निर्वपेदत्र पिण्डांस्त्रीनिति प्राह प्रजापतिः'॥

इति। भ्रातृ-भगिन्यादीनां महालयश्राद्धमेकोद्दिष्टविधा-नेन कार्यम्। तथा च सुमन्तुः—

'सपिण्डीकरणादूर्ध्वं यत्र यत्र प्रदीयते।
भ्रात्रे भगिन्यै पुत्राय स्वामिने मातुलाय च॥
मित्राय गुरवे श्राद्धमेकोद्दिष्टं न पार्वणम्'।

इति। आपस्तम्बोऽपि—

'अपुत्रा ये मृताः केचित् स्त्रियश्च पुरुषाश्च ये।
तेषामपि च देयं स्यादेकोद्दिष्टं न पार्वणम्'॥

इति। स्त्रियो भगिन्यादयः। पुरुषा भ्रात्रादयः। कात्या-यनोऽपि—

'सम्बन्धि-बान्धवादीनामेकोद्दिष्टं तु सर्वदा'।

इति। यानि पुनरेकोद्दिष्टनिषेधकानि वाक्यानि यथा सपिण्डीकरणं प्रकृत्य जातूकर्ण्यः—

'अत ऊर्ध्वं न कर्त्तव्यमेकोद्दिष्टं कदाचन।

१. I. reads इत्त· for अत्र. २. D. omits—
आपस्तम्बोऽपि—
'अपुत्रा ये मृताः केचित् स्त्रियश्च पुरुषाश्च ये।
तेषामपि च देयं स्यात् एकोद्दिष्टं न पार्वणम्'॥
इति।

सपिण्डीकरणान्तं च तत्प्रोक्तमिति मुद्गलः ॥
प्रेतत्वं चैव निस्तीर्णः प्राप्तः पितृगणं तु सः ।
च्यवते पितृलोकात्तु पृथक्पिण्डे नियोजितः ॥
सपिण्डीकरणादूर्ध्वं पृथक्त्वेनोपपद्यते ।
पृथक्त्वे तु कृते पश्चात् पुनः कार्या सपिण्डता' ॥

इति । कार्ष्णाजिनिरपि—

'तत ऊर्ध्वं न कर्त्तव्यमेकोद्दिष्टं कदाचन ।
सपिण्डीकरणान्तं च प्रेतस्यैतदमङ्गलम्' ॥

इति । यमोऽपि—

'यः सपिण्डीकृतं प्रेतं पृथक्पिण्डे नियोजयेत् ।
विधिघ्नस्तेन भवति पितृहा चोपजायते' ॥

इति । पुराणेऽपि—

'प्रदानं यत्र यत्रैषां सपिण्डीकरणात् परम् ।
तत्र पार्वणवत् श्राद्धमेकोद्दिष्टं त्यजेद्बुधः' ॥
(ग. पु. २. २८. १६—

इति । तानि सर्वाण्यपि प्रतिपदोक्तैकोद्दिष्टविध्यभा
व्यानि । एतच्छ्राद्धं सूतकादिना मुख्यकालातिक्रमे
चापगमानन्तरकाल एव कार्यम् । तथा च ऋष्यशृङ्ग
'देये पितॄणां श्राद्धे तु आशौचं जायते यदा
आशौचे तु व्यतिक्रान्ते तेभ्यः श्राद्धं प्रदी

इति । यत्त्वत्रिवचनम्—

१. D. omits—
* * * * * * पृथक्त्वं नोपपद्यते ।
पृथक्त्वे तु कृते पश्चात्पुनः कार्या सपिण्डता' ॥
इति । कार्ष्णाजिनिरपि —
'तत ऊर्ध्वं न कर्तव्यम् * * * * ।

'तदहश्चेत्प्रदुष्येत केनचित् सूतकादिना ।
सूतकानन्तरं कुर्यात् पुनस्तदहरेव वा' ॥

इति । सूतकानन्तरकाले वा अनन्तरे वा मासि तत्पक्षे तत्तिथौ वेति पक्षद्वयमुपन्यस्तम् । तत्राद्ये पक्षे विरोध एव नास्ति। पुनस्तदहरेव वेत्ययं पक्षः सूतकव्यतिरिक्तनिमित्तान्तरेण विघ्ने समुत्पन्ने प्रतिमासं क्षयाहे विहितैकोद्दिष्ट-मासिकश्राद्धविषय इति ऋष्यशृङ्गवचनाऽविरोधाय व्यवस्थाप्यते । अत एव देवलः—

'एकोद्दिष्टे तु सम्प्राप्ते यदि विघ्नः प्रजायते ।
अन्यस्मिंस्तत्तिथौ तस्मिन् श्राद्धं कुर्यात्प्रयत्नतः' ॥

इति । अन्यस्मिन्ननन्तरे मासि । तत्तिथौ मृततिथौ । यस्मिन् शुक्ले कृष्णे वा मृतस्तस्मिन्पक्षे श्राद्धं विघ्नवशात्कुर्यादित्यर्थः । आशौचनिमित्तकविघ्ने तु मासिकश्राद्धमपि सूतकानन्तरमेव ऋष्यशृङ्गवचनबलादनुष्ठेयम् । देवस्वामिना ऽप्येवमेव विषय-व्यवस्था कृता ।

'एतत् ऋष्यशृङ्गवचनं आशौचविघ्नविषयम् ।
निमित्तान्तरतस्तदहर्विघाते—
एकोद्दिष्टे तु सम्प्राप्ते यदि विघ्नः प्रजायते।
इत्यादि स्मृत्यन्तरवचनम्' ।

इति । यत्तु व्यासेनोक्तम्—

'श्राद्धविघ्ने समुत्पन्ने अन्तरा मृत-सूतके ।
अमावास्यां प्रकुर्वीत शुद्धावेके मनीषिणः' ॥

१. B. C. and F. substitute च for वा. २. D. E. G. H. and I. read सूतकाशौचविषयम् for आशौचविघ्नविषयम्.

'तिथिच्छेदो न कर्त्तव्यो विनाऽऽशौचं यदृच्छया।
पिण्डः[1] श्राद्धं च दातव्यं विच्छित्तिं नैव कारयेत्'॥

इति। चकारेणाग्नौकरणं समुच्चिनोति। श्राद्धशब्देनात्र ब्राह्मणतर्पणमात्रं विवक्षितम्। पिण्डदानस्य पृथगुपात्तत्वात्। 'विच्छित्तिं नैव कारयेत्'–इति ब्राह्मणतर्पणं[2] कर्त्तुमसमर्थश्चेत्पिण्डप्रदानमात्रमपि कुर्यात्। सर्वथा[3] पित्रर्चनस्य विच्छेदं न कुर्यादित्यर्थः। अत एव निगमः–

'आहिताग्नेः पित्रर्चनं पिण्डैरेव
ब्राह्मणानपि वा भोजयेत्'।

इति। अत्र[4] व्यवस्थितो विकल्पः। सति सामर्थ्ये ब्राह्मणतर्पणं पिण्डप्रदानं च कुर्यात्। तत्रासामर्थ्ये पिण्डप्रदानमात्रमिति। यत्तु हारीतेन श्राद्धविघ्ने समुत्पन्ने अमावास्यादिष्वामश्राद्धं विहितम्–

'श्राद्धविघ्ने द्विजातीनामामश्राद्धं प्रकीर्तितम्।
अमावास्यादिनियतं मास-सांवत्सरादृते'॥

(हा. स्मृ. २१. १३)

इति। मासं मासिकम्। सांवत्सरं सांवत्सरिकम्। तत् भार्यारजोदर्शनकृतविघ्नविषयम्। तथाऽऽहोशनाः–

'अपत्नीकः[5] प्रवासी च यस्य भार्या रजस्वला।
सिद्धान्नेन न[6] कुर्वीत आमं तस्य विधीयते'॥

(उ. स्मृ. ५. ८२)

१. H. and I. read पिण्डं and D. G. पिण्डश्राद्धं. २. H. substitutes -भोजनं for -तर्पणं; while I. omits both. ३. D. substitutes सर्वत्र for सर्वथा. ४. B. C. and F. read अत एव. ५. The text (औशनसस्मृतिः) substitutes the following lines for this couplet—

'अनाग्निरध्वगो वापि तथैव व्यसनान्वितः।
आमश्राद्धं द्विजः कुर्याद् वृषलस्तु सदैव हि'॥.

६. I. reads सिद्धान्नं न प्रकुर्वीत.

इति । कात्यायनो ऽपि—

'आपद्यनग्नौ तीर्थे च प्रवासे पुत्रजन्मनि ।
आमश्राद्धं प्रकुर्वीत यस्य भार्या रजस्वला' ॥

इति । व्याघ्रपादो ऽपि—

'आर्त्तवे देशकालानां विप्लवे समुपस्थिते ।
आमश्राद्धं द्विजैः कार्यं शूद्रः कुर्यात्सदैव हि' ॥

इति । न च कात्यायन-व्याघ्रपादवचनपर्यालोचनया मासिक-प्रत्याब्दिकयोरप्यामश्राद्धं प्राप्नोतीति मन्तव्यम् ।

'मास-सांवत्सरादृते' ।

इति विशेषवचनेनामश्राद्धस्य तद्व्यतिरिक्तविषयत्वावगमात् । अत एव मरीचिः—

'अनग्निकः प्रवासी च यस्य भार्या रजस्वला ।
आमश्राद्धं द्विजः कुर्यान्न तत्कुर्यान्मृते ऽहनि' ॥

इति । तत् आमश्राद्धं मृते ऽहनि न कुर्यात् । किन्तु पक्वान्नेनैव कुर्यादित्यर्थः । लौगाक्षिरपि—

'पुष्पवत्स्वपि दारेषु विदेशस्थो ऽप्यनग्निकः ।
अन्नेनैवाब्दिकं कुर्यात् हेम्ना नाऽऽमेन वा क्वचित्' ॥

इति । यस्तु स्मृत्यन्तरे भार्यायां रजस्वलायां मृते ऽहनि श्राद्धनिषेधः—

'मृते ऽहनि तु सम्प्राप्ते यस्य भार्या रजस्वला ।
श्राद्धं तदा न कर्त्तव्यं कर्त्तव्यं पञ्चमे ऽहनि' ॥

१. D. omits व्याघ्रपादो ऽपि. २. I. reads through mistake वा for न

इति तस्यायं विषयः—अपुत्रायाः पत्न्या एव पत्युर्मृताहश्राद्धे ऽधिकाराद्यदा सा स्वयमेव रजस्वला स्यात्तदा मृते ऽहनि श्राद्धं न कर्तव्यम्। किन्तु पञ्चमे ऽहनीति। तथा च श्लोकगौतमः—

'अपुत्रा तु यदा भार्या सम्प्राप्ते भर्तुराब्दिके।
रजस्वला भवेत्सा तु कुर्यात् तत्पञ्चमे ऽहनि'॥
(श्लो. गौ. स्मृ. ९. १४)

इति। प्रभासखण्डे ऽपि—

'शुद्धा स्यात्तु चतुर्थे ऽह्नि स्नाता नारी रजस्वला।
दैवे कर्मणि पित्र्ये च पञ्चमे ऽहनि शुद्धयति'॥

इति। अन्ये तु—

'श्राद्धीये ऽहनि सम्प्राप्ते यस्य भार्या रजस्वला।
श्राद्धं तत्र न कर्त्तव्यं कर्तव्यं पञ्चमे ऽहनि'॥
(श्लो. गौ. स्मृ. ९. १९)

इति श्लोकगौतमवचनमन्यथा पठित्वा श्राद्धादौ कर्मणि भार्यया सहैवाधिकारश्रवणात्तस्यां रजोदर्शनदूषितायामधिकारनिवृत्तेर्मुख्यकालमतिक्रम्य पञ्चमे ऽहनि श्राद्धं कर्त्तव्यम्—इति मन्यन्ते।

ननु—अस्मिन्पाठे ऽमावास्यादिश्राद्धस्यापि पञ्चमे ऽहन्युत्कर्षः प्राप्नोति—इति। मैवम्।

१. I. reads सा for स्यात्. २. H. and I. read स्नानात् for स्नाता. ३. H. omits the following:—

श्राद्धादौ कर्मणि भार्यया सहैवाधिकारश्रवणात्तस्यां रजोदर्शनदूषितायामधिकारनिवृत्तेर्मुख्यकालमतिक्रम्य पञ्चमे ऽहनि,

and inserts ये before श्राद्धं.

'श्राद्धविधिं द्विजातीनाम्'

इति हारीतवचनेनामावास्यादिश्राद्धस्याप्नकार्ये सोमकार्ये पूतीकवद्विहितत्वात्। श्राद्धीये ह्नीत्यस्य वचनस्य मृताहव्यतिरिक्तविषयत्वेन सार्थकत्वमस्तु इति चेत्। भवेदेतदेवं यदि विषयान्तरं वक्तुं शक्येत। न त्वेतदस्ति। मृताहविषयत्वं तु—

'मृते ह्नि तु सम्प्राप्ते'

इति स्मृत्यन्तरवचनादेवावगम्यते। तस्मादेकभार्येण मृताहश्राद्धं रजोदर्शनरूपविघ्नापरमकाल एव कर्त्तव्यम्। भार्यान्तरयुक्तेन त्वधिकारानपगमान्मुख्य एव काले कर्त्तव्यमिति। यदत्र युक्तं तद्ग्राह्यम्॥

## अथ श्राद्धे ब्राह्मणपरीक्षा।

श्राद्धे भोजनीयब्राह्मणपरीक्षा कर्त्तव्या। तत्र श्राद्धं प्रकृत्य यमः—

'पूर्वमेव परीक्षेत ब्राह्मणान् वेदपारगान्।
शरीरप्रभवैर्दोषैर्विशुद्धांश्चरितव्रतान्॥
दूरादेव परीक्षेत ब्राह्मणान्वेदपारगान्।
इष्टान्वा यदि वाऽनिष्टांस्तत्काले नाऽवमानयेत्'॥

इति। पूर्वमिति निमन्त्रणात् पूर्वमित्यर्थः। शरीरप्रभवा दोषाः कुष्ठापस्मारादयः। दूरादिति प्रपितामहादारभ्य भोजनीयब्राह्मणपर्यन्तम्। तथा च छागलेयः

१. B. C. D. and H. read पूतिकवत्, G. पूतीकवत् and H. पूतीकावत्. २. D. omits कर्त्तव्या. ३. D. omits this line. ४. D. E. G. H. and I. read नैव मानयेत्.

'उक्तलक्षणसम्पन्नैर्विद्या-शील-गुणान्वितैः ।
पुरुषत्रयविख्यातैः सर्वं श्राद्धं प्रकल्पयेत्'॥

इति । सर्वं पार्वणैकोद्दिष्टात्मकम् । अत एव मनुनाऽपि पितुः श्रोत्रियत्वेन पुरुषस्य श्रैष्ठ्यमुक्तम्–

'अश्रोत्रियः पिता यस्य पुत्रः स्याद्वेदपारगः ।
अश्रोत्रियो वा पुत्रः स्यात् पिता स्याद्वेदपारगः ॥(१३६)
ज्यायांसमनयोर्विद्याद्यस्य स्याच्छ्रोत्रियः पिता'।
(म. स्मृ. ३. १३६–१३७)

इति । श्राद्धे भोजनीया ब्राह्मणा याज्ञवल्क्येन दर्शिताः–

'अग्र्याः सर्वेषु वेदेषु श्रोत्रियो ब्रह्मविद्युवा ।
वेदार्थवित् ज्येष्ठसामा* त्रिमधुस्त्रिसुपर्णिकः ॥ (२१९)
कर्मनिष्ठास्तपोनिष्ठाः †पञ्चाग्निर्ब्रह्मचारिणः ।
पितृ-मातृपराश्चैव ब्राह्मणाः श्राद्धसम्पदे'॥ (२२१)
(या. स्मृ. १.२१९–२२१)

---

* 'ज्येष्ठसामा' ज्येष्ठसामग इत्यर्थः। ज्येष्ठसाम च–'उदुत्यं चित्रम्' इत्यस्यामृचि गीतं साम तलवकारैर्ज्येष्ठसामेत्यभिधीयते ।

† 'पञ्चाग्निः' पञ्च अग्नयो यस्य गृहे प्रदीप्यन्ते स पञ्चाग्निः। यदाह हारीतः—

'पचनः पावनस्त्रेता यस्य पञ्चाग्नयो गृहे ।
सायम्प्रातः प्रदीप्यन्ते स विप्रः पाङ्क्तिपावनः' ॥
(हा. स्मृ. १३. २९)

इति।पचनः आवसथ्योऽग्निः। पावनः सभ्यो ऽग्निरित्यर्थः। मेधातिथिस्तु-

'असौ वाव गौतमो ऽग्निः' ।
(छां. उ. ५. ४. १)

इत्यादिका पञ्चाग्निविद्या यस्याश्च—

'स्तेनो हिरण्यस्य सुरां पिबꣳश्च' ।
(छां. उ. ५. १०. ९)

इत्यादि फलमुक्तं तदग्निसम्बन्धात् पुरुषो ऽपि पञ्चाग्निः–इत्याह ।

---

१. H. reads वेदेषु for वेदषु. २. Except A. and the text all read -सुपर्णकः for -सुपर्णिकः. ३. Except A. I and the text all read -सम्पदः for -सम्पदे.

इति । ऋग्वेदादिसर्ववेदेष्वस्खलिताध्ययनक्रमाः । श्रोत्रियः श्रुताध्ययनसम्पन्नः । ब्रह्मवित् ब्रह्मज्ञानवान् । युवा मध्यमवयस्कः । युवत्वं च सर्वविशेषणम् । वेदार्थविद्धर्मज्ञानवान् । ज्येष्ठसामेति सामविशेषस्तद्व्रतं च । तद्व्रताचरणेन यस्तदधीते स ज्येष्ठसामा । त्रिमधुः ऋग्वेदैकदेशः[2] तद्व्रतं च । तद्व्रताचरणेन तदध्यायी त्रिमधुः । त्रिसुपर्णमृग्यजुषयोरेकदेशः तद्व्रतं च । तदाचरणेन यस्तदधीते स त्रिसुपर्णिकः । ब्राह्मणा न क्षत्रियादयः । उक्तलक्षणा एते ब्राह्मणाः श्राद्धस्याक्षयफलसम्पादका इत्यर्थः । बृहस्पतिरपि—

'यद्येकं भोजयेच्छ्राद्धे छन्दोगं तत्र भोजयेत् ।
ऋचो यजूंषि सामानि त्रितयं तत्र विद्यते ॥
अटेत पृथिवीं सर्वां सशैल-वनकाननाम् ।
यदि लभ्येत पित्रर्थे साम्नामक्षरचिन्तकः ॥
ऋचा तु तृप्यति पिता यजुषा तु पितामहः ।
पितुःपितामहः साम्ना छन्दोगोऽभ्यधिकस्ततः'॥[3]

इति । शातातपोऽपि—

'भोजयेद्यस्त्वथर्वाणं दैवे पित्र्ये च कर्मणि ।
[4]अनन्तमक्षयं चैव फलं तस्येति वै श्रुतिः ॥

प्रसिद्धमेतत्तैत्तिरीयशाखायां 'ब्रह्ममेतु मां' इत्यादि

१. D. E. and G. read वेदेष्वस्य वर्णिताध्ययनक्रमाः; while I. reads -वेदेष्वस्या वर्णिताध्ययनक्रमाः. २. I. reads यत् for यः. ३. I. reads -पितामहाः. ४. All, except A. and I. read दानं तदक्षयं for अनन्तमक्षयं.

इति। यमो ऽपि–

'वेदविद्याव्रतस्नाताः श्रोत्रिया वेदपारगाः।
स्वधर्मनिरताः शान्ताः क्रियावन्तस्तपस्विनः॥
तेभ्यो हव्यं च कव्यं च प्रसन्नेभ्यः प्रदीयते'।

इति। मनुरपि–

'श्रोत्रियायैव देयानि हव्य-कव्यानि दातृभिः।
अर्हत्तमाय विप्राय तस्मै दत्तं महाफलम्॥
एकैकमपि विद्वांसं दैवे पित्र्ये च भोजयेत्।
पुष्कलं फलमाप्नोति नाऽमन्त्रज्ञान् बहूनपि॥'

(म. स्मृ. ३. १२८–२९)

इति। वसिष्ठो ऽपि–

'यतीन् गृहस्थान् साधून् वा'।

(व. स्मृ. ११. १७)

इति। भोजयेदिति शेषः। ब्रह्माण्डपुराणे ऽपि–

'शिखिभ्यो धातुरक्तेभ्यः त्रिदण्डिभ्यश्च दापयेत्'।

इति। शिखिनो ब्रह्मचारिणः। धातुरक्ताः धातुरक्तवस्त्रधारिणो वानप्रस्थाः। त्रिदण्डिनो वाक्-काय-मनोदण्डैरुपेता यतयः। अत्र परः परः श्रेष्ठः। अत एव नारदः–

'यो वै यतीननादृत्य भोजयेदितरान् द्विजान्।
विजानन् वसतो ग्रामे कव्यं तद्याति राक्षसान्'॥

इति। ब्रह्माण्डपुराणे ऽपि–

---

१. D. omits ऽपि. २. H. and I. read तत एव for अत एव. ३. D. reads कव्यं जिघ्नन्ति राक्षसाः.

'अलाभे ध्याति-भिक्षूणां भोजयेद्ब्रह्मचारिणम् ।
तदलाभे ऽप्युदासीनं गृहस्थमपि भोजयेत्' ॥

(वायुपु. २. १०. ७२)

इति । उदासीनो ह्यसम्बन्धः । अत एवापस्तम्बः—

'ब्राह्मणान् भोजयेद्ब्रह्मविदो योनि-
गोत्र-मन्त्रान्तेवास्यसम्बन्धान्' ।

(आ. ध. सू. २. ७. १७. ४)

इति । योनिसम्बन्धा मातुलादयः । गोत्रसम्बन्धाः सपिण्डाः । मन्त्रसम्बन्धा वेदाध्यापकादयः । अन्तेवासिसम्बन्धाः शिष्यैशास्त्रोपाध्यायाः । एवंविधसम्बन्धव्यतिरिक्तान् ब्राह्मणान् गृहस्थादीन् भोजयेदित्यर्थः । श्राद्धे श्रोत्रियादीनां पङ्क्तिपावनत्वेनापि पात्रविशेषतां स एवाह—

'अपाङ्क्त्योपहता पाङ्क्तिः पाव्यते यैर्द्विजोत्तमैः ।
तान्निबोधत कार्त्स्न्येन द्विजाग्र्यान्पङ्क्तिपावनान्[3] ॥
अग्र्याः सर्वेषु वेदेषु सर्वप्रवचनेषु च ।
श्रोत्रियान्वयजाश्चैव विज्ञेयाः पङ्क्तिपावनाः ॥
त्रिणाचिकेतः* पञ्चाग्निः त्रिसुपर्णः षडङ्गवित् ।

* त्रिणाचिकेतः—

'उशन् ह वै वाजश्रवसः सर्ववेदसं ददौ'।

(क. उ. १. १.)

इत्यादिर्योऽनुवाकः कठश्रुतौ पठ्यमानः नाचिकेतनाम्नो मुनिपुत्रस्य प्रश्नत्रयविषये प्रोच्यत—इति व्युत्पत्त्या त्रिणाचिकेतः । तत्पाठतदर्थज्ञानाभ्यां ब्राह्मणोऽपि त्रिणाचिकेत इत्युच्यते । येनाधीतं नाचिकेतचरितं स त्रिणाचिकेत—इति केचन व्याचक्षते ।

१. The text inserts भोजयेत् before ब्राह्मणान्. २. Except A. B. C. and F. all substitute शिल्प- for शिष्य-. ३. D. reads पावनान् कृत्स्नान् for पङ्क्तिपावनान्.

ब्रह्मदेयात्मसन्तानश्छन्दोगो ज्येष्ठसामगः ॥
वेदार्थवित्प्रवक्ता च ब्रह्मचारी सहस्रदः ।
शतायुश्चैव विज्ञेया ब्राह्मणाः पङ्क्तिपावनाः' ॥

इति । ब्रह्मदेयात्मसन्तानः ब्राह्मविवाहोढापुत्रः । सहस्रदः गवां सुवर्णस्य वा । यमो ऽपि—

'ये सोमपा विरजसो धर्मज्ञाः शान्तबुद्धयः ।
व्रतिनो नियमस्थाश्च ऋतुकालाभिगामिनः ॥
पञ्चाग्निरप्यधीयानो यजुर्वेदविदेव च ।
बह्वृचश्च त्रिसौपर्णः त्रिमधुर्वाऽथ यो भवेत् ॥
त्रिणाचिकेतो विरजाश्छन्दोगो ज्येष्ठसामगः ।
अथर्वशिरसोऽध्येता सर्वे ते पङ्क्तिपावनाः ॥
शिशुरप्यग्निहोत्री च न्यायविच्च षडङ्गवित् ।
मन्त्र-ब्राह्मणविच्चैव यश्च स्याद्धर्मपाठकः ॥
ब्रह्मदेयासुतश्चैव भावशुद्धः सहस्रदः ।
चान्द्रायणव्रतचरः सत्यवादी पुराणवित् ॥
निष्णातः सर्वविद्यासु शान्तो विगतकल्मषः ।
गुरु-वेदाऽग्निपूजासु प्रसक्तो ज्ञानतत्परः ॥
विमुक्तः सर्वदा धीरो ब्रह्मभूतो द्विजोत्तमः ।
अनमित्रो न चामित्रो मैत्र आत्मविदेव च ॥
स्नातको जप्यनिरतः सदा पुष्पबलिप्रियः ।
ऋजुर्मृदुः क्षमी दान्तः शान्तः सत्यव्रतः शुचिः ॥

---

१. Except A. and I. all read -देयानुसन्तानः for -देयात्मसन्तानः.
२. This and the following line are omitted by I., ३. I. reads आत्मवेत्ता-.
४. B. C. and F. read आप्य- for अप्य-.

वेदज्ञः सर्वशास्त्रज्ञः उपवासपरायणः ।
गृहस्थो ब्रह्मचारी च चतुर्वेदविदेव च ॥
वेद-विद्या-व्रतस्नाता ब्राह्मणाः पङ्क्तिपावनाः ' ।

इति । पैठीनसिरपि—

'अथातः पङ्क्तिपावना भवन्ति । त्रिणाचिकेतस्त्रिमधुस्त्रिसुपर्णश्चीर्णव्रतश्छन्दोगो ज्येष्ठसामगो ब्रह्मदेयाऽनुसन्तानः सहस्रदो वेदाध्यायी चतुर्वेदः षडङ्गवित् अथर्वशिरसोऽध्यायी पञ्चाग्निर्वेदजापी चेति । तेषामेकैकः पुनाति पङ्क्तिम् । नियुक्तो मूर्धनि सहस्रैरप्युपहताम्' ।

इति । शङ्खो ऽपि—

'ब्रह्मदेयानुसन्तानो ब्रह्मदेयाप्रदायकः ।
ब्रह्मदेयापतिश्चैव ब्राह्मणाः पङ्क्तिपावनाः ॥
ऋग्यजुः पारगो यश्च साम्नां यश्चापि पारगः ।
अथर्वशिरसो ऽध्येता ब्राह्मणाः पङ्क्तिपावनाः ॥
नित्यं योगपरो विद्वान् समलोष्टाश्मकाञ्चनः ।
ध्यानशीलो यतिर्विद्वान् ब्राह्मणः पङ्क्तिपावनः' ॥

(शं. स्मृ. १३. ६–८)

इति । बौधायनो ऽपि—

१. I. reads -सुसन्तानः for -ऽनुसन्तानः. २. I. reads चतुर्वेदषडङ्गवित् for चतुर्वेदः षडङ्गवित्. ३. The text reads -सन्तानाः for -सन्तानः. ४. The text reads यश्च for चैव. ५. Except A. and the text all read यजुषां पारगो for ऋग्यजुःपारगो. ६. The text reads अथर्वाङ्गिरसो-. ७. The text reads -रत for -परः.

'त्रिमधुस्त्रिणाचिकेतस्त्रिसुपर्णः पञ्चाग्निः षडङ्गवित्त्रिशीर्षको ज्येष्ठसामगा इति पङ्क्तिपावनाः' ।

(बौ. स्मृ. २. ८. १४. २)

इति । हारीतोऽपि—

'स्थितिरविच्छिन्नवेदवेदिताऽयोनिसङ्करित्वमार्षेयत्वं चेति कुलगुणाः । (१५) वेदोऽङ्गानि धर्मोऽध्यात्मवित्त्वं विज्ञानं स्मृतिश्चेति षड्विधं श्रुतम् । (१६) ब्रह्मण्यता देव-पितृभक्तता । (१७) समता सौम्यता परानुपतापिताऽनसूयता ऽनुद्धतता पारुष्यं मित्रता प्रियवादित्वं कृतज्ञता शरण्यता प्रशान्तिश्चेति त्रयोदशविधं शीलम् । (१८)

क्षमा दमो दया दानमहिंसा गुरुपूजनम् ।
शौचं स्नानं जपो होमस्तपः स्वाध्याय एव च ॥ (१९)

सत्यवचनं सन्तोषो दृढव्रतत्वमुपव्रतत्वमिति षोडशगुणं वृत्तम् । (२०) तस्मात् कुलीनाः

---

१. The text omits-त्रि- and substitutes ज्येष्ठसामकः for ज्येष्ठसामगाः. I. inserts अध्येता after त्रिशीर्षकः and omits ज्येष्ठ-. The text inserts स्नातकः after ज्येष्ठसामगाः. २. The text reads -विहिता for -वेदिता. ३. G. H. and I. read वेदाङ्गानि; while the text reads धर्माङ्गानि वेदो ऽध्यात्म- for वेदोऽङ्गानि धर्मो ऽध्यात्म-. ४. H. and I. omit through mistake -वित्त्वं and read ऽध्यात्मविज्ञानं for ऽध्यात्मवित्त्वं विज्ञानं. ५. We follow here A. D. and the text; while B. C. E. F. and H. read ब्राह्मण्यं and G. reads ब्राह्मण्यता. The latter reading is an incorrect one. ६. H. and I. read अपरोपतापिता for परानुपतापिता. ७. D. H. and I. read शीलं for शौचं. ८. I. reads -गुणाः for -गुणं.

श्रुत-शीलवन्तो वृत्तस्थाः सत्यवादिनोऽग्र्यङ्गाः पाङ्क्तेयाः ।(२१) द्वादशोऽभयतः श्रोत्रियस्त्रिणाचिकेतस्त्रिसुपर्णस्त्रिमधुस्त्रिशीर्षको ज्येष्ठसामगः पञ्चाग्निः षडङ्गविद्ब्रह्मदेयानुसन्तानाः ऋतुकालगामी तत्त्वविदिति पङ्क्तिपावना भवन्ति' । (२२)

(हा. स्मृ. १३. १९–२२ )

इति । स्थितिरविच्छिन्नसन्तानता अविच्छिन्नवेदवेदिनेत्यत्र हविरासादनार्थदेशविशेषवाची वेदिशब्दो हविःसाध्यं यागं लक्षयति । आर्षेयत्वं प्रवरर्षिनिकरापिज्ञातृत्वम् । धर्मो धर्मशास्त्रम् । विज्ञानं वैशेषिकादिशास्त्राभिज्ञानम् । स्मृतिर्वेदशास्त्राविस्मरणम् । उपव्रतत्वं दशम्यादावेकभक्तता । अत्रानुकल्पो याज्ञवल्क्येन दर्शितः–

'स्वस्रीय-ऋत्विक्-जामातृ-याज्य-श्वशुर-मातुलाः ।
त्रिणाचिकेत-दौहित्र-शिष्य-सम्बन्धि-बान्धवाः' ॥

(या. स्मृ. १. २२०)

इति । अत एव मनुः–

'अनुकल्पस्त्वयं ज्ञेयः सदा सद्भिरनुष्ठितः ॥ (१.४७)
मातामहं मातुलं च स्वस्रीयं श्वशुरं गुरुम् ।
दौहित्रं विट्पतिं बन्धुमृत्विग्याज्यौ च भोजयेत्' ।

(म. स्मृ. ३. १४७-४८)

इति । विट्पतिर्जामाता अतिथिर्वा । तदुक्तं देवस्वामिना-

'विट्पतिरतिथिरित्यन्ये वदन्ति' ।

इति । आपस्तम्बोऽपि

गुणवदलाभे सोदर्यो ऽपि भोजयितव्यः ।
(५) एतेनान्तेवासिनो व्याख्याताः' । (६)
(आ. ध. सू. २. ७. १७. ५–६)

इति । बौधायनो ऽपि–

'तदभावे रहस्यवित् ।(३) ऋचो-यजूंषि-सामानीति श्राद्धस्य महिमा तस्मादेवंविधं[2] सपिण्डमप्याशयेत्' । (४)
(बौ. स्मृ. २. ८. १४. ३–४)

इति । विष्णुपुराणे ऽपि–

'पितृव्य-गुरु-दौहित्रानृत्विक्-स्वस्रीय-मातुलान् ।
पूजयेद्धव्य-कव्येन वृद्धानतिथि-बान्धवान्' ॥

इति । अत्र ऋत्विक्-पितृव्य-सोदर्य-सपिण्डा वैश्वदेवस्थाने नियोक्तव्याः । न पित्रादिस्थाने । तथा चाऽत्रिः–

'पिता पितामहो भ्राता पुत्रो वाऽथ सपिण्डकः ।
न परस्परमर्घ्याः स्युर्न श्राद्धे ऋत्विजस्तथा ॥
ऋत्विक्-पुत्रादयो ह्येते सकुल्या ब्राह्मणा द्विजाः ।
वैश्वदेवे नियोक्तव्या यद्येते गुणवत्तराः' ॥

इति । शिष्यस्यापि वैश्वदेवस्थान एव निवेशः । सोदर्ये विहितस्यार्थस्य—

---

१. The text reads गुणहान्यां तु परेषां समुद्देतः for गुणवदलाभे. २. The text reads एवंविदं for एवंविधं. D. omits the following:—

* * * * सापिण्डमप्याशयेत्' । (४)

इति । विष्णुपुराणे ऽपि—
'पितृव्य-गुरु-दौहित्रानृत्विक्-स्वस्रीय-मातुलान् ।
पूजयेद्धव्य-कव्येन वृद्धानतिथि-बान्धवान्' ॥
इति । अत्र ऋत्विक्-पितृव्य-सोदर्य,

and reads एवं विधसपिण्डा वैश्वदेवस्थाने &c. ३. E. and I. read श्राद्धे for श्राद्धं.

'एतेनान्तेवासिनो व्याख्याताः' ।

(आ. ध. सू. २. ७. १७. ६)

इत्यापस्तम्बेन शिष्ये ऽतिदेशात् । यत्तु मनुना कल्पान्तरमुक्तम्–

'कामं श्राद्धे ऽर्चयेन्मित्रं नाभिरूपमपि त्वरिम् ।
द्विषता हि हविर्भुक्तं भवति प्रेत्य निष्फलम्' ॥

(म. स्मृ. ३. १४४)

इति तत्र साक्षादनुकल्पाभिप्रायेण* । किन्त्वनुकल्पानुकल्पाभिप्रायेण ।

'न श्राद्धे भोजयेन्मित्रम्' ।

(म. स्मृ. ३. १४४)

इति स्वेनैव निषिद्धस्य मित्रस्य 'काममर्चयेत्' इति सानुशयमेवाभ्यनुज्ञानात् । वसिष्ठो ऽप्यनुकल्पानुकल्पमाह–

'आनृशंस्यं परो धर्मो याचते यत् प्रदीयते ।
अयाचतः सीदमानान् सर्वोपायैर्निमन्त्रयेत्' ॥

इति। आनृशंस्यमुत्कृष्टो धर्मः। तेनाऽयाचतः अयाचनशीलान् अत एव सीदमानान् निर्गुणानपि सगुणानामनुकल्पानामभावे

* 'पात्रान्तरालाभे प्रतिप्रसवो ऽयम्'–इति राघवानन्दः । पात्रान्तरालाभे गुणवन्मित्रं भोजयेत् अभिरूपमप्यरिं न भोजयेदित्यर्थः ।

१. D. omits the following:–कल्पान्तरमुक्तम्–
'कामं श्राद्धे ऽर्चयेन्मित्रं नाभिरूपमपि त्वरिम् ।
द्विषता हि हविर्भुक्तं भवति प्रेत्य निष्फलम्' ॥
इति तत्र साक्षादनुकल्पाभिप्रायेण । किन्त्वनुकल्पानु . २. H. omits अनुकल्पाभिप्रायेण and reads साक्षात् । किन्त्वनुकल्पानु- &c.

सर्वोपायैर्यथा ते निमन्त्रणमङ्गीकुर्वन्ति तादृशैरुपायैर्निमन्त्र[1]-येत्। अयाचनशीलानामभावे याचमानाय निर्गुणाय प्रदीयते—इति एतदप्यनुकल्पो भवतीत्यर्थः। सम्भवति मुख्यकल्पे नानुकल्पो ऽनुष्ठेयः। तथाऽऽह मनुः—

'प्रभुः प्रथमकल्पस्य यो ऽनुकल्पेन वर्त्तते।
न साम्परायिकं तस्य दुर्मतेर्विद्यते[2] फलम्' ॥
(म. स्मृ. ११. ३०)

इति। साम्परायिकमुत्तरकालिकं स्वर्गादिकं फलमिति। भविष्यत्पुराणे[3] ऽपि—

'ब्राह्मणातिक्रमो नास्ति मूर्खे वेदविवर्जिते।
ज्वलन्तमग्निमुत्सृज्य न हि भस्मनि हूयते' ॥

इति। वेदविवर्जिते—इति निर्गुणमात्रोपलक्षणार्थम्। अत एवोक्तं तत्रैव—

'व्यतिक्रान्तुर्न[4] दोषोऽस्ति निर्गुणम्प्रति कर्हिचित्।
यस्य त्वेकगृहे[5] मूर्खो दूरस्थश्च गुणान्वितः ॥
गुणान्विताय दातव्यं नास्ति मूर्खे व्यतिक्रमः'।

इति। यत्तु पुराणान्तरे ऽभिहितम्—

'यस्त्वासन्नमतिक्रम्य ब्राह्मणं पतितादृते।
दूरस्थं भोजयेन्मूढो गुणाढ्यं नरकं व्रजेत् ॥
तस्मात् सम्पूजयेदेनं गुणं तस्य न चिन्तयेत्।
केवलं चिन्तयेज्जातिं न गुणान्विततां खग ॥

१. I. reads निमन्त्रयेदिति. २. D. reads विन्दते for विद्यते. ३. D. reads भविष्यपुराणे ऽपि. ४. I. reads व्यतिक्रान्तेः. and निर्गुणान्, for व्यतिक्रान्तुः and निर्गुणम् respectively. ५. D. substitutes एव for एक-.

सन्निकृष्टं द्विजं यस्तु युक्तं जातिं प्रियंवदम् ।
मूर्खं वा पण्डितं वाऽपि वृत्तहीनमथापि वा ॥
नातिक्रामेन्नरो विद्वान् दारिद्र्याभिहतं तथा' ।

इति तद्दौहित्र-जामात्रादिविषयम् । अत एव मनुः—

'व्रतस्थमपि दौहित्रं श्राद्धे यत्नेन भोजयेत्' ।

(म. स्मृ. ३. २३४)

इति । व्रतस्थं केवलव्रतस्थमध्ययनादिरहितमित्यर्थः । गुणवत्सन्निकृष्टातिक्रमे तु प्रत्यवायोऽस्ति । तथा च पुराणम्—

'सप्त पूर्वान् सप्त परान् पुरुषानात्मना सह ।
अतिक्रम्य द्विजवरान् नरके पातयन् स्वग ॥
तस्मान्नातिक्रमेत् प्राज्ञो ब्राह्मणान् प्रातिवेशिकान् ।
सम्बन्धिनस्तथा सर्वान् दौहित्रं विट्पतिं तथा ॥
भागिनेयं विशेषेण तथा बन्धुं खगाधिप ।
नातिक्रामेन्नरश्चैतानमूर्खानपि गोपते ॥
अतिक्रम्य महारौद्रं रौरवं नरकं व्रजेत्' ।

इति । अपिरवकारार्थः । अमूर्खानेवातिक्रम्य नरकं व्रजेत् । न मूर्खानित्यभिप्रायः । श्राद्धे वर्जनीया ब्राह्मणा याज्ञवल्क्येन दर्शिताः—

'रोगी हीनातिरिक्ताङ्गः काणः पौनर्भवस्तथा ।
अवकीर्णी कुण्ड-गोलौ कुनखी श्यावदन्तकः ॥

१. B. C. and F. read युक्तजातिप्रियं-. २. I. reads अतिक्रामेद्विजो. ३. I. reads अतिक्रमेन्नरश्चैतान मूर्खानपि and E. नरश्चैतान्न मू .

भृतकाध्यापकः क्लीबः कन्यादूष्यभि[1]शस्तकः।
मित्रध्रुक् पिशुनः सोमविक्रयी परिविन्दकः॥
माता-पितृ-गुरुत्यागी कुण्डाशी वृषलात्मजः।
परपूर्वापतिः स्तेनः कर्मदुष्टश्च निन्दि[2]ताः'॥

(या. स्मृ. १. २२२–२४)

इति। रोगी उन्मादादि[3]पापरोगवान्। ते च[4] देवलेन दर्शि[5]ताः–

'उन्मादस्त्वग्दोषो राजयक्ष्मा श्वासो मधुमेहो
भगन्दरो महोदरो[6] ऽश्मरीत्यष्टौ पापरोगाः'।

इति। हीनं न्यूनमधिकमतिरिक्तमङ्गं यस्यासौ हीनातिरिक्ताङ्गः। एकेनाप्यक्ष्णा यो न पश्यति असौ काणः। तेन च बधिर-मूका[7]दयो लक्ष्यन्ते। द्विरूढा पुनर्भूस्तस्यां जातः पौनर्भवः। अवकीर्णी क्षतव्रतः। कुनखी दुष्टनखः। श्यावदन्तः स्वाभाविककृष्णदन्तः। वेतनं गृहीत्वा योऽध्यापयति स भृतकाध्यापकः। असता सता वा दोषेण कन्यां दूषयिता कन्यादूषी। महापातकाभिशस्तोऽभिशस्त[8]कः। परिविन्दकः परिवेत्ता। कुण्डस्यान्नं यो ऽश्नाति स कुण्डाशी। कुण्डशब्दो गोलकस्याप्युपलक्षकः। विहितकर्मपरित्यागी वृषलः तत्सुतो वृषलात्मजः। परपूर्वापतिः पुनर्भूपतिः। अदत्तादायी स्तेनः। कर्मदुष्टाः शास्त्रविरुद्धाचारोपेताः। एते श्राद्धे निन्दिता वर्ज्या इत्यर्थः। मनुरपि–

---

१. I. reads अभिशप्तकः. २. II. and I. read निन्दिताः. ३. D. E. G. II. and I. omit -पाप-. ४. Except A. and II. all read रोगाश्च for ते च. ५. II. reads उक्ताः, and I. वर्णिताः. ६. I. omits through mistake महोदरो. ७. I. reads बधिर-मूक-मूर्खादयो for बधिर-मूकादयो. ८. I. reads महापातकाभिशप्तकः for महापातकाभिशस्तोऽभिशस्तकः.

'ये स्तेन-पतित-क्लीबा ये च नास्तिकवृत्तयः ।
तान् हव्य-कव्ययोर्विप्राननर्हान् मनुरब्रवीत् ॥ (१५०)
जटिलं चाऽनधीयानं दुर्बालं कितवं तथा ।
याजयन्ति च ये पूगांस्तांश्च श्राद्धे न भोजयेत् ॥(१५१)
चिकित्सकान् देवलकान् मांसविक्रयिणस्तथा ।
विपणेन च जीवन्तो वर्ज्याः स्युर्हव्य-कव्ययोः॥(१५२)
प्रेष्यो ग्रामस्य राज्ञश्च कुनखी श्यावदन्तकः ।
प्रतिरोद्धा गुरोश्चैव त्यक्ताग्निर्वार्धुषिस्तथा ॥ (१५३)
यक्ष्मी च पशुपालश्च परिवेत्ता निराकृतिः ।
ब्रह्मद्विट् परिवित्तिश्च गणाभ्यन्तर एव च ॥ (१५४)
कुशीलवोऽवकीर्णी च वृषलीपतिरेव च ।
पौनर्भवश्च काणश्च यस्य चोपपतिर्गृहे ॥ (१५५)
भृतकाध्यापको यश्च भृतकाध्यापितस्तथा ।
शूद्रशिष्यो गुरुश्चैव वाग्दुष्टः कुण्ड-गोलकौ ॥ (१५६)
अकारणपरित्यक्ता माता-पित्रोर्गुरोस्तथा ।
ब्राह्मैर्यौनैश्च सम्बन्धैः संयोगं पतितैर्गतः ॥ (१५७)
अगारदाही गरदः कुण्डाशी सोमविक्रयी ।
समुद्रयायी बन्दी च तैलिकः कूटकारकः ॥ (१५८)
पित्रा विवदमानश्च केकरो मद्यपस्तथा' ।

केकरः तिर्यग्दृष्टिः ।

१. D. and the text ( Medhātithi ) reads दुर्बलं for दुर्बालं. २. I. reads through mistake पूर्वान्. ३. I. omits this and the following two lines. ४. Except A. I. and the text all read श्यापकश्चैव. ५. B. C. D. E. F. and H. read कटकारकः. ६. Kullūkabhaṭṭa reads कितवः for केकरः.

'पापरोग्यभिशस्त[1]स्तश्च दाम्भिको रसविक्रयी ॥ (१५९)
धनुः-शराणां कर्त्ता च यश्चाऽग्रे[2]दिधिषूपतिः।
मित्रध्रुक् द्यूत[3]वृत्तिश्च पुत्राचार्यस्तथैव च ॥ (१६०)
भ्रामरी गण्डमाली च श्वित्र्यथो पिशुनस्तथा।
उन्मत्तोऽन्धश्च वर्ज्याः स्युर्वेदनिन्दक एव च ॥ (१६१)
हस्ति-गो-ऽश्वो-ष्ट्रदमको नक्षत्रैर्यश्च जीवति।
पक्षिणां पोषको यश्च युद्धाचार्यस्तथैव च ॥ (१६२)
स्रोतसां भेदकश्चैव तेषां चावरणे रतः।
गृहसंवेशको दूतो वृक्षरोपक एव च ॥ (१६३)
श्वक्रीडी श्येनजीवी च कन्यादूषक एव च।
हिंस्रो वृषलवृत्तिश्च[4] गणानां चैव याजकः ॥ (१६४)
आचारहीनः क्लीबश्च नित्यं याचनकस्तथा।
कृषिजीवी शिल्पजीवी[5] सद्भिर्निन्दित एव च ॥ (१६५)
औरभ्रिको माहिषिकः परपूर्वापतिस्तथा।
प्रेतनिर्यातकश्चैव वर्जनीयाः प्रयत्नतः ॥ (१६६)
एतान्विगर्हिताचारानपाङ्क्तेयान्द्विजाधमान्[6]।
द्विजातिप्रवरो विद्वानुभयत्रापि वर्जयेत्[7]' ॥ (१६७)
(म. स्मृ. ३. १५०–१६७)

इति। स्तेनोऽत्र ब्रह्मस्वव्यतिरिक्तद्रव्यापहारी[8] विवक्षितः।

१. I. reads अभिशस्तः. २. D. substitutes स्यात्त for ऽग्रे-. ३. I. reads सुत- for द्यूत-. ४. Except A. and the text all read वृषलपुत्रश्च for वृषलवृत्तिश्च. ५. The text reads श्लीपदी च for शिल्पजीवी. ६. Except A. and the text all read नराधमान for द्विजाधमान्. ७. The text omits अपि and reads विवर्जयेत् for वर्जयेत्. ८. Except A. and I. all read -व्यहारी for -ऽपहारी.

तद्व्यापहारिणः पतितशब्देनोपात्तत्वात् । पारलौकिकफलदं कर्म नास्तीति मन्यमाना नास्तिकाः । तेभ्यो वृत्तिर्जीविका येषां ते नास्तिकवृत्तयः । जटिलो ब्रह्मचारी । 'अनधीयानः'—इति जटिलविशेषणम् । अतश्चानधीयानो ब्रह्मचारी प्रतिषिद्ध्यते । न तु ब्रह्मचारिमात्रम् । तस्य श्राद्धे 'पञ्चाग्निर्ब्रह्मचारिणः'—इति पात्रत्वविधानात् । न च अध्ययनरहितस्य ब्रह्मचारिणोऽश्रोत्रियत्वेन श्राद्धे प्रसक्त्यभावात् प्रतिषेधो ऽनुपपन्न इति मन्तव्यम् । यतः—

'व्रतस्थमपि दौहित्रं श्राद्धे यत्नेन भोजयेत्' ।

(म. स्मृ. ३. २३४)

इत्यत्र दौहित्रग्रहणमविवक्षितमिति भ्रान्त्या अध्ययनरहितोऽपि ब्रह्मचारी श्राद्धे भोजनीयतया प्रसक्तः प्रतिषिद्ध्यत इति । दुर्वालः खल्वाटः कपिलकेशो वा । तदुक्तं संग्रहकारेण—

'खल्वाटकश्च दुर्वालः कपिलश्चण्ड[1] एव च' ।

इति । कितवो द्यूतासक्तः । पुगयाजकाः गणयाजकाः[2] । अत्र श्राद्धे इति विशेषोपादानाद्दुर्वालादीनां श्राद्ध एव वर्ज्यत्वं न दैव इत्यवगम्यते । अन्यथा प्रकरणादेवोभयत्र निषेधावगमाद्विशेषोपादानमनर्थकं स्यात् । अत एव गौतमः—

'हविःषु चैवं[3] दुर्वालादीन्[4] श्राद्ध एवैके' ।

(गौ. स्मृ. १५. २७)

इति । हविःषु च दैवेऽपि । एवं पित्र्यवत् परीक्ष्य दुर्वालादी-

१. H. substitutes खण्डः for चण्डः. २. I. reads पुग- for पुर-, and all others omit गणयाजकाः. ३. H. omits च; while I. omits एवं. ४. B. and H. read दुर्वालादीनां.

न्वर्जयेत् । एके मन्वादयः । श्राद्ध एव न भोजयेत् दैवे तु भोजयेदित्यभिप्रायः । चिकित्सकाः जीवनार्थमदृष्टार्थं च भेषजकारिणः ।

'तस्माद् ब्राह्मणेन भेषजं न कार्यम् ।
अपूतो ह्येषो ऽमेध्यो यो भिषक्' ।

इति अविशेषेणैव निन्दार्थवाददर्शनात् । धनार्थं संवत्सरत्रयं देवार्चको देवलकः । तदुक्तं देवलेन–

'देवार्चनपरो नित्यं वित्तार्थी वत्सरत्रयम् ।
असौ देवलको नाम हव्य-कव्येषु गर्हितः ॥
अपाङ्क्तेयः स विज्ञेयः सर्वकर्मसु सर्वदा' ।

इति । आपद्यपि मांसविक्रयिणः । अनापदि विपणजीवित्वेनैव निषेधे सिद्धे 'मांसविक्रयिण'–इति पुनर्विशेषोपादानस्य वैयर्थ्यात् । अनापदि वाणिज्येन जीवन्तो विपणजीविनः । न त्वापद्यपि । तत्र–

'क्षात्रेण कर्मणा जीवेद्विशां वाऽप्यापदि द्विजः' ।
(या. स्मृ. ३. ३५)

इति वाणिज्यस्यापत्कल्पतया विहितत्वात् । विहितत्यागकारणं विना श्रौत-स्मार्त्ताग्निपरित्यक्ता परित्यक्ताग्निः । अल्पवृद्ध्या धनं स्वीकृत्याऽधिकवृद्ध्या धनप्रयोजको वार्धुषिकः । तथा च स्मृतिः–

'समर्घं धनमुद्धृत्य महार्घं यः प्रयच्छति ।
स वै वार्धुषिको नाम ब्रह्मवादिषु गर्हितः' ॥
(व. स्मृ. २. ४१)

१. I. reads देवलः. २. A. reads विप्रो for नित्यं.

इति । यक्ष्मी क्षयरोगी । अनापदि पशुपालः । अविवाहिते ज्येष्ठे अनाहिताग्नौ वा सति यः कनीयान् कृतदारपरिग्रह आहिताग्निर्वा भवेत् स परिवेत्ता । तज्ज्येष्ठस्तु परिवित्तिः । तथा च मनुः—

'दारा-ऽग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते ।
परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः' ॥
(म. स्मृ. ३. १७१)

इति । अग्रजः सोदर्यो विवक्षितः । तथा च गर्गः—

'सोदर्ये तिष्ठति ज्येष्ठे न कुर्याद्दारसंग्रहम् ।
आवसथ्यं तथाऽऽधानं पतितस्त्वन्यथा भवेत्' ॥

इति । आवसथ्यमावसथ्याधानम् । आधानं गार्हपत्याद्याधानम् । असोदर्ये तु न दोषः । तथा च शातातपः—

'पितृव्यपुत्रान् सोपत्नान्[1] परनारीसुतांस्तथा[2] ।
दाराग्निहोत्रसंयोगे न दोषः परिवेदने' ॥

इति । परनारीसुताः क्षेत्रजा भ्रातरः । यमो ऽपि—

'पितृव्यपुत्रान् सापत्नान् परपुत्रांस्तथैव च ।
दाराग्निहोत्रधर्मेषु नाऽधर्मः परिवेदने' ॥

इति । परपुत्रा दत्त-क्रीतादयः भ्रातरः । सोदर्यविषये ऽपि कश्चिद्दोषो नास्ति । तथा च शातातपः—

'क्लीबे देशान्तरस्थे च पतिते भिक्षुके ऽपि वा[3] ।
योगशास्त्राभियुक्ते च न दोषः परिवेदने' ॥

इति । भिक्षुकः प्रव्राजितः[4] । योगशास्त्राभियुक्तो विरक्तः । कात्यायनो ऽपि—

---

१. B. C. D. and F. read पितृव्यपुत्राः सापत्नाः. २. B. C. and F. read -सुताः. ३. B. C. and F. read च for वा. ४. All, except A. D. and H. omit भिक्षुकः प्रव्राजितः.

'देशान्तरस्थ-क्लीबैकवृषणानसहोदरान् ।
वेश्यातिसक्त-पतित-शूद्रतुल्या-ऽतिरोगिणः ॥
जड-मूका-ऽन्ध-बधिर-कुब्ज-वामन-खोडकान् ।
अतिवृद्धानभार्यांश्च कृषिसक्तान् नृपस्य च ॥
धनवृद्धिप्रसक्तांश्च कामतोऽकारिणस्तथा ।
कुहकोन्मत्त-चोरांश्च परिविन्दन् न दुष्यति'॥

इति । खोडो भग्नपादद्वयः । अभार्या नैष्ठिकब्रह्मचारिणः । कामतोऽकारिणः स्वेच्छयैव विवाहान्निवृत्ताः। देशान्तरगतादिषु कालप्रतीक्षामन्तरेण परिवेदने दोषो ऽस्ति । तथा च वसिष्ठः—

'अष्टौ दश द्वादश वर्षाणि ज्येष्ठं भ्रातरमनि-
विष्टमप्रतीक्षमाणः प्रायश्चित्ती भवति' ।

इति । अनिर्विष्टमकृतविवाहम् । अत्रेयं व्यवस्था—अदृष्टार्थमर्थार्थं वा द्वादशवर्षप्रतीक्षणं देशान्तरगतज्येष्ठविषयम् । अष्टौ दशेति पक्षद्वयं कार्यान्तरार्थं देशान्तरगतविषयम् । तथा च स्मृतिः—

'द्वादशैव तु वर्षाणि ज्यायान् धर्मार्थयोर्गतः ।
न्याय्यः प्रतीक्षितुं भ्राता श्रूयमाणः पुनः पुनः' ॥

इति । क्लीबादयस्तु न प्रतीक्षणीयाः । तथा च स्मृतिः—

'उन्मत्तः किल्बिषी कुष्ठी पतितः क्लीब एव वा ।
राजयक्ष्म्यामयावी च न न्याय्यः स्यात्प्रतीक्षितुम्'॥

१. H. omits this line. २. G. reads वृद्धवसिष्ठः for वासिष्ठः. ३. I. reads अनिर्विष्टम् ; while G. reads अनीक्षमाणः for अप्रतीक्षमाणः. ४. I. reads अनिर्विष्टम्. ५. All, except A. read राजयक्ष्मामयावी.

इति। विरक्त-वेश्यानिसक्तादिषु तु चिरकालानुवृत्त्या विवाहसम्भावनानिवृत्तावधिवेदनं न दोषाय। तत्र कालावधेरश्रुतत्वात्। आधानविषयेऽपि ज्येष्ठानुमत्याऽधिवेदनं न दोषः। तथा च वृद्धवसिष्ठः—

'अग्रजश्च यदाऽनग्निरादध्यादनुजः कथम्?।
अग्रजानुमतः कुर्यादग्निहोत्रं यथाविधि'॥

इति। आधानाधिकारिणि ज्येष्ठेऽनाहिताग्नावपि कनिष्ठस्तदनुमत्याऽऽधानं कुर्यादित्यभिप्रायः। अयं न्यायः पित्रादिषु द्रष्टव्यः। तथा चोशनाः—

'पिता पितामहो यस्य अग्रजो वाऽस्य कस्यचित्।
तपो-ऽग्निहोत्र-मन्त्रेषु न दोषः परिवेदने'॥

इति यस्य कस्यचित् पिता पितामहो वाऽग्रजो वाऽनाहिताग्निर्न भवति तस्य तदनुमत्याऽऽधानकरणेऽपि न दोष इत्यर्थः। एवमेव कन्यापरिवेदनेऽपि दोष-तदपवादौ द्रष्टव्यौ। अधीतविस्मृतवेदो निराकृतिः। तथा च देवलः—

'अधीत्य विस्मृते वेदे भवेद्विप्रो निराकृतिः'।

इति। नानाजातीया अनियतवृत्तयो गणास्तेषां मध्यवर्त्ती गणाभ्यन्तरः। कुशीलवो गायकादिः। वृषलीपतिस्तु रजस्वलायाः कन्यायाः पतिः। तदुक्तं देवलेन—

'वन्ध्या तु वृषली ज्ञेया वृषली च मृतप्रजा।
अपरा वृषली ज्ञेया कुमारी या रजस्वला॥

१. D. reads अस्तुतत्वात् for अश्रुतत्वात्. २. D. reads वसिष्ठः for वृद्धवसिष्ठः. ३. G. reads अग्नीति. ४. I. reads अनियमवृत्तयो.

यस्त्वेनामुद्वहेत् कन्यां ब्राह्मणो ज्ञानदुर्बलः ।
अश्राद्धेयमपाङ्क्तेयं तं विद्याद्वृषलीपतिम्'॥

इति। यस्य गृहे [1]उपपतिर्जारः सदा संवसेत् सोऽपि वर्ज्यः। तदुक्तं देवलेन–

'परदाराभिगो मोहात् पुरुषो जार उच्यते ।
स एवोपपतिर्ज्ञेयो यः सदा संवसेद्गृहे' ॥

इति। वाग्दुष्टो निष्ठुरवाक्। पतितैर्महापातकिसंसर्गिभिः सह ब्राह्मैर्यौनैश्च सम्बन्धैर्विद्या-योनिसम्बन्धैर्यः संयोगं गतः सोऽत्र विवक्षितः। न तु साक्षात् संसर्गी। तस्य पतितशब्देनैवोपात्तत्वात्। केकरो [2]ऽध्यर्धदृष्टिः। अग्रेदिधिष्वाः पतिरग्रेदिदिधिषूपतिः। ज्येष्ठायामनूढायामूढा कनिष्ठा या साऽग्रेदिधिषुः। तदुक्तं देवलेन–

'ज्येष्ठायां यद्यनूढायां कन्यायामुह्यतेऽनुजा ।
सा चाऽग्रेदिधिषूर्ज्ञेया पूर्वा तु दिधिषूर्मता'॥

इति। पुत्राचार्योऽक्षरपाटकः। भ्रामरी वृत्त्यर्थमेव भ्रमरवदर्थार्जकः। गृहसंवेशको वर्धकिवृत्त्या वर्त्तमानः। उरभ्रा अवयः। त एव वृत्त्यर्थं पालनीया यस्यासावौरभ्रिकः। महिष्यः पाल्या यस्यासौ माहिषकः। अथवा व्यभिचारिणीपुत्रः। तदाह देवलः–

'महिषीत्युच्यते भार्या सा चैव व्यभिचारिणी।
तस्यां यो जायते गर्भः स वै माहिषकः स्मृतः' ॥

इति। एतान् पूर्वोक्तानुभयत्र दैवे पित्र्ये च वर्जयेदित्यर्थः। यमोऽपि–

१. B. C. F. and H. omit उपपतिः. २. I. reads अर्ध- for ऽध्यर्ध .

'काणाः कुब्जाश्च षण्ढाश्च कृतघ्ना गुरुतल्पगाः ।
ब्रह्मघ्नाश्च सुरापाश्च स्तेना गोघ्नाश्चिकित्सकाः ॥
राष्ट्रकामास्तथोन्मत्ताः पशुविक्रयिणश्च ये ।
मानकूटास्तुलाकूटाः शिल्पिनो ग्रामयाजकाः ॥
राजभृत्या-ऽन्ध-बधिरा मूक-खल्वाट-पङ्गवः ।
वृषलीफेनपीताश्च श्रेणियाजकयाजकाः ॥
कालोपजीविनश्चैव ब्रह्मविक्रयिणस्तथा ।
दण्डपूजाश्च ये विप्रा ग्रामकृत्यपराश्च ये ॥
अगारदाहिनश्चैव गरदा वनदाहकाः ।
कुण्डाशिनो देवलकाः परदाराभिमर्शकाः ॥
श्यावदन्ताः कुनखिनः शिल्पिनः कुष्ठिनश्च ये ।
वणिजो मधुहर्त्तारो हस्त्यश्वदमका द्विजाः ॥
कन्यानां दूषकाश्चैव ब्राह्मणानां च दूषकाः ।
सूचकाः प्रेष्यकाश्चैव कितवाश्च कुशीलवाः ॥
समयानां च भेत्तारः प्रदाने ये च बाधकाः ।
अजाविका माहिषिकाः सर्वविक्रयिणश्च ये ॥
धनुःकर्त्ता वृतवृत्तिर्मित्रध्रुक् शस्त्रविक्रयी ।
पाण्डुरोगी गण्डमाली यक्ष्मी च भ्रामरी तथा ॥
पिशुनः कूटसाक्षी च दीर्घरोगी वृथाऽऽश्रमी ।
प्रव्रज्योपनिवृत्तश्च वृथा प्रव्रजितश्च यः ॥
यश्च प्रव्रजिताज्जातः प्रव्रज्याऽवसितश्च यः ।

१. I. reads मूर्ख- for मूक-. २. B. C. and F. read विदूषकाः for च दूषकाः. ३. D. reads समर्थानां for समयानां. ४. B. C. F. and I. read माहिषकाः for माहिषिकाः.

तावुभौ ब्रह्मचण्डालावाह वैवस्वतो यमः ॥
राज्ञः प्रेष्यकरो यश्च ग्रामस्य नगरस्य वा ।
समुद्रयायी वान्ताशी केशविक्रयिणश्च ये ॥
अवकीर्णी च वीरघ्नो गुरुघ्नः पितृदूषकः ।
गोविक्रयी च दुर्वालः पूगानां चैव याजकः ॥
मद्यपश्च कदर्यश्च सह पित्रा विवादकृत् ।
दाम्भिको वर्धकीभर्त्ता त्यक्तात्मा दारदूषकः ॥
सद्भिश्च निन्दिताचारः स्वकर्मपरिवर्जकः ।
परिवित्तिः परिवेत्ता भृत्याचार्यो[२] निराकृतिः ॥
शूद्राचार्यः सुताचार्यः शूद्रशिष्यस्तु नास्तिकः ।
इष्वस्त्रदारकाचार्यो मानकृत्तैलिकस्तथा ॥
चोरा[३] वार्धुषिका दुष्टाः परस्वानां च दूषकाः ।
चतुराश्रमबाह्याश्च सर्वे ते पङ्क्तिदूषकाः ॥
इत्येतैर्लक्षणैर्युक्तांस्तान् द्विजान्न नियोजयेत्' ।

विद्यादिगुणयोगेऽप्येतेषां वर्जनीयत्वं ब्रह्माण्डपुराणेऽभिहितम्—

'श्राद्धार्हगुणयोगेऽपि नैते जातु कथञ्चन ।
निमन्त्रणीयाः श्राद्धेषु सम्यक्फलमभीप्सता' ॥

इति ॥

## अथ ब्राह्मणनिमन्त्रणम् ।

एवं ब्राह्मणान् प्रागेव सम्यक् परीक्ष्य पूर्वेद्युर्निमन्त्रयीत । तथा च हारीतः—

---

१. B. C. and F. read -च्चाण्डालौ for -चण्डालौ. २. I. reads भृताचार्यः for भृत्याचार्यः. ३. B. C. and F. read चोरवार्धुषिकाः for चोरा वार्धुषिकाः.

'यत्नेनैवंविधान् श्राद्धमाचरिष्यन् पूर्वेद्युर्निमन्त्रयेत्' ।

(हा. स्मृ. १३. २९)

इति । असम्भवे परेद्युर्निमन्त्रयीत । तथा च कौर्मे–

'श्वो भविष्यति मे श्राद्धं पूर्वेद्युरभिपूजयेत् ।

असम्भवे परेद्युर्वा यथोक्तैर्लक्षणैर्युतान्'॥

(कू. पु. १. २. २२. २)

इति । देवलोऽपि–

'श्वः कर्त्ताऽस्मीति निश्चित्य दाता विप्रान्निमन्त्रयेत् ।

निरामिषं सकृद्भुक्त्वा सर्वभुक्तजने गृहे ॥

असम्भवे परेद्युर्वा ब्राह्मणांस्तान्निमन्त्रयेत्' ।

इति । अत्र विशेषो मनुना दर्शितः–

'पूर्वेद्युरपरेद्युर्वा श्राद्धकर्मण्युपस्थिते ।

निमन्त्रयीत त्र्यवरान् सम्यग्विप्रान् यथोदितान्' ॥

(म. स्मृ. ३. १८७)

इति । वराहपुराणे–

'वस्त्रशौचादि कर्त्तव्यं श्वः कर्त्ताऽस्मीति जानता ।

स्थानोपलेपनं भूमिं कृत्वा विप्रान्निमन्त्रयेत् ॥

दन्तकाष्ठं च विसृजन् ब्रह्मचारी शुचिर्भवेत्' ।

---

१. The text reads निमन्त्रयीत, for निमन्त्रयेत; while D. reads अभिपूजयेत for the same. २. B. C. F. G. and H. read कूर्मः and I. कूर्मे; while D. omits the following:—

असम्भवे परेद्युर्निमन्त्रयीत । तथा च कौर्मे –

'श्वो भविष्यति मे श्राद्धं पूर्वेद्युरभिपूजयेत ।

३. The text reads -पूज्य च for -पूजयेत. ४. D. reads निर्मन्त्र्य for निश्चित्य. ५. D. omits this and the following line.

इति। श्राद्धभूमिं परिगृह्य गोमयादिना तत्स्थानोपलेपनं कृत्वा विप्रान् रात्रौ निमन्त्रयेदित्यर्थः। तथा च ब्रह्माण्डपुराणम्—

'पूर्वेऽह्नि रात्रौ विप्राग्र्यान् कृतसायन्तनाशनान्।
गत्वा निमन्त्रयेद्देव-पित्रुद्देशसमन्वितः'॥

इति। निमन्त्रणप्रकारः प्रचेतसा दर्शितः—

'कृतापसव्यः पूर्वेद्युः पितॄन् पूर्वं निमन्त्रयेत्।
भवद्भिः पितृकार्यं नः सम्पाद्यं च प्रसीदत॥
सव्येन वैश्वदेवार्थं प्रणिपत्य निमन्त्रयेत्'।

इति। अत्र प्रणतिपूर्वकं निमन्त्रणं शूद्रविषयम्। तथा च पुराणम्—

'दक्षिणं चरणं विप्रः सव्यं वै क्षत्रियस्तथा।
पादावादाय वैश्यो द्वौ शूद्रः प्रणतिपूर्वकम्'॥

इति। दक्षिणचरणस्पर्शो जानुप्रदेशे कर्त्तव्यः। तथा च मत्स्यः—

'दक्षिणं जानुमालभ्य त्वं मयाऽत्र निमन्त्रितः'।
(म. पु. १६. १९)

इति। 'पूर्वं निमन्त्रयेत्' इत्यत्र पूर्वपदस्य वैश्वदेवार्थं निमन्त्रयेदिति व्यवहितेनान्वयः। अत एव बृहस्पतिः—

'उपवीती ततो भूत्वा देवतार्थं द्विजोत्तमान्।
अपसव्येन पित्र्ये च स्वयं शिष्योऽथ वा सुतः'॥

इति॥

---

१. B. C. and F. insert इति before भवद्भिः, and omit this and the following line. २. D. reads -विषयः for -विषयम्, and omits the following: तथा च पुराणम्

'दक्षिणं चरणं विप्रः सव्यं वै क्षत्रियस्तथा।
पादावादाय वैश्यो द्वौ शूद्रः प्रणतिपूर्वकम्'॥

इति। ३. The text reads तु for ऽत्र.

## अथ ब्राह्मणसंख्या ।

पार्वणश्राद्धे ब्राह्मणसङ्ख्यामाह पैठीनसिः —

'ब्राह्मणान् सप्त पञ्च द्वौ वा श्रोत्रियानामन्त्रयेत्' ।

इति । यदा पञ्च ब्राह्मणाः तदा दैवे द्वौ पित्र्ये त्रय इति विभागः ।

'द्वौ दैवे पितृकार्ये त्रीन्' ।

( म. स्मृ. ३. १२५ )

इति मनुस्मरणात् । यदा सप्त तदा दैवे चत्वारः । पित्र्ये त्रयः ।

'अयुजो भोजयेच्छ्राद्धे न समा दैविके समाः' ।

इति आङ्गिरसस्मरणात् । नन्वेतद्वचनं दैवे द्वौ पित्र्ये पञ्च इति विभागेऽप्युपपद्यते इति चेत् । मैवम् । त्रिपञ्चानामयुग्मसङ्ख्यया त्रिभागानुपपत्तेः । नन्वेकत्र त्रय इतरत्रैकः इति विभाग उपपद्यत—इति वाच्यम् ।

'समं* स्यादश्रुतत्वात्' ।

( पू. मी. १०. ३. ५३ )

इति न्यायेन त्रिपर्वविभागस्या न्याय्यत्वात् । तस्मादयुग्म-

* विभागः समः स्यात् । कुतः अश्रुतत्वात् वैषम्यहेतोर्विशेषस्य अश्रुतत्वात् । साम्यहेतुस्तु लौकिको न्यायः । लोके हि पुत्राणां पितृधने समविभागो दृष्टः । तस्मात् सम एव विभाग इत्येकः पक्षः । कर्मकरेषु प्रयासानुरूपेण भृतितारतम्यं दृष्टं तद्वदत्रापि इति द्वितीयः पक्षः । तत्र अयुग्मविप्रसंख्ययैव पित्र्ये समविभागो भवतीत्यतो ऽयुग्मसंख्यका एव विप्राः पित्र्ये निमन्त्रणीया इति राद्धान्तः ।

१. D. omits वा. २. From this word to विभागस्याऽन्याय्यत्वात् (both inclusive) the intermediate portion is omitted by L., and D. omits the portion between मनुस्मरणात् and नन्वेतद्वचनं. ३. D. omits the portion between मैवम् and समं स्यात्. ४. G. reads ननु for नन्व.

सङ्ख्यया समविभागार्थं पित्र्ये त्रय इति युक्तम्[1] । यत्तु शौनकेन पित्र्ये ऽपि युग्मविधानं कृतम्—

'एकैकस्य द्वौ द्वौ' ।

इति तद्वृद्धिश्राद्धविषयम् । पित्रादिस्थानेषु सति सामर्थ्ये एकैकस्य त्रींस्त्रीन्विप्रान् भोजयेत् । तथा च शौनकः—

'एकैकमेकैकस्य त्रींस्त्रीन्वा' ।

इति । अत्यन्तविभवे सत्येकैकस्य पञ्च सप्त वा ब्राह्मणान् भोजयेत् । तथा च गौतमः—

'नवावरान् भोजयेदयुजो वा यथोत्साहम्' ।

(गौ. स्मृ. १५. ७)

इति । अस्यार्थः—यथोत्साहं यथाविभवं पित्रादिस्थानेषु प्रत्येकमयुजः पञ्च सप्त वा ब्राह्मणान् भोजयेदिति । ननु[2]—अयुजो भोजयेदिति वचनस्य कथं पञ्चसु सप्तसु वा ब्राह्मणेषु पर्यवसानम्?

'सामर्थ्ये ऽपि नवभ्योऽर्वाग्भोजयीत सति द्विजान् ।
नोर्ध्वं कर्त्तव्यमित्याहुः केचित्तद्दोषदर्शिनः' ॥

इति ब्रह्माण्डपुराणवचनादिति ब्रूमः । शौनक-गौतमाभ्यामुक्तोऽयं श्राद्धविस्तरो मनुना नादृतः[3]—

'द्वौ दैवे पितृकार्ये त्रीन् एकैकमुभयत्र वा ।
भोजयेत्सुसमृद्धोऽपि न प्रसज्जेत विस्तरे ॥

१. D. and G. read उक्तम् for युक्तम्. २. I. omits wrongly ननु—अयुजो भोजयेदिति. ३. B. C. and F. read व्यावृत्तः for नादृतः, D. and G. substitute वर्जितः for the same.

सत्क्रियां देश-कालौ च शौचं ब्राह्मणसम्पदम् ।
पञ्चैतान्विस्तरो हन्ति तस्मान्नेहेत विस्तरम्' ॥

(म. स्मृ. ३. १२५-२६)

इति सकारणमेव विस्तरप्रतिषेधात् । अत एव वृद्धबृहस्पतिरपि—

'एकैकमथवा द्वौ त्रीन् दैवे पित्र्ये च भोजयेत् ।
सत्क्रिया-काल-पात्रादि न सम्पद्येत विस्तरे' ॥

इति । वसिष्ठोऽपि

'द्वौ दैवे पितृकार्ये त्रीनेकैकमुभयत्र वा ।
भोजयेत्सुसमृद्धोऽपि विस्तरं तु विवर्जयेत्' ॥

( व. स्मृ. ११. २७ )

इति । अत एव याज्ञवल्क्येनापि सङ्कोचपक्ष एव विहितः—

'द्वौ दैवे प्राक् त्रयः पित्र्ये उदगेकैकमेव वा ।
मातामहानामप्येवं तन्त्रं वा वैश्वदैविकम्' ॥

( या. स्मृ. १. २२८ )

इति । एकैकमुभयत्रेति ब्राह्मणाद्यसम्भवे वेदितव्यम् ।
यत्तु शङ्खेनोक्तम्—

'भोजयेदथ वाप्येकं ब्राह्मणं पङ्क्तिपावनम्' ।

इति तदप्यलाभविषयम् । यदा त्वेक एव भोक्ता तदैवमाह वसिष्ठः—

१. D. reads देवं for शौचं. २. D. and the text read -सम्पद: for सम्पदम्. ३. I. reads अकारण-, for सकारण-. ४. D. E. G. and H. do not prefix वृद्ध- to -बृहस्पतिः. ५. The text reads न प्रसज्जेत विस्तरं for विस्तरं तु विवर्जयेत्. ६. H. reads सङ्कोच एव पक्षे; while I. substitutes पक्षो for पक्षे, and G. omits पक्षे. ७. I. reads उत वैकैकमेव for उदगेकैकमेव.

'यद्येकं भोजयेच्छ्राद्धे दैवं तत्र कथं भवेत्? ।
अन्नं पात्रे समुद्धृत्य सर्वस्य प्रकृतस्य तु ॥
देवतायतने कृत्वा [1]यथाविधिवदर्चयेत् ।
प्रास्येदग्नौ तदन्नं तु दद्याद्वा ब्रह्मचारिणे'॥

(व. स्मृ. ११. ३०–३१)

इति । निमन्त्रणे नियमान्तरमाह [2]मत्स्यः—

'[3]एवं निमन्त्र्य [4]नियमान् श्रावयेत् पैतृकान् बुधः ॥
अक्रोधनैः शौचपरैः सततं ब्रह्मचारिभिः ।
भवितव्यं भवद्भिश्च मया च श्राद्ध[5]कारिणा'॥

(म. पु. १६. १९–२०)

इति ॥

## अथ निमन्त्रितब्राह्मणकर्तव्यम् ।

निमन्त्रितैर्यत्कर्त्तव्यं तदाहाऽत्रिः—

'ते तं तथेत्यविघ्नेन गतेयं रजनी यदि ।
यथाश्रुतं प्रतीक्षेरन् श्राद्धकालमतन्द्रिताः'॥

इति । ते निमन्त्रिता विप्रास्तं श्राद्धकर्त्तारमविघ्नपूर्वकं तथाऽस्त्वित्युक्त्वा यथाश्रुतं विहितं नियमजातं श्राद्धकालं श्राद्धे भुक्तं यावत् जीर्यति तावदनुतिष्ठेरन्नित्यर्थः । तथा च प्रचेताः—

'[6]आ चान्नपरिणामात्तु ब्रह्मचर्यं द्वयोः स्मृतम्'।

इति । यमोऽपि—

---

१. H. reads यथाविधि प्रवर्तते, I. यथाविधि प्रवर्तयेत् and the text ततः श्राद्धं प्रवर्तयेत्. २. D. substitutes याज्ञवल्क्यः for मत्स्यः, but the following quotation does not appear in Yâjñavalkya. ३. Except A. and the text all read पठन् for एवं; while B. C. and F. read निर्मन्त्र्य for निमन्त्र्य. ४. The text reads नियमं for नियमान् and बान्धवान् for पैतृकान्. ५. B. reads श्राद्धकर्मणि; while G. reads श्राद्धकारणं. ६. G. and H. read अशनपरिणामात् for आ चान्नपरिणामात्, E. अशितान्नपरिणामात्, D. स्यादन्नपरिणामात् and I. आऽशनपरिणामात for the same.

'आमन्त्रितास्तु ते विप्राः श्राद्धकाल उपस्थिते ।
वसेयुर्नियताहारा ब्रह्मचर्यपरायणाः ॥
अहिंसा सत्यमक्रोधो दूरे च गमनक्रिया ।
अभारोद्वहनं चेति श्राद्धस्योपासनाविधिः' ॥

इति । तथाऽस्त्वित्यङ्गीकारः सति सामर्थ्ये अनिन्दितामन्त्रणविषयः । तथा च कात्यायनः—

'अनिन्द्येनामन्त्रितो नातिक्रामेत्' ।

इति । शक्तेन न प्रत्याख्यानं कर्त्तव्यमिति । यस्त्वामन्त्रणमङ्गीकृत्य सत्यपि सामर्थ्ये पश्चान्निवारयति तस्य दोषो ऽस्ति । तथा च मनुः—

'केतितस्तु यथान्यायं हव्य-कव्ये द्विजोत्तमः ।
कथञ्चिदप्यतिक्रामन् पापः सूकरतां व्रजेत्' ॥
(म. स्मृ. ३. १९०)

इति । केतितो निमन्त्रितः । यमो ऽपि—

'आमन्त्रितश्च[१] यो विप्रो भोक्तुमन्यत्र गच्छति ।
नरकाणां शतं गत्वा चण्डालेष्वभिजायते' ॥

इति । निमन्त्रितब्राह्मणपरित्यागे प्रत्यवायो ऽस्ति । तथा च नारायणः—

'निकेतनं कारयित्वा निवारयति दुर्मतिः ।
ब्रह्महत्यामवाप्नोति शूद्रयोनौ च जायते' ॥

इति । यस्त्वामन्त्रितो विप्रश्चाहूतो ऽपि श्राद्धकालातिक्रमं करोति तस्य प्रत्यवाय आदिपुराणे[२] ऽभिहितः—

१. D. reads आमन्त्रितो. २. D. and G. substitute भविष्यपुराणे for आदिपुराणे.

'आमन्त्रितश्चिरं नैव कुर्याद्विप्रः कदाचन।
देवतानां पितृणां च दातुरन्नस्य चैव हि॥
चिरकारी भवेद्द्रोही पच्यते नरकाग्निना'।

इति। दातृ-भोक्त्रोर्ब्रह्मचर्यनियमातिक्रमे प्रत्यवायस्तु तत्रे-तत्रोक्तः[1]। तत्र वृद्धमनुः—

'ऋतुकालं नियुक्तो वा नैव गच्छेत् स्त्रियं क्वचित्।
तत्र गच्छन् समाप्नोति ह्यनिष्टफलमेव तु'॥

इति। गौतमः—

'सद्यःश्राद्धी शूद्रातल्पगतस्तत्पुरीषे मासं नयति पितॄन्'[2]।

(गौ. स्मृ. १९. १८)

इति। श्राद्धी श्राद्धकर्त्ता। सद्यस्तत्क्षणमारभ्येत्यर्थः। मनुः—

'आमन्त्रितस्तु यः श्राद्धे वृषल्या सह मोदते।
दातुर्यद् दुष्कृतं किञ्चित् तत्सर्वं प्रतिपद्यते'॥

(म. स्मृ. ३. १९१)

इति। यमः—

'आमन्त्रितस्तु यः श्राद्धे अध्वानं प्रतिपद्यते।
भवन्ति पितरस्तस्य तन्मासं[3] पांशुभोजनाः'॥

इति॥

## अथ श्राद्धदिनकृत्यम्।

श्राद्धे दिनकृत्यं प्रचेतसा दर्शितम्—

१. B. C. and F. do not repeat तत्र. २. Except A. and the text all read नयेत् for नयति. ३. I. reads तन्मांसं for तन्मासं.

'श्राद्धभुक् प्रातरुत्थाय प्रकुर्याद्दन्तधावनम् ।
श्राद्धकर्त्ता न कुर्वीत दन्तानां धावनं बुधः' ॥

इति । देवलोऽपि—

'तथैव यन्त्रितो दाता प्रातः स्नात्वा सहाम्बरः ।
आरभेत नवैः पात्रैरन्नारम्भं स्वबान्धवैः ॥
तिलानवकिरेत्तत्र सर्वतो बन्धयेदजान् ।
असुरापहृतं सर्वं तिलैः शुद्ध्यत्यजेन च ॥
ततोऽन्नं बहुसंस्कारं नैकव्यञ्जनभक्ष्यवत् ।
चोष्य-पेयसमृद्धं च यथाशक्ति प्रकल्पयेत्' ॥

इति ॥

## अथ श्राद्धार्हद्रव्याणि ।

अत्र द्रव्याणि प्रचेता आह—

'कृष्णमाषास्तिलाश्चैव श्रेष्ठाः स्युर्यव-शालयः ।
महायवा व्रीहियवास्तथैव च मधूलिकाः ॥
कृष्णाः श्वेताश्च लोहाश्च ग्राह्याः स्युः श्राद्धकर्मणि' ।

इति । यवाः सितशूकाः । शालयः कलमाद्याः । महायवा व्रीहियवाश्च यवविशेषाः । मधूलिका धान्यविशेषः । कृष्णाः स्थलजाः कृष्णवर्णव्रीहयः । लोहा रक्तशालयः । मार्कण्डेयोऽपि—

१. I. reads तु for न, and G. न दन्तधावनं बुधः for दन्तानां धावनं बुधः D. reads दन्तधावनकं. for दन्तानां धावनं. २. D. reads आमन्त्रितो. ३. H. reads पाकारम्भं for अन्नारम्भं, and E. reads सम्भारं सं for the same. ४. I. reads नैकभाजनभक्तवत्.

'यव-व्रीहि-सगोधूमतिला मुद्गाः ससर्षपाः।
प्रियङ्गवः कोविदारा निष्पावाश्चाऽत्र[२] शोभनाः'॥

(मा. पु. ३२. १०)

इति। अत्र गोधूमानामावश्यकत्वमत्रिणोक्तम्—

'अगोधूमं च यच्छ्राद्धं कृतमप्यकृतं भवेत्'।

इति। वायुपुराणेऽपि—

'बिल्वा-ऽऽमलक-मृद्वीका-पनसा-म्रात-दाडिमम्।
चव्यं पालेवता-ऽक्षोट-खर्जूराणां फलानि च॥
कशेरु कोविदारश्च तालकन्दस्तथा बिसम्।
कालेयं कालशाकं च सुनिषण्णं सुवर्चला॥
कट्फलं कौङ्कणी[३] द्राक्षा लकुचं मोचमेव च।
कर्कन्धूग्रीवकं[४] चारु तिन्दुकं मधुसाह्वयम्॥
वैकङ्कतं नालिकेरं शृङ्गाटकपरूषकम्।
पिप्पली मरिचं चैव पटोलं बृहतीफलम्॥
सुगन्धिमत्स्यमांसं च कलायाः सर्व एव च।
एवमादीनि चान्यानि स्वादूनि मधुराणि च॥
नागरं चात्र वै देयं दीर्घमूलकमेव च'।

इति। मृद्वीका द्राक्षा। आम्रातकः कपीतनः। चव्यं चविका। अक्षोटः शैलोद्भवः पीलुः[५]। कशेरु भद्रमुस्ता। कालेयकं दारुहरिद्रा। सुनिषण्णं वितुन्नशाकम्। कट्फलं श्रीपर्णिका।

१. Except A. and the text all read सगोधूमास्तिलमुद्गाः. २. The text reads चाऽति- for चाऽत्र. ३. We follow here the majority of the manuscripts. I. alone reads किङ्किनी(णी). ४. D. H. and I. read कच-न्धूमीवकं. ५. H. and I. omit पीलुः.

लकुचो लिकुचः । मोचं कदलीफलम् । कर्कन्धूर्बदरी । तिन्दुकः शिनिसारकः । शृङ्गाटकं जलजं त्रिकण्टकम् । बृहतफलं निदिग्धिकाफलम् । दीर्घमूलकं तुण्डिकेरीफलम् । बिल्वामलकादीनि प्रसिद्धानि । पालेवत-मीवक-परूषकादीन्यप्रसिद्धानि । शङ्खोऽपि—

'आम्रान् पालेवतानिक्षून् मृद्वीकां चव्य-दाडिमम् ।
विदार्यांश्च भचुण्डांश्च श्राद्धकालेऽपि दापयेत् ॥
द्राक्षां मधुयुतां दद्यात् सक्तून् शर्करया सह ।
दद्याच्छ्राद्धे प्रयत्नेन शृङ्गाटक-कशेरुकान्' ॥

( शं. स्मृ. १३. २१–२२ )

इति । आदित्यपुराणेऽपि—

'मधूकं रामठं चैव कर्पूरं मरिचं गुडम् ।
श्राद्धकर्मणि शस्तानि सैन्धवं त्रपुषं तथा' ॥

इति । अत्र विशेषो मार्कण्डेयेन दर्शितः—

'गोधूमैरिक्षुभिर्मुद्गैः क्षीणकैश्चणकैरपि ।
श्राद्धेषु दत्तैः प्रीयन्ते मासमेकं पितामहाः ॥
विदार्यांश्च भचुण्डैश्च बिसैः शृङ्गाटकैस्तथा ।
केचुकैश्च तथा कन्दैः कर्कन्धु-बदरैरपि ॥
पालेवतैरातुकैश्चाप्यक्षोटैः पनसैस्तथा ।
काकोल्याः क्षीरकाकोल्यास्तथा पिण्डालकैः शुभैः ॥

१. I. omits -मीवक-. २. D. reads भतुण्डांश्च for भचुण्डांश्च. ३. G. and H. omit अपि. ४. B. C. and F. read चीणकैः. ५. D. E. G. and I. read भचूडैः. ६. B. C. and F. read -रारुकैः for -रातुकैः. ७. I. only reads काकोल्य- क्षीरकाकोल्यः.

लाजाभिश्च शलाभिश्च त्रपुषोर्वारु-चिर्भटैः[1] ।
सर्षपा-राजशाकाभ्यामिङ्गुदैराजजम्बुभिः ॥
प्रियालामलकैर्मुख्यैः पीलुभिश्चातिलम्बकैः[2] ।
वेत्राङ्कुरैस्तालकन्दैश्चक्रिकाक्षीरिकावचैः[3] ॥
मोचैः समोचैर्लकुचैस्तथा वै बीजपूरकैः[4] ।
मुञ्जातकैः पद्मफलैर्भक्ष्य-भोज्यैः सुसंस्कृतैः ॥
रागखाडव-चोष्यैश्च[5] त्रिजातकसमन्वितैः ।
दत्तैस्तु मासं प्रीयन्ते श्राद्धेषु पितरो नृणाम्' ॥

इति। विदारी कृष्णवर्णभूकूष्माण्डफलम्। केचुकः कचूराख्यशाकम्। कन्दः सूरणः। उर्वारुः[6] स्वादुकर्कटी। चिर्भटस्तिक्तकर्कटी। सर्षपेति दीर्घः छान्दसः। राजशाकं कृष्णसर्षपः। इङ्गुदः तापसतरुः। प्रियालो राजादनम्। चक्रिका चिञ्चा। क्षीरिका फलाध्यक्षम्। रागखाडवाः पानविशेषाः। त्रिजातकं लवङ्गैला-गन्धपत्राणि। मत्स्यपुराणेऽपि—

'अन्नं तु सदधि-क्षीरं गोघृतं शर्करान्वितम्।
मासं प्रीणाति सर्वान् वै पितृनित्याह केशवः'॥
(म. पु. १७. ३०)

इति। मनुरपि—

'तिलैर्व्रीहि-यवैर्माषैरद्भिर्मूल-फलेन वा।
दत्तेन मासं प्रीयन्ते[7] विधिवत्पितरो नृणाम् ॥

---

१. B. C. F. H. and I. read wrongly; -चिर्भिटैः. २. G. substitutes पशुभिः for पीलुभिः, for the same E. and I. read पङ्कुभिः; while all except A. read च तिलम्बकैः for चाऽतिलम्बकैः and D. alone reads च तिलाम्बुभिः. ३. G. reads वेशाङ्कुरैः. ४. B. C. E. F. and H. read बीजपुत्रकैः. ५. Except A. all read -षाडव- for -खाडव-. ६. I. reads उर्वांरुः. ७. The text reads तृप्यन्ति for प्रीयन्ते.

द्वौ मासौ मत्स्यमांसेन त्रीन्मासान् हारिणेन तु ।
औरभ्रेणाथ चतुरः शाकुनेनेह पञ्च वै ॥
षण्मासांश्छागमांसेन पार्षतेनेह सप्त वै ।
अष्टावेणस्य मांसेन रौरवेण नवैव तु ॥
दश मासांस्तु तृप्यन्ति वराह-महिषामिषैः ।
शश-कूर्मयोस्तु मांसेन मासानेकादशैव तु ॥
संवत्सरं तु गव्येन पयसा पायसेन वा ।
वार्ध्रीणसस्य मांसेन तृप्तिर्द्वादशवार्षिकी ॥
कालशाकं महाशल्कं खड्गलोहामिषं मधु ।
आनन्त्यायैव कल्पन्ते मुन्यन्नानि च सर्वशः' ॥

(म. स्मृ. ३. २६७-७२)

इति । वार्ध्रीणसो रक्तवर्णवृद्धच्छागः । तदुक्तं विष्णुधर्मोत्तरे—

त्रिःपिबं त्विन्द्रियक्षीणं यूथस्याग्रसरं तथा ।
रक्तवर्णं तु राजेन्द्र छागं वार्ध्रीणसं विदुः' ॥

(वि. ध. १. ४१. १४९)

इति । पक्षिविशेषो वा—

'कृष्णग्रीवो रक्तशिराः श्वेतपक्षो विहङ्गमः ।
स वै वार्ध्रीणसः प्रोक्त इत्येषा वैदिकी श्रुतिः' ॥

इति निगमवचनात् । कालशाकमुत्तरदेशे प्रसिद्धम् । महा-

१. The text substitutes अथ for इह. २. B. C. and F. substitute अथ for इह and the text reads च for the same. ३. Except A. I. and the text all read तैणेय- for एणस्य, D. reads ऐणेन for the same. ४. The text alone reads महाशल्का; while all Except A. and the text read खड्गं लोहामिषं. ५. The text reads कल्प्यन्ते. ६. I. and the text read त्रिपिबं.

शल्को मत्स्यविशेषः। खड्गः खड्गमृगः। लोहो लोहितवर्णश्छागः। मुन्यन्नानि नीवाराद्यन्नानि। श्राद्धे कोद्रवादिधान्यानि वर्जयेत्। तथा च व्यासः—

'अश्राद्धेयानि धान्यानि कोद्रवाः पुलकास्तथा।
हिङ्गु द्रव्येषु शाकेषु काला-ऽनल-शुभास्तथा'[१]॥

इति। कोद्रवाः कोरदूषकाः। पुलकाः पुलाकाः। छान्दसो ऽत्र ऽह्रस्वः। संस्कारकद्रव्येषु[२] हिङ्गुद्रव्यमश्राद्धेयम्। कालः कृष्णजीरकः। अनलश्चित्रकः। शुभा शुभाख्यः शाकविशेषः। एतानि शाकान्यश्राद्धेयानि। ननु—

'मधूकं[३] रामठं चैव कर्पूरं मरिचं गुडम्'।

इति आदिपुराणे[४] हिङ्गुद्रव्यस्य श्राद्धेयत्वमुक्तं तत्कथं तस्याऽश्राद्धेयत्वमुच्यते—इति चेत्। सत्यम्।

'अतिरात्रे षोडशिनं गृह्णाति।
नाऽतिरात्रे षोडशिनं गृह्णाति'।

इतिवदत्रापि विधि-प्रतिषेधदर्शनाद्विकल्पो ऽस्तु। एवमेवाऽन्यत्रापि। भारद्वाजो[५] ऽपि—

'मुद्गाढकी-माषवर्जं द्विदलानि[६] दद्यात्'।

इति। मुद्गः कृष्णेतरः। आढकी तुवरी। माषो राजमाषः।

---

१. H. has the marginal reading -शुभाशुभाः. २. B. C. and F. omit संस्कारकद्रव्येषु हिङ्गुद्रव्यमश्राद्धेयम्।, and read कावः for कालः, and D. E. G. H. and I. read कृष्णर्जकः for कृष्णजीरकः;— while B. C. and F. omit the following :—

अनलश्चित्रकः। शुभा शुभाख्यः शाकविशेषः। एतानि शाकान्यश्राद्धेयानि।.

३. F. and I. read मधूरं for मधूकं. ४. D. and G. read आदित्यपुराणे for आदिपुराणे. ५ D. and H. omit भारद्वाजोऽपि; while B. C. F. and G. read भरद्वाजः for भारद्वाजोऽपि. ६. Except A. all read विदलानि for द्विदलानि.

एतैर्विना द्विदलानि दद्यादित्यर्थः । माषग्रहणं कुलित्थादीनामुपलक्षणार्थम् । अत एव चतुर्विंशतिमतम्—

'कोद्रवान् राजमाषांश्च कुलित्थान्वरकांस्तथा ।
निष्पावांस्तु विशेषेण पञ्चैतांस्तु विवर्जयेत् ॥
यावनालानपि तथा वर्जयन्ति विपश्चितः' ।

इति । वरकाः वनमुद्गाः । अन्यत् प्रसिद्धम् । अत्र निष्पावनिषेधः कृष्णनिष्पावविषयः ।

'कृष्णधान्यानि सर्वाणि वर्जयेत् श्राद्धकर्मणि' ।

इति स्मरणात् ।

'निष्पावाश्चो$^{\text{ऽ}}$त्र शोभनाः' ।

(मा. पु. ३२. १०)

इति मार्कण्डेयपुराणं कृष्णेतरनिष्पावविषयतया व्यवस्थापितं भवति । मरीचिरपि—

'कुलित्थाश्चणकाः श्राद्धे न देयाश्चैव कोद्रवाः ।
कटुकानि च सर्वाणि विरसानि तथैव च' ॥

इति । विष्णुपुराणे[2]ऽपि—

'श्राद्धे न देया पालङ्क्या तथा निष्पाव-कोद्रवाः ।
मसूर-क्षार-वास्तोक-कुलित्थ-शण-शिग्रवः' ॥

इति । पालङ्क्या मुकुन्दः । मसुरो मङ्गल्यकः । क्षारो यवक्षारादिः । विष्णुरपि—

१. The text reads अति-for अत्र. २. The following quotation does not appear in Vishṇupurâṇam. ३. G. and I. read वास्तूक .

‘[१]भूतृण-शिग्रु-सर्षप-सुरसाऽर्जक-कूष्माण्डाऽलाबु-वार्त्ताक-
पालङ्क्या-तण्डुलीयक-कुसुम्भ-महिषीक्षीरादि वर्जयेत्’ ।
(वि. स्मृ. ७९. १७)

इति । भूतृणो भूस्तृणः । छान्दसत्वात् सुडभावः । सर्षपोऽत्र राजसर्षपः ।

‘कुसुम्भं राजसर्षपम्’ ।

इति स्मृत्यन्तरे विशेषितत्वात् । सुरसा निर्गुण्डी । अर्जकः श्वेतार्जकः । उशना अपि—

‘नालिका-शण-छत्राक-कुसुम्भा[२]ऽलाबु-विड्भवान् ।
कुम्भी-कम्बुक-वृन्ताक-कोविदारांश्च वर्जयेत् ॥
वर्जयेद्गृञ्जनं श्राद्धे काञ्जिकं पिण्डमूलकम् ।
करञ्जं येऽपि चान्ये वै रस-गन्धोत्कटास्तथा’ ॥

इति । नालिका [३]दीर्घनालाग्रगताल्पपल्लवा । छत्राकं [४]शिलीन्ध्रः । कुम्भी श्रीपर्णिका । कम्बुकं वृत्तालाबु । गृञ्जनो [५]हरिद्रक्तवर्णः पलाण्डुविशेषः । [६]काञ्जिकं आरनालकम् । करञ्जं चिरिबिल्वफलम् । [७]पुराणे ऽपि—

---

१. The text reads this Sútra as follows :—

‘पिप्पली-मुकुन्दक-भूस्तृण-शिग्रु-सर्षप-सुरसा-सर्जक-
सुवर्चल-कुष्माण्डाऽलाबु-वार्तकु-पालक्योपोदकी-तण्डु-
लीयक-कुसुम्भ-पिण्डालुक-महिषीक्षीराणि वर्जयेत्’ ।.

२. E. G. and I. read -कुसुम्भानम्बु-. ३. Except A. and I. all read दिर्घनालाग्रहाणेलापल्लवा for -दीर्घनालाग्रगताल्पपल्लवा. ४. I. reads सिलिन्धुः for शिलीन्ध्रः. ५. B. C. D. and F. read हरिद्रवर्णः. ६. Some MSS. read काञ्चिकं for काञ्जिकं. ७. The author does not specify the name of the Purâṇam to which the following quotation belongs. The quoted lines appear in Vâyupurâṇam, but the first of these lines appears in a portion which enumerates the materials that are prescribed for use in a Śrâddha. The remaining two lines contain the names of unacceptable ones.

'वांशं करीरं सुरसं सर्जकं भूतृणानि च ॥ (११)
अवेदोक्ताश्च निर्यासा लवणान्यौषराणि च ।
श्राद्धकर्मणि वर्ज्यानि याश्च नार्यो रजस्वलाः'॥ (१९)
( वायुपु. २. १६. ११-१९ )

इति। वांशं करीरं वंशाङ्कुरः । सर्जकः पीतसारकः । अवेदोक्ता वेदनिषिद्धा निर्यासा: व्रश्चनप्रभवादयः । औषराणि लवणानि कृतलवणानि । रजस्वलाः दिनत्रयादूर्ध्वमनिवृत्तरजसः । भरद्वाजोऽपि—

'नक्ताहृतं तु यत्तोयं पल्वलाम्बु तथैव च ।
स्वल्पाम्बु कूष्माण्डफलं वज्रकन्दं च पिप्पली ॥
तण्डुलीयकशाकं च माहिषं च पयो दधि ।
शिम्बिकानि करीराणि कोविदार-गवेधुकम् ॥
कुलित्थ-शण-जम्बीर-करम्भाणि तथैव च ।
अब्जादन्यत्रक्तपुष्पं शिग्रुः क्षारं तथैव च ॥
नीरसान्यपि सर्वाणि भक्ष्य-भोज्यानि यानि च ।
एतानि नैव देयानि सर्वस्मिन् श्राद्धकर्मणि ॥
आविकं मार्गमौष्ट्रं च सर्वमैकशफं च यत् ।
माहिषं चामरं चैव पयो वर्ज्यं विजानता'॥

इति । आविकमवीनां पयः । मार्गं मृगीणां पयः । औष्ट्रमुष्ट्रीणां पयः । ऐकशफं वडवापयः । माहिषं महिषीपयः । चामरं चमरीपयः । ब्रह्माण्डपुराणेऽपि—

१. The text reads वंशीकरीराः सुरसाः. २. The text reads अथ वेदोक्तनिर्यासान्. ३. B. C. F. and I. read कानि for यानि. ४. Except A. and I. all omit from आविकम् to चमरीपयः ( both inclusive).

'आसनारूढमन्नाद्यं पादोपहतमेव च ।
अमेध्यादागतैः स्पृष्टं शुष्कं पर्युषितं च यत् ॥
[२]द्विःस्विन्नं परिदग्धं च तथैवाग्रावलेहितम् ।
शर्करा-कीट-पाषाणैः केशैर्यच्चाप्युपद्रुतम् ॥
पिण्याकं मथितं चैव तथाऽतिलवणं च यत् ।
[४]दधि शाकं तथा भक्ष्यमुष्णं चोषविवर्जितम् ॥
वर्जयेच्च तथा चान्यान् सर्वानभिमतानपि ।
सिद्धाः कृताश्च ये भक्षाः प्रत्यक्षलवणीकृताः ॥
वाग्भावदुष्टाश्च तथा दुष्टैश्चोपहतास्तथा ।
वाससा चोपधूलानि वर्ज्यानि श्राद्धकर्मणि'॥

इति । द्विःस्विन्नं द्विःपक्वम् । परिदग्धमतिदग्धम् । अग्रावलेहितं पूर्वमेवान्येनास्वादितम् । मथितं विलोडितं निर्जलं दधि । सिद्धा भक्षा आमलकादयः । प्रत्यक्षलवणेन मिश्रिताः । शङ्खोऽपि—

'कृष्णाजाजीं विडं चैव शीतपाकीं तथैव च ।
वर्जयेल्लवणं सर्वं तथा जम्बूफलानि च ॥
अवक्षुतावरुदितं तथा श्राद्धेषु वर्जयेत्' ।

(शं. स्मृ. १३. १८–१९)

---

१. This and the following line do not appear in I., H. also omits the first line, but inserts the second after the fifth line of this quotation. २. H. reads अस्विन्नं for द्विः स्विन्नं; while D. and E. omit this and the following four lines. ३. B. C. F. and G. read उपाहतम् for उपद्रुतम्. ४. B. C. F. G. and H. omit this and the following line. ५. D. reads चोपगूतानि for चोपधूतानि. ६. H. and I. read आविदग्धम् for अतिदग्धम्.

इति। कृष्णाजाजी कृष्णजीरकः। विडं विडालाख्यम्। लवणं कृतलवणम्। श्राद्धे कूष्माण्डादिनिषिद्धद्रव्योपादाने प्रत्यवायोऽस्ति। तथा च स्मृत्यन्तरम्—

'कूष्माण्डं महिषीक्षीरं आढक्यो राजसर्षपाः।
चणका राजमाषाश्च घ्नन्ति श्राद्धमसंशयम्॥
पिण्डालुकं च तुण्डीरं करमर्दांश्च नालिकाम्।
कुष्माण्डं बहुबीजानि श्राद्धे दत्वा प्रयात्यधः'॥

इति। करमर्दः सुषेणः। बहुबीजानि बीजपूरादीनि। नित्यभोजने प्रतिषिद्धमपि श्राद्धे न देयम्। अत एवोक्तं षट्त्रिंशन्मते—

'क्षिरादि माहिषं वर्ज्यं अभक्ष्यं यच्च कीर्त्तितम्'।

इति। नित्यभोजने वर्ज्यानि शाकानि पैठीनसिनोक्तानि—

'वृन्ताक-नालिका-पोत-कुसुंभा-ऽश्म-
न्तकाश्चैति शाकानामभक्ष्याश्च'।

इति। पोतं पोतिका। वृन्ताकनिषेधस्तु श्वेतवृन्ताकविषयः। अत एव देवलः—

'कण्डूरं श्वेतवृन्ताकं कुम्भाण्डं च विवर्जयेत्'।

इति। कण्डुरा प्रावृषायणी तस्याः फलं कण्डुरम्। कुम्भबुध्नवद्वर्तुलं वृत्तालाबुसदृशं कुम्भाण्डम्। भविष्यत्पुराणेऽपि—

'लशुनं गृञ्जनं चैव पलाण्डुं कवकानि च।
वृन्ताक-नालिका-ऽलाबुं जानीयाज्जातिदूषितम्'॥

१. D. G. and I. read शुण्ठीं च for च तुण्डीरं. २. I. reads wrongly षडिंशन्मते. ३. D. E. G. H. and I. read महिषीवर्ज्यं for माहिषं वर्ज्यं.

इति। लशुनं श्वेतकन्दः पलाण्डुविशेषः।

'लशुनं दीर्घपत्रश्च पिच्छगन्धो महौषधम्।
फेरण्यश्च[1] पलाण्डुश्च लतार्कश्च परारिका॥
गृञ्जनं यवनेष्टश्च[2] पलाण्डोर्दश जातयः'।

(सु. सं. २१. ६०-६१)

इति सुश्रुतेनोक्तत्वात्। कवकं छत्राकम्। हारीतोऽपि—

'न वट-प्लक्षोदुम्बुर-दधित्थ-नीप-
मातुलुङ्गानि वा भक्षयेत्'।

(हा. स्मृ. १३. २१)

इति। मनुरपि—

'लोहितान् वृक्षनिर्यासान् व्रश्चनप्रभवांस्तथा।
शेलुं गव्यं च पीयूषं[3] प्रयत्नेन विवर्जयेत्'॥

(म. स्मृ. ५. ६)

इति। लोहिता वृक्षनिर्यासा लाक्षादयः। लोहितग्रहणात् निर्यासत्वेऽपि पाटल-श्वेतवर्ण-हिङ्गु-कर्पूरादेरप्रतिषेधः। शेलुः श्लेष्मातकः। पीयूषोऽभिनवं पयः। ब्रह्मपुराणेऽपि[4]—

'घृतात्फेनं घृतान्मण्डं पीयूषमथ चार्द्रगोः।
सगुडं[5] मरिचाक्तं तु तथा पर्युषितं दधि॥
दीर्णं तक्रमपेयं च नष्टस्वादं[6] च फेनवत्'।

इति। घृतादुद्धृत्य तत्फेनमात्रं न पेयम्। घृतादुद्धृत्य मण्डं तदग्रं च न पेयम्। आर्द्रगोः प्रसवप्रभृत्यनिवृत्तरजस्काया

---

१. B. C. and F. read फरण्यश्च, and I. reads परण्यश्च. २. I. reads पवनेष्टश्च for यवनेष्टश्च. ३. The text reads पेयूषं for पीयूषं. ४. I. omits ऽपि. ५. I. reads न गुडं for सगुडं. ६. Except A. all read -स्वादु for -स्वादं.

गोः पीयूषं न पेयम्। गुड-मरिचोपगतं पर्युषितं दधि च। दीर्ण स्फुटितं तक्रं दीर्घकालस्थित्या नष्टस्वादं च फेनवच्च न पेयम्। याज्ञवल्क्यो ऽपि–

'सन्धिन्यनिर्दशावत्सागोपयः परिवर्जयेत्।
औष्ट्रमैकशफं स्त्रैणमारण्यकमथाविकम्'॥

(या. स्मृ. १. १७०)

इति। या वृषेण सन्धीयते सा सन्धिनी। अनिर्दशा अनिर्गतदशरात्रा। अवत्सा वत्सरहिता। एतासां गवां पयः परिवर्जयेत्। आरण्यकपर्यायेनेयमश्वा ऽऽरण्यकमहिषीव्यतिरिक्तविषयः। तदाह मनुः

'अनिर्दशाया गोः क्षीरमौष्ट्रमैकशफं तथा।
आविकं सन्धिनीक्षीरं विवत्सायाश्च गोः पयः॥
आरण्यानां च सर्वेषां मृगाणां महिषीं विना'।

(म. स्मृ. ५. ८-९)

इति। वसिष्ठो ऽपि–

'गोमहिष्यजानामनिर्दशाहानां पयो न पेयम्'।

(व. स्मृ. १४. ३५)

इति। गौतमो ऽपि–

'स्यन्दिनी-यमसू-सन्धिनीनां च'।

(गौ. स्मृ. १७. २३)

१. All, except A. read -स्वादु for -स्वादं. २. All, except A. and the text read -वत्सगोः पयः. ३. H. reads महिषीं विना, and the text reads माहिषं विना. ४. D. omits वसिष्ठो ऽपि and reads गो-महिष्यकीनाम् for गो-महिष्यजानाम्; while E. and I. substitute गो-महिष्यकानाम् for the same. ५. The text omits पयो न पेयम्.

इति । क्षीरं न पेयमिति शेषः । स्यन्दिनी स्वत एव स्रवत्पयःस्तनी । यमसूर्यमलप्रसूः । बौधायनो ऽपि—

'क्षीरमपेयम् ।(९) विवत्साया अन्यवत्सायाश्च'।(१०)

(बौ. स्मृ. १.५.१२. ९–१०)

इति । आपस्तम्बो ऽपि—

'क्षत्रियश्चैव वृत्तस्थो वैश्यः शूद्रो ऽथ वा पुनः ।
येत्पिबेत्कापिलं क्षीरं न ततो ऽन्यो ऽस्त्यपुण्यकृत्' ॥

इति । जात्या विशुद्धमपि केश-कीटादिसंसर्गदुष्टमात्रं संवर्जयेत् । तथा च देवलः—

'विशुद्धमपि चाहारं मक्षिका-कृमि-जन्तुभिः ।
केश-रोम-नखैर्वाऽपि दूषितं परिवर्जयेत्' ॥

इति । अत्र मक्षिका-कृमि-जन्तवो मृता विवक्षिताः । एतैः केश-रोमादिभिश्च दूषितं सति सम्भवे वर्जयेत् । असम्भवे तु केशादिकमुद्धृत्य सम्प्रोक्ष्य हिरण्यस्पर्शं कृत्वा भुञ्जीत । तथा च सुमन्तुः[४]—

'केश-कीट-क्षुतवचोपहतं श्वभिराघ्रातं लोहितं[५] वा अदधि पर्युषितं पुनः सिद्धं चण्डालाद्यवेक्षितमभोज्यम् । अन्यत्र हिरण्योदकैः स्पृष्ट्वा' ।

इति । क्षुतवचः क्षुतवाग्जातो ध्वनिः । आपद्यपि श्वादिभिरवलीढं न भुञ्जीत । तथा च देवलः—

---

१. The text reads विवत्सा-ऽन्यवत्सयोश्च for विवत्साया अन्यवत्सायाश्च. २ B. C. F. and H. read यः for यत्. ३. D. omits तथा च देवलः and the following quotation together with इति ।. ४. B. reads मनुः for सुमन्तुः. ५. G. substitutes प्रोक्षितं for लोहितं.

'अवलीढं श्व-मार्जार-ध्वांक्ष-कुक्कुट-मूषकैः ।
भोजने नोपयुञ्जीत[1] तदमेध्यं हि सर्वतः' ।

इति । भविष्यत्पुराणे ऽपि-

'सुरा-लशुन-संस्पृष्टं पीयूषादिसमन्वितम् ।
संसर्गाद्दुष्यते तद्धि शूद्रोच्छिष्टवदाचरेत्' ॥

इति । अत्रादिशब्देन छत्राकादि दुष्टद्रव्यं परिगृह्यते । स्मृत्यन्तरे वर्ज्यान्तरमुक्तम्-

'नोऽऽपणीयमन्नमश्नीयात् । (१४) न
द्विःपक्कम् । (१५) न पर्युषितम्' । (१६)[2]
(आ. ध. सू. १. ५. १७. १४-१६)

इति ।

'घृतं वा यदि वा तैलं विप्रो नाद्यात् नखच्युतम् ।
यमस्तदशुचि प्राह तुल्यं गोमांसभक्षणैः ॥
हस्तदत्ताश्च ये स्नेहा लवण-व्यञ्जनानि च ।
दातारं नोपतिष्ठन्ति भोक्ता भुञ्जीत किल्बिषम्' ॥
(व. स्मृ. १४. ३०-३१)

'एकेन पाणिना दत्तं शूद्रदत्तं[3] न भक्षयेत्' ।

इति । आपणस्थान्नप्रतिषेधो ऽन्नाऽपूपादिव्यतिरिक्तविषयः ।

१. H. and I. read नोपभुञ्जीत for नोपयुञ्जीत. २. These three Sûtrâs appear in the MS. Copy of Âpsastambiya Dharmasûtram. The printed copy has only the first. I. reads them together forming a line of poetry—

'नापणीयं समश्नीयान्न द्विःपक्कं न पर्युषितम्' ।.

D. and G. read नापणस्थम् for नापणीयम्. This and the following three lines are alluded to in Vasishtha Smriti as belonging to Prajâpati. ३. B. C. and F. read शूद्राद्त्तं, I. reads शूद्रादत्तं.

तदाह शङ्खः[१]—

'अपूपाः सक्तवो धानास्तक्रं दधि घृतं मधु।
एतत् पण्येषु भोक्तव्यं भाण्डलेपि[२] न चेद्भवेत्' ॥

इति। पर्युषितनिषेधो ऽपि वटकादिव्यतिरिक्तविषयः।
तदाह यमः—

'अपूपाश्च करम्भाश्च धाना वटक-सक्तवः।
शाकं मांसमपूपं[३] च सूपं कृसरमेव च ॥
यवागूः पायसं चैव यच्चान्यत्स्नेहसंयुतम्।
सर्वं पर्युषितं भोज्यं शुक्तं चेत्परिवर्जयेत्' ॥

इति। देवलो ऽपि—

'अभोज्यं प्राहुराहारं शुक्तं पर्युषितं च यत्।
अपूपा यव-गोधूमविकारा वटकादयः' ॥

इति। वटका माषादिपिष्टमयाः प्रसिद्धाः। पुनरपूपग्रहणं व्रीह्यादिपिष्टविकारोपादानार्थम्। कृसरं घृष्टतिलचूर्णसंयुतमोदनम्। अन्यदोदनादिकं स्नेहसंयुतं घृतेन दध्ना वाऽभिघारितम्। एतत्सर्वं पर्युषितमशुक्तं भोज्यम्। शुक्तस्वरूपं बृहस्पतिनोक्तम्—

'अत्यम्लं शुक्तमाख्यातं निन्दितं ब्रह्मवादिभिः'।

इति। अनम्लमीषदम्लं वा[४] यद्वस्तु कालान्तरेण वा द्रव्या-

१. D. omits from तदाह शङ्खः to -व्यतिरिक्तविषयः (both inclusive).
२. B. C. D. E. F. G. and H. read भाण्डलेपो; while I. reads भाण्डलेहि.
३. A. and I. read अपक्वं for अपूपं. The former i. e. अपक्वम् is better as it avoids repetition of the word अपूपं. However we use अपूपं to render the meaning consistent with the following explanation. ४. I. substitutes च for वा.

न्तरसंसर्गेण वाऽम्लं भवति तच्छुक्तम् । न तु स्वभावतोऽम्लम् । यदग्निपक्वं सद्राज्यन्तरितं तत्पर्युषितम् । शुक्तप्रतिषेधो दध्यादिव्यतिरिक्तविषयः । तदाह शङ्खः—

'दधि भक्ष्यं च शुक्तेषु सर्वं च दधिसम्भवम् ।
ऋजीषपक्वं भक्ष्यं स्यात् सर्पिर्युक्तमिति स्थितिः' ॥

इति । अनग्निक ऊष्मा ऋजीषं तेन पक्वम् । शुक्तं पर्युषितं वाऽऽपदि प्रक्षालितं भोज्यम् । तदाह यमः—

'शुक्तानि हि द्विजोऽन्नानि न भुञ्जीत कदाचन ।
प्रक्षालितानि निर्दोषाण्यापद्धर्मो यथा[1] भवेत् ॥
मसूर-माषसंयुक्तं तथा पर्युषितं च यत् ।
तत्तु प्रक्षालितं कृत्वा भुञ्जीत ह्यभिचारिणम्' ॥

इति । आश्रयदुष्टमपि न भुञ्जीत । तथा च याज्ञवल्क्यः—

'कदर्य-बद्ध-चौराणां क्लीब-रङ्गावतारिणाम् ।
वैणाभिशस्त-वार्धुष्य-गणिका-गण-दीक्षिणाम् ॥
चिकित्सका-ऽऽतुर-क्रुद्ध-पुंश्चली-मत्त-विद्विषाम् ।
क्रूरोग्र-पतित-व्रात्य-दाम्भिकोच्छिष्टभोजिनाम् ॥
अवीरास्त्री-स्वर्णकार-स्त्रीजित-ग्रामयाजिनाम्' ।
शस्त्रविक्रयि-कर्मार-तन्तुवाय-श्ववृत्तिनाम् ॥
नृशंस-राज-रजक-कृतघ्न-वधजीविनाम् ।
चैलधाव-सुराजीव-सहोपपति-वेश्मनाम् ॥
एषामन्नं न भोक्तव्यं सोमविक्रयिणस्तथा' ।

(या. स्मृ. १.१६१–१६५)

---

१. I. reads ऽथवा for यथा.

इति । कदर्यो लुब्धकः । तथा च स्मृत्यन्तरम्—

'आत्मानं धर्मकृत्यं च पुत्र-दारांश्च पीडयेत् ।
लोभाद्यः पितरौ भृत्यान् स कदर्य इति स्मृतः' ॥

इति । बद्धः शृङ्खलितः । रङ्गावतारी नटः । वैणो वीणावादनोपजीवी । दीक्षी*दीक्षासंस्कारवान् । तस्य चाभोज्यान्नत्वमग्नीषोमीयपशुवपाहोमपर्यन्तम् ।

'असंस्थिते ऽग्नीषोमीये यजमानस्य गृहे नाशितव्यम्' ।

इति श्रुतेः‡ । आतुरः पापरोगग्रस्तः । क्रुद्धो† दृढतरान्तरकोपः । मत्तो धनादिना गर्वितः । क्रूरो निष्कृपः । उग्रः परदुःखकारी । रजको वस्त्ररागकारी । चैलधावो वस्त्रप्रक्षालकः। एषां कदर्यादिसोमविक्रयिपर्यन्तानां त्रैवर्णिकानामन्नं न भोक्तव्यमित्यर्थः । यमो ऽपि—

'चक्रोपजीवी गान्धर्वः कितवस्तस्करस्तथा ।
ध्वजी दारोपजीवी च शूद्राध्यापक-याजकौ ॥
कुलालश्चित्रकर्मा च वार्धुषी[१] चर्मविक्रयी' ।

इति । चक्रोपजीवी शकटोपजीवी । गान्धर्वो गायकः । ध्वजी मद्यविक्रयी । इतरे प्रसिद्धाः । एते अभोज्यान्ना इत्यर्थः ।

---

* विज्ञानेश्वरस्तु—'गणदीक्षी'त्येकं पदं कृत्वा 'गणदीक्षी बहुयाजकः'—इत्याह ।

‡ यथाहाऽऽपस्तम्बः—
'हुतायां वा वपायां दीक्षितस्य भोक्तव्यम् । (२९) यज्ञार्थे वा निर्दिष्टे शेषाद्भुञ्जीरन् इति हि ब्राह्मणं भवति' । ( २६ )

† विज्ञानेश्वरस्तु—'क्रुद्धः कुपितः' इत्युक्त्वा 'क्रूरो दृढाभ्यन्तरकोपः' —इत्याह ।

१. B. C. and F. read वार्धुक्षी.

आपस्तम्बो ऽपि—

'द्वावेवाश्रमिणौ भोज्यौ ब्रह्मचारी गृही तथा।
मुनेरन्नमभोज्यं स्यात् सर्वेषां लिङ्गिनां तथा'॥

इति। मुनिशब्देन यति-वानप्रस्थौ गृह्येते। लिङ्गिनः पाशुपतादयः। अङ्गिरा अपि—

'षण्मासान् यो द्विजो भुङ्क्ते शूद्रस्यान्नं विगर्हितम्।
स तु जीवन् भवेच्छूद्रो मृतः श्वा चाभिजायते'॥

(अं. स्मृ. ४८)

इति। यत्तु सुमन्तुनोक्तम्—

'गोरसं चैव सक्तूंश्च तैलं पिण्याकमेव च।
अपूपान् भक्षयेच्छूद्राद्यच्चान्यत्पयसा कृतम्'॥

इति यच्च विष्णुपुराणेऽभिहितम्—

'सम्प्रोक्ष्य विप्रो गृह्णीयाच्छूद्रान्नं गृहमागतम्'।

इति तदापद्विषयम्। अत एव याज्ञवल्क्यः

'अदत्तान्यग्निहीनस्य नान्नमद्यादनापदि'।

(या. स्मृ. १. १६०)

इति। अग्निहीनः शूद्रः*।

* अधिकारवतोऽप्यागर्हितस्य अन्नमनापदि न भुञ्जीत न प्रतिगृह्णीयाच्च। यदाह गौतमः—

'तस्मात् प्रशस्तानां स्वकर्मणां शूद्रजातीनां
ब्राह्मणो भुञ्जीत प्रतिगृह्णीयाच्च'।

इति।

१. Our tract of Angirasa Smriti reads this couplet as follows:—

'यो भुङ्क्ते हि च शूद्रान्नं मासमेकं निरंतरम्।
इह जन्मनि शूद्रत्वं मृतः श्वा चाभिजायते'॥

## अथ वर्ज्यावर्ज्यमांसानि।

मांसेष्वपि यद्वर्ज्यं तदाह मनुः—

'क्रव्यादान् शकुनीन् सर्वांस्तथा ग्रामनिवासिनः।
अनिर्दिष्टांश्चैकशफांष्टिट्टिभं चैवं वर्जयेत्॥
कलविङ्कं प्लवं हंसं चक्राह्वं ग्रामकुक्कुटम्।
सारसं रज्जुवालं च दात्यूहं शुक-सारिके॥
प्रतुदान् जालपादांश्च कोयष्टि-नखविष्किरान्।
निमज्जतश्च मत्स्यादान् शौनं वल्लूरमेव च॥
बकं चैव बलाकां च काकोलं खञ्जरीटकान्।
मत्स्यादान् विड्वराहांश्च मत्स्यानेव च सर्वशः'॥
(म. स्मृ. ५. ११-१४)

इति। क्रव्यादाः शकुनयो गृध्रादयः। ग्रामनिवासिनः शकुनयः पारावतादयः। अनिर्दिष्टा अपरिज्ञातजातिविशेषा मृग-पक्षिणः। एकशफा अश्वादयः। टिट्टिभः निष्ठुरशब्दभाषी पक्षिविशेषः। कलविङ्कश्चटकः। प्लवो जलकुक्कुटः। चक्राह्वश्चक्रवाकः। सारसः पुष्कराह्वः। रज्जुवालको रज्जुवत्पुच्छकः। दात्यूहः कालकण्ठकः। प्रतुदः श्येनः। जालपादः जालाकारपादः। कोयष्टिः पक्षिविशेषः। नखविष्किराः चकोरादयः। निमज्जन्तो मत्स्यादा निमज्ज्य मत्स्यभक्षकाः पक्षिविशेषाः। शौनं शुनोद्भवं मांसम्। वल्लूरं शुष्कमांसम्। काकोलो गिरिकाकः। खञ्जरीटः खञ्जनः। मत्स्यादा अनिमज्जन्तो मत्स्यादा विवक्षिताः। विड्वराहा ग्राम-

---

१. The text reads च विवर्जयेत् for चैव वर्जयेत्. २. The text reads चक्राङ्गं for चक्राह्वं. ३. Except A. I. and the text all read रज्जुदालं for रज्जुवालं. ४. The text reads खञ्जरीटकम् for खञ्जरीटकान्. ५. All, except A. I. and the text read सर्वदा for सर्वशः.

सूकराः । अत्र मत्स्यनिषेधो राजीव-सिंहतुण्डकादिव्यतिरिक्त-विषयः । अत एवोक्तं तेनैव—

'राजीवान् सिंहतुण्डांश्च सशल्कांश्चैव सर्वशः' ।

( म. स्मृ. ५. १६ )

इति । राजीवाः पद्मवर्णा मत्स्याः । सिंहतुण्डाः सिंह-मुखाः । शल्कैः शुक्त्याकारावयवैः पृष्ठभागगतैः सह वर्त्तन्ते इति सशल्काः । एते सर्वशः श्राद्धे नित्यभोजने च भक्ष्या इत्यर्थः । देवलोऽपि—

'उलूक-कुरर-श्येन-गृध्र-कुक्कुट-वायसाः ।
चकोरः कोकिलो रज्जुदालकश्चाप-मद्गुकौ ॥
पारावत-कपोतौ च न भक्ष्याः पक्षिणः स्मृताः ।
अभक्ष्याः पशुजातीनां गो-खरोष्ट्राश्व-कुञ्जराः ॥
सिंह-व्याघ्रर्क्ष-शरभाः सर्पा-ऽजगरकास्तथा ।
आखु-मूषक-मार्जार-नकुल-ग्रामसूकराः ॥
श्व-शृगाल-वृक-द्वीपि-गोलाङ्गूलक-मर्कटाः' ।

इति । कुररः उत्क्रोशः । मद्गुर्जलकाकः । द्वीपिशब्दो व्याघ्रविशेषपरः । गोलाङ्गूलो वानरविशेषः । मर्कटग्रहणं सर्वेषां पञ्चनखानामुपलक्षणार्थम् । अत एव मनुः—

'सर्वान् पञ्चनखांस्तथा' ।

( म. स्मृ. ५. ४७ )

१. All, except A. and the text read राजीवाः सिंहतुण्डा and सशल्काः for राजीवान् सिंहतुण्डान् and सशल्कान् respectively. D. omits this line. २. B. C. and F. read अभक्ष्याः for भक्ष्याः. ३. B. C. and F. omit this and the following line. ४. Except A. all substitute -वृष for -वृक-. Here वृक gives a better sense.

इति। न भक्षयेदिति योजना। अत्र पञ्चनखानां भक्ष्यत्व निषेधो गोधादिपञ्चकव्यतिरिक्तविषयः। तथा च देवलः—

'पञ्च पञ्चनखा भक्ष्या धर्मतः परिकीर्त्तिताः।
गोधा कूर्मः शशः श्वाविट् शल्यकश्चेति ते स्मृताः'॥

इति। धर्मत इति हिंसामकृत्वा क्रयादिप्राप्ता भक्ष्या इत्यर्थः। न चायमपूर्वविधिः। रागप्राप्तत्वात्तद्भक्षणस्य। नापि नियमः। पक्षप्राप्त्यभावात्। अतो गोधादिपञ्चनखपञ्चकव्यतिरिक्ता न भक्ष्या इति परिसङ्ख्यैव परिशिष्यते। एवं च सति विशेषनिषेधबलात्तन्मांसभक्षणे प्रत्यवायो नेतरत्रेत्यवगम्यते। अत एवोक्तं मनुना—

'न मांसभक्षणे दोषो न मद्ये न च मैथुने।
प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफला'॥

(म. स्मृ. ५. ५६)

इति। यत्तु तेनैवोक्तम्—

'नाऽकृत्वा[१] प्राणिनां हिंसां मांसमुत्पद्यते क्वचित्।
न च प्राणिवधः स्वर्ग्यस्तस्मान्मांसं विवर्जयेत्॥
समुत्पत्तिं च मांसस्य वध-बन्धौ च देहिनाम्।
प्रसमीक्ष्य निवर्त्तेत सर्वमांसस्य भक्षणात्'॥

(म. स्मृ. ५. ४८–४९; वि. स्मृ. ५१. ७१–७२)

इति यच्च याज्ञवल्क्येनापि—

'वसेत्स नरके घोरे दिनानि पशुलोमभिः।
सम्मितानि दुराचारो यो हन्त्यविधिना पशून्'॥

(या. स्मृ. १. १८०)

---

१. G. reads नाऽऽहत्या and H. नाऽहत्वा for नाऽकृत्वा.

इति तन्निषिद्धप्राणिहिंसापूर्वकमांसभक्षणविषयम् । न तु क्रयादिप्राप्तमांसभक्षणविषयम् । प्राणिवधनिन्दापूर्वकमेव मांसनिन्दास्मरणात् । यच्च मनुनैवोक्तम्—

'फल-मूलाशनैर्मेध्यैर्मुन्यन्नानां च भोजनैः ।
न तत्फलमवाप्नोति यन्मांसपरिवर्जनात्' ॥

(म. स्मृ. ५. ५४)

इति तत्र मांसवर्जनस्य महाफलसाधनत्वं प्रोक्षितादिव्य-तिरिक्तविषयम् । अत एवोक्तं तेनैव—

'प्रोक्षितं भक्षयेन्मांसं ब्राह्मणानां च काम्यया ।
यथाविधि नियुक्तश्च प्राणानामेव चात्यये' ॥

(म. स्मृ. ५. २७)

इति । प्रोक्षितमिष्टशिष्टं मांसं ब्राह्मणानां काम्यया ब्राह्मण-कामनया च । यथाविधि नियुक्तः श्राद्धे निमन्त्रितश्च । प्राणात्यये क्षुन्निमित्ते व्याधिनिमित्ते वा मांसं भक्षयेदित्यलं प्रसक्तानुप्रसक्त्या ॥

## अथ निमन्त्रितब्राह्मणेभ्यो देयानि ।

निमन्त्रितेभ्यो ब्राह्मणेभ्यो यद्देयं तदाह कात्यायनः—

'तैलमुद्वर्त्तनं स्नानं दन्तधावनमेव च ।
कृत्तरोम-नखेभ्यस्तु दद्यात्तेभ्यो परे ऽहनि' ॥

इति । स्नानं स्नानसाधनम् । दन्तधावनं दन्तधावनसा-धनं काष्ठादि दद्यादित्यर्थः । एतत्तैलादिदानमनिषिद्धतिथिवि-

१. D. reads उत्पन्नानां च for मुन्यन्नानां च. २. Except A. and the text all read ब्राह्मणस्य. ३. The text substitutes तु for च. D. omits this line and इति । प्रोक्षितामिष्टशिष्टं मांसं. ४. H. and I. read प्रसक्त्यनु- for प्रसक्तानु-.

षयम् । निषिद्धतिथिषु तिलतैलप्रतिनिधित्वेनामलकोदकं दद्यात् । तथा च मार्कण्डेयः—

'अह्नः षट्सु मुहूर्त्तेषु गतेष्वथ[1] च तान् द्विजान् ।
प्रत्येकं[2] प्रेषयेत् प्रेष्यान् प्रदायामलकोदकम्' ॥

इति । आमलकोदकदानमप्यमावास्याव्यतिरिक्तविषयम् ।

'धात्रीफलैरमावास्यायां न स्नायात्' ।

इति स्मृत्यन्तरे निषेधात् । तैलादिदाने विशेषो देवलेन दर्शितः—

'तैलमुद्वर्त्तनं स्नानं स्नानीयं च पृथग्विधम् ।
पात्रैरौदुम्बरैर्दद्याद्वैश्वदेविकपूर्वकम्' ॥

इति । औदुम्बरं ताम्रपात्रम् । यत्तु प्रचेतसोक्तम्—

'श्राद्धभुग्यो नख-श्मश्रुच्छेदनं न तु कारयेत्' ।

इति तन्निषिद्धतिथिविषयम् । श्राद्धदेशे प्रकल्प्यानि द्रव्याणि पुराणेऽभिहितानि—

'[3]उपमूलं सकृल्लूनान् कुशांस्तत्रोपकल्पयेत् ।
यवांस्तिलान् बृसीः[4] कांस्यमापः शुद्धैः[5] समाहृताः ॥
पार्ण-राजत-ताम्राणि पात्राणि स्यात्समिन्मधु ।
पुष्प-धूप-सुगन्धादि क्षौमसूत्रं च मेक्षणम्' ॥

इति । तिला जर्त्तिला ग्राह्याः । तदसम्भवे ग्राम्याः । जर्त्तिललक्षणमुक्तं सत्यव्रतेन—

'जर्त्तिलास्तु तिलाः प्रोक्ताः कृष्णवर्णा वनेभवाः' ।

---

१. I. reads च यतान् for अथ च तान्. For the same D. reads स्म च तान्. २. E. reads आनेतुं for प्रत्येकं. ३. Aparârka quotes these four lines under the name of Prachetâh. ४. I. reads व्रीहीः for बृसीः. D. reads this line as follows:—

यवांस्तिलान् शुभान् व्रीहीन्माषान् शुद्धैः समाहृतान् ॥.

५. I. reads शुद्धयै ; while II. substitutes समाहिताः for समाहृताः.

इति । तेषां प्रशस्तत्वमापस्तम्ब आह -

'अटव्यां ये समुत्पन्ना अकृष्टफलितास्तथा ।

ते वै श्राद्धे पवित्रास्तु तिलास्ते जर्तिलाः स्मृताः' ॥

इति । निमन्त्रितब्राह्मणानामुपवेशनार्थमासनं भूमौ । तत्र विशेषो मनुनोक्तः—

'कुतपं चासने दद्यात्' ।

(म. स्मृ. ३. २४)

इति । कुतपो नेपालदेशप्रभवमेषादिरोमनिर्मितकम्बलः । तदुक्तं स्मृत्यन्तरे

'मध्याह्नः खड्गपात्रं च तथा नेपालकम्बलः ।

रूप्यं दर्भास्तिला गावो दौहित्रश्चाष्टमः स्मृतः ॥

पापं कुत्सितमित्याहुस्तस्य सन्तापकारणम् ।

अष्टावेते यतस्तस्मात् कुतपा इति विश्रुताः' ॥

इति । कांस्य-पर्ण-राजत-ताम्रपात्राणि भोजनार्थमर्घ्यार्थं चोपकल्प्यानि । अत्र भोजनार्थं पलाशपत्रपात्राण्येवोपकल्प्यानि । न त्वन्यपर्णपात्राणि । तथा चात्रिः—

'न मृण्मयानि कुर्वीत भोजने देव-पित्र्ययोः ।

पालाशेभ्यो विना न स्युः पर्णपात्राणि भोजने' ॥

इति । अर्घ्यार्थं त्वन्यपर्णपात्राण्यनिषिद्धानि । अत एव बैजवापः--

'खादिरोदुम्बराण्यर्घ्यपात्राणि श्राद्धकर्मणि ।

अप्यश्म-मृण्मयानि स्युरपि पर्णपुटास्तथा' ॥

१. All, except A, read न तिलास्तिलाः for जर्तिलास्तिलाः. २. I. reads अर्घार्थं for अर्घ्यार्थं.

इति। अत्रोपकल्पनीयं पुष्पं ब्रह्माण्डपुराणे दर्शितम्—

'शुक्लाः सुमनसः श्रेष्ठास्तथा पद्मोत्पलानि च।
गन्ध-रूपोपपन्नानि यानि चान्यानि कृत्स्नशः'॥

इति। मार्कण्डेयपुराणे ऽपि[1]—

'जात्यश्च सर्वा दातव्या मल्लिकाः श्वेतयूथिकाः।
जलोद्भवानि सर्वाणि कुसुमानि च चम्पकम्'॥

इति। यच्चाङ्गिरसोक्तम्—

'न जातीकुसुमानि। न कदलीपत्रम्'।

इति क्रतुरपि—

'असुराणां कुले जाता जाती पूर्वपरिग्रहे।
तस्या दर्शनमात्रेण निराशाः पितरो गताः'॥

इति अत्र जातीकुसुमनिषेधो वैकल्पिकः। तत्र वर्ज्यानि कुसुमानि मत्स्येनोक्तानि—

'पद्म-बिल्वा-ऽर्क-धत्तूर-पारिभद्राटरूषकाः।
न देयाः पितृकार्येषु पयश्चैवाविकं[2] तथा'॥

(म. पु. १९. ३७–३८)

इति। पारिभद्रो मन्दारः आटरूषो। वासकः। शङ्खोऽपि—

'उग्रगन्धीन्यगन्धीनि[3] चैत्यवृक्षोद्भवानि च।
पुष्पाणि वर्जनीयानि रक्तवर्णानि यानि च'॥

(शं. स्मृ. १३. १४)

---

१. A. omits मार्कण्डेयपुराणेऽपि and the following quotation. The quoted lines are not also found in Mârkaṇḍeyapurâṇam. २. The text reads पयश्चाजाविकं for पयश्चैवाविकं. ३. The text reads:—

'उग्रगन्धान्यगन्धानि चैत्यवृक्षभवानि च।
पुष्पाणि वर्जनीयानि तथा पर्वतजानि च'॥.

सौवर्ण-राजतौदुम्बर- 405, 12.
स्त्रियोऽतिरूपाः प्रतिपदि 316, 18.
स्नात्वा सचैलमाचम्य 287, 19.
हिरण्यशकलान्यस्य 287, 7.
हुत्वा मन्त्रवदन्येषाम् 414, 22.

**२३. कार्ष्णाजिनिः—**

अजातदन्तासु 246, 16.
अतृप्तास्तत्र येऽस्य स्युः 325, 20.
अन्नदानादृते सर्वम् 417, 4.
अपसव्येन कर्तव्यम् 417, 3.
अर्वागब्दाद्यत्र यत्र 454, 11.
आदौ मध्ये ऽवसाने वा 321, 20.
उपाकर्मणि चोत्सर्गे 131, 7.
ऋषीन् दर्भमयान् कृत्वा 131, 8.
कन्या-पुत्रविवाहेषु 461, 7.
तत ऊर्ध्वं न कर्तव्यम् 330, 7.
तदूर्ध्वं मासिकानां स्यात् 454, 12.
नभस्यस्याऽपरे पक्षे 322, 12.
नान्दीमुखान् पितृगणान् 461, 10.
नामकर्मणि बालानाम् 461, 8.
नैव नन्दा ऽऽदि वर्ज्यं स्यात् 322, 13.
परतो दशरात्राच्चेत् 452, 2.
पितृपूर्वं सुतः कुर्यात् 468, 18.
पित्रोः श्राद्धे समं प्राप्ते 468, 17.
श्राद्धं तु नैकवर्गस्य 325, 19.
स पक्षः सकलः पुण्यः 321, 21.
सपिण्डीकरणं कुर्यात् 452, 1.
सपिण्डीकरणान्तं च 330, 8.
सीमन्तोन्नयने चैव 461, 9.

**२४. कालिकापुराणम्—**

कायजा ये बुधैर्नित्यम् 178,
जितेन्द्रियैर्जितक्रोधैः 178, 9.
लिङ्गव्यक्त्यै हि धार्यास्ते 178, 7.
वैणवा ये स्मृता दण्डाः 178, 6.

**२५. *काश्यपः—**

अग्निं परिगता या च 57, 11.
इत्येताः काश्यपेनोक्ताः 57, 12.
उदकस्पर्शिता या च 57, 10.
बालानामजातदन्तानाम् 243, 19.
वाचा दत्ता मनोदत्ता 57, 9.
सप्तपौनर्भवाः कन्याः 57, 8.

**२६. कूर्मपुराणम्—**

अग्निप्रवेशमन्यद्वा 146, 16.
अग्नीनात्मनि संस्थाप्य 154, 18.
अघानां यौगपद्ये तु 265, 13.
अथर्वशिरसो ऽध्येता 144, 13.
अधीत्य चाधिगम्यार्थम् 54, 2.
अन्तः पक्वकषायोऽसौ 155, 17.
अर्धमासेन वैश्यस्तु 277, 9.
असम्भवे परेद्युर्वा 360, 5.
आचम्य देवं ब्रह्माणम् 193, 8.
आदित्यवारे त्वारोग्यम् 315, 1.
आदित्ये दर्शयित्वा ऽन्नम् 193, 6.
आषाढ्यां प्रौष्ठपद्यां वा 127, 16.
ऋतुकालाभिगामी स्यात् 104, 16.

* *Vide* the second footnote on page 6 of this Index.

इति । जीवजं कस्तूर्यादि ।

'चन्दन-कुङ्कुम-कर्पूरा-ऽगरु-पद्मकान्यनुलेपनार्थे'।

(वि. स्मृ. ७९. ११)

इति । दीपार्थं स्नेहद्रव्यमाह मरीचिः—

'घृताद्वा तिलतैलाद्वा नान्यद्रव्यात्तु दीपकम्' ।

इति । अत्र चान्यद्रव्यनिषेधो वसा-मेदोरूपद्रव्यविषयो न पुनः कौसुम्भादितैलविषयः । अत एव शङ्खः[१]—

'घृतेन दीपो दातव्यस्त्वथ वाऽन्यौषधीरसैः ।

वसा-मेदोद्भवं दीपं प्रयत्नेन विवर्जयेत्'॥

(शं. स्मृ. १३. १६)

इति । क्षौमसूत्रोपकल्पनं वस्त्रालाभविषयम् । सति वै क्षौमं वस्त्रमुपकल्पनीयम् । अत एव स्मृत्यन्तरम्[२]—

'कौशेयं क्षौमकार्पासं दुकूलमहतं तथा ।

श्राद्धेष्वेतानि यो दद्यात्कामानाप्नोति पुष्कलान्'॥

(वायुपु. २. १८. ३७)

इति । कौशेयं कृमिकोशोत्थतन्तुजम् । क्षौममतसीत्वक्सम्भवतन्तुसम्भवम् । दुकूलमिति सूक्ष्मवस्त्रम् । अहतम्[३]—

१. All, except D. omit शङ्खः However the following quotation appears in Śankhasmṛiti, and Vijnâneśivara too alludes to it as from Śankha ( *vide* commentary on Yâjnavalkya, chapter 1, Śloka 232 ). Again Kamalâkara Bhatta gives it under the name of Vishṇu ( *vide* Nirnayasindhu, Śrâddha Prakaraṇam, page 30 ), and it appears in Vishṇu Dharmottaram ( Kâaṇdam 1, chapter 141, Śloka 11). २. This quotation appears in Nirṇaya Sindhu under the name of Brahmapurâṇam ( Śrâddha- prakaraṇam, page 30). ३. Except A. and I. all omit from this word to पावनम् (both inclusive).

'ईषद्धौतं नवं श्वेतं सदशं यन्न धारितम् ।
अहतं तद्विजानीयात् सर्वकर्मसु पावनम्' ॥

इति ॥

## अथ वासःपरिधानम् ।

एवं दर्भादिभिक्षणान्तं द्रव्यमुपकल्प्य स्नात्वा शुक्लं वासः परिदध्यात् । तथा च स्मृतिः—

'स्नातोऽधिकारी भवति दैवे पित्र्ये च कर्मणि' ।
'श्राद्धकृच्छुक्लवासाः स्यात्' ।

इति ॥

## अथ स्नानानन्तरकर्तव्यम् ।

स्नानानन्तरं यत्कर्त्तव्यं तदाह यमः—

'ततः स्नात्वा निर्वृत्तेभ्यः प्रत्युत्थाय कृताञ्जलिः ।
पाद्यमाचमनीयं च सम्प्रयच्छेद्यथाक्रमम्' ॥

इति । कृताञ्जलिः स्वागतमित्युक्त्वा अध्वकृतोपहतिशुद्ध्यर्थं पादप्रक्षालनार्थमाचमनीयं चोदकं क्रमेण प्रयच्छेदित्यर्थः । तदनन्तरं गृहाङ्गणे मण्डलद्वयं कार्यम् । तथा च मत्स्यः—

'.........भवनस्याग्रतो भुवि । (२७)
गोमयेनानुलिप्तायां गोमूत्रेण तु मण्डले' ॥

(म. पु. १६. २७-२८)

१ Aparârka quotes this and the following line as from Prachetâh. २. This line appears in Aparârka as from Vishṇu. ३. Aparârka quotes this line as from Prachetâh. ४. Except A. and I. all read निवृत्तो यः for निवृत्तेभ्यः. ५. I. substitutes भूमौ for भुवि and shows this Pâda to be the first, while it is actually the second.

इति । गोमयसहितेन गोमूत्रेण मण्डले कार्ये इति शेषः । अत्र विशेषमाह शम्भुः—

'उदक्प्लवमुदीच्यं स्याद्दक्षिणं दक्षिणाप्लवम्' ।

इति । उदीच्यं वैश्वदेविकं मण्डलमुदक्प्रवणम् । दक्षिणं पित्र्यं मण्डलं दक्षिणाप्रवणं कुर्यात् । तत्र मण्डलकरणप्रभृत्या श्राद्धपरिसमाप्तेर्वैश्वदेविकं कर्म प्रदक्षिणं यज्ञोपवीतिना कार्यम् । पित्र्यमपसव्यं प्राचीनावीतिना कार्यम् । तथा च मनुः—

'प्राचीनावीतिना सम्यगपसव्यमतन्द्रिणा[1] ।
पित्र्यमा निधनात्कार्यं विधिवद्दर्भपाणिना' ॥

(म. स्मृ. ३. २७९)

इति । अत्रैव विशेषान्तरमाह कात्यायनः—

'दक्षिणं पातयेत् जानुं देवान्परिचरन् सदा ।
पातयेदितरज्जानु पितॄन्परिचरन्नपि[2]' ॥

(का. स्मृ. १. २. ९)

इति । शातातपोऽपि—

'उदङ्मुखस्तु देवानां पितॄणां दक्षिणामुखः' ।

इति । बौधायनोऽपि—

'प्रदक्षिणं तु देवानां पितॄणामप्रदक्षिणम् ।
देवानामृजवो दर्भाः पितॄणां द्विगुणाः स्मृताः' ॥

इति । मण्डलकरणानन्तरकर्त्तव्यमाह शम्भुः—

'उत्तरेऽक्षतसंयुक्तान्पूर्वाग्रान् विन्यसेत् कुशान् ।
दक्षिणे दक्षिणाग्रांस्तु सतिलान्विन्यसेद्बुधः' ॥

---

१. I. reads wrongly अतन्त्रिणा. २. All, except A. and the text, substitute सदा for अपि.

इति । मत्स्यपुराणे च—

'अक्षताभिः सपुष्पाभिस्तदभ्यर्च्यापसव्यवत् ॥
विप्राणां क्षालयेत्पादावभिवन्द्य पुनः पुनः' ।

( म. पु. १६. २८–२९ )

इति । अपसव्यवत् पूर्वमुदीच्यमण्डलं पश्चाद्दक्षिणमण्डलमभ्यर्च्येत्यर्थः । दैवपूर्वकं विप्राणां पादप्रक्षालनं कुर्यात् । अत एव च ब्रह्मणोक्तम्—

'पाद्यं चैव तथैवार्घ्यं दैवमादौ प्रयोजयेत् ।
शन्नोदेवीति मन्त्रेण पाद्यं चैव प्रदापयेत्' ॥

इति । पाद्यादिदानं नाम-गोत्रोच्चारणपूर्वकं कर्त्तव्यम् । तदुक्तं मत्स्यपुराणे—

'नाम-गोत्रं पितॄणां तु प्रापकं हव्य-कव्ययोः' ।

(म. पु. १९. ४)

इति । पादप्रक्षालनानन्तरं यत् कर्त्तव्यं तदाह सुमन्तुः—

'दर्भपाणिर्द्विराचम्य लघुवासा जितेन्द्रियः ।
परिश्रिते शुचौ देशे गोमयेनोपलेपिते ॥
दक्षिणाप्रवणे सम्यगाचान्तान् प्रयतान् शुचीन् ।
आसनेषु सदर्भेषु विविक्तेषूपवेशयेत्' ॥

१. All, except A. G. and H. read पादावनिनिज्य, and the text reads पादावभिवन्द्य. २. D. omits अत एव च ब्रह्मणोक्तम् and the following quotation. H. and I. omit only च. ३. G. substitutes मनु. for सुमन्तुः. The following quoted lines are found in Manu, but the readings are quite different. ४. D. reads प्रसन्नात्मा for द्विराचम्य ५. D and G. read दक्षिणाप्रवणात्. ६. G. reads आचान्त॰.

इति । विविक्तेषु परस्परमसंस्पृष्टेष्वित्यर्थः । मनुरपि—

'आसनेषूपक्लृप्तेषु बर्हिष्मत्सु पृथक् पृथक् ।
उपस्पृष्टोदकान् सम्यग्विप्रांस्तानुपवेशयेत्' ॥

(म. स्मृ. ३. २०८)

इति । उपवेशनप्रकारो यमेन दर्शितः—

'आसनं संस्पृशन् सव्येन पाणिना
दक्षिणेन ब्राह्मणमुपसंगृह्य समा-
ध्वमिति चोक्त्वोपवेशयेत्' ।

इति । धर्मे ऽपि—

'जान्वालभ्य ततो देवानुपवेश्य ततः पितॄन् ।
समस्ताभिर्व्याहृतिभिरासनेषूपवेशयेत्' ॥

(वि. ध. १. १४१. २०)

इति । आदिपुराणे ऽपि—

'विप्रौ तु प्राङ्मुखौ तेभ्यो द्वौ तु पूर्वं निवेशयेत् ।
शन्नोदेवीति मन्त्रेण पाद्यं चैव प्रदापयेत् ॥
उत्तराभिमुखान् विप्रांस्त्रीन् पितृभ्यश्च सर्वदा' ।

इति । याज्ञवल्क्यो ऽपि—

'द्वौ दैवे प्राक् त्रयः पित्र्य उदगेकैकमेव वा ।
मातामहानामप्येवं तन्त्रं वा वैश्वदैविकम्' ॥

(या. स्मृ. १. २२८)

---

१. B. C. F. and H. omit विविक्तेषु परस्परमसंस्पृष्टेष्वित्यर्थः, E. and G. omit this and also the following portion up to आदिपुराणे ऽपि, and D. omits to the end up with and of the quotation from âdipurâṇe. २. B. C. F. and M. substitute च for उप-, and I. reads तु for the same. ३. B. and H. substitute यमो ऽपि for धर्मे ऽपि. C. and F. omit धर्मे ऽपि and also the following quotation. ४. B. C. F. G. and H. omit this line.

इति । मातामहानामप्येवमिति संख्या-दिङ्नियमयोरतिदेशः । वैश्वदेविकं कर्म श्राद्धद्वयार्थमावृत्त्याऽनुष्ठेयम् तन्त्रेण वेत्यभिप्रेत्य तन्त्रं वा वैश्वदेविकमित्युक्तम् । अत एव मरीचिः—

'तथा मातामहश्राद्धं वैश्वदेवसमन्वितम् ।
कुर्वीत भक्तिसम्पन्नस्तन्त्रं वा वैश्वदेविकम्' ॥

इति । अत्र द्वयोरपि श्राद्धयोर्वैश्वदेविककर्मणः तन्त्रावृत्तिविधानादेकप्रयोगविधिप्रयोज्यत्वं भिन्नप्रयोगविधिप्रयोज्यत्वं च प्राप्तम् । ततश्चैकाधिकारापूर्वसाधकत्वं[1] भिन्नाधिकारापूर्वसाधकत्वं[2] चावगम्यते ॥

## अथ ब्राह्मणनियमाः ।

उपविष्टब्राह्मणनियमाः स्मृत्यन्तरे दर्शिताः—

'पवित्रपाणयः सर्वे ते च मौनव्रतान्विताः ।
उच्छिष्टोच्छिष्टसंस्पर्शं वर्जयन्तः परस्परम्' ॥

इति । मौनित्वं च ब्रह्मोद्यकथाव्यतिरिक्तविषयम् । अत एव यमः—

'ब्रह्मोद्याश्च कथाः कुर्युः पितॄणामेतदीप्सितम्' ।

इति ॥

## अथ यति-ब्रह्मचारिणोः भोजनीयत्वम् ।

उपविष्टेष्वपि ब्राह्मणेषु यतिर्ब्रह्मचारी वा यद्यागच्छति तदा सोऽपि श्राद्धे भोजयितव्यः । तदाह यमः—

'भिक्षुको ब्रह्मचारी वा भोजनार्थमुपस्थितः ।
उपविष्टेष्वनुप्राप्तः कामं तमपि भोजयेत्' ॥

१. I. reads अधिकारपूर्वसाधनत्वं. २. I. reads अधिकारापूर्वसाधनत्वं D. omits भिन्नाधिकारापूर्वसाधकत्वं.

इति । छागलेयोऽपि–

'पूजयेत् श्राद्धकालेऽपि यतिं च ब्रह्मचारिणम् ।
विप्रानुद्धरते पापात् पितॄन्मातृगणानपि' ॥

इति । मनुरपि–

'ब्राह्मणं भिक्षुकं वाऽपि भोजनार्थमुपस्थितम् ।
ब्राह्मणैरभ्यनुज्ञातः शक्तितः प्रतिपूजयेत्' ॥
(म. स्मृ. ३. २४३)

इति ॥

## अथ ब्राह्मणोपवेशनानन्तरकृत्यम् ।

ब्राह्मणोपवेशनानन्तरकृत्यं पुराणेऽभिहितम्–

'श्राद्धभूमौ गयां ध्यात्वा ध्यात्वा देवं गदाधरम् ।
ताभ्यां चैव नमस्कृत्य ततः श्राद्धं प्रवर्त्तयेत्' ॥

इति । श्राद्धं करिष्य-इत्येवमुपविष्टान् ब्राह्मणान् पृच्छेदित्यर्थः । अत एवोक्तं तत्रैव–

'उभौ हस्तौ समौ कृत्वा जानुभ्यामन्तरे स्थितौ ।
सप्रश्रयश्चोपविष्टान्सर्वान् पृच्छेत् द्विजोत्तमान्' ॥

इति । कुरुष्वेति तैः अनुज्ञातो 'देवताभ्यः पितृभ्यश्च' इति मन्त्रं त्रिः पठेत् । तदुक्तं ब्रह्माण्डपुराणे–

'देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च ।
नमः स्वधायै स्वाहायै नित्यमेव नमो नमः ॥
आद्येऽवसाने श्राद्धस्य त्रिरावृत्तं जपेत्सदा' ।

इति । अनन्तरं सर्वतस्तिलान्विकिरेत् । तदुक्तं निगमे–

---

१. Except A. and I. all read सब्रह्मचारिणम् for च ब्रह्मचारिणम्. २. I. reads पितृ-मातृगणानपि. ३. D. and G. read स्वाहायै स्वधायै for स्वधायै स्वाहायै.

'अपहता इति तिलान्विकिरेत्' ।

इति । तिलान्विकीर्य दर्भासनं दद्यात् । तदुक्तं पुराणे—

'कुरुष्वेति स तैरुक्तो दद्याद्दर्भासनं ततः' ।

इति । दर्भासनदानं च ब्राह्मणहस्ते उदकदानपूर्वकं कार्यम् । अत एव याज्ञवल्क्यः—

'पाणिप्रक्षालनं दत्त्वा विष्टरार्थान् कुशानपि' ।

(या. स्मृ. १. २२९)

इति । विष्टरार्थानासनार्थान् कुशानासनेषु दत्त्वेत्यर्थः । तदुक्तं पुराणे—

'आसने चासनं दद्याद्वामे वा दक्षिणेऽपि वा' ।

इति । वामे वा दक्षिणेऽपि वेत्ययं विकल्पः पित्रर्थ-देवार्थ-ब्राह्मणासनदानविषयतया व्यवस्थितो द्रष्टव्यः । अत एवोक्तं तत्रैव—

'पितृकर्मणि वामे वै दैवे कर्मणि दक्षिणे' ।

इति । दैवे कर्मण्यासनदाने विशेषः काठकेऽभिहितः—

'देवानां सयवा दर्भाः' ।

इति । आसनं दत्त्वा पुनर्निमन्त्रयीत । तदाह संग्रहकारः—

'ततः पुनरपो दत्त्वा निमन्त्रयेत् । दैवे क्षणः क्रियताम् । ततः ओम् तथेति विप्रो ब्रूयात् । प्राप्नोतु भवानिति कर्त्ता पुनर्ब्रूयात् । प्राप्नुवानि इति विप्रः पुनर्ब्रूयात्' ।

इति । निमन्त्रणं च निरङ्गुष्ठं हस्तं गृहीत्वा कर्त्तव्यम् । तदुक्तं पुराणे—

---

१. D. reads ब्रह्माण्डपुराणे for पुराणे. २. We follow here A. I. and the text, All others read कृत्वा for दत्त्वा. ३. The text reads विष्टरार्थं. ४. H. inserts ओम् after तथेति, and G. omits विप्रो.

'निरङ्गुष्ठं गृहीत्वा तु विश्वान् देवान् समाह्वयेत्'।

इति। अङ्गुष्ठव्यतिरिक्तं हस्तं गृहीत्वा निमन्त्र्य विश्वान् देवान् समाह्वयेदित्यर्थः। आवाहनेतिकर्त्तव्यतामाह यमः—

'यवहस्तस्ततो देवान् विज्ञाप्यावाहनम्प्रति।
आवाहयेदनुज्ञातो विश्वेदेवास इत्यृचा॥
विश्वेदेवाःशृणुतेति मन्त्रं जप्त्वा ततोऽक्षतान्।
ओषधय[1] इति मन्त्रेण विकिरेत्तु प्रदक्षिणम्'॥

इति। प्रदक्षिणं दक्षिणपादादिमस्तकान्तमक्षतान् विकिरेत् आरोपयेदित्यर्थः। विश्वेदेवास्तु दश बृहस्पतिना दर्शिताः—

'क्रतुर्दक्षो वसुः सत्यः कालः कामस्तथैव च।
धुनिश्च रोचन[2]श्चैव तथा चैव पुरूरवा॥
आर्द्रवश्च[3] दशैते तु विश्वेदेवाः प्रकीर्त्तिताः'।

इति। तेषां मध्ये पुरूरवा-ऽऽर्द्रवसंज्ञका विश्वेदेवा अत्रावाह्याः। पार्वणश्राद्धत्वात्। अत एव शङ्खः—

'इष्टिश्राद्धे क्रतुर्दक्षः संकीर्त्यौ वैश्वदैविके।
नान्दीमुखे सत्य-वसू काम्ये च धुनि-रोचनौ॥
पुरूरवा-ऽऽर्द्रवौ चैव पार्वणे समुदाहृतौ।
नैमित्तिके काल-कामावेवं[4] सर्वत्र कीर्त्तयेत्'॥

इति। इष्टिश्राद्धं कर्माङ्गश्राद्धम्। तच्च पारस्करेण दर्शितम्—

---

१. I. reads ओषधयेति, and H. inserts ओम् before ओषधयं इति. २. E. and D. read रोचनः, and G. reads लोचनः. ३. I. reads आर्द्रवाश्च for आर्द्रवश्च. ४. I. reads एव for एवं.

'निषेककाले सोमे च सीमन्तोन्नयने तथा ।
ज्ञेयं पुंसवने श्राद्धं कर्माङ्गं वृद्धिवत्कृतम्' ॥

इति । वृद्धिवदित्यनेन वृद्धिश्राद्धात् कर्माङ्गश्राद्धमन्यदिति ज्ञायते । नान्दीमुखं वृद्धिश्राद्धम् । तत्स्वरूपं वृद्धवसिष्ठ आह—

'पुत्रजन्म-विवाहादौ वृद्धिश्राद्धमुदाहृतम्' ।

इति । आदिशब्देनान्नप्राशन-चूडाकरणादिसंस्कारा गृह्यन्ते । न तु गर्भाधान-पुंसवन-सीमन्तोन्नयनानि । तत्र क्रियमाणस्य कर्माङ्गश्राद्धत्वात् । काम्यं फलकामनोपाधिकम् । पार्वणममावास्याश्राद्धम् । नैमित्तिकं सपिण्डीकरणम् । ननु—

'एकोद्दिष्टं तु यत् श्राद्धं तन्नैमित्तिकमुच्यते' ।

इति नैमित्तिकशब्द एकोद्दिष्टे रूढत्वात्कथं सपिण्डीकरणे प्रयुज्यते ?—इति । सत्यम् । तथापि—

'तदप्यदैवं कर्त्तव्यम्' ।

इत्येकोद्दिष्टस्य दैवहीनत्वेन काम-कालसंज्ञकानां विश्वेषां देवानामन्वयानुपपत्तेः एकोद्दिष्टयुक्तं सपिण्डीकरणं नैमित्तिकशब्देन लक्षणयोच्यते ॥

## अथार्घ्यादिदानम् ।

विश्वान् देवानावाह्याऽर्घ्यपात्रासादनादि कुर्यात् । तथा च याज्ञवल्क्यः—

'यवैरन्ववकीर्याथ भाजने सपवित्रके ।

१. D. omits—
* * * * * कर्माङ्गं वृद्धिवत्कृतम्' ॥
इति । वृद्धिवदित्यनेन वृद्धिश्राद्धात् कर्माङ्गश्राद्धमन्यदिति ज्ञायते । नान्दीमुखं वृद्धिश्राद्धम्. २. I. inserts न after वृद्धिश्राद्धात्, but the insertion spoils the sense. ३. I. reads -ऽर्घ्ये for -ऽर्घ्य-. ४. I. reads यवैरन्वपकीर्याथ for यवैरन्ववकीर्याथ.

शन्नो देव्या पयः क्षिप्त्वा यवोऽसीति यवांस्तथा' ॥

(या. स्मृ. १. २३०)

इति ।[2] मत्स्यपुराणेऽपि—

'विश्वान् देवान् यवैः पुष्पैरभ्यर्च्यासनपूर्वकम् ।

पूरयेत्पात्रयुग्मं तु स्थाप्य दर्भपवित्रके'[1] ॥

(म. पु. १७. १४–१५)

इति । प्रचेता अपि—

'एकैकस्य तु विप्रस्य अर्घ्यं पात्रे विनिःक्षिपेत् ।

यवोऽसीति यवान् कीर्त्वा गन्ध-पुष्पैः सुपूजितम्' ॥

इति । अर्घ्यपात्राणि सौवर्ण-राजतादीनि । तदाह कात्यायनः—

'सौवर्ण-राजतौदुम्बर-खड्ग-मणिमयानां पात्राणामन्यतमेषु । यानि वा विद्यन्ते । पत्रपुटके वा' ।

इति । यानि वा तैजसानि कांस्यादीनि तेषु वेत्यर्थः । राजतं पात्रं पित्र्ये विनियुज्यते । न दैवे । तदाह मत्स्यो राजतं पात्रमधिकृत्य—

'शिवनेत्रोद्भवं यस्मादतस्तत् पितृवल्लभम् ।

अमङ्गलं तद् यत्नेन देवकार्येषु वर्जितम्' ॥

(म. पु. १७. २३)

इति । अर्घ्यपवित्रकं प्रतिपात्रं भेदेन कार्यम् । तदुक्तं चतुर्विंशतिमते—

१. The text reads पवित्रकम् for पवित्रके. २. I. omits मत्स्यः and E. substitutes स एव for the same; while D. reads तदेवाह for तदाह मत्स्यः.

'द्वे द्वे शलाके देवानां पात्रे कृत्वा पयः क्षिपेत्' ।

इति । पवित्रकरणेतिकर्त्तव्यतामाह योगियाज्ञवल्क्यः[1]—

'पवित्रे स्थ इति मन्त्रेण द्वे पवित्रे च कारयेत् ।
अन्तर्दर्भे कुशाच्छिन्ने कौशे प्रादेशसम्मिते' ॥

इति । कुशाच्छिन्न इति कुशमन्तरा कृत्वा छिन्ने । अत एव यज्ञपार्श्वः—

'औषधीमन्तरे कृत्वा अङ्गुष्ठा-ऽङ्गुलिपर्वणोः ।
छिन्द्यात् प्रादेशमात्रं तु पवित्रं विष्णुदैवतम्[2] ॥
न नखेन न काष्ठेन न लोहेन न मृण्मयात्'[3] ।

इति । अनन्तरं 'स्वाहार्घ्या'—इति मन्त्रेण देवतार्थं ब्राह्मण-समीपेऽर्घ्यपात्रं स्थापयेत् । तथा च गार्ग्यः—

' स्वाहेति चैव देवानां होमकर्मण्युदाहरेत्' ।

इति । देवानां होमकर्मण्यर्घ्यदाने कर्मण्युपस्थिते पात्रं स्थापयितुं 'स्वाहार्घ्या'—इति मन्त्रमुच्चारयेदिति प्रकरणादेव ग-म्यते[4] । अर्घ्यपात्रं स्थापयित्वा विप्रहस्ते ऽर्घ्यं दद्यात् । तदाह याज्ञवल्क्यः—

'या दिव्या इति मन्त्रेण हस्तेष्वर्घ्यं विनिःक्षिपेत्' ।
(या. स्मृ. १. २३१)

इति । अर्घ्यदाने विशेषमाह गार्ग्यः—

'दत्त्वा हस्ते पवित्रं तु सम्पूज्यार्घ्यं विनिःक्षिपेत्' ।

इति । हस्तेष्विति बहुवचनमुपक्रमगतैकवचनानुरोधाद-

---

१. All, except A. B. C. and F. read याज्ञवल्क्यः for योगियाज्ञवल्क्यः, but The quotation is not found in Yâjnavalkya. २. H. and I. read विष्णुरब्रवीत् for विष्णुदैवतम्. ३. H. reads येन केन च for न नखेन न. ४. B. C. and F. read प्रकरणादवगम्यते for प्रकरणादेव गम्यते.

विवक्षितम्। तदनन्तरमुदके[illegible]धादि देयम्। तथा च याज्ञवल्क्यः—

'दत्त्वोदकं गन्ध-माल्यं धूपदानं प्रदीपकम्'।

(या. स्मृ. १. २३१)

इति। गन्धादिदानमाच्छादनस्याप्युपलक्षणम्। तदन्तर्गतत्वात्। एवमासनप्रभृत्याच्छादनपर्यन्तं वैश्वदेविकार्चनं का[1]ण्डानुसमयेन कृत्वा आसनाद्याच्छादनपर्यन्तं पित्रर्चनं प्राचीनावीत्यप्रदक्षिणं कुर्यात्। तदाह याज्ञवल्क्यः—

'अपसव्यं ततः कृत्वा पितॄणामप्रदक्षिणम्'।

(या. स्मृ. १. २३२)

इति। ननु—दैवे पित्र्ये च आसनाद्याच्छादनपर्यन्तानां पदार्थानामपि पदार्थानुसमयेनैवानुष्ठानं न्याय्यम्। न तु काण्डानुसमयेन। पदार्थानुसमये हि तेषां प्रधानप्रत्यासत्तिर्भवति[2] अवैषम्यं च। अन्यथा केषाञ्चित् प्रधानप्रत्यासत्तिः केषाञ्चिन्नेति वैषम्यमापद्येत्—इति[3]। सत्यम्। आसनादिपदार्थेषु वचनबलात्काण्डानुसमय एव स्वीक्रियते। वाचनिकत्वं च—

'अपसव्यं ततः कृत्वा'।

इति वैश्वदेविकासनादिपदार्थकाण्डादूर्ध्वं पित्रर्चनविधानात्। आसनादिदानप्रकारमाह स एव—

'द्विगुणांस्तु कुशान् दत्वा ह्युशन्तस्त्वेत्यृचा सह[4]।
आवाह्य तदनुज्ञातो जपेदायान्तु नस्ततः॥ (२३३)

१. D. omits काण्डानुसमयेन कृत्वा आसनाद्याच्छादनपर्यन्तं पित्रर्चनं.
२. G. reads सन्निधिः for प्रत्यासत्तिः. ३. Except A. and G. all omit इति.
४. The text reads पितॄन् for सह.

यत्रार्थास्तु तिलैः कार्याः कुर्यादर्घ्यादि पूर्ववत् । (२३४)
दत्वाऽर्घ्यं संस्रवांस्तेषां पात्रे कृत्वा विधानतः ।
पितृभ्यः स्थानमसीति न्युब्जं पात्रं करोत्यधः' ॥(२३५)
(या. स्मृ. १. २३३–३५)

इति । द्विगुणान् द्विगुणभुग्नान् सतिलान् कुशानासनार्थं दद्यात् । तदुक्तं काठके–

'पितॄणां द्विगुणांस्तिलैः'।

इति । आसनदानात्पूर्वं पश्चाच्चोदकं दद्यात् । तथा चाश्वलायनः–

'अपः प्रदाय । (५) दर्भान् द्विगुणभुग्नानासनं
प्रदाय । (६) आपः प्रदाय' । (७)
(आ. गृ. सु. ४. ७. ५–६ )

इति । 'श्राद्धे क्षणः क्रियताम्'–इति पूर्ववत् क्षणं दत्त्वा । 'पितॄनावाहयिष्ये'–इति ब्राह्मणान् पृष्ट्वा 'आवाहय'–इति तैरनुज्ञातः 'उशन्तस्त्वा'–इति मन्त्रेणावाह्य 'नमो वः पितर'–इति तिलान् मस्तकादिदक्षिणपादान्तमवकीर्य 'आयान्तु नः पितर'–इति मन्त्रेणोपतिष्ठेत । तथा च प्रचेताः–

'शिरःप्रभृति पादान्तं नमो व इति पैतृके'।

इति । उपस्थानानन्तरकृत्यमुक्तं पुराणे–

'जपेदायान्तु न इति मन्त्रं सम्यगशेषतः ।
रक्षार्थं पितृसत्रस्य त्रिःकृत्वः सर्वतोदिशम् ।
तिलांस्तु प्रक्षिपेन्मन्त्रमुच्चार्यापहता इति' ॥

१. D. reads द्विगुणैः for द्विगुणान्. २. I. reads अलं for क्षणं. ३. I. reads स्पृष्ट्वा for पृष्ट्वा. ४. H. and I. read उपतिष्ठते for उपतिष्ठेत. ५. G. reads पैतृकम्.

इति । अर्घ्याद्याच्छादनान्तं पूर्ववत् कुर्यात् । अत्रार्घ्यपात्रासादनादौ विशेषो विष्णुना दर्शितः—

'दक्षिणाग्रेषु दक्षिणापवर्गेषु चमसेषु
त्रिष्वप आसिञ्चेच्छन्नोदेवीरिति' ।

(वि. स्मृ. ७३.१२)

इति । अयमर्थः—दक्षिणाग्रेषु दर्भेषु दक्षिणापवर्गतया ऽऽसादितेषु पवित्रान्तर्हितेषु चमसेषु त्रिष्वर्घ्यपात्रेषु 'शन्नोदेवीरभिष्टय'—इति मन्त्रेण प्रतिपात्रमप आसिञ्चेदिति । शौनको ऽपि ।

'पात्रेषु दर्भान्तर्हितेष्वपः प्रदाय शन्नो
देवीरभिष्टय इत्यनुमन्त्रितासु तिलानाव-
पति । 'तिलोऽसि सोमदेवत्यो गोसवे[1] देव-
निर्मितः । प्रत्नवद्भिः प्रत्तः[2] स्वधया पितृ-
निमाँल्लोकान् प्रीणयाहि नः स्वधा नमः' ।

इति । अत्र च पित्रादीनां त्रयाणामेकैकस्यानेकब्राह्मणनिमन्त्रणे सर्वेषामेकब्राह्मणनिमन्त्रणेऽपि त्रीण्येवार्घ्यपात्राणि । न तु ब्राह्मणसङ्ख्यया । अत एव बैजवापः—

'स्तीर्त्वा[3] पितृणां त्रीण्येव कुर्यात्पात्राणि धर्मवित् ।
एकस्मिन्वा बहुषु वा ब्राह्मणेषु यथाविधि' ॥

इति । स्तीर्त्वा[4] तिलानर्घ्योदकेषु क्षिप्त्वेत्यर्थः । अर्घ्यपवित्रं चायुग्मसङ्ख्यया कर्त्तव्यम् । तदुक्तं चतुर्विंशतिमते—

'तिस्रस्तिस्रः शलाकाः स्युः पितृपात्रेषु पार्वणे' ।

---

१. B. C. F. H. and I. read गोसवो for गोसवे. २. I. reads प्रत्नमाद्भिः प्रत्नस्वधया. ३. D. reads नीत्वा for स्तीर्त्वा. ४. D. reads नीत्वा for स्तीर्त्वा.

इति । तिलप्रक्षेपानन्तरं गन्ध-पुष्पाणि प्रक्षिपेत् । तदुक्तं ब्रह्मपुराणे

'अर्घ्याः पुष्पैश्च गन्धैश्च ताः सम्पूज्याश्च शाश्वतत्' ।

इति । या अर्घ्यार्हा आपस्ता गन्धादिभिः पूज्या इत्यर्थः । अनन्तरकर्त्तव्यमाह शौनकः

'ताः प्रतिग्राहयित्वा स्वधाऽर्घ्या इति' ।

ता अपो ब्राह्मणैः प्रतिग्राहयित्वा 'स्वधाऽर्घ्या' इति मन्त्रेण स्थापयेदित्यर्थः । ततः पवित्रान्तर्हितेषूदकपूर्वकं 'या दिव्या' इति मन्त्रेणार्घ्योदकं दद्यात् । तथा च पैठीनसिः

'ततो ब्राह्मणहस्तेषूदकपूर्वं दर्भान्प्रदायोदकपूर्वक-

मर्घोदकं ददाति या दिव्या इत्युक्त्वाऽसावेतत्ते

ऽर्घोदकमित्यप उपस्पृश्यैवमेवेतरयोः' ।

इति । अत्र विशेषमाह धर्मः

'या दिव्या आप इति पात्रं पाणिभ्यामुद्धृत्य

नाम गोत्रं च गृहीत्वा सपवित्रहस्तेऽर्घ्यं दद्यात्' ।

इति । यत्तु पैठीनसिवचने हस्तेष्विति बहुवचनं तत् त्रींस्त्रीनेकैकत्रेति विहितब्राह्मणसङ्ख्यापेक्षं । ब्राह्मणहस्तेषूद-कपूर्वं दर्भान्प्रदायेति पित्रर्थब्राह्मणार्चन एव बहुवचनप्रयोगात् ।

१. D. reads ब्रह्माण्डपुराणे for ब्रह्मपुराणे. २. I. inserts ताः after अर्घ्यार्हाः. ३. D. reads तथा for स्वधा, and omits ताः which follows the Sútra. ४. B. C. and F. omit the following:—

उदकपूर्वकं 'या दिव्या' इति मन्त्रेणार्घ्योदकं दद्यात् । तथा च पैठीनसिः

'ततो ब्राह्मणहस्तेषु'–.

G. also omits this portion, but it appears in the marginal corrections.

अन्यथा एवमेवेतरयोरिति पितामह-प्रपितामहार्थब्राह्मणार्चनस्य पृथग्विधानं न स्यात् । एवमर्घ्यं दत्वा तेषामर्घोदकानां संस्रवान् विप्रहस्तेभ्यः पात्रेषु गलितान् पितृपात्रे संगृह्य तत्पात्रं न्युब्जमधोमुखम्—

'पितृभ्यः स्थानमसि' ।

इत्यधः कुर्यात् भूमौ निदध्यात् इत्यर्थः । न्युब्जकरणानन्तरकर्त्तव्यमाह बैजवापः—

'तस्योपरि कुशान्दत्वा प्रदद्याद्दैवपूर्वकम् ।
गन्ध-पुष्पाणि धूपं च दीप-वस्त्रोपवीतकम्' ॥

इति । दैवपूर्वकमित्ययं पदार्थानुसमयो याज्ञवल्क्योक्तकाण्डानुसमयेन सह विकल्पते इत्यविरोधः ॥

## अथाऽग्नौकरणम् ।

एवं गन्ध-पुष्पादिभिर्ब्राह्मणानभ्यर्च्याग्नौकरणाख्यं कर्म कुर्यात् । तदाह कात्यायनः—

'गन्धान्ब्राह्मणसात्कृत्वा पुष्पाण्यृतुभवानि च ।
धूपं चैवानुपूर्व्येण अग्नौकुर्यादतः परम्' ॥

(का. स्मृ. २. १७. ११)

इति । अग्नौकरणप्रकारमाह याज्ञवल्क्यः—

'अग्नौकरिष्यन्नादाय पृच्छत्यन्नं घृतप्लुतम् ।
कुरुष्वेत्यभ्यनुज्ञातो हुत्वाऽग्नौ पितृयज्ञवत् ॥

१. Except A. all read एवमितरयोः, but these words are from the above quoted Sūtra of Paithînasi, which does not omit एव. २. H. reads कुशं for कुशान्. ३. D. reads ह्यग्नौकुर्यादनन्तरम् for अग्नौकुर्यादतः परम्.

हुतशेषं प्रदद्यात्तु भाजनेषु समाहितः ।
यथालाभोपपन्नेषु रौप्येषु तु विशेषतः' ॥

( या. स्मृ. १. २३६–३७ )

इति । अग्नौकरिष्यन् घृतप्लुतमन्नमादाय 'अग्नौ करिष्ये'—इति ब्राह्मणान् पृच्छेत् । घृतशब्देन शाकादेर्निरासः । ततः कुरुष्वेति तैरनुज्ञातः—

'सान्निध्यमुपसमाधाय मेक्षणेनान्नदाय सोमाय पितृमते स्वधानमोऽग्नये कव्यवाहनाय स्वधानमः' ।

इति पिण्डपितृयज्ञविधानेनाग्नौ जुहुयात् । ततो मेक्षणं हुत्वा हुतशेषं यथालाभोपपन्नेषु पित्रादिभाजनेषु दद्यात् । न वैश्वदेवभाजनेषु । तदुक्तं पुराणे—

'अग्नौकरणशेषं तु न दद्याद्वैश्वदेविके' ।

इति । अग्नौकरणं च प्राचीनावीत्युपवीती वा कुर्यात् । तत्प्रकृतिभूतस्य पिण्डपितृयज्ञस्य दैविकत्व-पैतृकत्वाभ्यामुभयविधत्वेन विकल्पितोभयधर्मकत्वात् तद्विकृतिभूताग्नौकरणहोमेऽपि प्राचीनावीतित्वोपवीतित्वयोर्विकल्पो ह्यवगम्यते । अत्र च यथाशास्त्रं व्यवस्था द्रष्टव्या । अग्नौकरणं च स्मार्त्तत्वेन विवाहाग्नौ कर्त्तव्यम् । यदा तु सर्वाधानेनौपासनाग्निर्नास्ति तदा दक्षिणाग्नौ जुहुयात् । तदसन्निधाने लौकिकाग्नौ । तथा च वायुपुराणम्—

'आहृत्य दक्षिणाग्निं तु होमार्थं वै प्रयत्नतः ।
अभ्यर्थं लौकिकं वाऽपि जुहुयात्कर्मसिद्धये' ॥

( वायुपु. २. १३. ६२–६३ )

---

१. The text reads च for तु. २. The text reads होमार्थे विप्रयत्नतः for होमार्थं वै प्रयत्नतः. ३. The text reads अत्यर्थं for अभ्यर्थं.

इति । अग्न्यर्थमौपासनाग्निकार्यसिद्ध्यर्थम् । दक्षिणाग्न्यसन्निधाने पाणौ होमः कर्तव्यः । तथा च स्मृत्यन्तरम्—

'हस्तेऽग्नौकरणं कुर्यादग्नौ वा साग्निको द्विजः' ।

इति । साग्निकः सर्वाधानेनाहिताग्निः । दक्षिणाग्न्यसन्निधाने हस्ते लौकिके ऽग्नौ वाऽग्नौकरणं कुर्यादित्यर्थः । यदा त्वर्धाधानेना[1]हिताग्निरप्यनग्निमान् तदौपासनाग्नावग्नौकरणं कुर्यात् । तदभावे द्विजपाणावप्सु वा । तथा च मार्कण्डेयः—

'अनाहिताग्निस्[2]त्वौपासनाग्न्यभावे द्विजे ऽप्सु च[3]' ।

इति । [4]चशब्देनार्धाधानेनानाहिताग्निर्गृह्यते । अप्स्वग्नौकरणं जलसमीपे श्राद्धकरणे वेदितव्यम् । तदाह कात्यायनः—

'विष्णुधर्मोत्तरे* वाऽप्सु मार्कण्डेयेन यः स्मृतः ।
स यदाऽपां समीपे स्याच्छ्रा[5]द्धं ज्ञेयो विधिस्तदा' ॥

इति । यत्तु मनुनोक्तम्—

'अग्न्यभावे तु विप्रस्य पाणावेवोपपादयेत्' ।

(म. स्मृ. ३. २१२)

इति तद्ब्रह्मचारिविषयम् । तदाह जातूकर्ण्यः—

'अग्न्यभावे तु विप्रस्य पाणौ दद्यात्तु दक्षिणे' ।

---

* उक्तश्चायं श्राद्धविधिर्विष्णुधर्मोत्तरे प्रथमकाण्डे शतोपरि चत्वारिंशत्तममध्यायमारभ्य किञ्चिदधिकैः पञ्चभिरध्यायैः मार्कण्डेयेन वज्रम्प्रति । तस्यैवायमुल्लेख इति द्रष्टव्यम्

१. B. C. and F. read आहिताग्निरनाहिताग्निरप्यग्निमान्. २. B. C. and F. substitute च for तु. ३. I. substitutes वा for च. ४. I. reads अनाहिताग्निशब्देन for चशब्देन. ५. B. C. D. E. G. and H. read श्राद्धे for श्राद्धं.

असम्भवः स्मृतस्तस्मात्तस्माद्वाग्नौ न विद्यते' ॥

इति । विद्यमाने ऽप्यग्नौ काम्यादिषु चतुर्षु श्राद्धेषु ब्राह्मणपाणावेव होमः । तदाह गृह्यकारः—

'अन्वष्टक्यं च पूर्वेद्युर्मासिमासि च पार्वणम् ।
काम्यमभ्युदये ऽष्टम्यामेकोद्दिष्टमथाष्टमम् ॥
चतुर्ष्वाद्येषु साग्नीनामग्नौ होमो विधीयते ।
पित्र्यब्राह्मणहस्ते स्यादुत्तरेषु चतुर्ष्वपि' ॥

इति ।

'हेमन्त-शिशिरयोश्चतुर्णामपरपक्षाणामष्टम्यो ऽष्टकाः'।

इति विहितान्यष्टकाश्राद्धानि । तत्राष्टकाश्राद्धानामुत्तरदिने नवम्यां क्रियमाणं श्राद्धमन्वष्टक्यम् । पूर्वेद्युः सप्तम्यां क्रियमाणं श्राद्धं 'पूर्वेद्युः' इति पदेन लक्षणयोक्तम् । प्रतिमासं क्रियमाणमापरपक्षिकं श्राद्धं 'मासि मासि' इत्यनेनोक्तम् । पार्वणं सर्वश्राद्धप्रकृतिभूतममावास्याश्राद्धम् । काम्यं पुत्रादिफलकामनया क्रियमाणं श्राद्धम् । आभ्युदयिकश्राद्धं 'अभ्युदये' इति पदेनोक्तम् । अष्टकाख्यश्राद्धं 'अष्टम्यां' इतिपदेनोक्तम् । एकोद्दिष्टपदेन सपिण्डीकरणं लक्षणयोक्तम् । सपिण्डीकरणे एकोद्दिष्टस्यापि सद्भावात् । एषां मध्ये आद्येषु चतुर्षु साग्निकानामग्नावेवाग्नौकरणहोमः । उत्तरेषु साग्नीनां पित्र्यब्राह्मणहस्त एवेति । पाणौ होमे तु विशेषः कात्यायनेन दर्शितः—

'पित्र्ये यः पङ्क्तिमूर्धन्यस्तस्य पाणावनग्निकः ।
हुत्वा मन्त्रवदन्येषां तूष्णीं पात्रेषु निःक्षिपेत्' ॥

(का. स्मृ. २. १७. १९)

१. All, except A. and I. omit the portion from हेमन्तशिशिरयोः to पित्र्यब्राह्मणहस्त एवेति (both inclusive).

इति। यत्तु यमेनोक्तम्—

'दैवविप्रकरेऽनग्निः कृत्वाऽग्नौकरणं द्विजः'।

इति तत्र विकल्पेन व्यवस्था द्रष्टव्या। दैविकब्राह्मणपाणौ होमपक्षेऽपि पित्र्यब्राह्मणपात्रेष्वेव शेषं निःक्षिपेत्। अत एव वायुपुराणम्—

'हुत्वा दैवकरेऽनग्निः शेषं पित्र्ये निवेदयेत्।

न हि स्मृताः शेषभाजो विश्वेदेवाः पुराणगैः'॥

इति। पाणौ होमे यत्कर्त्तव्यं तदाह शौनकः—

'अनाग्निश्चेदाद्यं गृहीत्वा भवत्स्वेवाग्नौ-

करणम्—इति पूर्ववत्तथाऽस्त्विति'।

इति। अयमर्थः—आद्यं घृतप्लुतमन्नं गृहीत्वा—

'भवत्स्वेवाग्नौकरणहोमं करिष्ये'।

इति पूर्ववत् पृष्ट्वा तथाऽस्त्विति तैरनुज्ञातो जुहुयात्—इति। यमोऽपि—

'अग्नौकरणवत्तत्र होमो दैवकरे भवेत्।

पर्यस्तदर्भानास्तीर्य यतो ह्यग्निसमो हि सः'॥

इति। पर्यस्तदर्भाः परिस्तरणयोग्या दर्भाः। दैवकरग्रहणेन पित्र्यब्राह्मणकरोऽप्युपलक्ष्यते। उभयत्रापि विकल्पेनाग्नौकरणस्य विधानात्। पाणितले हुतस्यान्नस्य विनियोगमाह गृह्यपरिशिष्टकारः—

'यच्च पाणितले दत्तं यच्चान्यदुपकल्पितम्।

ऐकीभावेन भोक्तव्यं पृथग्भावो न विद्यते॥

---

१. D. omits the portion between इति and पित्र्ये निवेदयेत् (both inclusive). २. B. C. E. and F. read एकभावेन for एकीभावेन.

अन्नं पाणितले दत्तं पूर्वमश्नन्त्यवुद्धयः।
पितरस्तेन तृप्यन्ति शेषान्नं न लभन्ति ते' ॥

इति। यदा दैवविप्रकरे होमस्तदा पितृ-मातामहश्राद्ध-द्वयार्थं सकृदेवानुष्ठेयः। वैश्वदेवभेदे ऽपि तत्राधिकरणकारकस्य सम्प्रतिपन्नत्वात्। यदा पित्र्यब्राह्मणकरे होमस्तदा मातामहब्राह्मणकरे ऽपि पृथगनुष्ठेयः। वैश्वदेविकतन्त्रत्वे ऽपि तत्राधिकरणकारकस्यासम्प्रतिपन्नत्वात्। तथा च कात्यायनः—

'मातामहस्य भेदे ऽपि कुर्यात्तत्रैव साग्निकः'[1]।

इति। वैश्वदेविकस्य भेदे तन्त्रे च मातामहस्य मातामहार्थब्राह्मणस्यापि पाणौ होमं साग्निकः कुर्यादित्यर्थः। पात्राणि द्विः प्रक्षालयेत्। तथा च ब्रह्माण्डपुराणम्—

'प्रक्षाल्य हस्तपात्रादि पश्चादद्भिर्विधानवत्[2]।
प्रक्षालनजलं दर्भैस्तिलमिश्रं क्षिपेच्छुचौ'[3] ॥

इति। हस्तेन निमृष्टं पात्रादीनि मध्यमपदलोपी समासः। आदिशब्देन घृतादिधारणार्थं गृह्यते ॥

## अथ परिवेषणम्।

एवं प्रक्षालितेषु पात्रेषु हुतशेषं प्राचीनावीती पितृपात्रेषु निधाय सम्पादितान् पदार्थान् परिवेषयेत्। तथा च शौनकः—

'हुत्वाऽग्नौ परिशिष्टं तु पितृपात्रेष्वनन्तरम्।
निवेद्यैवापसव्येन परिवेषणमाचरेत्' ॥

१. A. reads तन्त्रेण for तत्रैव, and for the same I. reads तन्त्रे च.
२. I. reads द्विधा भवत् for विधानवत्. ३. Except A. and I. all omit this line; while I. reads प्रक्षालनं जलं for प्रक्षालनजलं.

इति। अपसव्येनेति हुतशेषनिवेदनेनाऽन्वेति[1]। न तु परिवेषणेन। अत एव कार्ष्णाजिनिः—

'अपसव्येन कर्त्तव्यं पित्र्यं कृत्यं विशेषतः।
अन्नदानादृते सर्वमेवं मातामहेष्वपि'॥

इति। परिवेषणप्रकारो मनुना दर्शितः—

'पाणिभ्यामुपसंगृह्य[2] स्वयमन्नस्य वर्धितम्।
विप्रान्तिके पितॄन् ध्यायन् शनकैरुपनिःक्षिपेत्'।

(म. स्मृ. ३. २२४)

इति। अन्नस्य वर्धितमन्नेन पूर्णं परिवेषणपात्रं विप्रान्तिके भोजनार्थपात्रे। स्वयमिति वचनात् स्वयं परिवेषणं मुख्यम्। अत एव वायुपुराणम्—

'फलस्यानन्तता प्रोक्ता स्वयं तु परिवेषणे[3]'।

इति। यत्तु तत्रैवोक्तम्—

'परिवेषणं प्रशस्तं हि भार्यया पितृतृप्तये।
पितृ-देव-मनुष्याणां स्त्रीसहाये यतः स्मृते'[4]॥

इति तदितरापेक्षया वेदितव्यम्। भार्ययाऽपि सवर्णयैव* परिवेषणं कार्यम्। तथा च नारायणः—

'यद्द्रव्यं यत्पवित्रं च यत्पित्र्यं यत्सुखावहम्।
द्विजातिभ्यः सवर्णाया हस्तेनैव तु दीयते'॥

---

* 'सवर्णयैव'—इति युगान्तरविषयम्।
'द्विजानामसवर्णासु कन्यासूपयमस्तथा'।
इत्यादिना असवर्णस्त्रीविवाहस्यैव कलौ निषिद्धत्वात्।

१. H. omits -नाऽन्वेति and reads हुतशेषनिवेदनेन स्वन्नपरिवेषणे. २. The text inserts तु after पाणिभ्याम्. ३. I. reads परिवेषणात् for परिवेषणे. ४. G. reads स्त्रीसहायो यतः स्मृते, and I. reads स्त्रीसहायो यतः स्मृतः.

इति । हस्तेन हस्तद्वयेनेत्यर्थः । तदाह मत्स्यः—

'उभाभ्यामपि हस्ताभ्यामाहृत्य परिवेषयेत्' ।

( म. पु. १७. २८ )

इति । हस्तेनाऽपि न साक्षाद्देयम् । अपि तु दर्व्यादिद्वारा । अत एव वृद्धशातातपः—

'हस्तदत्तास्तु ये स्नेहा लवण-व्यञ्जनादयः ।
दातारं नोपतिष्ठन्ति भोक्ता भुञ्जीत किल्बिषम्' ॥

( व. स्मृ. १४. ३१ )

इति । विष्णुपुराणेऽपि—

'नाऽपवित्रेण हस्तेन नैकेन न विनाकुशम् ।
नायसेनैव पात्रेण श्राद्धेषु परिवेषयेत्' ॥

इति । आयसेन अयोमयपात्रेण नैव परिवेषयेत् । परिवेषणे कानि पात्राणि प्रशस्तानीत्यपेक्षिते विष्णुः—

'घृतादिदाने तैजसानि पात्राणि खड्गपात्राणि ।

१. All, except A. and I. omit
हस्तेन हस्तद्वयेनेत्यर्थं । तदाह मत्स्य.—
'उभाभ्यामपि हस्ताभ्यामाहृत्य परिवेषयेत' ।.
In I. this portion appears thus—
हस्तेन हस्तद्वयेनेत्यर्थः । हस्तेनापि न साक्षाद्देयम । अपि तु दर्व्यादिद्वारा । अत एव वृद्धशातातपः—
'उभाभ्यामपि हस्ताभ्यामाहृत्य परिवेषयेत' ।
इति । मत्स्येनोक्तम्.— २. Except A. and I. all omit this ऽपि. ३. These two lines are found in Vasishtha Smriti. ४. B. C. D. F. G. and H. substitute पुराणेऽपि, for विष्णुपुराणेऽपि, and for the same E. reads वायुपुराणेऽपि, But the quotation appears neither in Vishṇupurâṇam nor in Vâyupurâṇam. ५. Except A. and the text all omit खड्गपात्राणि and च. and insert वा before and after फल्गुपात्राणि.

फल्गुपात्राणि च प्रशस्तानि। (२२)
अत्र च पितृगाथा[1] भवति। (२३)
सौवर्ण-राजताभ्यां च खड्गेनौदुम्बरेण च।
दत्तमक्षयतां याति[2] फल्गुपात्रेण वाऽप्यथ' ॥
(वि. स्मृ. ७९. २२-२४)

इति। खड्गेन[3] खड्गमृगशृङ्गकृतदर्व्यादिना। फल्गुपात्रेण काकोदुम्बरिकाख्यवृक्षदारुकृतदर्व्यादिना। अन्यान्यपि परिवेषणीयान्याह मनुः-

'भक्ष्यं भोज्यं च विविधं मूलानि च फलानि च।
हृद्यानि चैव मांसानि पानानि सुरभीणि च ॥
[4]उपनीय तु तत्सर्वं शनकैः सुसमाहितः।
[5]परिवेषयेत्तु प्रयतः गुणान्* सर्वान् प्रचोदयन्' ॥
(म. स्मृ. ३. २२७-२८)

इति। शौनकोऽपि-
'[6]पाकं सर्वमुपानीय निवेद्यं[7] च पृथक् पृथक्।
विधिना दैवपूर्वं तु परिवेषणमारभेत्' ॥

---

* अत्र 'गुणान् सर्वान् प्रचोदयन्'-इत्यनेन इदं क्षारमिदं मधुरमिदमाम्लमित्यादिनिवेदनपूर्वकं परिवेषणीयमित्यर्थो विवक्षितः। न तु पदार्थस्तुतिः। तथा सति-

'अश्नन्ति पितरस्तावद्यावन्नोक्ता हविर्गुणाः'।

इत्यादि निषेधात् अन्नदानं विफलं स्यात्।

---

१. The text substitutes श्लोको भवति for पितृगाथा भवति. २. I. reads यान्ति. ३. All, except A. and I. omit खड्गेन खड्गमृगशृङ्गकृतदर्व्यादिना। फल्गुपात्रेण काकोदुम्बरिकाख्यवृक्षदारुकृतदर्व्यादिना।. ४. I. reads उपनीयं. ५. The text reads परिवेषयेत् for परिवेषयेत्तु. ६. I. reads शाकं for पाकं. ७. B. C. and F. read संवेद्य for निवेद्य; while G. reads निवेद्यं.

इति । सम्पादितं सर्वं पात्रेषु[1] प्रक्षिप्य पात्राभिमन्त्रणं कुर्यात् । तदाह प्रचेताः—

'सर्वं प्रकृतं दत्त्वा पात्रमालभ्य जपेत्' ।

इति । अत्र विशेषमाह याज्ञवल्क्यः—

'दत्त्वाऽन्नं पृथिवीपात्रमिति पात्राभिमन्त्रणम् ।
कृत्वेदं विष्णुरित्यन्ने[2] द्विजांगुष्ठं निवेशयेत्' ॥

(या. स्मृ. १. २३८)

इति । अनन्तरकर्त्तव्यमाहात्रिः—

'इत्तेन युक्तमन्त्राद्यमिदमन्नमितीरयेत् ।
स्वाहेति च ततः कुर्यात् स्वसत्तावनिवर्त्तनम्[3] ॥
गोत्र-सम्बन्ध-नामानि इदमन्नं ततः स्वधा ।
पितृक्रमादुदीर्येति[4] स्वसत्तां विनिवर्त्तयेत्' ॥

इति । अयमर्थः—विश्वेभ्यो देवेभ्य इति देवतोद्देशेन शब्दोच्चारणानन्तरमिदमन्नमित्युच्चारयेत् । ततः स्वाहेति मन्त्रमुच्चारयेत् । ततो न ममेति स्वस्वपरित्यागं कुर्यात् । ततः पित्रादिक्रमात् सम्बन्ध-गोत्र-नामोच्चारणपूर्वकं[5] देवतोद्देशं कृत्वेदमन्न-

।—विश्वेभ्यो देवेभ्यः इदमन्नं स्वाहा न मम—इति स्वत्वत्यागः । पित्र्ये तु सम्बन्धनाम-गोत्रोच्चारणानन्तरं—इदमन्नं स्वधा न मम—इति-त्यागः । इदानीन्तनाशिष्टास्तु—'परिविष्टं परिवेष्यमाणं' अथवा 'दत्तं च दास्यमानं च आतृप्तेस्तृप्तिपर्यन्तं' इत्यादि किञ्चिदधिकं पठन्ति ।

१. G. H and I. read सर्वपात्रेषु for सर्वं पात्रेषु. D substitutes निःक्षिप्य for प्रक्षिप्य. २. Except A. I. and the text all read इत्येतत् for इत्यन्ने; while B. C. D. F. and H. substitute निवेदयेत् for निवेशयेत्. ३. I. reads स्वसत्तादि निवर्तयेत् for स्वसत्तावनिवर्त्तनम्. ४. H. and I. read पितॄन् क्रमात्. ५. Except A. and I. all read देवताशब्दोच्चारणानन्तरम्.

मिति प्रदेयं द्रव्यं निर्दिश्य स्वधेति कव्यदानप्रकाशकं मन्त्रमुच्चार्य न ममेति स्वत्वपरित्यागं कुर्यात्। अनन्तरकृत्यमाह लघुयमः–

'अन्नहीनं क्रियाहीनं मन्त्रहीनं च यद्भवेत्।
सर्वमच्छिद्रमित्युक्त्वा तेतो[1] यत्नेन भोजयेत्' ॥

इति। 'अच्छिद्रं जायताम्'–इत्युक्त्य[2]नन्तरकर्त्तव्यमाह प्रचेताः–

'आपोशानं प्रदायाथ सावित्रीं त्रिर्जपेदथ।
मधुवाता इति तृचं मध्वित्येतत्त्रिकं तथा'॥

इति। [3]मधु इत्येतत् त्रिरावर्त्तनीयमिति चतुर्थपादस्यार्थः। सावित्रीं सव्याहृतिकां जपेत्। तथा च याज्ञवल्क्यः–

'सव्याहृतिकां गायत्रीं मधुवाता इति तृचम्।
जप्त्वा यथासुखं वाच्यं भुञ्जीरंस्तेऽपि वाग्यताः'॥
(या. स्मृ. १. २३९)

इति। [4]यथासुखमित्यत्र जुषध्वमित्यध्याहारः। अत एव व्यासः–

'जुषध्वमिति ते चोक्ताः सम्यग्विधृतभाजनाः।
कृतमौनाः समश्नीयुरपोशानादनन्तरम्' ॥

इति। श्राद्धभोक्ता बलिं न दद्यात्। अत एवात्रिः–

'दत्ते वाऽप्यथवाऽदत्ते भूमौ यो निःक्षिपेद्बलिम्।
तदन्नं निष्फलं याति निराशैः पितृभिर्गतम्' ॥

---

१. B. C. and F. read नतो for ततो. २. D. and I. read इत्युक्त्वा। अनन्तर–. ३. Except A. and I. all omit—
मधु इत्येतत् त्रिरावर्त्तनीयमिति चतुर्थपादस्यार्थः।.
४. Except A. and I. all omit यथासुखमित्यत्र.

इति । भोजनोपक्रमानन्तरकर्त्तव्यमाह कात्यायनः—

'अश्नत्सु जपेद्व्याहृतिपूर्वां गायत्रीं सप्रणवां
सकृत् त्रिर्वा रक्षोघ्नीः पित्र्यमन्त्रान् पुरुषसू-
क्तमप्रतिरथमन्यानि च पवित्राणि'।

इति । मनुरपि—

'स्वाध्यायं श्रावयेत् पित्र्ये धर्मशास्त्राणि चैव हि ।
आख्यानानीतिहासांश्च पुराणानि खिलानि[१] च' ॥
(म. स्मृ. ३. २३२)

इति । अत्र सूक्तजपो यज्ञोपवीतिना कर्त्तव्यः । अत एव जमदग्निः—

'अपसव्येन कर्त्तव्यं सर्वं श्राद्धं यथाविधि ।
सूक्त-स्तोत्रजपं मुक्त्वा विप्राणां च विसर्जनम्' ॥

इति ॥

## अथ दातृ-भोक्तृनियमाः ।

दातृ-भोक्तृनियममाह[२] वृद्धशातातपः—

'अपेक्षितं यो न दद्यात् श्राद्धार्थमुपकल्पितम् ।
कृपणो मन्दबुद्धिस्तु न स श्राद्धफलं लभेत् ॥
अपेक्षितं[३] याचितव्यं श्राद्धार्थमुपकल्पितम् ।
न याचते द्विजो मूढः स भवेत् पितृघातकः' ॥

इति । ननु[४]

१. B. C. D. E. F. G. and H. read अखिलानि for खिलानि. २. I. reads -नियमानाह. ३. B. C. and F. omit this and the following line. ४. D. substitutes मनु- for ननु.

'याचते[1] यदि दातारं ब्राह्मणो ज्ञानवर्जितः[2] ।
पितरस्तस्य कुप्यन्ति[3] दातुर्भोक्तुर्न संशयः' ॥

इति ।

'कृच्छ्रद्वादशरात्रेण मुच्यते ऽकर्मणस्ततः ।
तस्माद्विद्वान्नैव दद्यान्न याचेन्न च दापयेत्' ॥

इति वायुपुराण-स्मृती विरुद्ध्येयातामिति चेत् । मैवम् । तयोरनुपकल्पितविषयत्वेनाप्युपपत्तेः[4] । उपकल्पितवस्तुनोऽप्यत्यन्ताधिकस्य दान-प्रतिग्रहौ शङ्ख-लिखिताभ्यां निषिद्धौ—

'नात्यन्ताधिकं दद्यात् । न प्रतिगृह्णीयात्' ।

इति । अनपेक्षितवस्तुनो[5] निवारणप्रकारमाह निगमः—

'नाऽन्न-पानादिकं श्राद्धे वारयेन्मुखतः क्वचित् ।
अनिष्टत्वाद्बहुत्वाद्वा वारणं हस्तसंज्ञया' ॥

इति । वारणं याचनस्याप्युपलक्षणार्थम् । मुखतो याचने मौनभङ्गाविशेषात् । अपेक्षितं[6] वस्तु ददामीत्युक्त्वा न देयम् । तथा च यमः—

'यावद्धविष्यं भवति यावदिष्टं प्रदीयते ।
तावदश्नन्ति पितरो यावन्नाऽऽह[7] ददाम्यहम्' ॥

इति । भोजनकाले दातृनियमा ब्रह्माण्डपुराणे दर्शिताः—

---

१. D. reads याचयेत् for याचते. २. I. substitutes ज्ञानदुर्बलः for ज्ञानवर्जितः. ३. D. E. and G. read तुष्यन्ति for कुप्यन्ति. H. reads the same, but has क्रुद्ध्यन्ति as marginal correction; while I. reads तुष्यन्ति. ४. D. reads तयोरुपरिकल्पित- for तयोरनुपकल्पित-, and omits- उपकल्पितवस्तुनोऽप्यत्यन्ताधिकस्य दान-प्रतिग्रहौ शङ्ख-लिखिताभ्यां निषिद्धौ—

'नात्यन्ताधिकं दद्यात् । न प्रतिगृह्णीयात्' ।

इति ।. ५. D. reads उपकल्पितं- for अनपेक्षित- and यमः for निगमः. ६. H. reads अनपेक्षितं for अपेक्षितं. ७. D. substitutes नार्हे for नाहं and for the same B. C. F. and H. read नाहं.

'श्राद्धपंक्तौ तु भुञ्जानो ब्राह्मणो ब्राह्मणं स्पृशेत् ।
तदन्नमत्यजन् भुक्त्वा गायत्र्यष्टशतं जपेत्' ॥

इति । पुनः स एव[१]

हुङ्कारेणापि यो ब्रूयाद्धस्ताद्वाऽपि गुणान्वदेत् ।
भूतल्याश्चोद्धरेत्पात्रं मुञ्चेद्धस्तेन वाऽपि तत् ॥
प्रौढपादो बहिःकक्षो बहिर्जानुकरोऽथ वा ।
अङ्गुष्ठेन विनाऽश्नाति मुखशब्देन वा पुनः ॥
पीतावशिष्टं तोयादि पुनरुद्धृत्य वा पिबेत् ।
खादितार्धं पुनः खादेन्मोदकानि फलानि वा ॥
मुखेन वा धमेदन्नं निष्ठीवेद्भाजनेऽपि वा ।
इत्थमश्नन् द्विजः श्राद्धं हत्वा गच्छत्यधोगतिम्'[२]॥

इति । प्रौढपादः आसनाद्यारूढपादः । बहिःकक्ष उत्तर-
वासोबहिर्भूतकक्षाद्वितयः[३] । दातृनियममाह शङ्खः—

'श्राद्धं नियुक्तान् भुञ्जानान् न पृच्छेल्लवणादिषु ।
उच्छिष्टाः पितरो यान्ति पृच्छतो नात्र संशयः ॥
दातुः पतति बाहुर्वै जिह्वा भोक्तुश्च भिद्यते' ।

इति । अन्यानपि भोक्तृनियमानाह प्रचेताः—

'न स्पृशेद्वामहस्तेन भुञ्जानोऽन्नं कदाचन ।
न पादौ न शिरो बस्तिं न पदा भाजनं स्पृशेत् ॥
भाजनं तु न निःशेषं कुर्यात् प्राज्ञः कथञ्चन ।
अन्यत्र दध्नः क्षीराद्वा क्षौद्रात् सक्तुभ्य एव च' ॥

---

१. Except I. all substitute शङ्खोऽपि for पुनः स एव. २. B. C. F. G. and H. read इत्थमन्नं द्विजः श्राद्धं भुक्त्वा for इत्थमश्नन् द्विजः श्राद्धं हत्वा. D. also has the same reading, but it reads श्राद्धे for श्राद्धं. ३. All, except A. and I., omit from प्रौढपादः to कक्षाद्वितयः ( both inclusive ).

'सार्ववर्णिकमन्नाद्यं सन्नीयाप्लाव्य वारिणा ।
समुत्सृजेद्भुक्तवतामग्रतो विकिरं भुवि' ॥

(म. स्मृ. ३. २४४)

इति । सर्ववर्णा व्यञ्जनविशेषा यस्मिंस्तत्सार्ववर्णिकम् । अत्र विशेषमाह प्रचेताः—

'ये अग्नीति भुवि क्षिपेत' ।

इति । भुवि दर्भास्तृतायामिति । अत एव मनुना—

'दर्भेषु विकिरश्च यः' ।

(म. स्मृ. ३. २४५)

इत्युक्तम् । विकिरं दत्त्वा आचामेत् । अत एव मरीचिः—

'श्राद्धेषु विकिरं दत्त्वा यो नाचामेन्मतिक्षयात् ।
पितरस्तस्य षण्मासं भवन्त्युच्छिष्टभोजनः' ॥

इति । अनन्तरं गण्डूषार्थमुदकं दद्यात् । तथा च मदालसावाक्यम्—

'तद्वदाचमनार्थाय दद्यादापः सकृत्सकृत्' ।

(मा. पु. ३१. ५३)

इति । पित्र्यब्राह्मणपूर्वकं हस्तप्रक्षालनाचमनार्थमुदकं दद्यात् । तदाह विष्णुः—

'उदङ्मुखेष्वाचमनमादौ दद्यात् ततः

१. H. and I. read क्षमात् for क्षयात्. २. Except A. and the text all read ततस्तु for तद्वत् and insert च before आपः. ३. The text reads दत्त्वा for दद्यात्.

तु चरुश्रपणसद्भावस्तदाऽग्नौकरणशिष्टचरुशेषेण सह सर्व-
मन्नमादाय अग्निसन्निधौ पिण्डान् दद्यात् । तदाह मनुः—

'त्रींस्तु तस्माद्धविःशेषात् पिण्डान् कृत्वा समाहितः ।
औदकेनैव विधिना निर्वपेद्दक्षिणामुखः' ॥

(म. स्मृ. ३. २१५)

इति । उच्छिष्टसन्निधिस्वरूपमाहाऽत्रिः—

'पितृणामासनस्थानादग्रतस्त्रिष्वरत्निषु ।
उच्छिष्टसन्निधानं तु नोच्छिष्टासनसन्निधौ' ॥

इति । त्रिष्वरत्निष्विति उच्छिष्टसंसर्गरहितासन्नदेशोपल-
क्षणार्थम् । अत एव व्यासः—

'अरत्निमात्रमुत्सृज्य पिण्डांस्तत्र प्रदापयेत् ।
यत्रोपस्पृशतां वाऽपि प्राप्नुवन्ति न बिन्दवः' ॥

इति । पिण्डदाने कालमाह मनुः—

'पिण्डनिर्वपणं केचित् पुरस्तादेव कुर्वते' ।

(म. स्मृ. ३. २६१)

इति । भोजनात् पुरस्तादर्चनानन्तरं अग्नौकरणानन्तरं
वा पिण्डनिर्वपणं केचिदिच्छन्ति । अपरे तु भोजनानन्तरमा-
चमनादर्वागूर्ध्वं वा ब्राह्मणविसर्जनात् पश्चाद्वा पिण्डनि-
र्वपणं कचिदिच्छन्तीति केचिदित्यनेनावगम्यते । भोजनात्
पुरस्तात् पिण्डनिर्वपणं सपिण्डीकरणात् प्राग्विहितेष्वप्रशस्तेषु
श्राद्धेषु । सपिण्डीकरणादिप्रशस्तश्राद्धेषु पश्चादेव पिण्डनिर्व-
पणम् । तदाह लौगाक्षिः—

१. D. and G. read उदकेनैव for औदकेनैव. २. B. C. and F. read सु for षु. ३. D. reads लव for सव.

'तानभ्युक्ष्य'

इति आश्वलायनस्मरणात् । तत्र कुशानास्तृणुयात् । तदुक्तं ब्रह्माण्डपुराणे

'क्षिपेत कुशांस्तत्र च दक्षिणाग्रान्'।

इति । ततोऽवनेजनं कुर्यात् । तदाह मनुः

'असाववनेनिक्ष्वेति पुरुषं पुरुषं प्रति ।
त्रिस्त्रिरेकेन हस्तेन विदध्यादवनेजनम्' ॥

इति । असाविति पित्रादीन् नाम-गोत्राभ्यां सम्बोध्य एकेन दक्षिणहस्तेन प्रतिपुरुषं त्रिस्त्रिरवनेजनमुदकनिर्वपणं कुर्यादित्यर्थः । अत्राऽऽश्वलायनेनावनेजने मन्त्रान्तरमुक्तम्—

'प्राचीनावीती स्वधां त्रिरुदकेनोपनयेच्छुन्धन्तां पितरः'।

इत्यादि तदविरुद्धम् । शाखाभेदेन व्यवस्थोपपत्तेः । पिण्डदानमन्त्राः कात्यायनेन दर्शिताः

'असावेतत्त इति ये च त्वा मत्रान्विति चैके' ।

इति । असावित्यमुकगोत्रामुकशर्मन्निति सम्बोध्य एतत्ते इति मन्त्रेण पिण्डदानं कुर्यात् । एके ये च त्वामत्रान्विति मन्त्रेण पिण्डदानं कुर्यादित्याहुः । पिण्डदानं च सव्यं जान्वाच्य कर्त्तव्यम् । तदुक्तं वायुपुराणे

'मधु-सर्पिस्तिलयुतांस्त्रीन् पिण्डान्निर्वपेद्बुधः ।
जानुं कृत्वा तथा सव्यं भूमौ पितृपरायणः' ॥

(वायुपु. २. १३. २२)

१. I. reads -त्विक्ष्व for -निक्ष्व. २. D. omits चैके and I. has only च. ३. I. reads सव्यजान्वाच्य. D. omits the portion between कर्त्तव्यम् and भूमौ पितृपरायणः (both exclusive). ४. The text reads [illegible].

इति । पिण्डदानानन्तरकर्त्तव्यमाह मनुः—

'न्युप्य पिण्डान् पितृभ्यस्तु प्रयतो विधिपूर्वकम् ।
तेषु दर्भेषु तं हस्तं निमृज्याल्लेपभागिनाम्' ॥
(म. स्मृ. ३. २१६)

इति । तत्र मन्त्रो विष्णुना दर्शितः—

'अत्र पितरो मादयध्वं यथाभागमावृषा-
यध्वमिति दर्भमूलेषु करावघर्षणम्' ।

इति । अनन्तरकर्त्तव्यमाह कात्यायनः—

'अत्र पितर इत्युक्त्वोदङ्मुख आतमना-
दावृत्याऽमीमदन्त पितर इति जपति' ।
(वि. स्मृ. ७. २२)

इति । आतमनात् प्राणायामोत्थवायुपीडावधि उदङ्मुख आसीत् । ततोऽनुच्छ्वसन्नेव पर्यावृत्त्यामीमदन्तेति मनसा जपित्वोच्छ्वसेत् । अत्र विशेषः कर्मप्रदीपे दर्शितः—

'वामेनावर्त्तनं केचिदुदगन्तं प्रचक्षते ।
सव्यं गौतम-शाण्डिल्यौ शाण्डिल्यायन एव च ॥
आवृत्य प्राणमायम्य पितॄन्ध्यायन्यथार्हतः ।
जपंस्तेनैव चाऽऽवृत्य ततः प्राणान् प्रमोचयेत्' ॥
(का. स्मृ. २. १७. २१-२२)

इति । अमीमदन्तेत्यनुमन्त्रणानन्तरं विष्णुः—

१ The text reads ततस्तांस्तु for पितृभ्यस्तु. २. Except A. and the text all omit यथाभागमावृषायध्वम्. ३. D. and the text read दर्भमूलेषु. ४. H. has the marginal reading प्राणायामोच्छ्वास-. ५. Except A. and the text all omit this line. ६. The following quotation of Vishnu cannot be traced in any of the printed copies we have, while it appears in the MS.

'अमीमदन्तेत्यनुमन्त्र्य शेषावघ्राणं कृत्वा शुन्धन्तां पितर इति पूर्ववदुदकानिनयनं पिण्डोपरि ततोऽसावभ्यङ्क्ष्वेत्यभ्यञ्जनं दद्यादसावङ्क्ष्वेत्यञ्जनं अथ वस्त्रमभावे दशामूर्णां वा एतद्वः पितरो वासो मानोऽतोन्यत्पितरो युङ्ध्वम्'।

(वि. स्मृ. ७३. २६)

इति। तदनन्तरं व्याघ्रः—

'गन्ध-पुष्पाणि धूपं च दीपं च विनिवेदयेत्।
एतद्वः पितरो वासो दशां दत्वा पृथक् पृथक्'॥

इति। अर्चनानन्तरं मत्स्यः–

'यत् किञ्चित्पच्यते गेहे भक्ष्यं भोज्यमगर्हितम्।
अनिवेद्य न भोक्तव्यं पिण्डमूले कथञ्चन'॥

(म. पु. १७. ३६)

इति। तदनन्तरं बृहस्पतिः—

'अनभ्यर्च्योदपात्रं तु तेषामुपरि निःक्षिपेत'।

इति। अनन्तरं विष्णुः—

'अथैतानुपतिष्ठेत नमो वः पितर इत्यादिना मनोन्वाहुवा मह इति तूच्चान्तेनाथैनान् पिण्डांश्चालयेत् परेतन पितर इति'।

(वि. स्मृ. ७३. २५)

१. I. reads अभ्यङ्क्ष्व for अभ्यङ्क्ष्व. २. I. reads मानोत पेत्य पितरो युङ्ध्वम्. This reading does not give any sense. ३. The following quotation appears only in the MS. we have.

इति ॥

## अथ पिण्डदानानन्तरकृत्यम् ।

अनन्तरकृत्यमाहाऽऽश्वलायनः—

'अग्निं प्रत्येयादग्ने तमद्याश्वन्न स्तोमैरिति अग्नि-
मग्नौकरणाग्निं गार्हपत्यं यदन्तरिक्षं पृथिवीम्' ।

इति । अनन्तरकृत्यमाह मत्स्यः—

'अथाचान्तेषु चाचम्य वारि दद्यात् सकृत् सकृत्' ।
(म. पु. १७. ४९)

इति । ब्राह्मणहस्तेषु सकृत्सकृदपो दद्यादित्यर्थः । एत-दाचमनात् प्राक् पिण्डदानपक्षे वेदितव्यम् । आचान्तेषु तु पिण्डदानपक्षे आचम्य पिण्डदानं कृत्वा ब्राह्मणहस्तेषूदकं सकृत् सकृद्दद्यात् । कुशाश्च देयाः । पद्मपुराणेऽपि—

'आचान्तेषूदकं दद्यात् पुष्पाणि सयवानि च' ।

इति । अत्र यवग्रहणं तिलोपलक्षणार्थम् । च शब्दः पु-नरप्युदकदानसमुच्चयार्थः । कृतकार्यत्वेन तेषु च यवादिषु कुत्रचित् शुचौ देशे विसृष्टेषु पुनरुदकादिकं दद्यात् । तथा च मत्स्यः—

'आचान्तेषु पुनर्दद्यात् जल-पुष्पा-ऽक्षतोदकम्' ।
(म. पु. १६. ४७)

इति । अनन्तरकर्त्तव्यमाह स एव—

'दत्त्वाऽऽशीः प्रतिगृह्णीयात् द्विजेभ्यः[1] प्राङ्मुखो बुधः ।
अघोराः पितरः सन्तु सन्त्वित्युक्ते पुनर्द्विजैः ॥ (५३)
गोत्रं तथा वर्धतां नस्तथेत्युक्तश्च तैः पुनः ।
दातारो नोऽभिवर्धन्तां वेदाः सन्ततिरेव च ॥[2] (५४)

१. The text reads विश्वेभ्यः for द्विजेभ्यः. २. The text reads इति चैवमुदीरयेत् for वेदाः सन्ततिरेव च, and omits the following line.

श्रद्धा च नो मा व्यगमद्बहु देयं च नोऽस्त्विति। (५०)
'एताः सत्या आशिषः सन्तु सन्त्वित्युक्तश्च तैः पुनः'।
(म. पु. १७. ४३ ५०)

इति॥

## अथ स्वस्तिवाचनकम्।

अनन्तरं पात्रचालनं कृत्वा स्वस्तिवाचनं कुर्यात्। अत एव नारायणः—

'अचालयित्वा तत्पात्रं स्वस्ति कुर्वन्ति ये द्विजाः।
निराशाः पितरस्तेषां शप्त्वा यान्ति यथागतम्'॥

इति। पात्रचालने विशेषमाह जातूकर्ण्यः—

'पात्राणि चालयेत् श्राद्धे स्वयं शिष्योऽथ वा सुतः।
न स्त्रीभिर्न च बालेन नाऽसंजात्या कथञ्चन'॥[1]

इति। स्वस्तिवाचनप्रकारमाह पारस्करः

'स्वस्तीति भगवन् ब्रूहीति वाचनम्'।

इति।[2] यज्ञोपवीती वैश्वदेविकहस्ते उदकं दत्त्वा पुरूरवा-ऽऽर्द्रवसंज्ञकेभ्यो विश्वेभ्यो देवेभ्यः स्वस्तीति भगवन् ब्रूहि—इति कर्ता ब्रूयात्। विप्रेण च-स्वस्ति—इति वक्तव्यम्। पितृब्राह्मणहस्तेष्वप्येवमेव। अनन्तरकृत्यमाह याज्ञवल्क्यः

'स्वस्तिवाच्यं ततः कुर्यादक्षय्योदकमेव च'।
(या. स्मृ. १. २४३)

१. I. reads ऽसञ्जात्या for ऽसंजात्या. २. Except A. and I. all omit this portion:—

यज्ञोपवीती वैश्वदेविकहस्ते उदकं दत्त्वा पुरूरवा-ऽऽर्द्रवसंज्ञकेभ्यो विश्वेभ्यो देवेभ्यः स्वस्तीति भगवन् ब्रूहि—इति कर्ता ब्रूयात्। विप्रेण च स्वस्ति इति वक्तव्यम्। पितृब्राह्मणहस्तेष्वप्येवमेव।

इति । अक्षय्यमस्त्विति ब्राह्मणहस्ते जलं दद्यादित्यर्थः । मार्कण्डेयो ऽपि—

'पितॄणां नाम-गोत्रेण जलं देयमनन्तरम् ।
ब्राह्मणानां द्विजैर्वाच्यमक्षय्यमिदमस्त्विति' ॥

इति । हस्तेष्वित्यध्याहृत्य योजना ॥

## अथ दक्षिणादानम् ।

अनन्तरं दक्षिणां दद्यात् । मनुः[२]—

'स्वस्तिवाचनकं कुर्यात् अक्षय्योदकमेव च ।
सतिलं नाम-गोत्रेण दद्याच्छक्त्या च दक्षिणाम् ॥
गो-भू-हिरण्य-वासांसि भव्यानि शयनानि च ।
दद्याद्यदिष्टं विप्राणामात्मनः पितुरेव च ॥
वित्तशाठ्येन रहितः पितृभ्यः प्रीतिमाचरन्' ।

इति । अत्र विशेषमाह पारस्करः—

'हिरण्यं विश्वेभ्यो देवेभ्यो रजतं पितृभ्यः ।
अन्यच्च गो-कृष्णाजिनं यावच्छक्यं दद्यात् ।
एकपंक्त्युपविष्टानां विप्राणां श्राद्धकर्मणि ।
भक्ष्यं भोज्यं समं देयं दक्षिणां त्वनुसारतः' ॥

इति । अनुसारत इति निमन्त्रितब्राह्मणविद्या-गुणतारतम्येनेत्यर्थः । पित्रुद्देशेन दक्षिणादानं प्राचीनावीतिना कार्यम् । अत एव जमदग्निः—

---

१. Nirṇayasindhu alludes to this quotation as from Vriddha Sâtâtapa ( Vide Śrâddaparakaraṇam). २. I. alone inserts मनुः, But the following quotation cannot be traced in any one of the copies we have of Manusmriti. All others omit मनु and do not show to what particular work the following quotation belongs.

'अपसव्यं तु तत्रापि मत्स्यो भगवान् हि मे मनः' ।

इति । तत्रापि दक्षिणादाने प्रीतिः । यत्तु तेनैवोक्तम्

'सर्वं कर्मापसव्येन दक्षिणादानवर्जितम्' ।

इति तद्ब्राह्मणोद्देशेन दक्षिणादानपक्षे द्रष्टव्यम् । स च पक्षो देवलेन दर्शितः—

'आचान्तेभ्यो द्विजेभ्यस्तु प्रयच्छेदथ दक्षिणाम्' ।

इति । ब्राह्मणोद्देशेन दक्षिणादाने क्रममाह स एव

'दक्षिणां पितृविप्रेभ्यो दद्यात् पूर्वं ततो द्वयोः' ।

इति । वैश्वदेविकब्राह्मणयोरित्यर्थः । अत्र पितृविप्रेभ्य इति समभिव्याहाराच्चतुर्थ्यर्थे षष्ठी । अनन्तरं याज्ञवल्क्यः—

'दत्त्वा तु दक्षिणां शक्त्या स्वधाकारमुदाहरेत् ।
वाच्यतामित्यनुज्ञातः प्रकृतेभ्यः स्वधोच्यताम् ॥
ब्रूयुरस्तु स्वधेत्युक्ते भूमौ सिञ्चेत्ततो जलम् ।
विश्वेदेवाश्च प्रीयन्तां विप्रैश्चोक्त इदं जपेत् ॥
दातारो नोऽभिवर्धन्तां वेदाः सन्ततिरेव च ।
श्रद्धा च नो मा व्यगमद्बहु देयं च नोऽस्त्विति ॥
इत्युक्त्वोक्त्वा प्रिया वाचः प्रणिपत्य प्रसादयेत् ।
वाजे वाजे इति प्रीतः पितृपूर्वं विसर्जयेत्' ॥

(या. स्मृ. १. २४४-४७)

इति ॥

१. Except I. all read मेन: for मे मनः. २ I. reads चैव for अथ, while D. omits this line. ३. Except A. and I. all read पितृभ्य for पितृवि-प्रेभ्यः. ४. D. E. G. H. and I. read उदाहरन्. ५. The text reads उक्तम् for उक्तः. ६. The text omits इति. ७. The text reads विसर्जयन् for विस-र्जयेत्.

## अथ मध्यमपिण्डाशनम् ।

अनन्तरं पुत्रार्थी मध्यमपिण्डं पत्न्यै दद्यात्। तथा च वायुपुराणम्[1]—

'पत्न्यै[2] प्रजार्थी दद्यात्तु मध्यमं मन्त्रपूर्वकम्' ।

(वायुपु. २. १४. ३१)

इति। मध्यमं पिण्डमित्यर्थः ।[3]तत्प्रकारः । तत्र प्राचीनावीती—

'अपां त्वौषधीनाᳲरसं प्राशयामि भूतकृतं गर्भं धत्स्व' ।

इति पत्न्या अञ्जलौ मध्यमपिण्डं प्रयच्छेत् । तत्प्राशनमन्त्रस्तु मत्स्येन दर्शितः—

'आधत्त पितरो गर्भम[4]न्तः सन्तानवर्धनम्' ।

(म. पु. १६. ५४)

इति। मनुरपि—

'पतिव्रता धर्मपत्नी पितृपूजनतत्परा ।
मध्यमं तु ततः पिण्डमद्यात्सम्यक् सुतार्थिनी ।
आयुष्मन्तं सुतं वि[5]न्देत् यशो-मेधासमन्वितम् ॥
धनवन्तं प्रजावन्तं धार्मिकं सा[6]त्त्विकं तथा' ।

(म. स्मृ. ३. २६२–६३)

---

१. I. reads पुराणे for पुराणम्. २. The text reads for this line प्रजार्थी पतये दद्यान्मध्यमं तत्र पूर्वकम् ।.

३ All, except A. and I. omit—

तत्प्रकारः । तत्र प्राचीनावीती—

'अपां त्वौषधीनाᳲरसं प्राशयामि भूतकृतं गर्भं धत्स्व' ।

इति पत्न्या अञ्जलौ मध्यमपिण्डं प्रयच्छेत् । तत्प्राशन—. ४. G. reads मन्त्र-सन्तान— and the text अत्र सन्तान— for अन्तः-सन्तान—. ५. The text reads लभेत for विन्देत्. ६. D. and H. read साधिकं for सात्त्विकं.

इति। पिण्डप्रदानस्याऽयोग्यत्वमाह[1] स एव—

'अप्राप्तयौवने वृद्धे सगर्भे रोगसम्भवे।
बालपुत्रकलत्रेऽपि न दद्यात् पिण्डमञ्जलौ' ॥

इति। पत्न्या असन्निधानादौ पिण्डप्रतिपत्तिमाह[2] बृहस्पतिः—

'अन्यदेशगता पत्नी गर्भिणी रोगिणी तथा।
तदा तं जीर्णवृषभः छागो वा भोक्तुमर्हति' ॥

इति। आपस्तम्बो ऽपि प्रतिपत्त्यन्तरमाह[3]—

'यदि पत्नी विदेशस्था उच्छिष्टा यदि वा मृता।
दुरात्मा नानुकूला च तस्य पिण्डस्य का गतिः? ॥
आकाशं गमयेत्पिण्डं जलस्थो दक्षिणामुखः।
पितॄणां स्थानमाकाशं दक्षिणा दिक् तथैव च' ॥

इति। यत्तु देवलेनोक्तम्[4]—

'ततः कर्माणि निर्वृत्ते तान् पिण्डांस्तदनन्तरम्।
ब्राह्मणोऽग्निरजो गौर्वा भक्षयेदप्सु वा क्षिपेत्' ॥

इति तत्पुत्रार्थित्वाभावविषयम्। तीर्थश्राद्धे पिण्डानामप्स्वेव प्रक्षेपः। तदुक्तं विष्णुधर्मोत्तरे—

'तीर्थश्राद्धे सदा पिण्डान् क्षिपेत्तीर्थे समाहितः।
दक्षिणाभिमुखो भूत्वा पित्र्या दिक् सा प्रकीर्त्तिता' ॥

(वि. ध. १. १४१. ८)

इति ॥

---

१. This line and the following quotations do not appear in all except A. and I., In the text too the quotation cannot be traced. २. All, except B. C. and F. read पिण्डानां पतिप्रत्यन्तरम् for पिण्डप्रतिपत्तिम्. ३. D. omits प्रतिपत्त्यन्तरमाह. ४. D. substitutes गालवेन for देवलेन.

## अथोच्छिष्टमार्जनम् ।

अनन्तरमुच्छिष्टं सम्मार्जयेत् । अत एव याज्ञवल्क्यः—

'• • सत्सु विप्रेषु द्विजोच्छिष्टं न मार्जयेत्' ।

(या. स्मृ. १. २५७)

इति । अयमर्थः—विप्रविसर्जनात् प्रागुच्छिष्टं न मार्जयेत् । अपि तु तेषु विसर्जितेषु पिण्डप्रतिपत्तौ च कृतायामिति । यत्तु व्यासेनोक्तम्

'उच्छिष्टं न प्रमृज्यात्तु यावन्नाऽस्तमितो रविः' ।

इति यच्च वसिष्ठेनोक्तम्—

'श्राद्धे नोद्वासनीयानि उच्छिष्टान्या दिनक्षयात् ।
श्च्योतन्ते वै स्वधाकारास्ताः पिबन्त्यकृतोदकाः' ॥

(व. स्मृ. ११. २१)

इति तद्गृहान्तरसम्भवविषयम् । अत एव प्रचेताः—

'भृत्यवर्गावृतो भुङ्क्ते कव्यशेषं स्वगोत्रजैः ।
आसायं श्राद्धशालायां द्विजोच्छिष्टं न मार्जयेत्' ॥

इति ॥

## अथ यजमानः स्वयं भुञ्जीत ।

उच्छिष्टमार्जनानन्तरं वैश्वदेवं कृत्वा शेषमन्नं ब्राह्मणैः सह भुञ्जीत । तथा च मत्स्यपुराणम्—

१. G. and H. omit सत्सु, and the former inserts भविसृष्टेषु and the latter उपविष्टेषु before विप्रेषु and completes the first half of the couplet. I. retains सत्सु and inserts तत्रैव before it. The text reads प्रक्षिपेत् सत्सु, But प्रक्षिपेत् is omitted by the author, it having no connection with the quoted line. २. Except A. and H. all read पिबन्ति कृतोदकाः. ३. I. reads प्रासायं for आसायं. For the same D. reads अन्यहन्या. ४. B. C. and F. read भृत्यादिभिः सह for ब्राह्मणैः सह.

'ततश्च वैश्वदेवान्ते सभृत्य-सुत-बान्धवः।
भुञ्जीतातिथिसंयुक्तः सर्वं पितृनिषेवितम्' ॥
(म. पु. १६. ५५)

इति। यदा श्राद्धं निर्वर्त्य वैश्वदेवादिकं क्रियते तदा तच्छेषादेव तत्कार्यम्। तदाह पैठीनसिः—

'श्राद्धं निर्वर्त्य विधिवद्वैश्वदेवादिकं ततः।
कुर्याद्भिक्षां ततो दद्याद्धन्तकारादिकं तथा' ॥

इति। आदिशब्देन नित्यश्राद्धं परिगृह्यते। तत इति पितृपाकशेषादित्यर्थः। नित्यश्राद्धं पृथक्पाकेन वा कार्यम्। अत एव तदधिकृत्य मार्कण्डेयः—

'पृथक्पाकेन वेत्यन्ये'।

इति। अत्र नित्यश्राद्धमप्यनियतम्। तदाह स एव—

'नित्यक्रियां पितॄणां च केचिदिच्छन्ति मानवाः।
न पितॄणां तथैवान्ये शेषं पूर्ववदाचरेत्' ॥

इति। यत्तु लौगाक्षिणोक्तम्—

१. D. reads सह सर्वैश्च बान्धवैः; while the text reads the whole verse as follows:—

'वैश्वदेवं ततः कुर्यात् निवृत्ते पितृकर्मणि।
इष्टैः सह ततः शान्तो भुञ्जीत पितृसेवितम्' ॥.

२. Except A. and I. all omit इत्यर्थः. ३ H. and I. omit वा, and D. and G. substitute न for वा. ४. All, except A. and I. substitute न for वा, but thereby the meaning becomes quite contrary to the context.
५. D. omits the following :—

'नित्यक्रियां पितॄणां च केचिदिच्छन्ति मानवाः।
न पितॄणां तथैवान्ये शेषं पूर्ववदाचरेत्' ॥

इति। यत्तु लौगाक्षिणोक्तम् –

'पित्रर्थं निर्वपेत्पाकं वैश्वदेवार्थमेव च।'

'पित्रर्थं निर्वपेत्पाकं वैश्वदेवार्थमेव च ।
वैश्वदेवं न पित्रर्थं न दार्शं वैश्वदेविकम्' ॥

इति तदाहिताग्निकर्तृकश्राद्धविषयम् । आहिताग्नेः श्राद्धात्प्रागेव वैश्वदेवस्य तेनैव विहितत्वात् ।

'पक्षान्तं कर्म निर्वर्त्य वैश्वदेवं च साग्निकः ।
पिण्डयज्ञं ततः कुर्यात्ततोऽन्वाहार्यकं बुधः' ॥

इति । पक्षान्तं कर्माऽग्न्याधानम् । अन्वाहार्यकं दर्शश्राद्धम् । यत्तु पुराणवचनम्—

'प्रतिवात्सरिको होमः श्राद्धादौ क्रियते यदि ।
देवा हव्यं न गृह्णन्ति कव्यं च पितरस्तथा' ॥

इति तत् पितृपाकाद्वैश्वदेवकरणे वेदितव्यम् । अत एव पैठीनसिः—

'पितृपाकात् समुद्धृत्य वैश्वदेवं करोति यः ।
आसुरं तद्भवेच्छ्राद्धं पितॄणां नोपतिष्ठते' ॥

इति । यदाऽग्नौकरणानन्तरं विकिरणानन्तरं वा वैश्वदेविकं कर्म क्रियते तदाऽपि पृथक्पाकादेव तत् कार्यम् । तत्पाकाद्वैश्वदेवकरणे दोषस्यात्रापि समानत्वात् । अग्नौकरणानन्तरं वैश्वदेवकरणं च स्मृत्यन्तरेऽभिहितम्—

'वैश्वदेवाहुतीरग्नावर्वाग् ब्राह्मणभोजनात् ।
जुहुयाद्भूतयज्ञादि श्राद्धं कृत्वा ततः स्मृतम्' ॥

इति । यदि पितृपाकशेषाद्वैश्वदेवं यदि वा पाकान्तरात् उभयथाऽपि पितृपाकशेषादेव भोजनम् । तदाह याज्ञवल्क्यः—

१. D. reads तदर्थं for न दार्शं. २. D. reads प्रतिवात्सरिकोऽन्वाहः for प्रतिवात्सरिको होमः.

'प्रदक्षिणमनुव्रज्य भुञ्जीत पितृसेवितम्' ।

(या. स्मृ. १. २४१)

इति । असति तु पितृशेषे पाकान्तरं कृत्वाऽपि भोक्तव्यमेव । अभोजनस्य निषिद्धत्वात् । तथा च देवलः

'श्राद्धं कृत्वा तु यो विप्रो न भुङ्क्तेऽथ कदाचन ।
देवा हव्यं न गृह्णन्ति कव्यानि पितरस्तथा' ॥

इति । यतः पितृशेषभोजनं नित्यम् । अत एवैकादश्यादौ नित्योपवासपक्षे भोजनप्रत्याम्नायः स्मर्यते—

'उपवासो यदा नित्यः श्राद्धं नैमित्तिकं भवेत् ।
उपवासं तदा कुर्यादाघ्राय पितृसेवितम्' ॥

इति । पितृसेवितभोजननियमोऽनुज्ञापक्ष एव । अत एव शातातपः—

'शेषमन्नमनुज्ञातं भुञ्जीत तदनन्तरम् ।
इष्टैः सार्धं तु विधिवद्बुद्धिमान् सुसमाहितः' ॥

इति । भोजनानन्तरं दातृ-भोक्त्रोर्नियममाह बृहस्पतिः

'तां निशां ब्रह्मचारी स्याच्छ्राद्धकृच्छ्राद्धिकैः सह ।
अन्यथा वर्त्तमानौ तौ स्यातां निरयगामिनौ' ॥

इति । मत्स्यपुराणेऽपि—

'पुनर्भोजनमध्वानं यानमायासमैथुनम् ।
श्राद्धकृच्छ्राद्धभुक् चैव सर्वमेतद् विवर्जयेत् ॥
स्वाध्यायं कलहं चैव दिवास्वप्नं च स्वेच्छया' ।

(म. पु. १६. ५६ ५७)

---

१. D. reads मानम् for यानम्, for the same H. substitutes पानम्.
२. D. reads वर्जयेत्, and the text सर्वदा for स्वेच्छया.

इति । श्राद्धभोजिनो विशेषमाह यमः—

'पुनर्भोजनमध्वानं भारमायाससमैथुनम् ।
सन्ध्यां प्रतिग्रहं होमं श्राद्धभुक्त्वष्ट वर्जयेत्' ॥

इति । सन्ध्या-होमयोः प्रतिषेधस्त्वकृतप्रायश्चित्तस्य । कृते तु प्रायश्चित्ते कुर्यादेव । अत एव भविष्यत्पुराणम्—

'दशकृत्वः पिबेदापो गायत्र्या श्राद्धभुग्द्विजः ।
ततः सन्ध्यामुपासीत जपेच्च जुहुयादपि' ॥

इति । एवमुक्तरीत्या पार्वणं कर्तुमसमर्थः संकल्पविधिना श्राद्धं कुर्यात् । तदुक्तं स्मृत्यन्तरे—

'अङ्गानि पितृयज्ञस्य यदा कर्तुं न शक्नुयात् ।
संकल्पश्राद्धमेवाऽसौ कुर्यादर्घादिवर्जितम्' ॥

इति । व्यासोऽपि—

'त्यक्ताग्नेः पार्वणं नैव नैकोद्दिष्टं सपिण्डनम् ।
अत्यक्ताग्नेस्तु पिण्डोक्तिस्तस्मात् संकल्प्य भोजयेत्' ॥

इति । अयमर्थः—आलस्येन योऽग्निं त्यजति स त्यक्ताग्निः । न तस्य श्राद्धेऽधिकारः । किं तु त्यक्ताग्निव्यतिरिक्तस्य साग्निकस्य । विधुरादेश्च पिण्डोपलक्षितश्राद्धेऽपि अधिकार उक्तः । यस्मादत्यक्ताग्निनाऽधिकारिणा श्राद्धमवश्यं कर्त्तव्यं तस्माद्विस्तृते पार्वणविधावशक्तः संकल्पविधानेन कुर्यादिति । संकल्पविधानलक्षणं स एवाह—

१. D. and G. read भाराध्ययन- for भारमायास-. २. Except A. and I. all omit एव. ३. D. and G. substitute विष्णुपुराणम् for भविष्यत्पुराणम्. ४. B. C. and F. read ऽऽसौ for ऽसौ. ५. I. reads विस्मृते.

'संकल्पं तु यदा कुर्यात् न कुर्यात् पात्रपूरणम् ।
नोवाहनाऽग्नौकरणं पिण्डांश्चैव न दापयेत्' ॥

इति । उच्छिष्टपिण्डो न दातव्यः ।

'संकल्पं तु यदा श्राद्धं न कुर्यात् पात्रपूरणम् ।
विकिरश्च न दातव्यः * * * *' ॥

इति स्मृत्यन्तरात् ॥

## अथ प्रत्याब्दिकश्राद्धम् ।

एवं दर्शे कर्त्तव्यं पार्वणश्राद्धमुक्तम् । अथ तद्विकृतिभूतं प्रत्याब्दिकं निरूप्यते । तत्र लौगाक्षिः—

'श्राद्धं कुर्यादवश्यं तु प्रमीतपितृकः स्वयम् ।
इन्दुक्षये मासि मासि वृद्धौ प्रत्यब्दमेव च' ॥

इति । तत्रेतिकर्त्तव्यतामाह जातूकर्ण्यः—

'पितुः पितृगणस्थस्य कुर्यात् पार्वणवत्सुतः ।
प्रत्यब्दं प्रतिमासं च विधिर्ज्ञेयः सनातनः' ॥

इति । पितृगणस्थः सपिण्डीकृतः । तस्य प्रतिसांवत्सरिकमनुमासिकं च श्राद्धं पार्वणविधिना कुर्यात् । जमदग्निरपि—

'आसाद्य सहपिण्डत्वमौरसो विधिवत् सुतः ।
कुर्वीत दर्शवच्छ्राद्धं माता-पित्रोर्मृते ऽहनि' ॥

---

१. The following lines are not found in D.—
नावाहनाऽग्नौकरणं पिण्डांश्चैव न दापयेत्' ॥
इति । उच्छिष्टपिण्डो न दातव्यः ।
'सङ्कल्पं तु यदा श्राद्धं न कुर्यात् पात्रपूरणम् ।.

२ D. omits the following lines :—
'पितुः पितृगणस्थस्य कुर्यात् पार्वणवत्सुतः ।
प्रत्यब्दं प्रतिमासं च विधिर्ज्ञेयः सनातनः' ॥
इति । पितृगणस्थः सपिण्डीकृतः । तस्य प्रतिसांवत्सरिकमनुमासिकं च श्राद्धं पार्वणविधिना कुर्यात् । जमदग्निरपि—.

इति । ननु दर्शनिर्देशान्मातामहानामपि श्राद्धं प्रसज्येत । नायं दोषः । प्रत्याब्दिके षड्पिण्डानां पर्युदस्तत्वात् । तथा च कात्यायनः—

'कर्षूसमन्वितं मुक्त्वा तथाऽद्यं श्राद्धषोडशम् ।
प्रत्याब्दिकं च शेषेषु पिण्डाः स्युः षडिति स्थितिः' ॥
(का. स्मृ. ३. २४. १४)

इति । कर्षूसमन्वितं सपिण्डीकरणम् । यत्तु यमेनोक्तम्—

'सपिण्डीकरणादूर्ध्वं प्रतिसंवत्सरं सुतैः ।
माता-पित्रोः पृथक्कार्यमेकोद्दिष्टं मृतेऽहनि' ॥

इति । यच्च मृताहं प्रकृत्य व्यासेनोक्तम्—

'एकोद्दिष्टं परित्यज्य पार्वणं कुरुते नरः ।
अकृतं तद्विजानीयाद्भवेच्च पितृघातकः' ॥

इति । तत्र पार्वणैकोद्दिष्टयोर्विकल्पः । तत्रापि वृद्धाचारतो व्यवस्था । अमावास्यायां प्रेतपक्षे च मृतानां पार्वणं नियतम् । तदाह शङ्खः—

'अमायां तु क्षयो यस्य प्रेतपक्षेऽथ वा पुनः ।
पार्वणं तस्य कर्त्तव्यं नैकोद्दिष्टं कदाचन' ॥

इति । यतेस्तु न क्वाप्येकोद्दिष्टम् । किंतु सर्वत्र पार्वणमेव । तथा च प्रचेताः—

'दण्डग्रहणमात्रेण नैव प्रेतो भवेद्यतिः ।
अतः सुतेन कर्त्तव्यं पार्वणं तस्य सर्वदा' ॥

इति । अत्र केचित्पार्वणैकोद्दिष्टयोरन्यथा व्यवस्थामाहुः—

'प्रत्यब्दं पार्वणेनैव विधिना क्षेत्रजौरसौ ।
कुर्यातामितरे कुर्युरेकोद्दिष्टं सुता दश' ॥

इति जातूकर्ण्यवचनात्। तदयुक्तम्।

'एकोद्दिष्टं तु कर्त्तव्यमौरसेन मृते ऽहनि।
सपिण्डीकरणादूर्ध्वं माता-पित्रोस्तु पार्वणम्' ॥

इति पैठीनसिवचनविरोधात्। जातूकर्ण्यवचनं तु क्षयाह-व्यतिरिक्तप्रत्यब्दकर्त्तव्याक्षय्यतृतीयादिविषयत्वेनाप्युपपन्नं। यत्तु सुमन्तुनोक्तम्—

'कुर्याच्च विधिवच्छ्राद्धं पार्वणं योऽग्निमान् द्विजः।
पित्रोरनग्निमान् धीर एकोद्दिष्टं मृते ऽहनि' ॥

इति तदयुक्तम्।

'बह्वग्नयस्तु ये विप्रा ये चैकाग्नय एव च।
तेषां सपिण्डनादूर्ध्वमेकोद्दिष्टं न पार्वणम्' ॥

इति स्मृत्यन्तरे साग्निकस्याप्येकोद्दिष्टविधानात्। ए-कोद्दिष्टलक्षणमाह याज्ञवल्क्यः—

'एकोद्दिष्टं देवहीनमेकार्घ्यैकपवित्रकम्।
आवाहनाग्नौकरणरहितं ह्यपसव्यवत् ॥
उपतिष्ठतामित्यक्षय्यस्थाने विप्रविसर्जने[3]।
अभिरम्यतामिति वदेद् ब्रूयुस्ते[1]ऽभिरताः स्म ह' ॥
(या. स्मृ. १. २५१ ५२)

इति[2]। कात्यायनो ऽपि—

'अथैकोद्दिष्टमेकं पात्रमेकोऽर्घ्य एकः पिण्डः
नाऽऽवाहनं नाऽग्नौकरणं नाऽत्र विश्वेदेवाः

१. B. C. and F. substitute तु for ऽथ. २. The text omits इति. ३. D. G. and I. read -विसर्जनम् for -विसर्जने.

स्वदितमिति तृप्तिप्रश्नः सुस्वदितमित्यनुज्ञानमुपनिष्ठतामित्यक्षय्यस्थानेऽभिरम्यतामिति विसर्गे अभिरतास्मेत्यपरे' ।

इति । तच्चैकोद्दिष्टं त्रिविधम् नवं नवमिश्रं पुराणं चेति । अत्र प्रथमाद्यैकादशाहान्तर्विहितं नवश्राद्धम् । तथा चाङ्गिराः—

'प्रथमेऽह्नि तृतीयेऽह्नि पञ्चमे सप्तमेऽपि वा ।
नवमैकादशे चैव तन्नवश्राद्धमुच्यते' ॥

इति । वसिष्ठोऽपि—

'सप्तमेऽह्नि तृतीयेऽह्नि प्रथमे नवमे तथा ।
एकादशे पञ्चमे स्युर्नवश्राद्धानि षट् तथा ॥
कश्चित्पञ्चैव नवमं भवेदन्तरितं यदि ।
एकादशेऽह्नि तत् कुर्यादिति स्मृतिकृतो विदुः' ॥

इति । अत्र पक्षद्वयस्य व्यवस्था शिवस्वामिना दर्शिता—

'नवश्राद्धानि पञ्चाहुराश्वलायनशाखिनः ।
आपस्तम्बाः षडित्याहुर्विभाषा तैत्तिरीयिणाम्' ॥

इति । वैश्यादीनां विशेषो भविष्यत्पुराणे दर्शितः—

'नव सप्त विशां राज्ञां नवश्राद्धान्यनुक्रमात् ।
आद्यन्तयोर्वर्णयोस्तु षडित्याहुर्मनीषिणः ॥

१. B. C. E. F. and G. read अनुज्ञा for अनुज्ञानम्. २. H. substitutes अथ for अत्र. ३. D. substitutes च for अङ्गि ; while G. omits—

'प्रथमेऽह्नि तृतीयेऽह्नि पञ्चमे सप्तमेऽपि वा ।
नवमैकादशे चैव तन्नवश्राद्धमुच्यते' ॥

इति । वसिष्ठोऽपि,—

and thus shows the next quotation to be from Angirah. ४. B. C. and F. read ऐतरेयिणः and I. -मैतरेयिणाम् for तैत्तिरीयिणाम्.

इति। षण्णां नवश्राद्धानामुपरि कर्त्तव्यं मासिकं नवमिश्रम्। तथा चाऽश्वलायनः—

'नवमिश्रं षडुत्तरम्'।

इति। मासिकानामुपरि कर्त्तव्यं प्रत्याब्दिकादि पुराणम्। अत एव हारीतेन प्रायश्चित्तकाण्डे क्रमेण नवमासिकयोः प्रायश्चित्तमभिधायोत्तरकालीनं श्राद्धं पुराणशब्देन व्यवहृत्य प्रायश्चित्तं विहितम्—

'चान्द्रायणं नवश्राद्धे प्राजापत्यं तु मासिके।
एकाहस्तु पुराणेषु प्रायश्चित्तं विधीयते'॥

(हा॰ स्मृ॰ २१. १,७)

इति॥

## अथ सपिण्डीकरणम्।

इत्थं पार्वणैकोद्दिष्टे अभिहिते। अथोभयात्मकं सपिण्डीकरणमुच्यते। तत्र लौगाक्षिः—

'श्राद्धानि षोडशापाद्य विदधीत सपिण्डनम्'।

इति। षोडश श्राद्धानि जातूकर्ण्येन दर्शितानि—

'द्वादश प्रतिमास्यानि आद्य-षाण्मासिके तथा।
त्रैपक्षिका-ऽऽब्दिके चेति श्राद्धान्येतानि षोडश'॥

इति। अत्राद्य-षाण्मासिका-ऽऽब्दिकशब्दाः ऊनमासिकोनषाण्मासिकोनाब्दिकपराः। द्वादशमासिकानां काला याज्ञवल्क्येन दर्शितः—

१. H. reads आश्वलायनाः. २. G. reads चैव for चेति.

'मृते ऽहनि तु कर्तव्यं प्रतिमासं तु वत्सरम् ।
प्रतिसंवत्सरं चैवमाद्यमेकादशे ऽहनि' ॥

( या. स्मृ. १. २५६ )

इति । वत्सरं वत्सरपर्यन्तं मासि मासि मृते ऽहनि श्राद्धं कर्तव्यम् । सपिण्डीकरणादूर्ध्वं प्रतिसंवत्सरं मृत ऽहनि कर्तव्यम् । आद्यं तु मासिकमेकादशे ऽहनि कर्तव्यम् । ऊनषाण्मासिका-दीनां कालमाह गालवः–

'ऊनषाण्मासिकं षष्ठ मासाऽर्धे[१] न्यूनमासिकम् ।
त्रैपक्षिकं त्रिपक्षे स्यादूनाब्दं द्वादशे तथा' ॥

इति । श्रीकरगौतमो ऽपि

'एक-द्वि-त्रिदिनैरूने त्रिभागेनोन एव वा ।
श्राद्धान्यूनाब्दिकादीनि कुर्यादित्याह गौतमः' ॥

( श्री. गौ. स्मृ. ३. २७ )

इति । ऊनमासिकस्य कालविकल्पमाह गोभिलः–

'मरणाद् द्वादशाहे स्यान्मास्यूने वोनमासिकम्' ।

इति । ऊनानां वर्ज्यं कालमाह गार्ग्यः–

'नन्दायां भार्गवदिने चतुर्दश्यां त्रिपुष्करे ।
ऊनश्राद्धं न कुर्वीत गृही पुत्र-धनक्षयात्' ॥

इति । मरीचिरपि–

'त्रिपुष्करे च नन्दासु सिनीवाल्यां भृगोर्दिने ।
चतुर्दश्यां च नोनानि कृत्तिकासु त्रिपुष्करे' ॥

इति । तिथि-वार-नक्षत्रविशेषाणां त्रयाणां मेलनं त्रिपुष्करम् ।

१. All, except A. and I. read मासे ऽर्धे न्यूनमासिकम्.

द्वयोर्मेलनं द्विपुष्करम्। के ते[1] विशेषाः? द्वितीया-सप्तमी-द्वादश्यो भद्रातिथयः, भानु-भौम-शनैश्चरवाराः, पुनर्वसूत्तराफल्गुनी-विशाखोत्तराषाढा-पूर्वाभाद्रपदानक्षत्राणि।

[2] एवमेतानि षोडश श्राद्धानि कृत्वा ततः सपिण्डनं विदधीत। तस्य कालमाहात्रिः—

'अथ सपिण्डीकरणम्। संवत्सरे पूर्णे द्वादशाहे वा'[3]।

इति। कात्यायनोऽपि—

'अथ सपिण्डीकरणम्। संवत्सरे पूर्णे
त्रिपक्षे वा यदहर्वा वृद्धिरापद्यते'।

इति। बौधायनोऽपि—

'अथ संवत्सरे पूर्णे सपिण्डीकरणं त्रिपक्षे वा
तृतीये मासि षष्ठे वैकादशे वा द्वादशाहे वा'।

इति। एकादशाह-द्वादशाह-तृतीयपक्ष-तृतीयमास-षष्ठमासैकादशमास-संवत्सरान्त-शुभागमाः इत्यष्टौ कालाः प्रकीर्तिताः। तत्र व्यवस्थामाह हारीतः—

'या तु पूर्वममावास्या मृताहाद्दशमी भवेत्।
सपिण्डीकरणं तस्यां कुर्यादेव सुतोऽग्निमान्'॥

(हा. स्मृ. २०. १९)

इति। मृताहादूर्ध्वदिनमारभ्येत्यर्थः। कार्ष्णाजिनिरपि

---

१. B. C. and F. omit के ते विशेषाः. २. E. omits the following:—
-भौमशनैश्चरवाराः, पुनर्वसूत्तराफल्गुनी-विशाखोत्तराषाढा पूर्वाभाद्रपदानक्षत्राणि। एवमेतानि षोडश श्राद्धानि कृत्वा ततः सपिण्ड-.

३. Except A. and H. all omit this:—
.. 'अथ सपिण्डीकरणम्। संवत्सरे पूर्णे द्वादशाहे वा'।
इति। कात्यायनोऽपि and thus show that the next quotation belongs to Atri. D. has mixed up the present quotation with the preceding one of Kâtyâyana.

'सपिण्डीकरणं कुर्यात् पूर्ववच्चाग्निमान् सुतः ।
परतो दशरात्राच्चेत् कुहूरब्दोपरीतरे' ॥

इति । आहिताग्निनाऽमावास्यायां पिण्डपितृयज्ञस्यावश्य-कर्त्तव्यत्वात् सपिण्डीकरणमन्तरेण तदसम्भवाच्चैकादशेऽह्नि दर्शागमे सपिण्डीकरणं कार्यम् । पिण्डपितृयज्ञकर्तव्यता तु श्रूयते -

'अमावास्यामपराह्णे पिण्डपितृयज्ञेन चरन्ति' ।

इति । सपिण्डीकरणात् पूर्वं पिण्डपितृयज्ञस्याऽसम्भवो गालवेन दर्शितः—

'सपिण्डीकरणात्पूर्वे पैतृकं पदमास्थिते ।
आहिताग्नेः सिनीवाल्यां पितृयज्ञः प्रवर्त्तते' ॥

इति । दर्शानागमे तु साग्निर्द्वादशेऽह्नि सपिण्डनं कुर्यात् । तदुक्तं भविष्यत्पुराणे -

'यजमानोऽग्निमान् राजन् प्रेतश्चाऽनग्निमान् भवेत् ।
द्वादशाहे भवेत् कार्यं सपिण्डीकरणं सुतैः' ॥

इति । गोभिलोऽपि -

'साग्निकस्तु यदा कर्त्ता प्रेतश्चाऽनग्निमान् भवेत् ।
द्वादशाहे तदा कार्यं सपिण्डीकरणं सुतैः' ॥

इति । प्रेतस्य साग्नित्वे तृतीयपक्षे सपिण्डीकरणं कार्यम् । तदाह सुमन्तुः—

'प्रेतश्चेदाहिताग्निः स्यात् कर्ताऽनग्निर्यदा भवेत् ।
सपिण्डीकरणं तस्य कुर्यात्पक्षे तृतीयके' ॥

---

१. I. reads इतरः and G. स्थितः for इतरे. २. B. C. and F. omit तु.
३. H. reads भविष्यपुराणे.

इति । उभयोः साग्निकत्वे द्वादशेऽह्नि सपिण्डीकरणं कार्यम्

'साग्निकस्तु यदा कर्त्ता प्रेतो वाऽप्यग्निमान् भवेत् ।
द्वादशाहे तदा कार्यं सपिण्डीकरणं पितुः' ॥

इति । उभयोरनग्नित्वे द्वादशाहादयः सप्त काला इच्छया विकल्प्यन्ते । तदुक्तं भविष्यत्पुराणे—

'सपिण्डीकरणं कुर्यात् यजमानस्त्वनग्निमान् ।
अनाहिताग्नेः प्रेतस्य पूर्णेऽब्दे भरतर्षभ ॥
द्वादशेऽहनि षष्ठे वा त्रिपक्षे वा त्रिमासिके ।
एकादशेऽपि वा मासि मङ्गलं स्यादुपस्थितम्' ॥

इति । एतेषु सप्तसु कालेषु द्वादशाहः प्रशस्तः । तदाह व्याघ्रः—

'आनन्त्यात्कुलधर्माणां पुंसां चैवायुषः क्षयात् ।
अस्थितेश्च शरीरस्य द्वादशाहः प्रशस्यते' ॥

इति । एतत्सर्वं त्रैवर्णिकविषयम् । शूद्रस्य तु द्वादशाह एव प्रतिनियतः । अत एव सपिण्डीकरणं कर्त्तव्यमित्यनुवृत्तौ विष्णुः—

'मन्त्रवर्जं हि शूद्राणां द्वादशे ऽहनि कीर्त्तितम्' ।

इति । यदा संवत्सरपूर्त्तेः प्रागेवैकादशाहादिषु षोडशश्राद्धानि कृत्वा सपिण्डीकरणं क्रियते तदा पुनरपि स्वस्वकाले मासिकादीन्यावर्त्तनीयानि । तदाह गोभिलः—

---

१. D. omits the following:—
द्वादशाहे सपिण्डीकरणं कार्यम्
'साग्निकस्तु यदा कर्ता प्रेतो वाऽप्यग्निमान् भवेत् ।
द्वादशाहे तदा कार्यं सपिण्डीकरणं पितुः' ॥

'यस्य संवत्सरादर्वाग्विहिता तु सपिण्डता ।
विधिवत्तानि कुर्वीत पुनः श्राद्धानि षोडश' ॥

इति । विधिवदिति यथायोगमेकोद्दिष्टेन पार्वणेन वा विधिनेत्यर्थः । तदाह पैठीनसिः

'सपिण्डीकरणादर्वाक्कुर्याच्छ्राद्धानि षोडश ।
एकोद्दिष्टविधानेन कुर्यात्सर्वाणि तानि तु ॥
सपिण्डीकरणादूर्ध्वं यदा कुर्यात्तदा पुनः ।
प्रत्यब्दं यो यथा कुर्यात् तथा कुर्यात्सदा पुनः' ॥

इति । आवर्तनं चापकर्षभाविनामेव नाब्दभाविनाम् । तदाह कार्ष्णाजिनिः

'अर्वागब्दाद्यत्र यत्र सपिण्डीकरणं कृतम् ।
तदूर्ध्वं मासिकानां स्याद्यथाकालमनुष्ठितिः' ॥

इति । सपिण्डीकरणादूर्ध्वमावर्तनीयानामनुमासिकादीनां वृद्धिप्राप्तौ पुनरपकर्षः कर्तव्यः । तदाह शाठ्यायनिः—

'सपिण्डीकरणादर्वागपकृष्य कृतान्यपि ।
पुनरप्यपकृष्येत वृद्धिपूर्वनिषेधनात्' ॥

इति । निषेधश्च कात्यायनेनोक्तः—

'निर्वर्त्य वृद्धितन्त्रं तु मासिकानि न तन्त्रयेत्' ।

इति । सपिण्डीकरणस्य गौणकालमाह ऋष्यशृङ्गः—

'सपिण्डीकरणश्राद्धमुक्तकाले न चेत् कृतम् ।
रौद्रे हस्ते च रोहिण्यां मैत्रभे वा समाचरेत्' ॥

इति । सपिण्डीकरणानिकर्तव्यतामाह याज्ञवल्क्यः—

१. G. omits कर्तव्य and reads शाङ्खायनिः for शाठ्यायनिः, and for the same D. reads कात्यायनिः.

'गन्धोदकतिलैर्युक्तं कुर्यात्पात्रचतुष्टयम्।
अर्घ्यार्थं पितृपात्रेषु प्रेतपात्रं प्रसेचयेत्॥
ये समाना इति द्वाभ्यां शेषं पूर्ववदाचरेत्'।
(या. स्मृ. १. २५३-२५४)

इति। कात्यायनोऽपि—

'ततः संवत्सरे पूर्णे चत्वारि पात्राणि
सतिल-गन्धोदकैः पूरयित्वा त्रीणि
पितॄणाम्। एकं प्रेतस्य। प्रेतपात्रं
पितृपात्रेष्वासिञ्चति। ये समाना
इति द्वाभ्याम्। एतेन पिण्डो व्याख्यातः'।

इति। यदा पिता म्रियते पितामहस्तिष्ठति तदा प्रपितामहादिभिः सह पितुः सापिण्ड्यम्। तदुक्तं ब्रह्माण्डपुराणे

'मृते पितरि यस्याथ विद्यते च पितामहः।
तेन देयास्त्रयः पिण्डाः प्रपितामहपूर्वकाः'॥

इति। केचित्त्वत्र सापिण्ड्यमेव नाभ्युपगच्छन्ति।

'व्युत्क्रमाच्च प्रमीतानां नैव कार्या सपिण्डना'।

इति वचनात्। अपरे पुनरस्य वचनस्य मातृ-पितृ-भर्तृव्यतिरिक्तविषयत्वं मन्यन्ते। उदाहरन्ति च स्कन्दपुराणवचनम्—

'व्युत्क्रमेण मृतानां च सपिण्डीकृतिरिष्यते।
यदि माता यदि पिता भर्त्ता चैषं त्रिभिः स्मृतः'॥

---

१. D. and the text read प्रसिञ्चयेत् for प्रसेचयेत्. २. B. C. F. and G. substitute अथ for च; while D. E. and H. read विद्यते प्रपितामहः for विद्यते च पितामहः, but the reading is meaningless. ३. B. C. D. E. F. and G. read अक्रमेण for व्युत्क्रमेण. ४. D. reads नैव and E. G. H. and I. नैष for चैष.

इति । अत्र कुलाचारतो व्यवस्था द्रष्टव्या । मातुः सापिण्ड्यं पितामह्यादिभिः सह कर्त्तव्यम् । तदाह शङ्खः—

'मातुः सपिण्डीकरणं कथं कार्यं भवेन्मुनेः? ।
पितामह्यादिभिः सार्धं सपिण्डीकरणं स्मृतम्' ॥

इति । प्रमीतपितृकस्य विकल्पमाह यमः—

'जीवत्पिता पितामह्या मातुः कुर्यात् सपिण्डनाम् ।
प्रमीतपितृकः पित्रा पितामह्याऽथ वा सुतः' ॥

इति । पुत्रिकासुतो मातृसपिण्डनं मातामहादिभिः सह कुर्यात । तथा च बौधायनः—

'आदद्यात् प्रथमं पिण्डं मातरं पुत्रिकासुतः ।
द्वितीयं पितरं तस्यास्तृतीयं च पितामहम्' ॥

इति । अन्वारोहणे तु भर्त्रैव सापिण्ड्यं नियतम् । तदाह शातातपः—

'मृता याऽनुगता नाथं सा तेन सह पिण्डनाम् ।
अर्हति स्वर्गवासेऽपि यावदाभूतसंप्लवम्' ॥

इति । यमोऽपि

'पत्या चैकेन कर्त्तव्यं सपिण्डीकरणं स्त्रियाः ।
साऽमृताऽपि हि तेनैक्यं गता मन्त्राहुति-व्रतैः' ॥

इति । अत्रैक्यशब्दः पितामह्यादिविकल्पव्यावृत्त्यर्थः । न त्रिपुरुषव्यावृत्त्यर्थः । सपिण्डीकरणस्य पार्वणैकोद्दिष्टरूपत्वात् । एतत्सर्वं ब्राह्मादिविवाहेषु द्रष्टव्यम् । आसुरादिविवाहे तु चतुर्धा विकल्पः । तत्र पक्षत्रयमाह शातातपः—

---

१. I. reads चितारोहणे for अन्वारोहणे. २. Except A. H. and I. all substitute मत्र for अत्र; while H. and I. read एक- for ऐक्य-. ३. D. reads पितामहादि- for पितामह्यादि. ४. I. reads -निवृत्त्यर्थः for -व्यावृत्त्यर्थः.

'तन्मात्रा तत्पितामह्या तच्छ्वश्र्वा वा सपिण्डनम् ।
आसुरादिविवाहेषु वर्णानां योषितां भवेत्' ॥

इति । चतुर्थं पक्षमाह सुमन्तुः—

'पिता पितामहे योज्यः पूर्णे संवत्सरे सुतैः ।
माता मातामहे तद्वदित्याह भगवान् शिवः' ॥

इति । मातुः सापिण्ड्ये गोत्रनियममाह मार्कण्डेयः—

'ब्राह्मादिषु विवाहेषु या तूढा कन्यका भवेत् ।
भर्तृगोत्रेण कर्त्तव्या तस्याः पिण्डोदकक्रिया ॥
आसुरादिविवाहेषु पितृगोत्रेण धर्मवित्' ।

(ग. पु. १. १६. २१-२२)

इति । लौगाक्षिरपि—

'मातामहस्य गोत्रेण मातुः पिण्डोदकक्रियाः ।
कुर्वीत पुत्रिकापुत्र एवमाह प्रजापतिः' ॥

इति । पत्न्याः सापिण्ड्यं दर्शयति पैठीनसिः—

'अपुत्रायां मृतायां तु पतिः कुर्यात् सपिण्डनम् ।
श्वश्र्वादिभिः सहैवास्याः सपिण्डीकरणं भवेत्' ॥

इति । पत्युः सापिण्ड्यमाह लौगाक्षिः—

१. D. reads-स्वस्रा for-श्वश्र्वा. २. The following quotation cannot be traced in Mârkaṇḍeya-purâṇam. However it appears in Garuḍa-purâṇam. ३. H. and I. read गोलाक्षिः for लौगाक्षिः, but this is a mistake. D. omits the following six lines:—

'मातामहस्य गोत्रेण मातुः पिण्डोदकक्रियाः ।
कुर्वीत पुत्रिकापुत्र एवमाह प्रजापतिः' ॥

इति । पत्न्याः सापिण्ड्यं दर्शयति पैठीनसिः—

'अपुत्रायां मृतायां तु पतिः कुर्यात् सपिण्डनम् ।
श्वश्र्वादिभिः सहैवास्याः सपिण्डीकरणं भवेत्' ॥

इति । पत्युः सापिण्ड्यमाह लौगाक्षिः—.

'सर्वाभावे स्वयं पत्न्यः स्वभर्तॄणाममन्त्रकम् ।
सपिण्डीकरणं कुर्युस्ततः पार्वणमेव च' ॥

इति । सुमन्तुरपि—

'अपुत्रे प्रस्थिते कर्ता नास्ति चेच्छ्राद्धकर्माणि ।
तत्र पत्न्यपि कुर्वीत साषिण्ड्यं पार्वणं तथा' ॥

इति । यत्तु स्मृत्यन्तरम्—

'अपुत्रस्य परेतस्य नैव कुर्यात्सपिण्डताम् ।
आशौचमुदकं पिण्डमेकोद्दिष्टं न पार्वणम् ॥
अपुत्रा ये मृताः केचित्पुरुषा वा तथा स्त्रियः[१] ।
तेषां सपिण्डनाभावादेकोद्दिष्टं न पार्वणम्' ॥

इति तत्पूर्वोक्तादनधिधिप्रशंसापरतया व्याख्येयम् । यतीनां साषिण्ड्यं निषेधत्युशनाः[२]—

'सपिण्डीकरणं तेषां न कर्तव्यं सुतादिभिः ।
त्रिदण्डग्रहणादेव प्रेतत्वं नैव जायते ॥
एकोद्दिष्टं न कुर्वीत यतीनां चैव सर्वदा ।
अहन्येकादशे तेषां पार्वणं तु विधीयते' ॥

( औ. स्मृ. ७. १९-२० )

इति । इत्युभयात्मकं सपिण्डीकरणं निरूपितम् ॥

## अथ पार्वणविकृतिरूपं वृद्धिश्राद्धं निरूप्यते ।

तत्र याज्ञवल्क्यः

'एवं प्रदक्षिणावृत्कौ[३] वृद्धौ नान्दीमुखान् पितॄन् ।
यजेत दधि-कर्कन्धुमिश्राः पिण्डा यवैः क्रिया' ॥

( या. स्मृ. १. २५० )

१. B. C. F. and G. read स्त्रियोऽपि वा for तथा स्त्रियः. २. H. omits उशनाः and reads साषिण्ड्यनिषेधवचनम्. D. also reads the same, but it does not omit उशनाः. ३. D. and I read -वृत्तौ and G. -वृक्तः for -वृत्कौ.

इति। एवं पार्वणवदित्यर्थः। तथा च विष्णुधर्मोत्तरे—

'वृद्धौ समर्चयेद्विद्वान् नित्यं नान्दीमुखान् पितॄन्।
सम्पादितो विशेषस्तु शेषं पार्वणवद्भवेत्'॥

(वि. ध. १. १४२. १८)

इति। पार्वणवदित्यनेनावाहन-त्रिपुरुषोद्देशादयोऽतिदिश्यन्ते। अयं तु विशेषः सम्पादितः नान्दीमुखसंज्ञकाः पितरः इति। एतच्च प्रदक्षिणावृद्-बदर-दध्यादीनां याज्ञवल्क्योक्तानामितरेषां च विशेषाणामुपलक्षणम्। ते च विशेषाः कात्यायनेन दर्शिताः—

'आभ्युदयिके श्राद्धे प्रदक्षिणमुपचारः[1]। पित्र्यमन्त्रवर्जनम्। ऋजवो दर्भाः। यवैस्तिलार्थः[2]। सुसम्पन्नमिति तृप्तिप्रश्नः। सुसम्पन्नमित्यनुज्ञा[3]। दधि-बदर-अक्षतमिश्राः पिण्डाः। नान्दीमुखान् पितॄनावाहयिष्ये—इति पृच्छति। नान्दीमुखाः पितरः प्रीयन्तामित्यक्षय्यस्थाने। नान्दीमुखान् पितॄनर्चयिष्ये—इति पृच्छति। नान्दीमुखाः पितरः पितामहाः प्रपितामहाश्च प्रीयन्तामित्यनेन स्वधां कुर्यात्। युग्मानाशयेत्'।

इति। प्रचेता अपि—

'मातृश्राद्धं तु पूर्वं स्यात् पितॄणां तदनन्तरम्।
ततो मातामहानां च वृद्धौ श्राद्धत्रयं स्मृतम्॥

---

१. G. and H. omit श्राद्धे, and H. reads प्रदक्षिणमाचमनमुपचारः. G. omits प्रदक्षिण-. २. D. G. and I. read तिलार्थम् and B. C. F. तिलार्थाः for तिलार्थः. ३. G. and H. read अनुज्ञातः for अनुज्ञा.

न जपेत् पैतृकं जप्यं न मांसं तत्र दापयेत् ।
प्राङ्मुखो देवतीर्थेन क्षिप्रं दद्याद्विमार्जनम्' ॥

इति । प्राङ्मुखः पिण्डदानादिकं कुर्यादित्यध्याहारः । अत एव प्रचेताः—

'अपसव्यं न कुर्वीत न कुर्यादप्रदक्षिणम् ।
यथा चोपचरेद् देवान् तथा वृद्धौ पितृनपि ॥
प्रदद्यात्प्राङ्मुखः पिण्डान् वृद्धौ सव्येन वाग्यतः'।

इति । पिण्डदाने विशेषमाह वसिष्ठः—

'प्राङ्मुखो देवतीर्थेन प्राक्कूलेषु कुशेषु च ।
दत्त्वा पिण्डान् न कुर्वीत पिण्डपात्रमधोमुखम्' ॥

इति । पिण्डदानं न चाग्निष्टसन्निधौ प्रदद्यात्—

'नावाङ्मुखः पिण्डान् वृद्धौ नाम्ना वाऽऽवाह्य ददति' ।

इति शातातपस्मरणात् । नामोच्चारणं च प्रथमपिण्ड एव । न द्वितीये । तदुक्तं चतुर्विंशतिमते—

'एकं नाम्ना परं तूष्णीं दद्यात् पिण्डान् पृथक् पृथक्' ।

इति । एकैकस्मै द्वौ द्वौ पिण्डौ । तत्राद्यं नाम्ना द्वितीयं तूष्णीं दद्यादित्यर्थः । वृद्धिश्राद्धे पिण्डदानं वैकल्पिकम् । तथा च भविष्यत्पुराणम्—

---

१. D. reads न जपेत पैतृकं यज्ञं; while H. reads संयजन पैतृकं यज्यं.
२. We follow here A. and H.; while B. C. and F. omit प्र in प्रदद्यात्, and read the following quotation thus:—

प्राङ्मुखः पिण्डान वृद्धौ नाम्ना स वाग्यतः ।

E. also reads the same, but substitutes प्रदद्यात् तथावाङ्मुखः for दद्यात् प्राङ्मुखः. G. differs from B. C. and F. in reading तथ प्राङ्मुखः for प्राङ्मुखः.

'पिण्डनिर्वपणं कुर्यात् न वा कुर्यान्नराधिप।
वृद्धिश्राद्धं महाबाहो कुलधर्मानवेक्ष्य तु' ॥

इति। वृद्धिश्राद्धनिमित्तान्याह लौगाक्षिः—

'नवान्न-चौल-गोदाने सोमापायन-पुंसवे।
स्नानो-ऽऽधान-विवाहेषु नान्दीश्राद्धं विधीयते' ॥

इति। कार्ष्णाजिनिरपि—

'कन्यापुत्रविवाहेषु प्रवेशो नववेश्मनः।
नामकर्मणि बालानां चूडाकर्मादिके तथा ॥
सीमन्तोन्नयने चैव पुत्रादिमुखदर्शने।
नान्दीमुखान् पितृगणान् पूजयेत् प्रयतो गृही' ॥

इति। वृद्धगार्ग्योऽपि—

'अग्न्याधाना-ऽभिषेकादाविष्टापूर्त्ते क्रिया क्रतौ।
वृद्धिश्राद्धं प्रकुर्वीत आश्रमग्रहणे तथा' ॥

इति ॥

## अथ श्राद्धकर्तृनिरूपणम्।

इत्थं श्राद्धानि निरूपितानि। अधुना तत्कर्त्ता निरूप्यते। तत्र बृहस्पतिः—

'प्रमीतस्य पितुः पुत्रैः श्राद्धं देयं प्रयत्नतः।
ज्ञाति-बन्धु-सुहृच्छिष्यैर्ऋत्विग्भृत्य-पुरोहितैः' ॥

इति। विष्णुपुराणे ऽपि—

'पुत्रः पौत्रः प्रपौत्रो वा तद्वद्वा भ्रातृसन्ततिः।

१. H. substitutes स्थान- for स्नान-. २. All, except A. and I. omit अधुना. ३. The text reads बन्धुर्वा for तद्वद्वा.

सपिण्डसन्ततिर्वाऽपि क्रियार्हा नृप जायते'॥

(वि. पु. ३. १३. ३०)

इति। तत्र मुख्यानुकल्पौ[1] विविनक्ति शङ्खः—

'पितुः पुत्रेण कर्तव्या पिण्डदानोदकक्रिया।

पुत्राभावे तु[2] पत्नी स्यात् पत्न्यभावे तु सोदरः'॥

इति। स्मृतिसङ्ग्रहेऽपि—

'पुत्रः कुर्यात् पितुः श्राद्धं पत्नी तु तदसन्निधौ।

धनहार्यथ दौहित्रस्ततो भ्राता च तत्सुतः॥

भ्रातुः सहोदरो भ्राता कुर्याच्छ्राद्धादि तत्सुतः।

ततस्त्वसोदरो भ्राता तदभावे तु तत्सुतः'॥

इति। पुत्रशब्देन मुख्या गौणाश्च पुत्रा गृह्यन्ते। तेषां सर्वेषामभावे पौत्रः कुर्यात्। तस्याभावे तु पत्नी। अत एव बृहस्पतिना पौत्रस्य पुत्रिकापुत्रसाम्यमुक्तम्—

'पौत्रोऽथ पुत्रिकापुत्रः स्वर्गप्राप्तिकरावुभौ।

रिक्थे च पिण्डदाने च समौ तौ परिकीर्तितौ'॥

इति। न चैतावता तयोः समविकल्पः[3] शङ्कनीयः—

'नैव पौत्रेण कर्तव्यं पुत्रवांश्चेत् पितामहः'।

इति कात्यायनस्मरणात्।

'पत्न्यभावे तु सोदरः'।

इत्ययं क्रमः पत्न्या दायहरणे द्रष्टव्यः। अन्यथा यो दायहरः स एव कुर्यात्। अत एव विष्णवापस्तम्बौ—

1. B. C. F. G. and H. omit -अनुकल्पौ and read तत्र मुख्यादि विविनक्ति. 2. H. reads च for तु. 3. H omits एतावता and reads एतयोः.

'यश्चार्थहरः स पिण्डदायी'।

(वि. स्मृ. १९. ४०)

इति। पुत्रः पितृवित्ताभावेऽपि पिण्डं दद्यात्तदभावे सपिण्डो दद्यात् सपिण्डाभावे समानोदकादयः कुर्युः। तथा च मार्कण्डेयपुराणम्—

'पुत्राभावे सपिण्डास्तु तदभावे सहोदकाः।
मातुः सपिण्डा ये वा स्युर्ये वा मातुः सहोदकाः॥(१९)
कुर्युरेनं विधिं सम्यक् अपुत्रस्य सुतासुतः।
कुर्यान्मातामहायैव पुत्रिकातनयस्तथा॥ (२०)
सर्वाभावे स्त्रियः कुर्युः स्वभर्तृणाममन्त्रकम्।
तदभावे च नृपतिः कारयेत्तस्य रिक्थनः॥ (२१)
तज्जातीयैर्नरैः सम्यक् दाहाद्याः सकलाः क्रियाः।
सर्वेषामेव वर्णानां बान्धवो नृपतिर्यतः'॥

(मा. पु. ३०. १९-२३)

इति। सर्वाभावे स्त्रियः कुर्युरित्यासुरादिविवाहोढस्त्रीविषयम्। अतः पुत्राभावे तु पत्नीत्यनेन सहाविरोधः। तस्याः पत्नीत्वाभावात्। अत एव शातातपः तस्याः पत्नीत्वं निषेधति—

'क्रयक्रीता* तु या नारी न सा पत्न्यभिधीयते।
न सा दैवे न सा पित्र्ये दासीं तां कवयो विदुः'॥

---

१. H. reads अंशहरः for अर्थहरः. २. The text substitutes च for वा. ३. B. C. E. F. G. and H. read सुताः स्मृताः for सुतासुतः. For the same D. and I. substitute श्रुताः स्मृताः. ४. All, except A. I. and the text omit this line:—

कुर्यान्मातामहायैव पुत्रिकातनयस्तथा॥.

५. The text reads स्वकुटुम्बिना for तस्य रिक्थनः, and for रिक्थनः E. reads विश्रुतः. ६. E. H. and I. read तत्स्थानीयैः for तज्जातीयैः.

इति । पूर्व-मध्यमोत्तरासु पुत्रादीनां व्यवस्थितमधिकारं दर्शयति पराशरो विष्णुपुराणे

'पूर्वाः क्रिया मध्यमाश्च तथैवोत्तरसंज्ञिताः ।
त्रिप्रकाराः क्रिया ह्येतास्तासां भेदं शृणुष्व मे ॥ (३४)
आदाहाद्वादशाहाच्च मध्ये याः स्युः क्रिया मताः ।
ताः पूर्वा मध्यमा मासि मास्येकोद्दिष्टसंज्ञिताः ॥ (३५)
प्रेते पितृत्वमापन्ने सपिण्डीकरणादनु ।
क्रियन्ते याः क्रियाः पित्र्याः प्रोच्यन्ते ता नृपोत्तराः ॥ (३६)
पितृ-मातृ-सपिण्डैस्तु समानसलिलैस्तथा ।
तत्संघातगतेनैव राज्ञा वा धनहारिणा ॥ (३७)
पूर्वाः क्रिया मध्यमाश्च पुत्राद्यैरेव चोत्तराः ।
दौहित्रैर्वा नरश्रेष्ठ कार्यास्तत्तनयैस्तथा' ॥ (३८)

(वि. पु. ३. १३. ३४—३८)

इति । सपिण्डाद्यैरेवतिपत्स्यन्तैः पूर्वाः क्रिया मध्यमाश्च कर्तव्याः । पुत्राद्यैरेव भ्रातृसन्तत्यन्तैः दौहित्राद्यैश्चोत्तराः क्रियाः कर्तव्याः । न सपिण्डाद्यैरवतिपत्यन्तैरित्यर्थः । औरसः सुतोऽनुपनीतोऽपि दाहादिकाः क्रियाः कुर्यात् । तदाह सुमन्तुः—

'श्राद्धं कुर्यादवश्यं तु प्रमीतपितृको हि यः ।
व्रतस्थो वाऽव्रतस्थो वा एक एव भवेद्यदि' ॥

इति । अव्रतस्थोऽनुपनीतः । तदाह वृद्धमनुः—

१. The text reads this line as follows:—

आशौचकार्यान्तुधाविभ्यर्थान्तास्तु याः क्रियाः ।.

२. The text reads क्रमणादितु for -करणादनु. ३. D. reads तत्संघातगतेन च.
४. B, C, and F. read भ्रात्राद्याश्च कर्तव्याः and I. पूर्वाः क्रियाश्च कर्तव्याः for पूर्वाः क्रिया मध्यमाश्च. ५. Except A. and I. all substitute नृपति- for भवतीपति-.

'कुर्यादनुपनीतोऽपि श्राद्धमेको हि यः सुतः।
पितृयज्ञाहुतिं पाणौ जुहुयाद्ब्राह्मणस्य च'॥

इति। अत्र विशेषः प्रचेतसा दर्शितः—

'कृतचूडस्तु कुर्वीत उदकं पिण्डमेव च।
स्वधाकारं प्रयुञ्जीत वेदोच्चारं न कारयेत'॥

इति। माता-पित्रोरुभयोरपि कुर्वीतेत्यर्थः। तथा च स्मृत्यन्तरम्—

'कृतचूडोऽनुपेतस्तु पित्रोः श्राद्धं समाचरेत्।
उदाहरेत् स्वधाकारं न तु वेदाक्षराण्यसौ'॥

इति। यत्तु मनुनोक्तम्—

'न ह्यस्मिन् युज्यते कर्म किंचिदा मौञ्जिबन्धनात्॥ (१७१)
नाभिव्याहारयेद्ब्रह्म स्वधानिनयनादृते'॥ (१७२)
(म. स्मृ. २. १७१, ७२)

इति तत् वैर्षकृतचूडाविषयम्। तथा च सुमन्तुः—

'अनुपेतोऽपि कुर्वीत मन्त्रवत् पैतृमेधिकम्।
यद्यसौ कृतचूडः स्याद् यदि स्याच्च त्रिवत्सरः'॥

इति॥

## अथ मातामहादिश्राद्धाधिकारनिर्णयः।

तत्र व्यासः—

'पितॄन्मातामहांश्चैव द्विजः श्राद्धेन तर्पयन्।
[illegible]ः स्यात् पितॄणां तु ब्रह्मलोकं च गच्छति'॥

१. D. and H. substitute वा for च, and for the same I. reads [illegible] सः. २. D. reads व्रतकृतचूडाविषयम, and B. C. F and G. read [illegible] कृतचूडाविषयम. ३. H. reads अनृणस्यात् and I. [illegible] for अनृणः स्यात्.

इति । मातामहानामिति बहुवचनं मातुः पितामहप्रपितामहयोरपि संग्रहार्थम् । तथा च पुलस्त्यः—

'मातुः पितरमारभ्य त्रयो मातामहाः स्मृताः ।
तेषां तु पितृवच्छ्राद्धं कुर्युर्दुहितृसूनवः'॥

इति । पितृश्राद्धवन्मातामहश्राद्धमपि नित्यम् । अकरणे प्रत्यवायस्मरणात् । तदुक्तं स्कन्दपुराणे—

'पार्वणं कुरुते यस्तु केवलं पितृहेतुनः ।
मातामहं न कुरुते पितृहा स प्रजायते'॥

इति । ऋष्यशृङ्गोऽपि—

'पितरो यत्र पूज्यन्ते तत्र मातामहा ध्रुवम् ।
अविशेषेण कर्त्तव्यं विशेषान्नरकं व्रजेत्' ॥

इति । मातामहश्राद्धं कचिदपवदति कात्यायनः—

'कर्षूसमन्वितं मुक्त्वा तथा श्राद्धं च षोडशम् ।
प्रत्याब्दिकं च शेषेषु पिण्डाः स्युः षडिति स्थितिः'॥
(का. स्मृ. ३. २४. १४)

इति । कर्षूसमन्वितं सपिण्डीकरणश्राद्धम् । षोडशग्रहणमेकोद्दिष्टोपलक्षणार्थम् । बहुतमरणे श्राद्धक्रममाह ऋष्यशृङ्गः—

'भर्त्रादि सपिण्डानां युगपन्मरणं तथा ।
सम्बन्धासत्तिमालोच्य तत्क्रमाच्छ्राद्धमाचरेत्' ॥

इति । अत्र पत्न्यादिसपिण्डेषु सम्बन्धासत्तिरेवं द्रष्टव्या—पति-पत्न्योः सम्बन्धः प्रत्यासन्नः । एकप्रतियोगिकत्वादव्यव-

---

१. H. reads कुर्यात् विस्तरतस्तु सः for कुर्युर्दुहितृसूनवः. २. D. reads सम्बन्धांश्च समालोच्य.

धानाच्च। पुत्रस्य तु माता-पितृद्वयनिरूप्यत्वेन विलम्बितप्रतिपत्तेर्विप्रकृष्टः सम्बन्धः। भ्रातुस्तु[1] पितृजत्वव्यवधानेन ततोऽपि विप्रकृष्टः। एवमन्यत्रोहनीयम्[2]। पत्न्यादीनां पित्रोश्च सङ्घातमरणे ऋष्यशृङ्गः—

'पत्न्याः पुत्रस्य तत्पुत्र-भ्रात्रोस्तत्तनयस्य च।
स्नुषा-श्वश्र्वोश्च पित्रोश्च सङ्घातमरणं यदि[3]॥
अर्वागब्दान्मातृ-पितृपूर्वं सापिण्ड्यमाचरेत्'।

इति। तत्पुत्रः पुत्रपुत्रः। तत्तनयो भ्रातृतनयः। यत्तु देवलेनोक्तम्—

'प्रमीतौ[4] पितरौ यस्य देहस्तस्याशुचिर्भवेत्।
न दैवं नापि पित्र्यं च यावत् पूर्णो न वत्सरः'॥

इति तत्पूर्वोक्तपत्न्यादिव्यतिरिक्तसपिण्डविषयम्[5]। अत एव लौगाक्षिः—

'अन्येषां प्रेतकार्याणि महागुरुनिपातने।
कुर्यात् संवत्सरादर्वाक् श्राद्धमेकं तु वर्जयेत्'।

इति। प्रेतकार्याणि दहनादीन्याद्यश्राद्धान्तानि विवक्षितानि।

'आद्यं श्राद्धमशुद्धोऽपि कुर्यादेकादशेऽहनि'।

इति विशेषस्मरणात्। एकमित्यन्यदित्यर्थः। पित्रोः सङ्घातमरणे देवलः—

---

१. D. and G. read मातुस्तु for भ्रातुस्तु; while all except A. and I. read -पितृव्यवधानेन for -पितृजत्वव्यवधानेन. २. A. reads उदाहरणीयम for ऊहनीयम्. ३. D. reads -मरणे सति for -मरणं यदि. ४. All, except D. read पितरौ प्रमितौ and B. C. E. and F. read पितरौ प्रमृतौ. ५. H. reads -सापिण्ड्य- for -सपिण्ड- and D. omits -सपिण्ड-.

'पित्रोरुपरमे पुत्राः क्रियाः कुर्युर्द्वयोरपि ।
अनुवृत्तौ च नान्येषां सह्वानमरणेऽपि वा' ॥

इति । सहगमनेन पित्रोः सह्वानमरणे मातुरनुगमनेन दिनान्तरमरणेऽपि तत्तद्दशाहे क्रियां कुर्युः । अन्येषां पित्रोश्च सह्वानमरणे यथाकालं न कुर्युः । किन्तु त्रिपक्ष एव । तदाह लौगाक्षिः—

'पत्नी पुत्रस्तथा पौत्रो माता तत्पुत्रका अपि ।
पितरौ च यदैकस्मिन् म्रियेरन् वासरे तदा ॥
आद्यमेकादशे कुर्यात् त्रिपक्षे तु सपिण्डनम्' ।

इति । पित्रोरनुगमनं विना सह्वानमरणे मातुरनुगमनं विना दिनान्तरमरणेऽपि मातुस्त्रिपक्षे सपिण्डनं कुर्यात् । तथा च देवलः—

'एकाह्नमरणे पित्रोरन्यस्यान्यदिने मृतौ ।
सपिण्डनं त्रिपक्षे स्यादनुयानमृतिं विना' ॥

इति । मातृ-पितृश्राद्धद्वयस्य दैवात्कालैक्येऽपि पितृश्राद्धं पूर्वं कुर्यात् । तदाह कार्ष्णाजिनिः—

'पित्रोः श्राद्धं समं प्राप्ते तत्र पर्युषितेऽपि वा ।
पितृपूर्वं सुतः कुर्यादन्यत्रासत्तियोग्यतः' ॥

इति । अन्यत्र मातृपितृव्यतिरिक्तविषये सम्बन्धासत्तियोग्यतः कुर्यादित्यर्थः । यत्तु प्रचेतसोक्तम्—

१. Except A. and G. all read क्रियां for क्रियाः. २. All, except A. and I. read च for वा. ३. Except A. all read अनुगमनेन for सहगमनेन. ४. D. reads सहन for सह्वान. ५. G. reads गोलाक्षिः for लौगाक्षिः. ६. G. reads असत्ति- for आसत्ति-.

'नैकः श्राद्धद्वयं कुर्यात् समानेऽहनि कुत्रचित्' ॥

इति तदेकस्मिन् श्राद्धे क्रियमाणे दैवतैक्यात् अन्यस्य प्रसङ्गात् यत्र सिद्धिस्तद्विषयम्। यथा नित्यश्राद्धामावास्या-श्राद्धयोरमावास्याश्राद्धेन नित्यश्राद्धसिद्धिः प्रासङ्गिकी। यथा वा दार्शिकयुगादिश्राद्धयोर्युगादिश्राद्धेनैव दार्शिकसिद्धिः। पित्रोर्मृताहैक्ये सत्यन्वारोहणविषये लौगाक्षिणा विशेष उक्तः—

'मृतेऽहनि समासेन पिण्डनिर्वपणं पृथक्।
नवश्राद्धं तु दम्पत्योरन्वारोहण एव तु' ॥

इति। पिण्डनिर्वपणं श्राद्धं समासेन पाकाद्यैक्येन पृथगसपत्नीकं कुर्यात्। नवश्राद्धमपि तथा कुर्यात्। स्मृत्यन्तरमपि—

'एकचित्यां समारूढौ दम्पती निधनं गतौ।
पृथक् श्राद्धं तथा कुर्यादोदनं नै पृथक् पृथक्' ॥

इति। अनेकमातृभिरेकचित्यामन्वारोहणे कृते पाकाद्यैक्येन प्रथमं पितुस्तदनन्तरं साक्षान्मातुस्ततो ज्येष्ठादिक्रमेण कुर्यात्। तदाह भृगुः—

'एककाले गतासूनां बहूनामथ वा द्वयोः।
तन्त्रेण श्रपणं कुर्यात् श्राद्धं कुर्यात् पृथक् पृथक् ॥
पूर्वकस्य मृतस्यादौ द्वितीयस्य जघन्यतः।
तृतीयस्य ततः कुर्यात् सन्निपातेष्वयं क्रमः' ॥

इति। पूर्वकस्य मुख्यस्य पितुः। द्वितीयस्य ततो जघन्याया जनन्याः। तृतीयस्य ततोऽपि जघन्यतया परमातुरित्यर्थः। पार्वणैकोद्दिष्टयोः सन्निपाते जाबालिः—

---

१. I. reads यद्यन्यस्य प्रसङ्गात् सिद्धिः. २. All, except A. and I. read च for न. ३. D. reads विधिः for क्रमः. ४. I. reads जघन्यया मातुरित्यर्थः; while D. reads जघन्यमातुः, and G. and H. जघन्यायाया मातुः for the same.

'यद्येकत्र भवेतां चेदेकोद्दिष्टं च पार्वणम् ।
पार्वणं त्वभिनिर्वर्त्त्य[1] एकोद्दिष्टं समाचरेत्' ॥

इति । अनेकनिमित्तसन्निपाते निमित्तानुक्रमेण श्राद्धं कुर्यात् । तथा च कात्यायनः—

'द्वे बहूनि निमित्तानि जायेरन्नेकवासरे ।
नैमित्तिकानि कार्याणि निमित्तोत्पत्त्यनुक्रमात्'[2] ॥

इति । यद्यप्येकदेवताकश्राद्धद्वयमेकस्मिन्नहनि न युक्तं एकानुष्ठानेनेतरप्रयोजनस्यापि प्रसङ्गात् सिद्धेः तथापि नैमित्तिकानि वचनबलादनेकान्यप्यनुष्ठेयानि । तथा च जाबालिः—

'श्राद्धं कृत्वा तु तस्यैव पुनः श्राद्धं न तद्दिने ।
नैमित्तिकं तु कर्त्तव्यं निमित्तानुक्रमोदयम्' ॥

इति । नित्य-काम्ययोरेकदेवताकयोः सन्निपाते काम्येनैव नित्यसिद्धिः । तदुक्तं स्मृतिसंग्रहे[3]—

'काम्यतन्त्रेण नित्यस्य तन्त्रं श्राद्धस्य सिद्ध्यति'।

इति ॥

यत्राशौचविधानजातगजनस्त्वार्थप्रयुक्त्या दृशा[4]
प्रोक्तं यत्र च संगृहीतवपुषां श्राद्धं समृद्ध्यै पदम् ।
अध्यायं तदचाम्यनिर्णयविदां तार्त्तीयमार्त्तिच्छिदं
सोऽयं व्याकुरुते स्वतन्त्रमहिमा मन्त्रीश्वरो माधवः ॥

---

१. I. reads तत्र for त्वभि०. २. I. reads निमित्तानुक्रमादिति. ३. D. reads सङ्ग्रहे for स्मृतिसङ्ग्रहे. ४. This and the following three lines are not found in all except A. and I.

इति श्रीमहाराजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्त्तक-श्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरस्य माधवामात्यस्य कृतौ पराशरस्मृतिव्याख्यायां माधवीयायां तृतीयोऽध्यायः समाप्तः ॥ ३ ॥

॥ समाप्तमिदमाचारकाण्डम् ॥

The names occurring in the Paras'ara Samhita.

## ADHYÂYÂS. II & III.

१. पराशरः 1, 15. 204, 10.
२. ऋषयः 255, 3.
३. सूर्यमण्डलम् 268, 17.
४. भास्करः 270, 12.
५. देवकन्याः 271, 17.
६. देवाङ्गनाः 272, 3.
७. स्वर्गः 272, 10.
८. लक्ष्मीः 273, 4.
९. सुराङ्गनाः 273, 4.
१०. नदीः 282, 5.
११. समुद्रः 282, 5.

## A list of the names of authors, works, etc., occurring in Mâdhavâchâryâ's Commentary on the Parâs'ara Sâmhitâ, Adhyâyâs II. and III.



१ अगस्त्यः 71, 12. 71, 16. 72, 1.

२ अङ्गिरस: 29, 1. 71, 9.

३ अङ्गिराः 41, 2. 41, 5. 71, 1. 149, 10. 212, 7. 215, 3. 227, 13. 241, 11. 251, 18. 258, 10. 264, 7. 275, 16. 325, 4. 362, 10. 386, 5. 393, 7. 448, 4.

४ अत्रयः 28, 19.

५ अत्रिः 71, 15. 71, 18. 165, 7. 172, 13. 181, 9. 189, 19. 193, 12. 261, 19. 330, 29. 345, 13. 365, 13. 369, 4. 392, 16. 420, 8. 421, 19. 429, 6. 451, 5.

६ अपरार्कः 328, 13.

७ अम्बरीषः 71, 9.

८ अष्टावक्रोपाख्यानम् 81, 22.

९ आचार्यः 247, 22.

१० आचार्याः 2, 2. 136, 12.

११ आथर्वणी श्रुतिः 99, 15.

१२ आदित्यपुराणम् 23, 11. 91, 11. 228, 10. 370, 11.

१३ आदिपुराणम 23, 15. 239, 13. 255, 14. 260, 14. 303, 9. 307, 15. 321, 8. 324, 3. 326, 21. 366, 22. 373, 11. 399, 13.

१४ आनुशासनिकम् (Mahâbhâratam Bk. XIII.) 81, 22. 97, 17.

१५ आपस्तम्बः 10, 14. 21, 4. 31, 19. 33, 4. 46, 14. 58, 4. 72, 15. 140, 12. 220, 7. 224, 18. 296, 13. 317, 9. 329, 12. 340, 4. 344, 24. 346, 3. 381, 5. 386, 1. 392, 1. 439, 7. 462, 21.

१६ आरुणिश्रुतिः 166, 20.

१७ आश्वमेधिकम् (Mahâbhâratam Bk. XIV.) 6, 16. 96, 22. 178, 20.

१८ आश्वलायनगृह्यपरिशिष्टम् 20, 13.

१९ आश्वलायनगृह्यम् 56, 7.

२० आश्वलायनः 408, 9. 430, 8. 430, 9. 431, 10. 434, 2. 449, 2.

२१ ईश्वरः 37, 8.
२२ उमामहेश्वरसंवादः 82, 6.
२३ उशनाः 188, 7. 264, 17. 333, 18. 356, 9. 375, 8. 458, 12.
२४ ऋष्यशृङ्गः 36, 5. 291, 2. 330, 18. 331, 7. 331, 14. 332, 16. 454, 19. 466, 9. 466, 17. 467, 4.
२५ कण्वः 182, 15.
२६ कापिलमतम् 160, 1.
२७ कर्मप्रदीपः 432, 14.
२८ कश्यपः 71, 15. 72, 1. 87, 13.
२९ कातकम् 402, 15. 408, 6.
३० कात्यायनः 36, 10. 37, 10. 39, 18. 72, 7. 77, 1. 90, 12. 91, 3. 93, 6. 93, 18. 94, 2. 116, 12. 117, 9. 118, 4. 132, 15. 156, 17. 159, 19. 201, 6. 230, 7. 287, 2. 287, 17. 292, 12. 316, 17. 322, 19. 329, 15. 334, 1. 334, 23. 366, 6. 390, 17. 397, 11. 405, 10. 411, 14. 413, 10. 414, 20. 416, 7. 422, 1. 426, 45. 430, 21. 431, 13. 432, 8. 446, 3. 447, 19. 451, 7. 454, 17. 455, 5. 459, 8. 466, 12. 470, 4.
३१ कात्यायनस्मृतिः 197, 3. 462, 18.
३२ कार्ष्णाजिनिः 131, 5. 246, 17. 321, 19. 322, 11. 322, 18. 325, 18. 330, 6. 417, 2. 451, 19. 454, 10. 461, 6. 468, 16.
३३ कालिकापुराणम् 178, 4.
३४ कावषेयः 281, 5.
३५ काश्यपः 57, 7. 243, 18.
३६ काश्यपाः 28, 19.
३७ कुरुनन्दनः 41, 1.
३८ कूर्मपुराणम् 4, 14. 9, 7. 15, 7. 46, 10. 53, 16. 54, 4. 104, 15. 127, 14. 132, 8. 133, 1. 144, 8. 146, 14. 154, 17. 155, 15. 193, 5. 205, 12. 209, 6. 212, 10. 218, 9. 219, 20. 220, 11. 254, 2. 265, 12. 277, 6. 281, 1. 282, 16. 314, 20. 360, 3.
३९ कौषीतकिब्राह्मणम् 171, 13.
४० कौषीतकिः 106, 11.
४१ क्रतुः 262, 11. 393, 9.
४२ गयाविष्णुः 233, 21.
४३ गर्गः 72, 8. 354, 8.
४४ गार्ग्यः 128, 5. 129, 5. 324, 16. 406, 11. 406, 19. 450, 16.
४५ गालवः 291, 11. 450, 7. 452, 8.
४६ गृह्यकाराः 414, 3.
४७ गृह्यपरिशिष्टम् 25, 4. 89, 3. 290, 15.
४८ गृह्यपरिशिष्टकारः 415, 20.

४९ गोभिलः 128, 2. 210, 9. 450, 14. 452, 16. 453, 20.

५० गौतमः 11, 3. 18, 6. 29, 5. 30, 4. 35, 4. 35, 11. 42, 18. 43, 14. 60, 5. 62, 6. 70, 3. 71, 14. 71, 18. 75, 5. 90, 9. 135, 7. 181, 9. 215, 17. 221, 22. 223, 3. 225, 1. 233, 13. 239, 7. 251, 4. 260, 11. 266, 13 276, 10. 288, 7. 290, 6 291, 4. 293, 17. 322, 2. 352, 18. 363, 8. 363, 17. 367, 8. 380, 18.

५१ चतुर्विंशतिमतम् 240, 13. 264, 13. 374, 2. 405, 20. 409, 20. 460, 14.

५२ चन्द्रिकाकारः 328, 13.

५३ छन्दोगश्रुतिः 52, 16.

५४ छन्दोगाः 106, 11. 137, 5.

५५ छागलेयः 138, 2. 336, 21. 401, 1.

५६ जनकः 166, 14.

५७ जनार्दनः 30, 12.

५८ जमदग्निः 71, 14. 71, 18. 422, 10. 426, 3. 436, 20. 445, 16.

५९ जातूकर्ण्यः 211, 6. 211, 15. 329, 19. 413, 16. 435, 10. 445, 12. 447, 1. 447, 4. 449, 16.

६० जाबालश्रुतिः 148, 14. 151, 4. 165, 15.

६१ जाबालः 149, 3. 211, 8.

६२ जाबालाः 136, 15. 147, 17.

६३ जाबालिः 50, 20. 320, 4. 469, 23. 470, 9.

६४ जैमिनिः 23, 2. 231, 8.

६५ ज्योतिःशास्त्रम् 20, 12.

६६ तापनीयश्रुतिः 52, 20.

६७ दक्षः 148, 2. 172, 1. 173, 17. 177, 1. 180, 5. 195, 1. 196, 15. 204, 12. 207, 9. 209, 6. 216, 10. 218, 13. 234, 17. 234, 22.

६८ दत्तात्रेयः 172, 9.

६९ देवलः 21, 16. 36, 2. 36, 8. 36, 17. 37, 17. 38, 6. 38, 14. 68, 5. 88, 15. 88, 20. 100, 4. 109, 4. 109, 10. 118, 20. 120, 13. 120, 19. 121, 9. 122, 2. 204, 16. 206, 2. 206, 15. 220, 4. 232, 18. 233, 18. 235, 14. 254, 6. 265, 20. 267, 10. 275, 6. 277, 12. 277, 19. 278, 3. 286, 14. 296, 1. 303, 16. 310, 12. 319, 15. 331, 8. 349, 6. 353, 7. 356, 15 356, 19. 357, 4. 357, 12. 357, 19. 360, 7. 368, 3. 378, 16. 381, 9. 381, 20. 383, 10. 388, 8. 389, 2. 391, 7. 437, 5. 439, 12. 443, 4. 467, 7. 467, 18. 468, 12.

७० देवस्वामिः 328, 15. 329, 2. 331, 14. 344, 22.

७१ धर्मः 410, 13.

७२ धौम्यः 325, 13.

७३ धौम्यस्मृतिः 325, 15.

७४ नारदः 5, 2. 10, 3. 12, 8. 57, 17. 75, 18. 79, 16. 80, 12. 82, 3. 85, 8. 89, 20. 91, 16. 92, 1. 92, 10. 93, 9. 95, 8. 153, 3. 339, 18.

७५ नारायणः 366, 18. 417, 17. 435, 7.

७६ निगमः 333, 7. 372, 19. 401, 22. 423, 10. 424, 8.

७७ नृसिंहपुराणम् 149, 6. 156, 4. 192, 5.

७८ न्यायः 362, 16.

७९ पद्मपुराणम् 165, 11. 434, 11.

८० परमहंसोपनिषद् 174, 14. 177, 13.

८१ पराशरः 3, 5. 3, 7. 3, 12.

८२ पाण्डुनन्दनः 7, 11.

८३ पारस्करः 20, 8. 32, 20. 95, 14. 283, 11. 284, 19. 289, 14. 289, 20. 300, 3. 301, 5. 403, 19. 435, 13. 436, 13.

८४ पितामहः 160, 20. 163, 3. 163, 18. 172, 9. 174, 1. 308, 13.

८५ पिप्पलादशाखा 168, 9.

८६ पिप्पलादश्रुतिः 171, 21.

८७ पुराणम् 27, 2. 73, 17. 108, 12. 161, 4. 241, 14. 309, 17. 323, 16. 330, 12. 348, 8. 361, 10. 375, 16. 391, 14. 401, 10. 402, 2. 402, 9. 402, 23. 408, 19. 412, 11. 442, 8.

८८ पुराणान्तरम् 347, 17.

८९ पुलस्त्यः 210, 13. 245, 19. 326, 17. 466, 2.

९० पैठीनसिः 35, 18. 61, 10. 62, 2. 63, 22. 95, 19. 98, 13. 210, 18. 212, 13. 223, 6. 234, 14. 258, 4. 259, 14. 288, 1. 291, 8. 298, 5. 342, 4. 362, 2. 378, 12. 410, 9. 410, 16. 441, 5. 442, 12. 447, 4. 454, 4.

९१ प्रचेताः 248, 13. 256, 12. 288, 9. 300, 19. 327, 7. 361, 5. 365, 18. 367, 20. 368, 12. 391, 11. 405, 7. 408, 17. 420, 2. 421, 7. 424, 13. 425, 17. 426, 12. 427, 5. 440, 13. 446, 19. 459, 18. 460, 4. 465, 3. 468, 20.

९२ प्रजापतिः 161, 10. 250, 15. 329, 4.

९३ प्रभासखण्डम् 335, 8.

९४ प्रवरग्रन्थः 72, 8.

९५ बह्वृचब्राह्मणम् 177, 8.

९६ बृहत्प्रचेताः 231, 14.

९७ बृहन्मनुः 231, 4. 231, 11. 252, 3. 321, 1.

९८ बृहस्पतिः 5, 5. 69, 8. 71, 1. 101, 10. 104, 10. 129, 14. 195, 5. 205, 15. 209, 14. 211, 12. 220, 21. 229, 17. 247, 20. 254, 9. 260, 8. 261, 13. 305, 3. 338, 9. 361, 18. 364, 4. 383, 17. 403, 9. 433, 15. 439, 4. 443, 15. 461, 17. 462, 13.

९९ बैजवापः 20, 6. 21, 6. 25, 18. 28, 10. 39, 13. 392, 19. 409, 16. 411, 7.

१०० बौधायनधर्मः 159, 12.

१०१ बौधायनः 57, 13. 67, 11. 68, 15. 71, 13. 72, 4. 72, 7. 72, 10. 77, 12. 78, 5. 80, 19. 87, 7. 89, 7. 100, 7. 116, 9. 127, 18. 131, 9. 155, 2. 156, 13. 157, 4. 160, 5. 162, 8. 163, 23. 164, 17. 170, 10. 178, 12. 179, 8. 187, 5. 189, 9. 190, 10. 191, 2. 191, 14. 214, 6. 249, 8. 267, 3. 296, 9. 342, 19. 345, 4. 381, 2. 397, 17. 424, 10. 451, 10. 456, 9.

१०२ ब्रह्मगर्भः 229, 15.

१०३ ब्रह्मनिरुक्तम् 398, 7.

१०४ ब्रह्मपुराणम् 113, 15. 225, 13. 227, 17. 237, 21. 245, 11. 247, 4. 257, 3. 258, 7. 258, 15. 278, 17. 283, 19. 284, 8. 299, 5. 379, 16. 410, 2.

१०५ ब्रह्ममीमांसा 195, 15.

१०६ ब्रह्मा 37, 8.

१०७ ब्रह्माण्डपुराणम् 304, 12. 322, 7. 339, 14. 339, 21. 359, 15. 361, 2. 362, 17. 376, 21. 393, 1. 401, 18. 416, 11. 423, 18. 430, 5. 431, 3. 455, 12.

१०८ ब्राह्मणम् 151, 1.

१०९ भगवान् 176, 15.

११० भरद्वाजः 71, 1. 71, 14. 71, 18. 373, 16. 376, 8.

१११ भविष्यत्पुराणम् 24, 20. 40, 20. 51, 16. 347, 9. 378, 19. 382, 3. 444, 5. 448, 17. 452, 13. 453, 5. 460, 18.

११२ भविष्यपुराणम् 291, 5.

११३ भविष्योत्तरपुराणम् 227, 10.

११४ भार्गवः 71, 6.

११५ भास्करः 39, 7.

११६ भृगवः 29, 1.

११७ भृगुः 38, 2. 38, 8. 68, 8. 469, 16.

११८ मत्स्यपुराणम् 58, 11. 182, 7. 182, 18. 222, 11. 310, 18. 311, 11. 371, 14. 398, 1. 398, 11. 405, 3. 440, 19. 443, 18.

११९ मत्स्यः 361, 14. 365, 6. 393, 13. 396, 17. 405, 15.

418, 1. 433, 11. 434, 5. 434, 16. 437, 1. 438, 10.

१२० मदालसावाक्यम् 427, 13.

१२१ मनुः 4,2. 4,9. 8,6. 10,10. 11, 6. 11, 16. 12, 1. 12, 17. 17, 9. 19, 15. 22, 19. 24, 9. 25, 7. 26, 9. 31,7. 32,10. 33, 14. 34,9. 34, 13. 34, 19. 35, 7. 35,14. 38,18. 39,2. 39,8. 41, 7. 41, 13. 42, 13. 43, 17. 44, 16. 45, 17. 46, 17. 47, 11. 47, 18. 48,6. 50,15. 52,9. 54,16. 55, 6. 60, 15. 62, 19. 64,10. 69,4. 69,16. 70,7. 72, 19. 73, 20. 74, 7. 77, 4. 81, 5. 84, 5. 85,13. 86, 13. 87, 17. 89, 16. 91, 7. 92, 6. 92, 15. 93,14. 94,11. 95,4. 96,10. 97, 8. 93, 4. 98, 18. 100, 19. 101, 15. 105, 9. 109, 2. 110, 4. 111, 15. 113, 11. 114, 1. 115, 3. 115,10. 118, 15. 118, 23. 119,14. 120, 19 120, 20. 127, 8. 131, 18. 132, 4 133, 14. 134, 17. 139, 6 139, 17. 140, 22. 141, 9 142, 10. 145, 17. 147, 1 150, 1. 152, 8. 152, 18 155, 6. 165, 4. 173, 11 179, 17. 186, 5. 189, 15 190, 5. 191, 5. 193, 17 204, 2. 205, 5. 205, 12 209, 6. 211, 2. 213, 13. 217, 9. 219, 14. 222, 15. 229, 9. 233, 10. 235, 16. 242, 13. 242, 16. 244, 1. 246, 2. 248, 5. 248, 12. 249, 11. 252, 15. 257, 7. 263, 14. 268, 9. 275. 20. 278, 3. 279, 6. 280, 5. 293, 10. 302, 9. 315, 13. 323, 3. 337, 3. 339, 5. 344, 17. 346, 3. 347, 4. 348, 4. 349, 20. 353, 1. 354, 4. 360, 11. 362, 8. 363, 18. 366, 10. 367, 11. 371, 18. 379, 10. 380, 10. 387, 2. 388, 18. 389, 10. 390, 3. 392, 5. 397, 7. 399, 1. 401, 4. 413, 13. 417, 5. 419, 8. 422, 5. 424, 16. 426, 7. 426, 22. 427, 7. 429, 2. 429, 13. 432, 1. 436, 7. 438, 13. 465, 10.

१२२ मन्त्रवर्णः 17, 16. 65, 14. 105, 4. 150, 18.

१२३ मन्त्राः 109, 1.

१२४ मरीचिः 61,10. 77,9. 79,6. 239, 2. 239, 17. 245, 8. 246, 7. 250, 13. 250, 20. 262, 20. 290, 10. 297, 3. 327, 4. 332, 8. 334, 11. 374, 13. 394, 14. 395, 4. 400, 3. 427, 10. 450, 19.

१२५ महाभारतम् 106, 17. 149, 16. 196, 24. 326, 13.

१२६ मान्धाता 71, 9.

१२७ मार्कण्डेयपुराणम् 63, 9. 374, 12. 393, 4. 463, 5.

१२८ मार्कण्डेयः 27, 14. 27, 19. 30, 11. 58, 15. 134, 10. 209,10. 214,17. 293,14. 302, 17. 312, 9. 318, 5. 368, 18. 370, 14. 391, 2. 413, 7. 436, 2. 441, 10. 457, 6.

१२९ मुनयः 21, 2.

१३० मेधातिथिः 172, 18. 173, 3. 183, 5.

१३१ मैत्रायणश्रुतिः 168, 4.

१३२ मौकः 71, 6.

१३३ मौनः 71, 6.

१३४ यज्ञपार्श्वः 406, 6.

१३५ यमः 12, 1. 26, 12. 27, 7. 28, 7. 34, 4. 34, 17. 42,9. 42, 13. 44, 10. 44, 13. 46,7. 47,15. 49,15. 73,5. 75, 8. 77, 16. 79, 13. 81,15. 81,17. 83,1. 90,16. 92, 19. 139, 10. 151, 16. 186, 14. 188, 20. 191, 11. 224, 10. 242, 5. 264, 20. 280, 1. 295, 5. 302, 14. 310, 9. 323, 8. 330, 9. 336, 14. 339, 1. 341, 5. 354,15. 357, 23. 365, 20. 366, 14. 367, 15. 383, 5. 384, 7. 385, 12. 396, 11. 399, 5. 400, 15. 400, 20. 403, 3. 415, 1. 415, 14. 423, 15. 444, 1. 446, 7. 456, 5. 456, 16.

१३६ याज्ञवल्क्यः 10, 7. 18, 22. 19, 4. 21, 1. 22, 9. 24, 8. 40, 11. 43, 5. 45, 13. 47, 6. 48, 2. 50,11. 52,5. 54, 20. 57, 21. 60, 8. 65,6. 71, 5. 74, 1. 75, 13. 80, 5. 89, 13. 90, 4. 91, 20. 94, 20. 97, 12. 99, 8. 101, 7. 104, 6. 112, 11. 114, 16. 115, 16. 118, 11. 119, 7. 120, 19. 121, 14. 122, 8. 126, 18. 131, 14. 137, 14. 140, 18. 141, 18. 143, 4. 145, 12. 146, 11. 147, 5. 166, 14. 181, 1. 206, 11. 224, 2. 233, 5. 238, 19. 248, 17. 252, 10. 257, 13. 263, 18. 278, 11. 280, 19. 285, 14. 288, 12. 291, 22. 292, 18. 293, 1. 294, 8. 302, 3. 308, 5. 311, 21. 316, 7. 322, 17. 327, 10. 337, 9. 344,13. 348,17. 364, 12. 380, 3. 384, 12. 386, 14. 389, 20. 399, 17. 402, 5. 404, 20. 406, 16. 407, 2. 407, 8. 411, 10. 411, 18. 420, 4. 421, 11. 428, 9. 435, 18. 437, 10. 440, 2. 442, 22. 447, 13. 449, 20. 454, 22. 458, 20.

१३७ योगियाज्ञवल्क्यः 153, 6. 406, 2.

१३८ यौवनाश्वः 71, 9.

१३९ लक्ष्मीः 30, 16.

१४० लघुयमः 421, 3.

१४१ लिङ्गपुराणम् 110, 8. 181, 21.

१४२ लौगाक्षिः 21, 2. 26, 15. 27, 12. 28, 14. 28, 18. 70, 18. 304, 12. 334, 15. 429, 22. 441, 16. 445, 9. 449, 14. 457, 11. 457, 17. 461, 3. 467, 12. 468, 6. 469, 6.

१४३ वत्सः 86, 10.

१४४ वराहपुराणम् 360, 15.

१४५ वरुणः 31, 1.

१४६ वसिष्ठः 10, 18. 11, 12. 29, 17. 32, 16. 33, 9. 49, 1. 51, 10. 70, 12. 71, 15. 72, 1. 78, 11. 89, 6. 93, 2. 95, 14. 116, 4. 124, 3. 124, 8. 127, 4. 138, 5. 140, 7. 204, 19. 206, 2. 212, 18. 233, 18. 239, 20. 244, 12. 259, 20. 278, 7. 339, 11. 346, 13. 355, 9. 364, 8. 364, 20. 380, 15. 440, 9. 448, 8. 460, 8.

१४७ वाजसनेयकब्राह्मणम् 152, 13.

१४८ वाजसनेयकम् 66, 6.

१४९ वाजसनेयिब्राह्मणम् 107, 8. 175, 11. 269, 3.

१५० वाजसनेयिशाखा 271, 9.

१५१ वाधूलः 71, 6.

१५२ वामनपुराणम् 153, 10, 231, 20.

१५३ वायुपुराणम् 40, 4. 78, 20. 369, 6. 412, 20. 415, 5. 417, 11. 423, 6. 431, 18. 433, 3.

१५४ वासिष्ठाः 28, 19.

१५५ विश्वामित्रः 45, 10. 71, 14. 71, 18. 72, 8. 170, 5. 299, 14.

१५६ विष्णुधर्मोत्तरम् 23, 5. 301, 17. 315, 6. 372, 12. 394, 10. 399, 9. 413, 11. 439, 16. 459, 1.

१५७ विष्णुपुराणम् 24, 16. 29, 9. 55, 17. 60, 19. 69, 11. 101, 20. 277, 2. 311, 1. 345, 9. 374, 16. 386, 12. 418, 9. 461, 20. 464, 2.

१५८ विष्णुः 21, 19. 22, 13. 51, 5. 81, 12. 96, 3. 117, 2. 117, 6. 118, 7. 119, 20. 142, 7. 144, 3. 163, 15. 178, 12. 209, 17. 220, 15. 232, 21. 234, 12. 238, 8. 241, 17. 244, 12. 246, 20. 248, 2. 248, 20. 249, 17. 251, 15. 256, 6. 261, 16. 263, 21. 279, 11. 289, 8. 289, 17. 295, 1. 297, 16. 298, 23. 299, 2. 305, 10. 313, 16. 314, 14. 374, 20. 394, 5. 394, 16. 409, 2. 418, 13. 427, 18. 432, 5.

432, 20. 433, 453, 17. 16, 462, 21.

१५९ वीतहव्य: 71, 6.

१६० वृद्धगार्ग्यः 324, 20. 461, 11.

१६१ वृद्धपराशर: 161, 14. 162, 17. 206, 6. 221, 13. 256, 15. 274, 20.

१६२ वृद्धमनु: 229, 14. 245, 2. 247, 8. 247, 13. 251, 10. 252, 21. 295, 9. 309, 10. 319, 6. 367, 5. 464, 20.

१६३ वृद्धयाज्ञवल्क्यः 214, 1. 286, 18.

१६४ वृद्धशातातपः 418, 5. 422, 15.

१६५ वृद्धवसिष्ठः 240,1. 300,11. 310, 4. 356, 4. 404, 4.

१६६ वैखानससूत्रम् 138, 4. 139, 4.

१६७ व्याघ्रपात् 235, 4. 334, 4.

१६८ व्याघ्र: 230, 11. 230, 16. 276, 17. 433, 8. 453, 11.

१६९ व्यासः 1, 7. 17, 2. 23, 8. 40, 17. 45, 3. 64, 7. 109, 18. 111, 7. 128, 12. 173, 5. 178, 14. 214, 12. 218, 2. 227, 5. 270, 17. 304, 3. 331, 20. 373, 3. 421, 16. 426, 18. 429, 10. 440, 7. 444, 12. 446, 10. 465, 19.

१७० व्यासस्मृतिः 169, 12.

१७१ शङ्ख-लिखितौ 26, 4. 49, 15. 98, 10. 99, 19. 139, 21. 213, 17. 213, 17. 266, 20. 423, 8.

१७२ शङ्खः 21, 10. 23, 19. 24, 17. 27, 10. 28, 12. 32, 14. 61, 15. 120, 5. 230, 5. 231, 17. 234, 6. 235, 22. 243, 13. 246, 17. 250, 3. 265, 5. 267, 16. 293, 7. 298, 18. 298, 22. 303, 4. 304, 6. 326, 7. 342, 11. 364, 17. 370, 5. 377, 14. 383, 1. 384, 3. 393, 17. 395, 7. 403, 14. 424, 21. 425, 13. 446, 15. 456, 2. 462, 3.

१७३ शम्भुः 397, 2. 397, 20.

१७४ शल्यपर्व 82, 3.

१७५ शाठ्यायनिः 319, 9. 321, 15. 8514, 14.

१७६ शातातपः 63, 19. 72, 12. 90, 16. 206, 3. 221, 13. 228, 4. 267, 1. 221, 18. 338, 16. 354, 12. 354, 19. 397, 15. 443, 12. 456, 13. 456, 22. 460, 13. 463, 17.

१७७ शिवस्वामि: 448, 13.

१७८ शुन:पुच्छः 290, 19.

१७९ शैवपुराणम् 14, 13.

१८० शौनकः 28, 16. 130, 9. 178, 17. 180, 18. 308, 17. 317, 7. 363, 5. 363, 17. 409, 8. 410, 5. 415, 8. 416, 18. 419, 14.

१८१ श्रुतिः 60, 3. 66, 16. 68, 12. 100, 14 103, 6. 104, 18.

